THE

# MĪMĀṂSĀNUKRAMAṆIKĀ

*By*

MAṆḌANAMIŚRA

*With an Original Commentary*

MĪMĀṂSĀMAṆḌANA

*By*

MAHĀMAHOPĀDHYĀYA

GAṄGĀ NĀTH JHA M. A., D. LITT., LL. D.

* श्रीः *

मण्डनमिश्रकृता

# मीमांसानुक्रमणिका ।

महामहोपाध्याय–गङ्गानाथझा शर्म्मणा मैथिलेन रचितेन
मीमांसामण्डनेन मण्डिता ।



THE

# MĪMĀMSĀNUKRAMAṆIKĀ

*By*

MAṆḌANAMIŚRA

*With an Original Commentary*

MĪMĀMSĀMANḌANA

*By*

MAHÂMAHOPĀDHYĀYA
GAṄGĀ NĀTH JHA M. A., D. LITT., LL. D.




PRITHIVI PRAKASHAN

VARANASI-221005 ( INDIA )

मण्डनमिश्रकृता

# मीमांसानुक्रमणिका

महामहोपाध्याय - गङ्गानाथझा शर्म्मणा मैथिलेन रचितेन
मीमांसामण्डनेन व्याख्यानेन मण्डिता ।

## उपोद्घातः ।

प्रयागे टीबोसाहिबमहाशयस्य प्राचीन पुस्तक सङ्ग्रहे मण्डनमिश्रकृत मीमांसानुक्रमणिका पुस्तकम्मयोपलब्धम् । मित्रवर्य बाबू गोविन्ददासानां साहाय्येन पुस्तकान्तरमप्यासादितं काश्यामेव । मीमांसाधिकरणानां प्रातिस्विकरूपबोधको ग्रन्थ इदानीन्तनैरेक एवोपलभ्यते न्यायमालारूपः । तत्राधिकरणस्वरूपस्य पद्यबद्धतया तदवगतिर्न सुकरा भवति कोमलधियामित्याकलय्य 'बालानां सुखबोधाय' तत्र किमपि कर्तव्यमिति च विचार्य सरलया भाषयाऽधिकरणस्वरूपनिरूपणे प्रवृत्तोऽहं मीमांसाचार्यस्य मण्डनमिश्रस्यैव कृतिं तन्मूलतया निरधारयम् । यतोऽत्रानुक्रमणिकायां प्रायशः श्लोकपादेनैकेनैवाधिकरण सिद्धान्तोऽवधृतः । अतस्तस्यैव श्लोकपादस्य व्याख्यानरूपेणात्र पञ्चावयवनिरूपणमधिकरणं सुस्पष्टं विलिखितम् । यद्यपिविषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं बिन्दुः इति प्राचीनानां लक्षणमधिकरणस्य लक्षणमुपलभ्यतेतदनुसारेण च सङ्गतेर्न भवत्यधिकरणाङ्गतातथाऽपि न्यायामालारीति रेवात्रानुसृतेति सुधीभिर्विभाव्यम् । यद्येकस्यापि शास्त्ररसिकस्येदं सन्तोषकरंस्यात् तर्ह्यात्मानं कृतकृतम्मंस्यते—

विदुषां वंशवदः
गङ्गानाथझा शर्म्मा ।

श्रीः

मण्डनमिश्रकृता

# मीमांसानुक्रमणिका

महामहोपाध्याय-गङ्गानाथझाशर्म्मणा
मैथिलेन रचितेन मीमांसामण्डनेन
व्याख्यानेन मण्डिता ।

---

पित्रोस्तीर्थलतातीर्थनाथयोश्च गुरोस्तथा ।
श्रीचित्रधरमिश्रस्य मीमांसापारदृश्वनः ॥
सर्वतन्त्रस्वतन्त्रस्य जयदेवस्य मद्गुरोः ।
भ्रातुः श्रीविन्ध्यनाथस्य प्रभोर्लक्ष्मीश्वरस्य च ॥
पादार्ककिरणो नित्यं हृदब्जे दीप्यताम्मम ।

---

मीमांसाशास्त्रसङ्क्षेपं व्याचक्षाणेन यत्नतः ।
मीमांसानुक्रमणिकाव्याख्या संलिख्यतेऽधुना ॥
अधिकरणस्वरूपं हि सङ्क्षेपेण प्रदर्शितम् ।
साधने बाधने युक्तिर्विज्ञेया वार्तिकादितः ॥

---

## अथ प्रथमोऽध्यायः धर्मप्रमाणनिरूपकः ।

### तत्र प्रथमः पादः विधिरूपनिरूपकः ।

[ वामपार्श्वस्थाङ्का आदावधिकरणानुसारिणस्ततो जैमिनीय-सूत्राध्यायपादसूत्रानुसारिणो बोद्धव्याः । ]

---

( १ ) १।१।१ अथायं धर्मजिज्ञासां प्रतिज्ञाय प्रमाणतः ।

आदौ—

एकैकस्याधिकरणस्य-( १ )सङ्गतिः ( २ )विषयः ( ३ )संशयः ( ४ )पूर्वपक्षः ( ५ )सिद्धान्त इति भवन्ति पञ्चावयवाः । तत्रादावधिकरणेऽत्र-( १ ) अधीतवेदस्य वेदाध्ययनानन्तरं किं कर्तव्यमिति भवत्याकाङ्क्षा । इयमेवात्र सङ्गतिः ।

( २ ) विषयश्चास्य 'स्वाध्यायोऽध्येतव्य' इति वाक्यम् ।

( ३ ) एतस्मिन् विषये संशयः-इदं वाक्यं वेदार्थज्ञानं तद्धेतुभूतं विचारं च विधत्ते-उत वेदाक्षरग्रहणमात्रमिति । विचारस्यापि वैधत्वे उक्तविधिप्रयुक्त एव मीमांसाशास्त्रारम्भोऽन्यथा त्वविधेय एवेति संशयस्य मूलम् ।

( ४ ) तत्र पूर्वपक्षः—नैव विधत्त इदं वाक्यमर्थज्ञानहेतुभूतं विचारम्—स्वर्गायाक्षरमात्रग्रहणमस्य विधेयमिति । एवं च मीमांसाशास्त्रनोक्ताध्ययनविधिप्रयुक्तमिति ।

( ५ ) सिद्धान्तस्तु—विचारो विधेय एव । अत उक्तविधिवशादेव विचारशास्त्रमारम्भणीयमिति भवत्येव मीमांसाशास्त्रस्याध्ययनविधिप्रयुक्ततेति ॥

तदेतद्भट्टमतेनाधिकरणस्वरूपम् । प्रभाकरमतेन किञ्चिद्रूपान्तरम् । अधिकरणस्य विषयवाक्यमस्य मते 'स्वाध्यायोऽध्येतव्य' इति नैव सम्भवति तस्य नित्यानुवादत्वेनाप्युपपद्यमानत्वात् । अतः 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इत्येवात्र विषयवाक्यम् । अत्र ह्यध्यापनमाचार्यकर्तृकं विहितम् । न चाध्यापनमध्ययनं विना सम्भवति । अत आचार्यकर्तृकाध्यापनविधिना माणवककर्तृकाध्ययनमप्याक्षिप्तमेव । अत एव पृथगध्ययनविधिकल्पनापि नावश्यकी । एतावद्भेदानन्तरं पूर्ववदेव विचारशास्त्रं विषयः—तदारम्भणीयं वा न वेति संशयः-नारम्भणीयमिति पूर्वपक्षः-अध्यापनविधिप्रयुक्तेनाध्यापनेन बुध्यमानस्यार्थस्य विचार्यत्वाद् विचारशास्त्रमपि वैधमेवेत्यारम्भणीयमेवेति सिद्धान्तः ।

सर्वमेतदभिप्रेत्याह मण्डनमिश्रः-अथेति । 'अयम्' भगवान् सूत्रकारो जैमिनिः-'प्रमाणतः' उक्तविधिप्रयुक्तत्वेन-'धर्मजिज्ञासां' धर्माय जिज्ञासा ताम्-को धर्मः किंलक्षणः कान्यस्य साधनानि कानि साधनाभासानि किम्परश्चेत्येवंरूपाम्-'आदौ' प्रथमे सूत्रे—'प्रतिज्ञाय' (इत्येतावत्पर्यन्तम्प्रथमाधिकरणस्वरूपम्) 'जिज्ञासां कुरुते' इत्युत्तरेण वाक्यसमाप्तिः ॥ १ ॥

( २ ) १।१।२ द्वितीयसूत्रेण जिज्ञासां कुरुतेऽधुना ॥
प्रामाणाभासरूपादीन् सङ्करेण निरूपयन् ॥

( १ ) द्वितीयाधिकरणस्य सङ्गतिर्यथा-धर्मजिज्ञासा कर्तव्येति प्रतिज्ञानन्तरं कोऽसौ धर्मो यो जिज्ञासितव्यः किं च तल्लक्षणमित्युत्थिता भवत्याकाङ्क्षा ।

( २ ) धर्मजिज्ञासैवास्य विषयः।
( ३ ) तत्र संशयः—धर्मस्य लक्षणं ज्ञानं च सम्भवति न वेति।

( ४ ) तत्र पूर्वपक्षः–अलौकिकत्वाद्धर्मो न लक्षयितुं शक्यते। अत एव तत्र प्रमाणमपि नास्ति–नास्ति च तस्य ज्ञानस्योपाय इति।

( ५ ) सिद्धान्तस्तु–लौकिकाकाराराहित्येऽपि धर्मस्य लक्षणं तत्र प्रमाणं च सम्भवति। तच्च लक्षणं द्वितीयसूत्रोक्तं 'चोदनालक्षणोऽर्थो धर्म' इति। अर्थत्वे ( निःश्रेयससाधकत्वे ) सति वेदप्रोक्तत्वमित्यस्यार्थः। एवं च वेद एव धर्मे प्रमाणमित्येतदप्युक्तं भवति। अनेनैव च वेदस्य सर्वथा प्रामाण्यमेवेत्यपि सूचितम्भवतीति त्र्यंशोऽत्र सिद्धान्त इति भाट्टमतेनाधिकरणार्थः।

प्रभाकरमतेन त्वेवं स्वरूपमधिकरणस्य। ( १ ) पूर्वसूत्रप्रतिज्ञातधर्मजिज्ञासायाः कृत्स्नवेदाध्ययनानन्तर्यप्रयुक्तं 'वेदार्थो जिज्ञास्य' इत्येवं मतं सूचितं प्रथमाधिकरणे। अतो वेदार्थजिज्ञासायां प्रवृत्तायां कियान् वेदार्थो जिज्ञास्य इति विचारः प्रवर्तते। ( २ ) अत्र विषयो धर्मप्रमाणभूतो वेदार्थ एव॥ (३) तत्र संशयः–किं यत् किञ्चिद्वेदे प्रोक्तं विधिप्रोक्तं कार्यरूपं मन्त्रार्थवादप्रोक्तं सिद्धार्थरूपमित्युभयमेवात्र धर्मज्ञानसम्पादकत्वेन जिज्ञास्यमाहोस्विद्विधिप्रोक्तकार्यरूपमात्रमिति। ( ४ ) तत्र पूर्वपक्षः–समस्तवेदार्थोऽत्र धर्मज्ञानकारणत्वेन जिज्ञास्य इति। ( ५ ) सिद्धान्तश्च–कर्तव्यबोधको विध्यंश एव वेदस्य धर्मज्ञानसाधक इति स एवात्र जिज्ञास्य इति॥ कर्तव्यबोधकं विधिसंस्पृष्टमेव वाक्यं साक्षाद्वाचकं प्रमाणं चेत्यन्विताभिधानवादिनः प्रभाकरस्य निर्बन्धः। अत एव भाट्टाभिमताधिकरणस्वरूपे यद्यप्यस्य न कोऽपि विरोधस्तथाप्यादावेवान्विताभिधानवादे स्वकीयमाग्रहं प्रदर्शयितुमयमधिकरणस्य स्वरूपान्तरमुद्भावितवान्। एव च यत्किञ्चित् कार्यं निःश्रेयससाधनत्वेन वेदे विहितं तद्धर्म इत्युभयसम्मतम्।

तदेतधिकरणमभिलक्ष्याह–द्वितीयेति निरूपयन्नित्यन्तेन। 'द्वितीयसूत्रेण' चोदनालक्षणोऽर्थो धर्म इत्यनेन–'प्रमाणाभासरूपादीन् सङ्करेण निरूपयन्' चोदनायां वेदे प्रमाणाभासत्वसंशयं व्युदस्यन् 'न च तथाभूतमप्यर्थं ब्रूयाच्चोदने'त्यादिभाष्यग्रन्थेन–'अधुना' 'जिज्ञासां' धर्मविषयिणीं को धर्मः किं लक्षणश्चेत्यादिरूपां–'कुरुते' प्रवर्तयतीत्यर्थः॥ २॥

( ३ ) १।१।३ निष्कृष्याध्यायतात्पर्यं ब्रवीति सुखसिद्धये॥

(१) सङ्गतिः । चोदनालक्षणत्वं धर्मस्योक्तम्–तत्प्रामाण्यपरीक्षाऽधुना प्रवर्तत इति ।

(२) वेदप्रामाण्यपरीक्षैव विषयः ।

(३) संशयः—धर्मप्रमाणभूतवेदप्रामाण्यं परीक्षणीयन्न वेति ।

(४) पूर्वपक्षः–प्रमाणमात्राधीनत्वात्प्रमेयसिद्धेः प्रमाणस्वरूपपरीक्षा नावश्यकीति ।

(५) सिद्धान्तः–विचारशास्त्रेऽस्मिन् सर्वस्यापि विषयस्य परीक्षणीयतैव प्राप्नोत्यतः धर्मप्रमाणस्य वेदस्यापि परीक्षा कर्तव्येति भट्टमतेनाधिकरणम् ।

प्रभाकरमतेन त्वित्थम्—धर्मज्ञानोपायो वेद इति चोदनासूत्रे साधिते वेदे किमुक्तमित्येव चिन्ता कर्तव्योत वेदस्य प्रामाण्याप्रामाण्यचिन्ता तावदादौ प्रवर्तयितव्येति संशये–वेदार्थस्य प्राधान्यात्तस्यैव चिन्ताऽधुना प्रवर्तयितव्येति पूर्वपक्षः । सिद्धान्तस्तु–अनुष्ठानावसरे हि किमधुना कर्तव्यमित्यपेक्षायां वेदार्थविचार एव प्राधान्येनाभ्युत्तिष्ठति–विचारशास्त्रे तु यत्र धर्मज्ञानस्य क उपाय इति विचारः प्रस्तुतस्तत्र तस्योपायस्य कीदृशम्प्रामाण्यं विश्वसनीयत्वं चेत्येव विचारः प्रधानपदवीमारोहति । अनवधारिते हि वेदस्य प्रामाण्ये तदुक्तौ श्रद्धा नोदियादेव ॥

सर्वमेतदभिप्रेत्याह–निष्कृष्येति । 'अध्यायस्य' प्रथमाध्यायस्य तात्पर्यं अर्थं–'निष्कृस्य' सारांशेनोद्धृत्य–'ब्रवीति' वर्णयतीत्यर्थः । धर्मे यद्वेदस्य प्रामाण्यं तत्परीक्षैव प्रथमाध्यायार्थ इति सूचितम् ॥ ३ ॥

(४) १।१।४ अन्याप्रामाण्यसिद्धौ हि नोदनैवेति सिध्यति ।
तेन प्रत्यक्षसूत्रे हि धर्मेऽन्यत् प्रतिषिध्यते ॥

(१) वेद एव धर्मे प्रमाणमिति सिद्धान्तितम् । तत्र भवति विचिकित्सा–प्रत्यक्षानुमानादीन्येव कस्मान्न भवन्ति धर्मेऽपि प्रमाणानीति । तन्निवृत्त्यर्थमत्र धर्मं प्रति प्रत्यक्षादीनां प्रामाण्यं परीक्ष्यते । इयमेव चतुर्थाधिकरणस्य सङ्गतिः ।

(२) धर्मविषये प्रत्यक्षादिप्रामाण्यमेवास्य विषयः ।

(३) तत्र संशयः–धर्मज्ञानं वैदिकविधिभिरेव जन्यते उत प्रत्यक्षादिभिरपीति ।

(४) पूर्वपक्षः–प्रत्यक्षादीनां प्रमाणत्वाद् धर्मस्य च प्रमेयत्वाद् भवत्येव तैरपि धर्मज्ञानमिति ।

(५) सिद्धान्तः। प्रत्यक्षं हि वर्तमाने इन्द्रियसंप्रयुक्ते च विषये प्रवर्तते। धर्मे तु नास्ति वर्तमानत्वन्नापीन्द्रियसंयोगः। तस्मात् धर्मस्य प्रमेयत्वेऽपि प्रत्यक्षयोग्यता नास्ति। यस्तु प्रत्यक्षस्यात्यन्तमविषयस्तत्रानुमानोपमानार्थापत्त्यभावानां प्रवृत्तिर्नास्त्येव, प्रत्यक्षेण गृहीत एव व्याप्तिसादृश्यादौ तेषां प्रवृत्तेः सम्भवात्। तस्मान्नास्ति प्रत्यक्षादिगम्यत्वं धर्मस्येति।

एतदेवाभिप्रेत्याह अन्याप्रामाण्येति। 'अन्येषाम्' शब्दातिरिक्तानां प्रत्यक्षादीनाम्—'अप्रामाण्यस्य' धर्मविषयकप्रमाकरणत्वाभावस्य—'सिद्धौ' यदैतत् सिद्धं भवति तदैव—'हि' यस्मात्—'नोदनैव' वैदिकविधिरेव—'धर्मे प्रमाणम्' इति शेषः—'इति सिध्यति' निश्चितं भवति—'तेन' तस्मात्—'प्रत्यक्षसूत्रे'—चतुर्थे—'अन्यत्' शब्दादतिरिक्तं प्रत्यक्षादि—'धर्मे' धर्मविषये—'प्रतिषिध्यते' प्रमाणत्वेनेति शेषः ॥ ४ ॥

(५) १।१।५ निराकृतेषु सर्वेषु धर्मो नास्तीति शङ्क्यते।
प्रमाणं चोदनां तत्र ब्रवीत्यौत्पत्तिकादिना ॥

(१) धर्मे प्रत्यक्षादीनां प्रामाण्ये निराकृते चोदनायाः प्रमाणत्वं विचारणीयं प्राप्नोति। इयमेव पञ्चमाधिकरणस्य सङ्गतिः।

(२) धर्मप्रमाणचोदनाप्रामाण्यमेव विषयः।

(३) तत्र संशयः—धर्मावबोधिकायाश्चोदनायाः प्रामाण्यमुतनेति।

(४) तत्र पूर्वपक्षः—नास्ति धर्मे किञ्चित्प्रमाणम्। प्रत्यक्षादयो न भवन्ति तत्र प्रमाणम्। तथा शब्दोऽपि न भवति। शक्तिग्रहणपूर्वकं हि शब्दस्य प्रामाण्यम्। शक्तिश्च लोकप्रसिद्ध एव गोघटादौ गृह्यते। धर्मस्त्वलौकिकः। अतस्तत्र शक्तिग्रहणं दुर्घटम्। तस्मात्तत्र प्रमाणन्नास्ति। प्रमाणाभावाच्च धर्मोऽपि नास्त्येवेत्यभ्युपगन्तव्यमिति।
एवं च धर्मं प्रति चोदनायाः प्रमाणत्वं न सिध्यति।

(५) सिद्धान्तस्तु—शब्दार्थसम्बन्धस्य नित्यत्वात्—तद्ग्रहणस्य च वेदवाक्यादौ प्रसिद्धपदसाहचर्येण सम्भवात्—सम्भवत्येवाप्रामाण्यशङ्कानास्कन्दितस्य शब्दस्य प्रामाण्यं प्रत्यक्षादिभिरगृहीते धर्मे। तस्मात् सिद्धं चोदनायाः प्रामाण्यम् इति ॥

तदेतदभिप्रेत्याह—निराकृतेष्विति। 'सर्वेषु' प्रत्यक्षादिषु—'निराकृतेषु' धर्मप्रमाणत्वेन—तत्र प्रमाणाभावात्—'धर्मो नास्तीति शङ्क्यते'। एतस्याः शङ्कायाः समाधानरूपेण—'तत्र' धर्मे—'चोदनाम्' वैदिकविधिवाक्यमेव—'प्रमाणम्' अपेक्षितज्ञानकरणम्—'ब्रवीति' व्युत्पादयति—'औत्पत्तिकादिना' पञ्चमेन सूत्रेणेति योजना ॥ ५ ॥

बह्वर्थं वक्तुकामेन तमर्थं सौत्रमिच्छता ।
वृत्तिकारमतेनैव त्रिसूत्री वर्ण्यतेऽन्यथा ॥ ५ ॥

शास्त्रे निरूपणीयं 'बहुम् अर्थम्' शून्यवादादिनिराकरणरूपं–'वक्तुकामेन' वर्णयितुमिच्छुकेन–अथ च 'तमर्थं' 'सौत्रं' सूत्रसूचितम्–'इच्छता' सत्रसूचितमेवैतत्सर्वमिति दिदर्शयिषता भाष्यकारेणेति शेषः–'त्रिसूत्री' तृतीयमारभ्य पञ्चमसूत्रपर्यन्तो ग्रन्थः–'वृत्तिकारमतेन' वृत्तिकारकृतव्याख्यानुसारेण–'अन्यथा' पूर्वोक्तप्रकारादन्येन प्रकारेण–'वर्ण्यते' व्याख्यायते।

एतच्छ्लोकमारभ्योनविंशश्लोकपर्यन्ते ग्रन्थेऽत्राधिकरणनिरपेक्षा अथ च प्रमाणनिरूपणोपयोगिन एवार्था वर्णिता इति ध्येयम् ॥ ५ ॥

सत्यमिथ्याविभागो यो वृत्तिकारनिरूपितः ।
बौद्धस्तं सहते नेति नन्वित्येतेन कथ्यते ॥ ६ ॥

वृत्तिकारस्तृतीयसूत्रं नशब्दाध्याहारेण व्याख्यातवान्। एवं च तस्यार्थः। धर्मज्ञानस्य निमित्तं न परीक्षणीयम्। प्रसिद्धानि हि प्रत्यक्षादीनि प्रमाणानि। शास्त्रमपि शब्दप्रमाणरूपं तदन्तर्गतत्वात् प्रसिद्धमेव। अतस्तदपि न परीक्षितव्यम् इति। एवं निरूपिते तृतीयसूत्रार्थे शङ्कासमाधानाभ्यां प्रमाणानां स्वतः ्रमाण्यं परतश्चाप्रामाण्यं चतुर्थसूत्रार्थरूपेण वर्णितम्। तदुक्तं भाष्यकारेण–'यस्य दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य' इति। तत्रैवं चतुर्थसूत्रयोजना–यद्विषयं ज्ञानं तेनैवेन्द्रियाणां सम्प्रयोगे यत् जन्यते तत् ज्ञानं प्रत्यक्षं 'सत्' प्रमाणमेव ॥ चतुर्थसत्रस्य 'प्रत्यक्षम्' इत्यन्तस्यैवांशस्यायमर्थः। अवशिष्टस्त्वंशोऽग्रिमेण त्रयोदशश्लोकेन सङ्गृह्यते ॥

एवं सदसद्विषयत्वेन प्रत्यक्षज्ञानस्य सदसत्त्वे निरूपिते तत्र बौद्धो विषयाणां सत्त्वममृष्यमाणः सर्वेषां ज्ञानानां निरालम्बनत्वं जगतो वा शून्यत्वं वर्णयामास प्रत्यक्षस्य व्यभिचारित्वप्रदर्शनेन तत्प्रसिद्धिनराकरणार्थम्। तदेतदभिप्रेत्याह सत्यमिथ्येति। यस्य ज्ञानस्य विषयः सन् तत् सत्यं यस्यासन् तदसदिति यो ज्ञानानां विभागो वृत्तिकारेण निरूपितः तं विभागं बौद्धो न सहते। इदमेव बौद्धस्यामर्षणं 'ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्यय' इत्यादिना भाष्यस्थेन शङ्काग्रन्थेन कथ्यते इति योजना ॥ ६ ॥

प्रत्यक्षादिविरोधेन दूषिते परसाधने ।
तदशक्तिं परो मत्वा पुनः प्रत्यवतिष्ठते ॥ ७ ॥

ज्ञानस्य निरालम्बनत्वे प्रत्यक्षादिप्रमाणविरोधः । तथाहि स्तम्भोऽयं कुड्योऽयमित्यादि प्रत्यक्षद्दृष्टमेवार्थं प्रमाणजातं विषयीकरोतीति सर्वजनप्रसिद्धम् । एवं प्रमाणविरोधान्नाभ्युपगमात्रेणाहं ज्ञानस्य निरालम्बनत्वमित्याद्येवम्प्रकारेण 'परस्य' निरालम्बनवादिनः 'साधने' निरालम्बनत्वसाधके हेतौ–'दूषिते' सति–सिद्धान्तिनेति शेषः–'परः' शून्यवादी–'तस्य' ज्ञानस्य 'अशक्ति' बहिः प्रवर्तितुमसामर्थ्यम् ज्ञानस्याभ्यन्तरत्वात्तस्य बहिः प्रवर्तितुं सामर्थ्यन्नास्तीति–'मत्वा' विचार्य–'पुनः प्रत्यवतिष्ठते । एतत्प्रत्यवस्थानं च–

प्रवर्तितुं हि किं शक्तं स्तम्भाद्यर्थे बहिः स्थिते ।
अथवाऽऽत्मांश एवैतत् ग्राह्ये क्षीणं न वस्तुनि ॥
तद्यद्येतेन बाह्योऽर्थो गृह्यते दूषणं ततः ।
तदुक्तं, सर्वमात्मांशे ग्रासे तन्नोपपद्यते ॥
न चाप्याकारभेदेन ज्ञानज्ञेयावधारणम् ।
न चान्यतरधर्मत्वं विस्पष्टं तत्र गृह्यते ॥

इत्यादि श्लोकवार्तिकेऽनुसन्धेयम् । एवं च प्रत्यक्षस्य बाह्यग्राहकत्वात् बाह्यस्य चार्थस्यासत्त्वात्सर्वमपि प्रत्यक्षं व्यभिचार्येव । एवं च तस्य सर्वथा परीक्षणीयत्वमेवेति परीक्षा न कर्तव्येति रिक्तं वच इति पूर्वपक्षिणोऽभिप्रायः ॥ ७ ॥

प्रत्यक्षाव्यभिचारित्वे प्रबन्धेन प्रसाधिते ।
इदानीमनुमानस्याव्यभिचारोऽभिधीयते ॥ ८ ॥

'प्रबन्धेन' निरालम्बनशून्यवादनिराकरणात्मकेन 'अतो न व्यभिचरति प्रत्यक्षम्' इत्यन्तेन भाष्यग्रन्थेन–'प्रत्यक्षस्य अव्यभिचारित्वे' 'प्रसाधिते' 'इदानीं' तदनन्तरम्–'अनुमानस्य' द्वितीयप्रमाणस्य–'अव्यभिचारः' दोषराहित्येन प्रमाजनकत्वम्–'अभिधीयते' व्यवस्थाप्यते–इति योजना । एवं चानुमानस्यापि प्रमाणत्वेन प्रसिद्धत्वात् तदपि न परीक्षणीयमित्याशयः। यद्यपि प्रत्यक्षस्य व्यभिचारित्वात्तन्मूलकमनुमानाद्यपि व्यभिचारीति पूर्वपक्षे–प्रत्यक्षस्याव्यभिचारित्वे तन्मूलकस्यानुमानादेरप्यव्यभिचारित्वमित्येतावन्मात्रं वक्तुमावश्यकं तथाऽप्यात्मीयलक्षणेनाप्यनुमानादीनां प्रसिद्धत्वमपरीक्ष्यत्वं चेति वक्तुं पृथगुपन्यास इत्यवधेयम् ॥ ८ ॥

अतः शब्देऽपि विज्ञाते वक्तृदोषविवर्जिते ।
सत्यार्थबुद्धेरस्यापि ब्रवीत्यव्यभिचारिताम् ॥ ९ ॥

'अतः' पूर्वोक्तादेव हेतोः प्रमाजनकत्वरूपात्–'शब्देऽपि वक्तृदोषविवर्जिते विज्ञाते' सति–शब्दाप्रामाण्यस्य वक्तृदोषमात्रमूलकत्वम्–वेदे

चापौरुषेयत्वादेव वक्तुस्तद्दोषस्य चासम्भव एवेति निश्चिते सति–'अस्य' शब्दस्यापि–'सत्यार्थबुद्धेः' यस्मादस्मादव्यभिचारिणी बुद्धिरुदेति तस्मात् कारणात्–'अव्यभिचारिताम्' प्रमाजनकत्वम्–'ब्रवीति' व्यवस्थापयतीति योजना। शब्दसामान्यलक्षणं चोक्तं वार्तिके—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥ इति।

एवं च शब्दप्रामाण्यस्यापि प्रसिद्धत्वात् सोऽपि न परीक्षणीय इति भावः॥ ९॥

असन्निकृष्टसादृश्यज्ञानं सदृशदर्शनात्
उपमानं यदेतच्चाव्यभिचारीति कथ्यते॥ १०॥

'सदृशस्य' गवयस्य–'दर्शनात्'–यत् तस्य 'असन्निकृष्टे' गवि 'सादृश्यज्ञानम्'–गोसदृशोऽयमिति ज्ञानम्–तदेव 'यत्'–उपमानम्' उपमितिकरणम्–'तत्' 'अव्यभिचारि' प्रमाजनकम्–'इति कथ्यते' व्यवस्थाप्यते। एवं चोपमानप्रमाणस्यापि प्रसिद्धत्वात्तदपि न परीक्षणीयमित्यर्थः॥ १०॥

प्रमाणेन प्रमाणस्य विरोधेऽन्यार्थकल्पनाम्।
अर्थापत्तिमपि स्वार्थे वदन्त्यव्यभिचारिणीम्॥ ११॥

'प्रमाणस्य' एकेन प्रमाणेनावधारितस्यार्थस्य 'जीवति देवदत्त' इत्येवंरूपस्य–'प्रमाणेन' अन्येन प्रमाणेनावधारितेनार्थेन गृहे नास्तीत्येवं देवदत्ताभावेन–'विरोधे' असामञ्जस्ये सति–या तद्विरोधपरिहाराय 'अन्यस्य अर्थस्य' वहिर्भावरूपस्य 'कल्पना' तामेवंरूपाम्–'अर्थापत्तिम्' 'अपि'–'अव्यभिचारिणीम्' प्रमाजननीम्–'वदन्ति' व्यवस्थापयन्ति–सम्प्रदायविद इति शेषः॥ एवं चार्थापत्तिप्रामाण्यस्यापि प्रसिद्धत्वात् साऽपि न परीक्षणीयेत्याशयः॥ ११॥

प्रमाणपञ्चकाभावोऽप्यभावोऽन्यप्रतीतिकृत्।
सोऽपि न व्यभिचारीति–चोदनाऽपि तथोच्यते॥१२॥

वस्तुसत्तावबोधार्थं यत्प्रत्यक्षादिप्रमाणपञ्चकं तद् यत्र घटादौ वस्तुरूपे–सत्यामपि शक्तौ–न प्रवर्तते तत्र भवत्येवाभावस्य प्रामाण्यम्। एवमेव अभावाख्यं प्रमाणं प्रमाणपञ्चकाभावरूपमुच्यते। अयं चाभावः 'अन्यप्रतीतिकृत्' प्रत्यक्षादिप्रमाणजन्या या 'प्रतीतिः' ज्ञानम्–तदपेक्षया 'अन्यां' भिन्नप्रकारिकां–'प्रतीतिं' ज्ञानं 'करोति'। तथा च 'सोऽपि' अभावः–अभावप्रमाजनकत्वादेव 'अव्यभिचारी'। एवं चाभावप्रामाण्यस्यापि प्रसिद्धत्वात् सोऽपि न परीक्षणीय इत्यर्थः॥ एवं च प्रमाण-

मपि प्रमाणानां प्रामाण्यस्य प्रसिद्धत्वाद्यथा तानि न परीक्षणीयान्येवमेव चोदनाऽपि शब्दप्रमाणान्तर्गता प्रसिद्धप्रामाण्या नैव परीक्षणीयेत्युपसंहरति चोदनाऽपीति ॥ १२ ॥

प्रमाणानां प्रमाणत्वे हेतुरव्यभिचारिता ।
व्यभिचारवती तेन चोदना शिष्यते परैः ॥१३॥

यस्मात् 'प्रमाणानां' 'प्रमाणत्वे–यथार्थज्ञानजनकत्वे–तेषाम् 'अव्यभिचारिता' एव हेतुः सिद्धान्तिनोक्तः–तस्मात्–'परैः' वेदप्रामाण्यनिषेधकैः 'चोदना' वैदिकं विधिवाक्यं–'व्यभिचारवती' सव्यभिचारा मिथ्याप्रतीतिजननी–'शिष्यते' उपदिश्यते वर्ण्यत इति यावत् ॥

इयमेव शङ्का वृत्तिकारमतेन चतुर्थसूत्रोत्तरांशस्य 'अनिमित्तं विद्यमानोपलम्भनत्वा'दित्येवंरूपस्यार्थः । तदक्षरार्थश्च–शब्दः चोदना 'अनिमित्तम्' अप्रमाणम्–कुतः–'विद्यमानोपलम्भनत्वात्'–यद् विद्यते तस्योपलम्भोऽपि भवत्येव–यस्योपलम्भो न भवति तन्न विद्यते–नोपलभ्यते तु यागाद्यनन्तरं स्वर्गादि पश्वादि वा–तस्मान्नैव विद्यते पश्वादिरूपोऽर्थः–एवं सति यागेन पशुः सम्पद्यत इति या वैदिकी चोदना तस्या मिथ्यात्वमेवेति व्यभिचारवती चोदनेति 'चोदनालक्षणोऽर्थो धर्म' इति रिक्तं वच इति शङ्काया आशयः ॥ १३ ॥

व्यभिचारो भवेज्ज्ञाने हेतुदोषेऽप्युतान्यथा ।
तद्दोषसिद्धये तेन सम्बन्धः कार्य इष्यते ॥ १४ ॥

केनचित् प्रमाणेन यदा ज्ञानं जन्यते तदा तज्ज्ञानं मिथ्येति निश्चीयते–यदि तस्य कारणेषु कश्चिद्दोषो दृश्यते अथवाऽन्यत् किमप्यप्रामाण्यकारणमुपलभ्यते । शब्दप्रमाणे च दोषस्तद्वक्तर्यैव सम्भवेत्, अथ वा यदर्थबोधकत्वेन शब्द उच्चारितस्तेनार्थेन तस्य वाच्यवाचकरूपसम्बन्धगत एव । एवं च 'तस्मिन्' शब्दे 'दोषस्य' सिद्धये–दोषास्तित्वप्रदर्शनार्थम्–'सम्बन्धः' शब्दार्थयोः–'कार्यः' अनित्यः पुरुषकृतोऽत एव सदोष एव 'इष्यते'–परैरिति शेषः ।

चतुर्थसूत्रोत्तरार्धोपन्यस्तस्य समाधानं पञ्चमे सूत्रे वर्णितम्–तच्च शब्दार्थसम्बन्धनित्यतोक्तिरूपम् । तस्योक्तेन पूर्वपक्षेण सम्बन्धो न सुग्रह इति तत्सम्बन्धं दर्शयितुमेवैष श्लोकः ॥ १४ ॥

इदानीं नित्यसम्बन्धसाधनायाश्रयद्वयम् ।
निर्णेतुं प्रथमः शब्दः स्फोटवादे निरूप्यते ॥ १५ ॥

'इदानीं' शब्दप्रमाणे वक्त्रभावादेव कारणदोषाभावं विवक्षमाणः–'नि-

त्यसम्बन्धसाधनाय' शब्दार्थसम्बन्धस्य नित्यत्वं साधयितुम्–'आश्रयद्वयं' तत्सम्बन्धस्याश्रयभूतं शब्दमर्थं च 'निर्णेतु' निरूपयितुम्–'प्रथमः' आदौ–'शब्द' एव–'स्फोटवादे'–'अथ गौरित्यत्र कः शब्द' इत्यारभ्य 'तस्मादक्षराण्येव पदम्' इत्यन्ते भाष्यग्रन्थे–'निरूप्यते' इति योजना। इदमत्राकूतम्। सम्बन्धिद्वयाधारो हि सम्बन्धो नानिरूपितयोस्तयोर्निरूपयितुं शक्यते। नहि वर्णातिरिक्तस्य शब्दस्य (पराभिमतस्फोटादिरूपस्य) शशविषाणायमानस्य सम्बन्ध एव सम्भवति–न तरां नित्यत्वम्। अतः प्रयोजनवद् वर्णानां शब्दत्वप्रतिपादनं सम्बन्धप्रस्तावादेव नाप्रसक्तं क्रियते। एवं च आस्तां तावत्सम्बन्धः शब्दस्वरूपमेव तावत्कीदृशमित्येव प्रथमतो निरूपयाम इत्याशयः सिद्धान्तिनः ॥ १५ ॥

ततोऽभिधेयरूपं यत् सम्बन्धस्याश्रयान्तरम्।
तन्निरूपयितुं नित्या जातिरस्तीति साध्यते ॥ १६ ॥

'ततः' शब्दस्वरूपनिरूपणानन्तरम्–'सम्बन्धस्य' शब्दार्थसम्बन्धस्य–'यत् आश्रयान्तरम्'–उक्तस्य सम्बन्धस्यैक आश्रयः शब्दस्तस्मादपरो द्वितीयो य आश्रयः 'अभिधेयरूपम्' अर्थरूपम्–'तन्निरूपयितुं' 'नित्या जातिः'–शब्दाभिधेया–'अस्तीति' 'साध्यते'–अथ गौरित्यस्य शब्दस्य कोऽर्थ' इत्यारभ्य 'आकृतिः शब्दार्थ' इत्यन्तेन भाष्यग्रन्थेनेति योजना। प्रयोजनं चास्योक्तं वार्तिककारैः—

आकृतिव्यतिरिक्तेऽर्थे सम्बन्धो नित्यताऽस्य च।
न सिध्येतामिति ज्ञात्वा तद्वाच्यत्वमिहोच्यते ॥ इति।

आकृतिशब्देन चात्र जातिरेवोच्यते यथोक्तम्–'गवादिशब्दोऽभिदधाति जाति' मित्यग्रिमे सप्तविंशश्लोके ॥ १६ ॥

ततो निरूपिते भित्तिद्वयेऽपि परमार्थतः।
सम्बन्धनित्यतामाह कर्त्रभावेन हेतुना ॥ १७ ॥

एवं पूर्वोक्तप्रकारेण 'भित्तिद्वये'–शब्दार्थसम्बन्धस्य सम्बन्धिरूपाश्रयद्वये शब्दार्थरूपे–'परमार्थतः' तत्त्वतः–'निरूपिते' व्यवस्थापिते–'ततः' तदनन्तरम्–'कर्त्रभावेन हेतुना'–'यस्य कर्ता नास्ति तन्न कृतकम् शब्दार्थसम्बन्धस्य च कर्ता नास्ति तस्मान्न स कृतक' इत्येतेन हेतुना–'सम्बन्धस्य' शब्दार्थनिष्ठस्य 'नित्यताम्' 'आह' व्यवस्थापितवान्–औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इत्येतेन पञ्चमसूत्रस्याद्यखण्डेनाथ च 'अथ सम्बन्धः क' इत्यारभ्य 'तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्ध' इत्यन्तेन भाष्यग्रन्थेन ॥ उक्तं च वार्तिककृता—

सम्बन्धोऽस्ति च नित्यश्चेत्युक्तमौत्पत्तिकादिनेति ॥

एष एव नित्यः शब्दार्थसम्बन्धः 'तस्य' धर्मस्य 'ज्ञानम्' ज्ञानकारणं प्रमाणं भवतीति 'तस्य ज्ञानमि'त्यनेन सूत्रांशेनोक्तम्। प्रत्यक्षादिभिरनवगम्यमानस्य धर्मस्य ज्ञानं नित्येन शब्देन चोदनालक्षणेन नित्यशब्दार्थसम्बन्धद्वारैव जन्यते। नित्यत्वादेव चास्य कर्तृदोषाद्यप्रामाण्यकारणाभावादनवद्यम्प्रामाण्यमिति पर्यवसितोऽर्थः। उक्तं च वार्तिके—

न मृषा वैदिकं वचः।
स्वार्थे वक्तृनपेक्षत्वात् पदार्थपदबुद्धिवत्।
तत्कृतः प्रत्ययः सम्यक् नित्यवाक्योद्भवत्वतः।
वाक्यबुद्धिवदेवेति ॥

एवं च चोदनालक्षण एव धर्मो नान्यलक्षण इति सिद्धम् ॥ १७ ॥

अथ चित्रादियागेषु सद्यः फलमपश्यता।
व्यभिचाराद्ध य आक्षेपः सोऽधुना विनिवार्यते ॥१८॥

शब्दस्य प्रामाण्यं प्रक्षिपता पूर्वपक्षिणा—'चित्रादियागेषु' पश्वादिदृष्टफलसम्पादकतया वेदे विहितेषु—'सद्यः' कर्मसमाप्त्यनन्तरकाले—'फलम्' पश्वादिरूपं सम्पन्नम्—'अपश्यता' नैव भवतीति दृष्टवता—उक्तानां विधीनाम् अर्थेन 'व्यभिचारात्' मिथ्यात्वात्—'य आक्षेपः' कृतः प्रदर्शितश्चात्र त्रयोदशे श्लोके—'सः' आक्षेप—'अधुना विनिवार्यते' परिह्रियते—'अथ यदुक्तं अनिमित्तं शब्द' इत्यारभ्य 'तच्चैव हि तत्र कारणं शब्दश्चे' त्यन्तेन भाष्यग्रन्थेनेति योजना। तत्परिहारो यथा कर्मानन्तरमेव फलमिति न विध्यर्थोऽपि तु कृते कर्मणि फलम्भवतीत्येतावन्मात्रम्। लौकिकेऽपि कर्मणि कृष्यादौ भवत्येव कालान्तरेऽपि फलमिति ॥ १८ ॥

व्यभिचारविशेषोऽन्यो यज्ञायुधिवचोगतः।
तमिदानीं निराकर्तुं विभुरात्मा प्रसाध्यते ॥१९॥

वेदस्य प्रामाण्यमाशङ्कमानेन पूर्वपक्षिणा 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीति' वाक्यमुपन्यस्य तत्र—'अन्यः' चित्रादियागफलान्तरानिष्पत्तिमूलकाक्षेपात् अपरः—'व्यभिचारः'—'यज्ञायुधिवचोगतः'—उक्तवाक्ये यज्ञायुधिशब्देन यज्ञपात्रधारियजमानशरीरमेवोच्यते तच्च दग्धं नैव स्वर्गं लोकं यातीति प्रत्यक्षविरुद्धोऽर्थ उक्तवाक्येनोच्यत इत्येवंरूपः प्रदर्शितः—'तम्' आक्षेपं—'निराकर्तुम्' परिहर्तुम्—'आत्मा विभुः' अस्ति शरीराश्रितः स एव यज्ञायुधिशब्देन विवक्षितः स एव शरीरदाहानन्तरं स्वर्गं यातीति 'इदानीं' 'प्रसाध्यते'—'यत्तु प्रत्यक्षविरुद्ध मि'त्यारभ्य 'तस्मादविरोध' इत्यन्तेन पञ्चमसूत्रभाष्यसमाप्तिपर्यन्तभाष्यग्रन्थेनेति योजना ॥

अयं चात्मा शरीरेन्द्रियादिभ्यो व्यतिरिक्तो नित्यो विभुः सर्वज्ञानगताहम्बुद्धेराश्रयो विषयज्ञानशक्तिस्वभावो मानसप्रत्यक्षगम्यश्चेति भाट्टाः। सर्वेषां ज्ञानानां ज्ञानज्ञेयज्ञातृरूपांशत्रयेणानुस्यूतत्वात् यत्प्रमाणं ज्ञानकरणं तस्यैव प्रमाणस्यात्माऽपि विषयो भवति न तु मानसप्रत्यक्षमात्रगम्यो ज्ञानं चात्मनो गुण एव प्रतिशरीरभिन्नश्चेति प्राभाकराः ॥१६॥

---

(६) १।१।६-२३ वाच्यवाचकसम्बन्धनित्यता या प्रसाधिता।
शब्दनित्यतया सा स्यात् तेन तन्नित्यतोच्यते ॥

वृत्तिकारीयव्याख्यानविषयं प्रसक्तानुप्रसक्ततया निरूप्य पञ्चमसूत्रगतमधिकरणसूत्रं परिगृह्णाति षष्ठेनानेनाधिकरणेन।

(१) तत्र धर्मे शब्दस्यैव प्रामाण्यमिति निश्चित्य शब्दप्रामाण्यस्य दोषराहित्यप्रदर्शनाय शब्दार्थसम्बन्धस्य नित्यताऽपि प्रसाधिता। न च सम्बन्धिनित्यतामन्तरेण सम्बन्धनित्यतासम्भव इति शब्दनित्यताऽधुना साधनीया भवतीति सङ्गतिः।

(२) विषयश्च धर्मप्रमाणभूतः शब्द एव।

(३) तत्र संशयः—विध्यादिरूपः शब्दो नित्योऽनित्यो वेति।

(४) पूर्वपक्षः—अनित्यएव शब्दो वर्णरूपत्वाद्वर्णस्य च जन्यत्वादिति।

(५) सिद्धान्तः-वर्णाः शब्दाश्च नित्या एव अबाधितप्रत्यभिज्ञाविषयत्वात्। या चास्योत्पत्तिर्मन्यते साऽस्याभिव्यक्तिरेव। कारणाजन्यत्वादेव शब्दे वक्त्रादिदोषराहित्यं प्रामाण्यं चेति सिद्धान्तः॥

तदेतदभिप्रेत्याह वाच्यवाचकेति। शब्दार्थयोर्यो 'वाच्यवाचकसम्बन्धः' तस्य 'नित्यता' सप्तदशश्लोके 'या' 'प्रसाधिता'–'सा' सम्बन्धनित्यता–'शब्दस्य' सम्बन्धिनः–'नित्यतया' 'स्यात्' सम्भवति–'तेन' तस्मात् कारणात्–'तस्य' शब्दस्य 'नित्यता'–'उच्यते' व्यवस्थाप्यते–षष्ठेनाधिकरणेनेति शेषः॥

---

(७) १।१।२४-२६ चोदना साधिता धर्मे यद्यप्यन्यनिरासतः।
वाक्यार्थबुद्धिमूलं तु नोक्तं तेन तदुच्यते ॥

(१) सप्तमाधिकरणमिदम्। शब्दस्य शब्दार्थसम्बन्धस्य च नित्यत्वं सिद्धम्। वैदिकविधीनां पदसमूहात्मकानां नास्ति शब्दत्वन्नवा शब्दार्थसम्बन्धत्वम्। एवं च धर्मविषये विधिवाक्यानां प्रामाण्यमद्यत्वेऽपि न सिद्धमिति वाक्यप्रामाण्यमपि साधनीयमिति सङ्गतिः।

(२) तत्र विधिवाक्यप्रामाण्यमेव विषयः।

(३) वैदिकं विधिवाक्यम्प्रमाणन्न वेति संशयः ।

(४) विधिवाक्यन्न प्रमाणम् तद्घटकसङ्गत्यपेक्षत्वेन निरपेक्षत्वाभावादिति पूर्वपक्षः ।

(५) पदार्था एवावगता वाक्यार्थं गमयन्ति नास्ति । पदार्थेभ्योऽतिरिक्तो वाक्यार्थो नाम । ततश्च पदवत् वाक्यस्याप्यर्थप्रत्यायनेऽस्त्येव निरपेक्षत्वमिति नास्त्यप्रामाण्यशङ्कावसर इति सिद्धान्तः ।

तदेतदभिप्रेत्याह चोदनेति । 'यद्यपि' 'धर्मे' धर्मज्ञानं प्रति–'अन्येषां' प्रमाणानां प्रत्यक्षादीनां 'निरासतः' निरासं कृत्वा–'चोदना' 'साधिता' धर्मप्रमाणत्वेन–तथाऽपि–'वाक्यार्थबुद्धेः' वाक्यार्थज्ञानस्य 'मूलं' प्रामाण्यं–'तु' 'नोक्तम्' पूर्वेष्वधिकरणेषु–'तेन' तस्मात् कारणात्'तत्' वाक्यार्थप्रामाण्यम्–'उच्यते' व्यवस्थाप्यतेऽनेन सप्तमेनाधिकरणेनेति योजना ॥ २१ ॥

(८) १।१।२७–३२ वेदप्रामाण्यमिष्ट्वैवं समाख्याबलतस्तु यत् ।
वेदानित्यत्वमेवाहुस्तन्निराक्रियते ततः ॥

(१) अष्टमाधिकरणमिदम् । भवतु नाम वेदस्य धर्मे प्रामाण्यम् । यदि पुरुषकृतोऽसावनित्यस्तर्हि पुरुषापराधादस्य प्रामाण्यमपि शङ्कास्पदं भवतीति निरवद्यप्रामाण्यस्थापनायापौरुषेयत्वन्ततश्च नित्यत्वं साधनायन्तत्प्रामाण्यसिद्ध्यर्थमेवेति सङ्गतिः ।

(२) वेदप्रामाण्यमेव विषयः ।

(३) वेदः पौरुषेयोऽपौरुषेयो वेति संशयः ।

(४) काठककौथुमादीनि यतो वेदशाखानां नामधेयान्युपलभ्यन्तेऽतो निश्चितं भवति यद् वेदाः कठ–कुथुमादिपुरुषैरेव निर्मिता इति पूर्वपक्षः ।

(५) उक्तानि नामधेयान्यध्ययनसम्प्रदायप्रवर्तकसमाख्यात्वेनाप्युपपद्यन्ते–अतस्तानि वेदस्य पौरुषेयत्वसाधकानि न भवन्ति । अथ च वेदकर्ता कोऽपि नोपलभ्यते। एवं चापौरुषेया एव वेदाः। अपौरुषेयत्वादेव च पुरुषापराधजन्यदोषाशङ्काऽसम्भवात्सिद्धम्भवति वैदिकविधिवाक्यानामेव धर्मावबोधनं प्रति प्रामाण्यमिति सिद्धान्तः ॥

तदेतदभिप्रेत्याह वेदप्रामाण्यमिति । 'वेदप्रामाण्यम्' 'इष्ट्वा' स्वीकृत्यापि केचित्–'समाख्याबलतः'–काठककौथुमादिवेदशाखानां नामान्युपलभ्य तदाश्रयेण–'वेदस्य' 'अनित्यत्वम्' पुरुषकृतत्वमूलकम्–'आहुः'–'ततः' तस्मात् कारणात्–'तत्' वेदे पौरुषेयत्वमनित्यत्वं च 'निराक्रियते' अष्टमेनानेनाधिकरणेनेति योजना ॥ २२ ॥

इति प्रथमाध्याये प्रथमः पादः ।

# अथ प्रथमाध्याये द्वितीयः पादः

## ( अर्थवादप्रामाण्यनिरूपकः )

### (१) १।२।१–१८ स्तुतिः क्षेपिष्ठता वायोः ।

(१) विध्यतिरिक्तान्यपि भवन्त्यर्थवादादीनि वैदिकानि वाक्यानि । धर्मं प्रति विधिवाक्यानां प्रामाण्यमवधारितमधुनाऽर्थवादवाक्यानां का गतिरिति भवति विचारावसरः ।

(२) सर्वाण्येवार्थवादवाक्यान्यत्र विषयत्वेनेष्टानि—किन्तु सर्वत्रा-श्रेवात्र विचारो दुर्घट इत्येकमेव वाक्यं 'वायुर्वै क्षेपिष्ठा देवतेति' विचारविषयः क्रियते ।

(३) अस्य वाक्यस्य धर्मे प्रामाण्यमस्ति न वेति संशयः ।

(४) कर्तव्यविधायकवाक्यानामेवाऽनुष्ठेयरूपधर्मं प्रति प्रामाण्यं सम्भवति—उक्तवाक्ये च सिद्धार्थवर्णनमात्रमुपलभ्यते—अत एवंविधानां वाक्यानां वैदिकत्वेऽपि नास्ति धर्मं प्रति प्रामाण्यमिति पूर्वपक्षः ।

(५) यद्यप्युक्तवाक्ये नास्त्यनुष्ठेयविधानं किञ्चित्तथाऽपि तत्प्रकरण-स्थं यद्वाक्यान्तरमुपलभ्यते 'वायव्यं श्वेतमालभेतेति' तत्र वर्तत एवा-नुष्ठेयस्य छागालम्भनस्य विधानम् । तदेकवाक्यतया च वायुर्वै क्षेपि-ष्ठेति वाक्यं नेतुं शक्यते । एवं च एकवाक्यतापन्नयोर्वाक्ययोरित्थमर्थः पर्यवस्यति—'यस्माद् वायुः क्षेपिष्ठा देवता तस्मात् तदर्थं श्वेतालम्भनं कर्तव्यं क्षिप्रफललाभायेति' । एवं च प्राशस्त्यवर्णनेन पुरुषप्रवर्तनं प्रति विधिवाक्यस्य सहायतां गच्छद्विमतं वाक्यमपि धर्मावबोधं प्रति भवत्येव प्रमाणमिति सिद्धान्तः ॥

प्राभाकरमतेन तु पूर्वपक्षस्वरूपं किञ्चिदन्यथा । तद्यथा । अन्विताभि-धानवादिमतेन विधिपदघटितस्यैव वाक्यस्य साक्षाद्वाचकता । विमतं च वाक्यं विधिपदरहितत्वादवाचकमत एवा माणमिति । तत्र च सि-द्धान्तः—यद्यपि वायुरिति वाक्ये विधिपदं नास्ति तथाऽप्यर्हत्येवेदं वायव्यमिति विधिघटितवाक्येनैकवाक्यतामापादयितुं तत्रत्यविधिसम्ब-न्धद्वारा च भवत्येवास्यापि वाचकत्वप्रामाण्यं चेति ।

तदेवदभिप्रेत्याह स्तुतिरिति । 'वायुर्वै क्षेपिष्ठा देवतेति' वाक्ये या 'वायोः' 'क्षेपिष्ठता' अतिक्षिप्रता वर्ण्यते—सा 'स्तुतिः' न साक्षाद्विधिरपि तु देवतास्तावकमेव । तत्स्तुतिद्वारा च विहितकर्मानुष्ठाने प्ररोचनं कुर्वद् विधिवाक्यस्य साहाय्यमनुतिष्ठतीति ।

अस्य चाधिकरणस्य केचित् स्वरूपान्तरमाहुः । वायव्यं श्वेतमालभेतेत्यस्य विधिवाक्यस्यैव प्रामाण्ये संशयः–तत्र वायुर्वै क्षेपिष्ठा देवतेति वाक्योक्तप्राशस्त्यज्ञानसापेक्षत्वान्न निरपेक्षप्रामाण्यं तस्येति पूर्वपक्षे–स्तुतिद्वारा प्ररोचनामात्रमत्र विवक्षितन्न पुनर्विधेस्तत्साकाङ्क्षता येन निरपेक्षप्रामाण्यमस्य व्याहन्येतेति सिद्धान्तः ।

---

## (२) १।२।१९–२५ स्तुतिरूर्गवरोधनम् ॥

(१)अनुष्ठेयविधायकवाक्यान्तरेण सहैकवाक्यत्वात्प्रामाण्यं भूतार्थानामर्थवादवाक्यानामिति साधिते–यत्रार्थवादवाक्ये विध्यर्थ एवावगम्यते सोऽधुना विचारणीयः ।

(२)तादृशं वाक्यं–'औदुम्बरो यूपो भवति–उर्क् पशवः··· ऊर्जोवरुध्यै'–इत्यत्र विचारविषयः ।

(३)तत्र संशयः । 'ऊर्जोऽवरुध्यै' इत्यनेन किमौदुम्बरयूपकरणस्य 'ऊर्क्' ( पशवः ) फलत्वेन विधीयते तेन फलविधिरेवायमुत स्तुतिमात्रमस्यार्थ इति ।

(४)तत्र पूर्वपक्षः-'ऊर्जावरुध्यै' इत्यत्र तादर्थ्ये चतुर्थी । तथा च 'औदुम्बरयूपकरणेन पशवः सम्पादनीयाः' इति स्पष्टोऽर्थः प्रतीयते । तेन फलविधिरेवेदमिति ।

(५)सिद्धान्तस्तु–नेदम्फलविधिर्भवितुं शक्नोति । नात्र प्रकरणे किञ्चिद्विधायकं पदं दृश्यते–न चानुष्ठानमन्तरेण फलस्य सम्भवः-अतोऽत्र प्रकरणे साक्षाद्विधायकपदाभावात् 'औदुम्बरो यूपो भवती'त्यत्रैव विधिरुन्नेयः । तदुन्नयनं च तदैव सम्भवति यदाऽत्र प्रकरणे स्तुतिर्भवति । स्तुतिश्च 'ऊर्जोऽवरुध्यै इति वाक्यमन्तरेणान्यन्नास्तीति विध्यर्थमप्यस्य स्तावकत्वमेवाङ्गीकर्तव्यमिति ।

प्राभाकरमतेन चास्याधिकरणस्य स्वरूपं यथा । भूतार्थानामर्थवादवाक्यानां प्रामाण्यं प्रतिपादितं प्रथमेऽधिकरणे । यत्र पुनः कार्यतैवावगम्यते कार्यान्तरेण चैकवाक्यत्वं तदधुना विचार्यते । यथोक्तवाक्ये औदुम्बरो यूपः कर्तव्य इति विहितम् 'औदुम्बरो यूपो भवती'त्यनेन वाक्येन–अथ च 'ऊर्जोऽवरुध्यै' इत्यनेन 'ऊर्जः' पशोः 'अवरोधनं' सम्पादनं कर्तव्यमिति कार्यान्तरं विहितम् । गम्यते चानयोर्विधानयोरेकवाक्यत्वम्–'यस्मादुदुम्बरेण पशवः साध्यन्ते तस्मादुदुम्बरेण यूपः कर्तव्य' इति । तत्र किमेकवाक्यतैवाश्रयणीया–उत स्वतन्त्रमेव विधिद्वयं प्राह्यमिति । विधित्वमवभासते लिङाद्यभावाच्चार्थवादत्वं स्पष्टमिति किमत्र

युक्तमिति भवति संशयः ॥ तत्र सम्भवत्यां साध्यार्थावगतौ सिद्धार्थावगतिर्न न्याय्या–तथा च पशुसम्पादनरूपं साध्यमेवावगमयति 'ऊर्जोऽवरुध्यै' इति वाक्यम्–न पुनः स्तुतिरूपं सिद्धार्थवर्णनमिति पूर्वपक्षः। सिद्धान्तस्तु–यावद्वाक्यान्येकवाक्यतामापाद्य विध्येकत्वेन नेतुं शक्यानि तावन्नानाविधिकल्पनाऽन्याय्या–अतोऽत्र वाक्यद्वयस्यैकवाक्यतैव न्याय्या–तथा चौदुम्बरो यूपो भवतीत्यस्य साध्यावगमकत्वाद्विधित्वमूर्जोऽवरुध्यै इत्येतस्य तु सिद्धार्थावगमकत्वात्स्तुतित्वमेवेति ॥

तदेतद्द्वितीयाधिकरणमभिप्रेत्याह स्तुतिरिति। 'ऊर्गवरोधनम्' 'ऊर्जोऽवरुध्यै' इति वाक्ये यत् 'ऊर्जः' पशोः 'अवरोधनं' सम्पादनमुक्तं तत् 'स्तुति'रेव न विधिरिति योजना ॥

## १।२।२६–३० स्तुतिः शूर्पेऽन्नहेतुत्वम् ।

(१)असत्यपरोऽप्यर्थवादो यत्र वाक्यान्तरविहितानुष्ठानस्य साधकत्वेन हेतुरिवोपन्यस्यते–अयमेवार्थवादो हेतुवन्निगद इति नाम्ना प्रसिद्धः। सोऽयमधुना विचार्यते ।

(२)'शूर्पेण जुहोति' इति शूर्पेण होमः कर्तव्य इत्यनुष्ठानविधेरनन्तरमुपलभ्यते वाक्यम्–'तेन ह्यन्नं क्रियते' इति ।

(३)तत्र संशयः–किमिदं वाक्यं शूर्पेण होमे हेतूक्तित्वेन नेयमुत स्तुतित्वेनेति ।

(४)तत्र पूर्वपक्षः–'हि' 'शब्देन हेतुरुच्यते । तेनायमर्थः–यस्माच्छूर्पेणान्नं क्रियते तस्मादनेन होमः कर्तव्य इति । इयं च हेतूक्तिरावश्यकी–यतो बहूनि होमसाधनानि शूर्पस्रुवस्फ्यादीनि–तेषु शूर्पेणैव होमः कर्तव्यो नेतरैरिति हेतुर्वक्तव्यः। इतरथा विकल्पः स्यादिति ।

(५) तत्र सिद्धान्तः–शूर्पस्य होमसाधनत्वं साक्षाच्छ्रौतं 'शूर्पेण जुहोतीति' वाक्यादवगतम्। अतोऽस्मिन् प्रकरणेऽपरस्य साधनस्याश्रौतत्वान्नान्यत्साधनं प्राप्नोति–ततश्च नावश्यकता हेतूपादानस्य । तस्मात्पूर्ववाक्यविहितशूर्पस्तुत्यर्थतैव युक्ता- तस्याश्च प्रयोजनमितरार्थवादवत् प्ररोचनैवेति ।

एतदेव तृतीयमधिकरणमभिप्रेत्याह स्तुतिरिति । 'शूर्पेऽन्नहेतुत्वं' यद् वर्ण्यते 'तेन ह्यन्नं क्रियते' इत्यत्र वाक्ये-सा 'स्तुतिः'–न तु हेतूक्तिवन्नेयमिति । एवं च विधिवाक्यैकवाक्यतया गृहीतानामर्थवादवाक्यानामपि धर्मे प्रामाण्यमिति सिद्धम् ॥

## १।२।३१–५३ मन्त्रस्यार्थो विवक्षितः ॥ २३ ॥

(१)वैदिकवाक्येषु विधिवाक्यस्यार्थवादवाक्यस्य च धर्मं प्रति प्रामा-

एवं साक्षात्परम्परया वा साधितम् । सन्त्यपराण्यपि वेदवाक्यानि यत्र लिङ्गाद्यभावान्न विधित्वं स्तुतिनिन्दाद्यभावाच्च नार्थवादत्वं वा गृह्यते । एतानि च मन्त्रनाम्ना प्रसिद्धानि । एतेषां च किम्प्रयोजनं किं वा प्रामाण्यं धर्मं प्रतीति विचारणीयम्प्राप्नोति ।

(२) मन्त्रा एवात्र विषयाः ।

(३) तत्र संशयः–मन्त्राः किमविवक्षितार्था उच्चारणमात्रेण यागस्योपकुर्वन्त्युत विवक्षितार्था अपेक्षितार्थप्रकाशनेन तस्योपकुर्वन्तीति । यथा 'बर्हिर्देवसदनन्दामीति' अत्र इदमविवक्षितार्थमुच्चारणमात्रेणोपयोग्युत विवक्षितार्थं दामीत्यनेन बर्हिर्लवनं प्रकाशयत् तल्लवने प्रयुक्तमेव यागस्योपकारीति संशयः ।

(४) तत्र पूर्वपक्षः–मन्त्रा अविवक्षितार्था एव–उपकुर्वन्ति च यागस्योच्चारणमात्रेणेति ।

(५) सिद्धान्तस्तु–स्वाध्यायनियोगसम्बन्धितया मन्त्रा नाविवक्षितार्थाः । स्वाध्यायस्य ह्यर्थवत्ता कार्यं प्रामाण्याभिधानादेव सिद्धा । एवं चानुष्ठीयमानार्थोपयिकानां देवतादीनां प्रकाशनेन विवक्षितार्थत्वं न शक्यते व्योहन्तुमिति । येषु तु मन्त्रेषु किमपि कर्मसम्बन्धि सूचितन्नोपलभ्यते तेषां त्वनायत्योच्चारणमात्रेणादृष्टार्थत्वमङ्गीकरणीयमेव भवति ॥

एतदेव चतुर्थमधिकरणमभिप्रेत्याह मन्त्रस्येति । 'मन्त्रस्य' 'अर्थो' विवक्षितः–अतो नास्योच्चारणमात्रेणादृष्टार्थताऽपि तु कार्यापेक्षितार्थप्रकाशनेनैवार्थवत्तेति ॥

अस्याधिकरणस्य स्वरूपान्तरं कैश्चिदुपन्यस्तम् । तद्यथा । यत्र मन्त्रोक्तविनियोगस्यार्थवादवाक्योक्तेन विनियोगेन विरोधउ पलभ्यते तत्र कस्य प्रामाण्यमिति संशये–परस्परव्याहतत्वादुभयोरप्यप्रामाण्यमेवेति पूर्वपक्षे–अर्थवादेन हि वाक्यद्वारा विनियोगः सिध्यति–मन्त्रेण तु लिङ्गेनैवेति बलवत्तरो मान्त्रिको विनियोग इति स एव ग्राह्य इतरस्त्वनुवादत्वेन कथञ्चिन्नेय इति सिद्धान्तः ॥ २३ ॥

**चत्वारोऽत्र नयाः पादे भाष्यकारेण वर्णिताः ॥ २४ ॥**

द्वितीयपादार्थं सङ्गृह्णाति चत्वार इति । 'अत्र' द्वितीये–'पादे'–'चत्वारो न्यायाः' अधिकरणानि–'भाष्यकारेण वर्णिताः' इति योजना ॥ २४ ॥

इति प्रथमाध्याये द्वितीयः पादः ॥

---

# अथ प्रथमाध्याये तृतीयः पादः ॥

## ( स्मृतिप्रामाण्यनिरूपकः )

### १।३।१-२ मन्वादिवाग् विस्मृतवेदमूला

(१) वेदस्य धर्मे प्रामाण्यं साधितम् । वेदवदेव स्मृत्यादयोऽपि धर्मे प्रमाणत्वेन स्वीक्रियन्ते शिष्टैः । अतो धर्मप्रमाणविचारप्रसङ्गेन स्मृतीनां प्रामाण्यस्य विचारोऽधुना प्रस्तूयते ।

(२) तत्र विषयवाक्यानि-'अष्टकाः कर्तव्या' इत्येवमादीनि-अत्र वैदिको विधिर्नोपलभ्यते अथ चैवमर्थोऽनुष्ठेय इति स्मृतिर्भवति ।

(३) तत्र संशयः-अष्टकाद्यनुष्ठानविधिभूता स्मृतिः प्रमाणमुताप्रमाणमिति ।

(४) पूर्वपक्षः-अप्रमाणमेवैषा । कुतः ? धर्मस्य चोदनामात्रलक्षणत्वात् । चोदनैव धर्मे प्रमाणमिति सिद्धान्तितं द्वितीयसूत्रे । अतो वेदातिरिक्ता भवन्ती स्मृतिर्न प्रमाणं धर्मे भवितुमर्हतीति ।

(५) सिद्धान्तस्तु-प्रमाणमेव स्मृतिः वेदमूलत्वात्स्मृतीनाम् । वैदिकैः स्मृता पदार्थाः स्मृतिभूरानिबद्धाः न तत्र नवीनं किञ्चिदस्ति । ये येऽर्था वेदेषु विप्रकीर्णा उक्तास्त एव पुरुषोपकाराय वेदविचक्षणैः स्मृतिकारैः सङ्गृहीताः स्मृतिष्वित्यस्मात् कारणात् स्मृतिरपि धर्मे प्रमाणं भवितुमर्हतीति ।

अस्मिन् पादे स्मृत्यादिविचारो यः प्रस्तुतस्तस्याध्यायार्थेन वेदप्रामाण्येन नास्ति सम्बन्ध इत्यसम्बद्धप्रलापित्वं सूत्रकारस्य केचिद् वर्णयन्ति । अत एव प्राभाकरैर्वेदप्रामाण्येनास्य पादस्य सम्बन्धं सुस्थिरं कर्तुकामैरत्यविचारस्य किञ्चित्स्वरूपान्तरमुक्तम् । तद्यथा । बहूनि कर्माणि स्मृतिषु स्पष्ट विहितानि वेदेषु साक्षान्नोक्तान्यपि तु कथञ्चित्सूचितानि । यथाऽष्टकाश्राद्धं स्मृतिषु विहितं 'याअ्जनाः प्रतिनन्दन्तीति'वैदिकमन्त्रे सूचितमुपलभ्यते । एवं सति उक्तस्मार्तविधीनामप्रामाण्ये तत्सूचकवेदस्याप्यप्रामाण्यं प्रसज्येत । एवं च वेदप्रामाण्यदार्ढ्यायैव स्मृत्यादिप्रामाण्यसाधनप्रयत्न इति ॥ भाट्टमतेन तु चिरकालव्यापिशिष्टपरिग्रहादेव स्मृतिषु प्रामाण्यसम्भावना वेदानुक्तस्य तत्रोपलम्भाच्चाप्रामाण्यसम्भावनेति तेषां प्रामाण्यविचारः स्वतन्त्रतयाऽऽवश्यकः ।

तदेतत्प्रथममधिकरणमभिप्रेत्याह—मन्वादीति । 'मन्वादिवाक'

मन्वादिनिर्मिता स्मृतिः–'विस्तृतवेदमूला'–'विस्तीर्णः' बहुशाखो 'वेद' एव 'मूलम्' प्रमाणं यस्याः सा तथाभूता अस्तीति शेषः। वेदमूलत्वादेव स्मृतीनां प्रामाण्यं धर्मे इत्यर्थः॥

स्मृतिनाम्नाऽत्राधिकरणे समस्तार्यावर्तपरिगृहीतानामेव सङ्ग्रहस्तथा च पुराणेतिहासो मानवी स्मृतिरित्येतावत्येव तात्पर्यमितिभट्टपादाः।

१।३।२ श्रुत्या विरुद्धा स्मृतिरप्रमाणम्।

(१) स्मृतीनां वेदमूलत्वात् प्रामाण्ये साधिते या स्मृतिः साक्षाद्वेदोक्तस्य विरुद्धार्थप्रतिपादयित्र्युपलभ्यते तस्याः का गतिरित्यधुना विचार्यते।

(२) ज्योतिष्टोमे मण्डपस्य मध्ये उदुम्बरकाष्ठशाखा यूपरूपेण निखन्यते–सेयं शाखा सर्वा वाससा वेष्टयितव्येति स्मृतौ विधीयते–अथ च तस्याः स्पर्शो वेदे विहितः–वाससा वेष्टितायाः स्पर्शो न सम्भवतीति भवत्येषा स्मृतिर्विचारणीया।

(३) तत्र संशयः–किमियं स्मृतिरष्टकास्मृतिवत्प्रमाणमुत नेति।

(४) तत्र पूर्वपक्षः–यथाऽष्टकास्मृतिर्वेदमूलत्वात्प्रमाणं तथेयमपि तस्मादेव कारणात् प्रमाणमिति।

(५) सिद्धान्तस्तु साक्षाद्वेदविरुद्धमर्थं या विधत्ते सा स्मृतिर्नैव प्रमाणमिति।

इदमप्यधिकरणं वेदप्रामाण्यपरकत्वेनैव वर्णितं प्राभाकरैः। तद्यथा। स्मृतिमूलभूताः श्रुतयोऽनुमातव्यास्तदनुमितिश्रुतिमूलकमेव स्मृतीनां धर्मे प्रामाण्यमिति पूर्वाधिकरणे सिद्धान्तितम्। एवं च औदुम्बर्या साकल्यवेष्टनविधायिन्याः स्मृतेरपि मूलभूता श्रुतिरनुमातव्या–अथ च तत्स्पर्शनविधायिनी साक्षाच्छ्रुतिरुपलभ्यते। तथा चानुमितप्रत्यक्षयोः श्रुत्योः परस्परव्याघातात् प्रामाण्यविलोपस्तथा च वेदस्याप्रामाण्यमिति पूर्वपक्षः। सिद्धान्तस्तु–वेदविरुद्धायाः स्मृतेः प्रामाण्यस्य बाधितत्वात्तन्मूलभूतायाः श्रुतेरनुमानं न सम्भवति–तथा चानुमितश्रुतेरभावान्नास्ति व्याहतिः प्रत्यक्षश्रुतेरिति।

तदेतद्द्वितीयमधिकरणमभिप्रेत्याह—श्रुत्या विरुद्धेति। 'श्रुत्या' प्रत्यक्षवेदवाक्येन–'विरुद्धा'विरुद्धस्यार्थस्याभिधायिनी 'श्रुतिः' 'अप्रमाणं' धर्मे–इति योजना।

कुमारिलस्तु कस्याश्चिदपि स्मृतेरप्रामाण्यमसहमानोऽधिकरणस्यास्य स्वरूपान्तरमुक्तवान्। तस्य मतेन भाष्योदाहृते स्मृतिवाक्ये नास्ति कश्चिद्विरोधः श्रुत्या। स्मृतेरपि भवत्येव प्रामाण्यम्। यदा वेदे एकं कार्यं वि-

हितं स्मृतौ चापरं तत्र श्रुत्युक्तमेव कर्तव्यमित्येतावन्मात्रमेव तृतीयसूत्रार्थो न तु स्मृत्युक्तस्याप्रामाणिकत्वमेव सर्वथा । उभयोस्तारतम्यविचारे श्रुतेरपि प्रामाणिकतरत्वमित्येवात्र सिद्धान्तः ॥

अनेन चापरितुष्यन्तोऽपरमपि स्वरूपं वर्णितवन्तोऽत्र भट्टपादाः । तद्यथा । शाक्यादिबाह्यस्मृतय एवात्र विचारणीयास्तेषां च प्रामाण्ये स्मृतित्वादेव हेतोः पूर्वपक्षिते वेदविरुद्धार्थाभिधायित्वादप्रामाण्यमेवेति सिद्धान्तितम् ॥

## १।३।४ न लोभमूलं स्मरणं प्रमाणम्

(१) श्रुतिविरुद्धार्थाभिधायिनीनामप्रामाण्यमुक्तम् । इदानीमन्यासामपि कासाञ्चित्स्मृतीनामप्रामाण्यं विविच्यते ।

(२) ज्योतिष्टोमेऽग्नीषोमीयस्य पशोः सम्बन्धे वैसर्जनहोमो विहितः । तत्र सकुटुम्बस्य यजमानस्य वाससाऽऽच्छादनं होमात् प्राग् भवति । तद्वाससः प्रसङ्गेन स्मृतिर्भवति 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णातीति' । इदमेव स्मृतिवाक्यमत्र विचारविषयः ।

(३) इदं वाक्यं प्रमाणमप्रमाणं वेति संशयः ।

(४)तत्र पूर्वपक्षः । अस्य वाक्यस्य विरोधि किमपि श्रुतिवाक्यं नोपलभ्यते ततोऽप्रामाण्यहेतुभूतश्रुतिविरोधाभावात् प्रमाणमेवेदं वाक्यमिति ।

(५) सिद्धान्तस्तु–कदाचित्कश्चिदध्वर्युर्लोभादेतद्वसनं जग्राह–तन्मूलकमेवेदं स्मृतिवाक्यमिति कल्पयितुं शक्यते दृष्टानुसारेण । ऋत्विजो हि लोभाकृष्टा एव याजने प्रवृत्तास्तथा च लोभस्य तेषु दृष्टत्वादन्यथोपपत्त्यभावाच्च लोभमूलिकैवैषा स्मृतिरिति श्रुत्या बाधाभावेऽपि नेयं प्रमाणमिति ।

अत्रेदं प्राभाकरस्यापरं वक्तव्यम्–सर्वासां दृष्टार्थप्रतिपादकानां लोभादिदृष्टमूलिकानां स्मृतीनामप्रामाण्यमत्र नाभिप्रेतमपि तु तासामेव केवलं या अदृष्टार्थप्रतिपादकतयाऽदृष्टमूलिका इवाभासमानास्तत्त्वतो लोभादिदृष्टमूलिका एवेति ।

एतदभिप्रेत्याह न लोभमूलमिति । 'लोभमूलं' 'स्मरणं' स्मृतिः 'प्रमाणं' 'न' भवतीति योजना ।

एतदधिकरणघटकं सूत्रं हेतुदर्शनाच्चेति केचित्पूर्वाधिकरणाङ्गमेवेच्छन्ति । तन्मतेन च न केवलं वेदविरोध एव स्मृतेरप्रामाण्ये कारणमपि तु दृष्टस्य लोभादेर्दर्शनमपीति संवलितोऽर्थः ।

इदमप्यधिकरणं कुमारिलमतेन शाक्यादिबाह्यस्मृत्यप्रामाण्यपरकमेवेति ।

## १।३।५-७ शिष्टक्रमस्याचमनान्न कोपः ॥ २५ ॥

(१) श्रुतिविरुद्धस्मृत्यप्रामाण्येऽपवादोधुना प्रदर्श्यते ॥

(२) 'क्षुते आचामेत्' इति विहितमाचमनम् । यदा यागानुष्ठानमध्ये क्षुताद्याचमननिमित्तमापतति तदा 'आचान्तेन कर्तव्यमिति' स्मृत्या विहितमाचमनं तत्रैव कर्तव्यं प्राप्नोति । एतदाचमनविधानं स्मृत्युक्तमत्र विचार्यते ।

(३) यद्यनुष्ठीयते यागानुष्ठानमध्ये आचमनं तदा श्रुत्युक्तकर्मणांबाधः-अथ नानुष्ठीयते स्मार्तविधेः परित्यागो भवति-एवं चैवंजातीयका स्मृतिः प्रमाणमप्रमाणं वेति भवति संशयः ।

(४) तत्र पूर्वपक्षः-सेयं स्मृतिर्न प्रमाणं श्रुतिविरुद्धत्वादेव । वेदं कृत्वा वेदिं करोतीत्येवं कर्मणां क्रमोऽपि वेदे विहितस्तथा च याद वेदकरणानन्तरमाचमननिमित्तं क्षुताद्यापतेत्तदा आचमनकरणे श्रुत्युक्तक्रमस्य परित्यागे भवेदेव श्रुतिविहितस्य प्रकोप इति ।

(५) सिद्धान्तस्तु-यथा वेदवेद्यादिकरणमनुष्ठेयः पदार्थस्तथैवाचमनमपि-क्रमस्त्वनुष्ठेयकर्मणो धर्मविशेषः । धर्मश्च पदार्थस्योपजीवकः । अत उपजीव्यपदार्थविरोधाद्युक्त एवोपजीवकस्य बाध इति स्मृत्युक्तस्यानुष्ठाने यद्यपि भवति क्रमस्य बाधस्तथाऽपि नात्र श्रुतिविरोधो न चाप्रामाण्यकारणमिति प्रमाणमेवेयं स्मृतिरिति ।

तदेतच्चतुर्थमधिकरणमभिप्रेत्याह शिष्टक्रमस्येति । 'शिष्टस्य' वेदविहितस्य 'क्रमस्य' वेदं कृत्वा वेदिं करोतीत्येवंरूपस्य' 'आचमनात्' स्मृत्युक्तात्-'कोपः' विरोधो 'न' भवतीति ॥

एतच्चाधिकरणस्वरूपं वार्तिककारो नानुमन्यते । तन्मतेन चैतदधिकरणघटकसूत्रत्रयमन्यथा व्याख्यातम् । पूर्वस्मिन्नधिकरणे तन्मतेन शाक्यादिबाह्यस्मृतीनामप्रामाण्यं साधितम्-तत्रैव पुनः प्रश्नः-भवन्तु वेदविरुद्धा अर्था शाक्याद्युक्ता अप्रामाणिकाः-ये तु तत्रोक्ता वेदविहितानुकूला एवाहिंसादयः तावत्यंशे भवेदेव तासामपि प्रामाण्यमिति । तत्र सिद्धान्तः—

वेदेनैवाभ्यनुज्ञाता येषामेव ( मन्वादीनां ) प्रवक्तृता ।<br>
तेषां विपरिवर्तेषु (मन्वन्तरादिविपरिवर्तेषु) कुर्वतां धर्मसंहिताः ॥<br>
वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥<br>
तस्माद्यान्येव शास्त्राणि वेदमूलानतिक्रमात् ।<br>
अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ॥<br>
तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् ।<br>
संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥

तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद् धर्मप्रमाणत्वेन नापेक्षितव्यमिति ॥

अयमर्थः पञ्चमषष्ठसूत्रयोः । सप्तमे च सूत्रे स्वतन्त्रमेवाधिकरणं वार्तिककारेण प्रदर्शितम् । सदाचारप्रामाण्यमेव तत्र विषयः । सोऽप्रमाणमेव तन्मूलभूतवेदाभावादिति पूर्वपक्षे-शिष्टैर्वैदिकैः परिगृहीतत्वात् सदाचारस्यापि स्मृतिवदेव वेदमूलत्वं कल्पनीयम्-तन्मूलत्वाच्च सवत्र्यैव सदाचारस्यापि स्मृतिवदेव प्रामाण्यमिति सिद्धान्तः ।

१।३।८–९ आर्यप्रयोगो बलवान् यवादौ ।

(१) वेदस्मृत्यादिप्रामाण्ये साधिते तदर्थबोधे यत्र संशयो भवति स इदानीं विचार्यते ।

(२) यव-वराह-वेतसशब्दाः प्रसिद्धार्था अपि क्वचित् प्रियङ्गु-वायस-जम्बूष्वपि प्रयुज्यमाना उपलभ्यन्ते । एतादृशा एव शब्दा अत्र विचारस्य विषयाः ।

(३) लोकव्यवहारेण निश्चेतव्येषु शब्दार्थेषु कोऽर्थः एषां शब्दानामाश्रयणीय इति भवति संशयः ।

(४)तत्र पूर्वपक्षः—लोकव्यवहारस्यैवात्र नियामकत्वात्तस्य चोभयत्रापि तुल्यत्वादुभयमपि प्रामाणिकत्वेनाश्रयणीयमिति ।

(५)सिद्धान्तस्तु धर्मावबोधे हि शास्त्रप्रसिद्धिरेव बलीयसी । अतो यस्मिन्नर्थे यः शब्दः शास्त्रे शास्त्रज्ञैश्चार्यैः प्रयुक्तस्तस्मिन्नेवार्थे तस्य प्रयोगः प्रामाणिकः—स एव चाश्रयणीय इति ।

एतदेव पञ्चमाधिकरणमभिप्रेत्याह आर्यप्रयोग इति । 'यवादौ' नानार्थेषु प्रयुक्तेषु यवादिशब्देषु—'आर्याणाम्' वेदशास्त्रानुसारिणामेव, न तु म्लेच्छानां—'प्रयोगो' 'बलवान्' प्रामाणिक इति योजना ।

प्राभाकरमतेन त्वत्र पूर्वपक्षस्य सिद्धान्तस्य च किञ्चित्स्वरूपान्तरमुक्तं समस्तेऽध्याये धर्मस्य चोदनालक्षणत्वमेव साधनीयमित्याग्रहात् । तद्यथा वैदिकविधिषु यवादिशब्दा उपलभ्यन्ते—तेषां च भिन्नेष्वर्थेषु प्रयोगदर्शनात् कोऽस्य विशेषार्थ इति संशये सति तद्वाक्यं सन्दिग्धार्थत्वादप्रमाणं भवति ततश्च वेदस्य प्रामाण्यं पराहतम्भवतीति पूर्वपक्षे—वैदिकशिष्टानामेव प्रयोगस्य प्रामाणिकत्वात्तदीयप्रयोगानुसारेणैव शब्दानामर्थनिर्णयो भवतीति न सम्भवति सन्दिग्धार्थत्वं वेदवाक्यस्येति सिद्धान्तः ।

कुमारिलमतेन चात्राधिकरणे स्मृतिसदाचारयोः प्रामाण्यतारतम्यं प्रदर्शितम् । तत्रोभयोरपि वेदमूलत्वात्तुल्यमेव प्रामाण्यमिति पूर्वपक्षे—

स्मृतेः साक्षाद्वेदमूलत्वात् सदाचारस्य च स्मृतिद्वारैव वेदमूलत्वकल्पनासम्भवात् स्मृतेरेव बलवत्तरं प्रामाण्यमिति सिद्धान्तः ॥ ५ ॥

### १।३।१० म्लेच्छप्रयोगात् पिकनेमशक्तिः

(१) म्लेच्छप्रयोगस्याप्रामाण्ये साधिते तत्रापवादस्य सम्भवो विचारणीयः ।

(२) सन्ति केचिच्छब्दा ये म्लेच्छैः प्रयुज्यमाना अप्यार्यैर्न क्वचिदप्यर्थे प्रयुज्यन्ते । यथा 'पिक' 'नेमा'दिशब्दास्त एवात्र विषयाः ।

(३) एतेषामर्थाः किं म्लेच्छप्रसिद्ध्यनुसारेण ग्राह्या उत निगमनिरुक्तव्याकरणादिसिद्ध एवार्थः कश्चित्कल्पनीय इति संशयः ।

(४) तत्र पूर्वपक्षः-म्लेच्छप्रयोगस्याप्रामाणिकत्वात्तदनुसार्यर्थग्रहणमनुचितमिति निगमाद्याधारेणार्थान्तरमेव कल्पनीयमिति ।

(५) सिद्धान्तस्तु-आर्यप्रयोगविरुद्धत्वादेव म्लेच्छप्रयोगस्याप्रामाण्यम्-यत्र तादृशो विरोधो न भवति तत्र म्लेच्छप्रसिद्धस्यापि प्रयोगस्य भवत्येव प्रामाण्यम्। एवमेवार्यप्रयोगस्याभावात् पिक-नेम-तामरसशब्दा म्लेच्छप्रयोगानुसारेण कोकिलार्धकमलवाचका एव ग्राह्या इति ।

एतदेव षष्ठमधिकरणमभिप्रेत्याह-म्लेच्छप्रयोगादिति । 'म्लेच्छानां' 'प्रयोगात्' आर्यप्रयोगाभावादेव तदविरुद्धात्-'पिकनेम' शब्दयोः— 'शक्तिः' वाचकत्वं-स्वीकार्येति शेषः ॥

प्राभाकरमतेनेत्थमधिकरणम्भवति । वेदे पिकालम्भनविधिः श्रूयते-पिकशब्दस्य चार्येषु प्रयोगाभावादर्थो न ज्ञायते-अतोऽज्ञातार्थत्वाद्वेदोक्तस्य विधेरप्रामाण्यमिति वेदप्रामाण्यं पराहतमिति पूर्वपक्षे—आर्यप्रयोगाभावेऽपि म्लेच्छप्रयोगबलाज्ज्ञायत एव पिकशब्दस्यार्थः—तथा च प्रसिद्धार्थस्यैव प्रतिपादनान्नाप्रामाण्यम्पिकालम्भनश्रुतेरिति सिद्धान्तः॥६॥

### १।३।११-१४ न कल्पसूत्राण्यनपेक्षमानम्

(१) स्मृतिप्रामाण्यप्रसङ्गेनैव स्मृतित्वेन प्रसिद्धानां कल्पसूत्राणां प्रामाण्यं विचार्यते ।

(२) कल्पसूत्राण्येवात्र विषयाः ।

(३) स्मृतेस्तावद्वेदानुक्तविधानात्पौरुषेयत्वाच्च कल्पितवेदमूलत्वात्तन्मूलकल्पनासापेक्षं प्रामाण्यं. कल्पसूत्राणां तु वेदोक्तानामेवानुष्ठानादिनिरूपकत्वात्क्लृप्तवेदमूलत्वात्कल्पनानिरपेक्षमेव प्रामाण्यमुत स्मृतेरिव सापेक्षमेवेति संशयः ।

(४) तत्र पूर्वपक्षः । वेदवदेव कल्पसूत्राणामपि निरपेक्षमेव प्रामाण्यम्-तथा च यथा वैदिकविध्याश्रयेणामावास्यायामेव दर्शयागः क्रियते

तथा कल्पसूत्रविध्यनुसारेण प्रत्यहमेव कर्तव्य इति ।

(५) सिद्धान्तस्तु—कल्पसूत्राणामपि पौरुषेयत्वाद् वेदमूलत्वादेव प्रामाण्यन्न निरपेक्षमिति ।

एतदेव सप्तममधिकरणमभिप्रेत्याह न कल्पेति । 'कल्पसूत्राणि'—'अनपेक्षं' वेदमूलकल्पनानपेक्षं स्वतःसिद्धम्—'मानम्' प्रमाणं—'न' भवन्तीति योजना ।

प्राभाकरमतेन त्वत्र कल्पसूत्रे सर्वासु तिथिषु दर्शस्यानुष्ठेयत्वोक्तेरमावास्यायामेव कर्तव्यत्वविधेः श्रौतस्याप्रामाण्ये—वेदस्य प्रामाण्यम्पराहतमिति पूर्वपक्षे—कल्पसूत्राणां वेदमूलकत्वादेव प्रामाण्यन्न निरपेक्षमिति न तत्रोक्तेन विधिना श्रौतस्य बाधो युक्त इति सिद्धान्तः ॥

कुमारिलेन चैतदधिकरणमङ्गविद्यानां शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषां वेदमूलत्वादेव प्रामाण्यं न स्वत इत्येतदपि निश्चिनोति । व्याख्यानान्तरेण चतद् बौद्धादिस्मृतीनामशास्त्रत्वन्ततश्च धर्मविषयेऽप्रामाण्यं प्रतिपादयति ॥ ७ ॥

## १।३।१५—२३ होलाककर्मानियमेन कार्यम् ॥ २६ ॥

(१) स्मृतिशिष्टाचारप्रामाण्यविचारप्रसङ्गेन पुरुषदेशादिभेदेन व्यवस्थितानामाचाराणां होलकादीनां स्मृतीनां च विचारः प्रस्तूयते ॥

(२) हारीतादिस्मृतयः काश्चिद्देशभेदेन व्यवस्थितविषया उपलभ्यन्ते—होलाकाद्यनुष्ठानाचाराश्च देशविशेष एवोपलभ्यन्ते। एत एवात्र विषयाः॥

(३) तत्र संशयः—किमेतेषां देशभेदेन पुरुषभेदेन च व्यवस्थितमेव प्रामाण्यमुत सकलदेशसकलपुरुषसाधारणमिति ॥

(४) तत्र पूर्वपक्षः-व्यवस्थितमेवैतेषां प्रामाण्यम्—देशविशेष एव तेषां दृष्टत्वात्। तथाहि होलाकादयः प्राच्यैरेव क्रियन्ते—उद्वृषभयज्ञादयश्चोदीच्यैरेवेत्यादिप्रसिद्धमेव । हारीतादिस्मृतयोऽपि क्वचिदेव देशविशेष उपलभ्यन्त इति व्यवस्थितविषयमेवैतेषाम्प्रामाण्यमिति ॥

(५) सिद्धान्तस्तु—उक्तानां स्मृतीनामाचाराणां च मूलत्वेन कल्पितस्य वेदस्य व्यवस्थितविषयत्वासम्भवात्सर्वसाधारणमेव प्रामाण्यमिति॥

एतदेवाष्टममधिकरणमभिप्रेत्याह—होलाकेति । 'होलाककर्म' होलाकाद्याचारानुष्ठानम्—'अनियमेन'—व्यवस्थितविषयत्वाभावेन सर्वजनसाधारण्येन—'कार्यम्' कर्तव्यमिति योजना ॥

प्राभाकरमतेन चात्र प्राच्यादिदेशविशेषाणां हारीतादिस्मृतावेवोक्तत्वात् होलाकादीनां च देशविशेष एवानुष्ठानस्य दृष्टत्वात् तन्मूलत्वेन कल्पिते वेदेऽपि तत्तद्देशादिनियमावबोधकदेशनामाद्यवश्यम्भावीति तेषां

पदानां यदि सार्थकत्वं तदा वेदवाक्यस्यापि व्यवस्थितविषयतयाऽनवद्यप्रामाण्यहानिरथ तेषां निरर्थकत्वं तर्हि वाक्यरूपदसत्त्वादर्थबोधकत्वाभावादेव वेदवाक्यस्याप्रामाण्यमिति पूर्वपक्षे-मूलत्वेन कल्पितस्य वेदस्य न व्यवस्थितविषयत्वमतश्च नानवद्यप्रामाण्यव्याहतिरिति सिद्धान्तः ॥८॥

## १।३।२४-२९ अनादयो व्याकरणाद्‌ गवाद्याः

( १ ) शब्दस्य कोऽर्थः शुद्ध इति विचारानन्तरं तस्य किं शुद्धं स्वरूपं कथं च तन्निर्धारणीयमिति विचारः प्रसरति । गवादिशब्दानां नियतार्थता नियतस्वरूपता चापेक्षिता— तत्र च नियामकापेक्षा–किञ्च तन्नियामकमित्यादि विचारणीयम्भवति । अनियतनिमित्तके हि शब्दस्वरूपे वेदार्थाऽनियतनिमित्तकः प्राप्नोति ततश्चानध्यवसायादप्रामाण्यम् ।

( २ ) शब्दानां साधुस्वरूपमेवात्र विषयः ।

( ३ ) तत्र संशयः । गवादिशब्दानां साधुत्वे प्रयोगे वा कश्चिन्नियमोऽस्ति न वेति ।

( ४ ) पूर्वपक्षश्चेत्थं समुजृम्भते । यथा गोशब्दात्साधोर्गोरूपार्थस्य प्रतीतिस्तथैव गावीगोणीत्याद्यपभ्रंशादपीति नास्ति नियमस्तत्साधुत्वे प्रयोगे वेति ।

( ५ ) सिद्धान्तस्तु—शब्दस्य प्रयोगो लौकिकव्यवहारे समुपलभ्यमानोऽपि स्वसाधुत्वनिश्चयायापेक्षत एव नियमम् । तन्नियमनिरूपणञ्च व्याकरणशास्त्राधीनम् । साधोरेव शब्दस्य वाचकत्वे व्याकरणेन प्रयोगेण च सिद्धिः। तदतिरिक्तानामपभ्रंशानां प्रयोगमात्रेण वाचकत्वकल्पने वृथा प्रयत्नगौरवम्। अर्थावबोधकत्वं चापभ्रंशानां साधुपदसादृश्यादिद्वारैवेति।

यदि व्याकरणशास्त्रं प्रमाणं न स्यात् तर्हि अश्वमालभेतेत्यादि विधौ दन्त्यतालव्यनियामकस्याभावात्सन्दिग्धार्थतैव स्यात् । ततश्च वेदस्याप्रामाण्ये न तस्य धर्मे प्रामाण्यं निष्प्रत्यूहमिति प्राभाकरमतेनात्र पूर्वपक्षः । सिद्धान्तश्च व्याकरणस्मृतेः प्रामाण्यात् न सन्दिग्धं शब्दस्वरूपमतश्च नास्ति सन्दिग्धार्थता वेद इति ॥

तदेतन्नवमाधिकरणमभिप्रेत्याह–अनादय इति । 'व्याकरणात्' व्याकरणशास्त्रोक्तनियमात्–'गवाद्याः' साधुशब्दाः–'अनादयः' अनादिप्रयोगसिद्धनियतस्वरूपा एवेति योजना ॥ ९ ॥

## १।३।३०-३५ लोके च वेदे च न शब्दभेदः ॥

(१)पदस्य साधुत्वे व्याकरणेन निर्धारिते तस्य किमभिधेयमिति चिन्तनीयम्भवति । अस्यां च चिन्तायां लोकानुभवस्यैव प्रायशः प्रमाणत्वे-

नोपन्यसनीयत्वादनुभवस्य च लौकिकशब्दपरत्वाल्लौकिकशब्दार्थौ वैदिकशब्दार्थाभ्यां भिन्नावभिन्नौ वेत्यादौ विचार्यते।

(२) लौकिकवैदिकशब्दा अर्थाश्चात्र विषयाः।

(३) तत्र संशयः–वेदे ये गवादिशब्दा उपलभ्यन्ते ये चार्थास्तैरभिधीयन्ते ते लोक उपलभ्येभ्यस्तेभ्यो भिन्ना उताभिन्ना इति।

(४) तत्र च पूर्वपक्षः-वैदिकशब्दा लौकिकशब्देभ्यो भिन्नरूपाः। तथाहि वेदे 'ब्राह्मणास' इत्युपलभ्यते लोके तु 'ब्राह्मणा' इति। अर्थेऽपि तयोः स्फुटो भेदः प्रतिभाति। तथाहि वैदिकगोशब्देनाभिहिता गाव उत्ताना वहन्ति—"उत्ताना वै देवगवा वहन्तीति" श्रुतेः-लौकिकास्तु पादैश्चरन्तीति। पुनः स्वरोच्चारणादिभेदोऽपि स्फुटः। लौकिकाः शब्दा सर्वैर्मनुष्यैरुच्चारणीया भवन्ति वैदिकास्तु स्त्रीभिः शूद्रैर्वा नैवोच्चारणीया इत्येवं जातीयो महान् भेदो दृश्यते लौकिकवैदिकशब्दयोः। तस्मात् लौकिकशब्दा वैदिकशब्देभ्यो भिन्ना एवेति।

(५) सिद्धान्तस्तु–य एव लौकिकाः पदार्थास्त एव वैदिका अपि—यानि च लौकिकानि पदानि तान्येव वैदिकान्यपीत्यबाधितप्रत्यभिज्ञाबलादेव सिध्यति। ये च भेदाः प्रदर्शितास्ते सर्वे क्वाचित्का एव कारणविशेषमूलका इति।

एतदेव दशममधिकरणमभिप्रेत्याह लोक इति। 'लोके' 'वेदे' च' 'शब्दानां' तदर्थानां च 'भेदो' नास्तीति योजना ॥१०॥

## १।३।३०–३५ गवादिशब्दोऽभिदधाति जातिम्

(१) लौकिकवैदिकशब्दार्थयोरैक्ये साधिते गवादिशब्दस्य किमभिधेयमिति विचार्यते ॥

(२) तत्र गवादिशब्दा एव विषयः ॥

(३) तत्र संशयः–गोशब्दो व्यक्तिमभिदधात्याकृतिं वेति। तन्मूलं च भाष्यमतेन प्रभाकरानुमोदितेनेत्थम्—गौरित्युक्ते सामान्यस्यैव प्रत्ययो जायते आलम्भनादिक्रियाभिश्च सम्बन्धो व्यक्त्यैव सम्भवति न सामान्येनेति। प्रत्ययः क्रियासम्बन्धश्च जातिव्यक्त्योरुभयोरेव भवतीत्यतः संशयः किं जातिरभिधीयते उत व्यक्तिरिति ॥

(४) तत्र पूर्वपक्षः– गामालभेत गामानयेति सर्वत्र आलम्भनानयनादिक्रियाणां व्यक्तावेव सम्भवात् जातौ चासम्भवाद् व्यक्तिरेव शब्दार्थ इति कुमारिलमतेन। प्रभाकरमतेन तु–गोशब्दस्य व्यक्तिरर्थो जातिर्वेति संशये

शामाकमेतेत्यादिवैदिकं वाक्यं सन्दिग्धार्थमतश्चाप्रमाणमिति ॥

( ५ ) सिद्धान्तस्तु अन्वयव्यतिरेकाभ्यामाकृतेरेव शब्दार्थत्वम् न व्य-क्तेस्तत्रानन्तर्याद्व्यभिचाराच्चेति । एवं च शब्दानां जातिवाचकत्वे निश्चिते नास्ति सन्दिग्धार्थत्वं वेदे तज्जनितमप्रामाण्यं वेति ॥

तदेतदेकादशमधिकरणमभिप्रेत्याह—गवादिशब्द इति । 'गवादिशब्दः' 'जातिम्' आकृतिमेव—'अभिदधाति' इति योजना ॥२१॥

न्यायास्तु पादे दश वै तथैकः,

तृतीयपादार्थमुपसंहरति—न्यायास्त्विति । 'पादे' तृतीये 'दश वै तथैकः' एकादश 'न्यायाः' । यद्यप्यधिकरणान्यत्र सूत्रानुसारेण दशैव तथाऽपि दशमाधिकरणस्य सर्वैर्व्याख्यातृभिर्वर्णकद्वयात्मकत्वेन व्या-ख्यातत्वादेकादश संख्या भवतीति ॥ २७ ॥

इति प्रथमाध्याये तृतीयः पादः ॥

---

# अथ चतुर्थः पादः ॥

## ( नामधेयप्रामाण्यनिरूपणः )

### (१) १।४।१-२ उद्भिन्नाम गुणो नैव

(१) विधीनामर्थवादानां मन्त्राणां चार्थवत्त्वं धर्मविबोधं प्रति प्रदर्शि-तम् । कानिचिदेतत्त्रयातिरिक्तानीव वेदवाक्यान्युपलभ्यन्ते यत्र तद्गतश-ब्दविशेषार्थविषये संशयो भवति । तेषां विचार इदानीं प्रस्तूयते ॥

(२) 'उद्भिदा यजेत पशुकामः' इत्यत्र उद्भिच्छब्दोऽत्र विषयः ॥

(३) तत्र 'उद्भिच्छब्दः किं 'उद्भिद्यतेऽनेनेति' व्युत्पत्त्या खनित्रादिं गुणं विधत्तेऽथवा तन्नामकं यागविशेषमिति संशयः ॥

(४) यथा दध्ना जुहोतीति वाक्ये दधिशब्देन दधिगुणो विधीयते तथ-त्रापि उद्भिच्छब्देन कश्चिद्गुणविशेष एव विधीयते खनित्रादिरूप इति पूर्वपक्षः । प्राभाकरमतेन च खनित्रादिरूपस्य गुणस्य निष्प्रयोजनस्य वि-धायकत्वात् असज्जल्पितमिवैतद्वाक्यमप्रमाणमिति पूर्वपक्षस्वरूपम् ॥

(५) सिद्धान्तस्तु-दध्यादिपदवदुद्भिच्छब्दस्य प्रसिद्धार्थत्वाभावात् गु-णविधित्वप्रयोजकमत्वर्थलक्षणाया असम्भवान्नैव युज्यतेऽस्य वाक्यस्य गुणविधित्वम् । तस्मादस्य शब्दस्य यागविशेषनामधेयतैव युक्ता । तथा चोद्भिन्नामकेन यागेन यजेतेति वाक्यार्थः पर्यवस्यतीति ॥

एतदेव प्रथममधिकरणमभिप्रेत्याह-उद्भिदिति । 'उद्भित्' इति पदं 'नाम' यागनामधेयमेव-'गुणः' खनित्रादिरूपः 'न' भवतीति ॥

कुमारिलेन त्वत्राधिकरणद्वयमुपवर्णितम् । तत्राद्यं यथा—उद्भिदा-

दिपदं धर्मे प्रमाणमुत नेति संशये पूर्वपक्षः-नैतत्प्रमाणम् विध्यर्थवाद-मन्त्रेष्वनन्तर्गतत्वादिति । उद्भिदा यजेतेति स्पष्टे विधिस्वरूपे विधावेवास्यान्तर्भावाद्भवत्येव प्रमाणत्वमिति सिद्धान्तः ॥ एतदनन्तरं चापरमधिकरणमुद्भिदादिशब्दो गुणविधिरुत यागनामेति यथोपवर्णितम् ॥१॥

(२) १।४।३ नाम चित्रापदं तथा ॥

(१)यत्किंचिदंशेन पूर्वोदाहृतवाक्यसदृशमेवापरं वाक्यं 'चित्रया यजेत पशुकाम' इति । उद्भिद्वाक्ये उद्भिच्छब्दो यौगिकत्वेन खनित्राद्यर्थे कथमपि नेतुं योग्य इह तु चित्राशब्दो रूढ्यैव चित्रवर्णं स्त्रीपशुमभिधत्तेऽतो यागकर्मणि चित्रत्वस्त्रीत्वगुणयुक्तपशोर्विधितया रूढ्यैव नेतुं योग्य इति पृथग्विचारः प्रवर्तते ॥

(२) 'चित्रया यजेत पशुकाम' इत्यत्र चित्रापदं विषयः ॥

(३) तत्र संशयः-चित्राशब्दोऽत्र किं यागनामधेयमेवोताग्नीषोमीये पशौ स्त्रीत्वचित्रत्वगुणविधायक इति ।

(४) यतोऽनेन शब्देन रूढ्यैव स्त्रीत्वचित्रत्वेऽभिधीयेते-न चैतेऽन्यत्र केनचित्पदेनोक्ते-अग्नीषोमीयं पशुमालभेतेत्यत्र च पशुमात्रविधानम्-अतो गुणविधिरेवायमिति पूर्वपक्षः ॥

(५) सिद्धान्तस्तु-एकेन पदेन गुणद्वयविधाने वाक्यं भिद्यते-वाक्यभेदपरिहाराय गुणद्वयविशिष्टपशुविधानेऽनेकगुणविधानेन गौरवम्-तस्मार्थाधिकरणन्यायेन यजिसामानाधिकरण्येन यागनामधेयमेवायं शब्द इति ॥

तदेतद्द्वितीयमधिकरणमभिप्रेत्याह नामेति । 'तथा' उद्भित्पदवदेव 'चित्रापदम्' अपि 'नाम' यागनामधेयमेवेति ॥

प्रभाकरमतेन त्वत्रापि सन्दिग्धार्थत्वादप्रामाण्यमिति पूर्वपक्षे-नामधेयत्वनिश्चये न सन्दिग्धार्थतेति सिद्धान्तः ॥२॥

(३) १।४।४ अग्निहोत्रपदन्नाम

(१) अग्निहोत्रं जुहोतीत्यपरं नामधेयवाक्यम् ।

(२) अग्निहोत्रपदमेवात्र विषयः ।

(३) तत्र संशयः—अग्निहोत्रशब्दोऽत्र देवतारूपं गुणं विधत्त उत यागस्य नाम भवतीति ।

(४) तत्र पूर्वपक्षः-अग्निहोत्रशब्दोऽत्र देवताविधायक एव—अन्यथा देवताविधायकशब्दान्तरस्याभावाज्जुहोतिपदेन विहितो होमोऽदैवत एव स्यादिति ॥

(५) सिद्धान्तस्तु—अग्निर्ज्योतिरित्यादिमन्त्रेणैवाग्निदेवतायाः प्राप्तत्वात् तस्या विधायकान्तरं नापेक्षितम् । तस्मादग्निसूर्यदेवतोकस्य सायम्प्रातः-

करणीयस्यानित्यस्य कर्मणो नामधेयमेवाग्निहोत्रशब्देऽग्नये होत्रमस्मिन् कर्मणीत्यग्निदेवतासम्बधनिमित्तकमिति ॥

प्रभाकरमते तु सन्दिग्धार्थत्वादप्रामाण्यमिति पूर्वपक्षे नामधेयत्वे निश्चिते नास्ति सन्दिग्धार्थतेति सिद्धान्तः ॥

तदेतत्तृतीयमधिकरणं तत्प्रख्यन्यायनाम्ना व्यवहृतमधिकृत्याह--अग्निहोत्रेति । 'अग्निहोत्रपदं, 'नाम' एव भवति–न गुणविधिरिति योजना ।

इयमेव गतिः 'आघारमाघारयती'त्यत्राघारशब्दस्यापि ॥ ३ ॥

## (४) १।४।५ नाम श्येनपदं पुनः ॥

( १ ) श्येनेनाभिचरन् यजेतेत्यपरं नामधेयवाक्यम्— ।

( २ ) श्येनपदमत्र विषयः ।

( ३ ) अत्र श्येनपदं यागनामधेयमुत श्येनपक्षिरूपगुणविधायकमिति संशयः ।

( ४ ) तत्र पूर्वपक्षः श्येनपदमत्राग्निष्टोमयागे सोमरूपद्रव्यस्य स्थानेऽभिचारकामस्य श्येनपक्षिरूपं द्रव्यान्तरं विधत्त-तथा च देवतायास्तत एव लाभाद् यागस्यास्य स्वरूपमभिसम्पद्यते । अस्य तु स्वतन्त्रस्य कस्यचिद्यागस्य नामत्वे तस्य यागस्य द्रव्यदेवतयोरन्यतो लाभासम्भवात् स्वरूपमेव लुप्येतेति ॥

(५) सिद्धान्तस्तु श्येनपदमत्राभिचारकर्मणो नामधेयमेव-'यथा श्येनो निपतये'त्यादिवाक्यशेषवर्णितोपमानस्य तथैवोपपद्यमानत्वादिति ॥

प्राभाकरमतेन तु पूर्ववत् ॥

तदेतच्चतुर्थमधिकरणं तद्व्यपदेशन्यायनाम्ना प्रसिद्धमधिकृत्याह नामेति । 'श्येनपदं' 'पुनः' अपि 'नाम' एवाभिचारकर्मणो भवति, न पक्षि द्रव्यविधिरिति ॥ ४ ॥

## (५) १।४।६–८ वाजपेयपदं नाम

( १ ) वाजपेयेन स्वाराज्यकामो यजेतेत्यपरन्नामधेयवाक्यम् ।

( २ ) वाजपेयपदमेवात्र विषयः ।

( ३ ) तत्र संशयः–किमिदं पदं यागनामोत गुणविधिरिति ।

( ४ ) तत्र पूर्वपक्षः–'वाजम्' अन्नम् 'पेयं' सुरा चेति द्रव्यद्वयमनेन पदेन विधीयते–अस्य यागनामधेयत्वे यजिना विहितस्य यागस्याद्रव्यत्व-प्रसङ्गादिति ॥

( ५ ) सिद्धान्तस्तु–नैवेदं गुणविधायकमपि तु तदभिहितद्रव्यद्वय-निमित्तकं नामैव यागविशेषस्येति ॥

प्राभाकरमतेन पूर्ववत् ॥

तदेतत्पञ्चममधिकरणमभिप्रेत्याह—वाजेति । 'वाजपेयपदं' 'नाम' एव भवति न द्रव्यविधिरिति ॥५॥

(६) १।४।९ विधिरष्टाकपालवाक् ।

(१) नामधेयदृष्टान्तानामतिदृष्टान्तभूतान्यनामकान्यघटितवाक्यमेकं विचार्यते ॥

(२) यदाग्नेयोऽष्टाकपालोऽमावास्यायामित्यत्र वाक्ये यदाग्नेयपदं तदेवात्र विषयः ॥

( ३ ) तत्र संशयः—किमिदं नामोताग्निदेवतारूपगुणविधिरिति ॥

( ४ ) तत्र पूर्वपक्षः-यथाऽग्नये होत्रमस्मिन् कर्मणीत्यग्निदेवतासम्बन्धं निमित्तीकृत्याग्निहोत्रपदं कर्मणो नाम तथैवाग्नेयशब्दोऽप्यग्निसम्बन्धं निमित्तीकृत्य नामैव कर्मविशेषस्येति ॥

(५) सिद्धान्तस्तु–अत्र वाक्ये आग्नेयशब्दस्य कर्मनामधेयत्वे प्रकृतस्य कर्मणो देवताराहित्यमेव स्यात् । अग्निहोत्रे तु अग्निर्ज्योतिरिति मन्त्रलिङ्गाद्देवता प्राप्यतेऽत्र तु नास्ति तादृशं किञ्चिद्देवताप्रापकम्प्रमाणान्तरम् । आग्नेयपदे तु देवतावाचकतद्धितप्रत्ययस्य सत्त्वात् देवतारूपो गुण एवानेन पदेन विधीयत इति ।

तदेतत् षष्ठमधिकरणमभिप्रेत्याह–विधिरिति । 'अष्टाकपालवाक्' यदाग्नेयोऽष्टाकपाल इति वाक्ये 'आग्नेय'पदं 'विधिः' अग्निरूपदेवतायाः–न तु कर्मनामधेयमिति ॥६॥

(७)१।४।१० बर्हिश्शब्दस्तृणं वक्ति

(१) अन्येषामपि सन्दिग्धार्थपदघटितानां वाक्यानां विचार इदानीं प्रस्तूयते ॥

(२) बर्हिर्लुनातीति वाक्ये बर्हिःशब्द एवात्र दृष्टान्तभूतो विचारविषयः ॥

(३) तत्र संशयः–बर्हिःशब्दोऽयं किं संस्कृतं द्रव्यविशेषं वक्त्युत बर्हिस्सामान्यमिति ॥

(४) तत्र पूर्वपक्षः–बर्हिःपुरोडाशाज्यादिशब्दाः सर्वे संस्कारपरिणामेव तत्तद्द्रव्याणां वाचका उपलभ्यन्ते अतोऽत्रापि वाक्ये बर्हिःशब्दः शुद्धासंस्कृतमेव तृणमभिदधातीति ॥

(५) सिद्धान्तस्तु–अन्वयव्यतिरेकाभ्यां जातिवाचित्वमेवैतादृशानां शब्दानामध्यवसेयम्। संस्कृतमात्रपरत्वे तु लौकिकव्यवहारेषु व्यभिचारः स्यादिति ॥

प्रभाकरमतेन तु पूर्ववदेव ॥

तदेतत्सप्तममधिकरणमभिलक्ष्याह-बर्हिरिति । 'बर्हिःशब्दः' बर्हिर्लुनातीत्यादिवाक्येषु 'तृणं' तृणसामान्यं 'वक्ति' अभिदधाति, न संस्कृतमात्रमिति ॥ अयमेव न्यायः पुरोडाशाज्यपदयोरपीति ज्ञेयम् ॥ ७ ॥

(८) १।४।११ यौगिकं प्रोक्षणीपदम् ॥ २६ ॥

(१) प्रोक्षणीरासादयेत्यपरं सन्दिग्धार्थं वाक्यम् ।

(२) तत्र प्रोक्षणीशब्दो विचारविषयः ।

(३) तत्र संशयः—प्रोक्षणीशब्दस्यार्थोऽत्र किमभिमन्त्रणासादनादिसंस्कारपरिपूतमेव जलमुत जलसामान्यमात्रमुत प्रोक्षणकार्यसम्पादकद्रव्यमात्रमिति ।

(४) तत्र पूर्वपक्षद्वयम्—संस्कृतमेव जलं घकत्ययं शब्दः सर्वत्र यदिककर्मणि संस्कृतस्यैव द्रव्यस्योपयोगदर्शनादित्येकः । पूर्वाधिकरणन्यायेन जलसामान्यमेवोच्यत इत्यपरः ।

(५) सिद्धान्तस्तु—संस्कृतमात्रपरत्वेऽन्योन्याश्रयो जातिमात्रपरत्वे वृद्धव्यवहारविरोधः—ततो व्याकरणव्युत्पत्त्या क्लृप्ते योगार्थ एव नेयः—तथा च प्रोक्षणकर्मोपयोगिनां जलघृतादीनां सर्वेषामेवायं शब्दो वाचक इति ।

प्राभाकरमतेन पूर्ववत् ॥

तदेतदष्टममधिकरणमभिलक्ष्याह—यौगकमिति । 'प्रोक्षणीपदम्' प्रोक्षणीरासादयेति वाक्यस्थं—"यौगिकम्" प्रोक्षणसम्पादकद्रव्यरूपयोगार्थपरमिति ॥ ८ ॥

(९) १।४।१२ निर्मन्थ्ये योगनियमः

(१) इदमपरं सन्दिग्धार्थपदघटितं वाक्यम्—निर्मन्थ्येनेष्टकाः पचन्तीति ।

(२) अत्र निर्मन्थ्यशब्दो विषयः ।

(३) तत्र संशयः—किमयं शब्दो बर्हिःशब्दवदग्निसामान्यवाच्युत योगार्थेन निर्मन्थनजन्यमात्राग्निवाचीत ।

(४) तत्र पूर्वपक्षः—बर्हिःशब्दन्यायेनाग्निसामान्यवाच्ययमिति ।

(५) सिद्धान्तस्तु—सद्यो निर्मन्थनजन्य एवाग्निरत्रोच्यते तत्रैवैतादृशशब्दप्रयोगदर्शनात् तादृशेनैवाग्निनेष्टकानां पाकस्यौचित्यादिति ।

प्राभाकरमते पूर्ववत् ॥

तदेतन्नवममधिकरणमभिलक्ष्याह—निर्मन्थ्य इति । 'निर्मन्थ्ये' निर्मन्थ्येनेष्टकाः पचन्तीत्यत्र निर्मन्थ्यशब्दे—'योगनियमः' यौगिकार्थ एव ग्राह्यो नान्य इति ॥ ९ ॥

## (१०) १।४।१३-१६ वैश्वदेवे तु नामता ॥

(१) अपरं सन्दिग्धार्थं वाक्यं वैश्वदेवेन यजेतेति ।

(२) वैश्वदेवशब्दोऽत्र विषयः ।

(३) तत्र संशयः—वैश्वदेवशब्दो यागविशेषस्य नामधेयमुत कस्मिश्चित् कर्मविशेषे देवतारूपगुणविधायक इति ।

(४) तत्र पूर्वपक्षः—यजेतेत्यनेनाग्नेयादीनष्टौ यागाननूद्य तत्र विश्वेदेवा एव देवतेत्यनेन शब्देन विधीयते—तेन गुणविधिरेवायन्तदभावे यागस्वरूपानिष्पत्तिरेवेति ।

(५) सिद्धान्तस्तु--आग्नेयादीनां यागानां देवतानां तत्तत्पदेनैवोक्तत्वान्नास्ति देवताविधानापेक्षेत्युक्तस्य यागाष्टकसङ्घस्य सङ्ग्राहकन्नामैवतद् वैश्वदेव इति ।

प्राभाकरमतेन पूर्ववत् ॥

तदेतद्दशममधिकरणमभिप्रेत्याह वैश्वदेव इति । 'वैश्वदेवे' वैश्वदेवेन यजेतेति वाक्यगते वैश्वदेवशब्दे—'नामता' नामत्वमेव न गुणविधित्वमिति ॥१०॥

## (११) १।४।१७।२२ अष्टसङ्ख्याऽवयुत्योक्ता ।

(१) इदमपरं सन्दिग्धार्थं वाक्यम् । 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यस्य विधेरनन्तरं वाक्यम् 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनातीति' ।

(२) अत्राष्टाकपालशब्दो विषयः ।

(३) तत्र संशयः—किमयं शब्दो यागनामधेयमुत स्तुतिरेवेति ।

(४) तत्र पूर्वपक्षः—अग्निहोत्रशब्दवत्कर्मनामधेयमेवेतदिति ।

(५) सिद्धान्तस्तु—कर्मान्तरस्यात्राभावान्नास्ति नाम्नोऽवकाशः । तेन पूर्वविधिवाक्यगतानां द्वादशकपालानाम्मध्याद् उत्कृष्याष्टानां स्तुतिरेव द्वितीये वाक्य उपन्यस्तेति ।

प्राभाकरमतेन नायं गुणविधिर्न वा नाम न वा मन्त्र इति निरर्थकत्वादप्रमाणमिति पूर्वपक्षे—अर्थवादत्वेनान्वयान्न निरर्थकत्वमिति सिद्धान्तः ॥

एतदेवैकादशमधिकरणमभिप्रेत्याह—अष्टसङ्ख्येति । 'अष्टसङ्ख्या' यदष्टाकपालो भवतीत्येतद्वाक्यगता—'अवयुत्य' पूर्ववाक्यगताया द्वादशसङ्ख्याया अपकृष्य—'उक्ता' स्तुत्यर्थमिति शेषः ॥११॥

(१३) १।४।२३ प्रस्तरे यष्टृवाग्गुणात् ॥ ३० ॥

(१) इदमपरं सन्दिग्धार्थं वाक्यम्--'यजमानः प्रस्तर' इति ।

(२) तत्र यजमानशब्दो विचारविषयः ।

(३) तत्र संशयः—यजमानस्य प्रस्तरशब्दो नामधेयमुत प्रस्तरशब्दस्य यजमानशब्दः, अथ यजमानशब्देनात्र गुणो विधीयते अथवा प्रस्तरस्य स्तुतिरेव यजमानशब्देन क्रियत इति ।

(४) तत्र पूर्वपक्षः—उद्भिन्न्यायेन सामानाधिकरण्यबलेन यजमानशब्दः प्रस्तरस्य नामधेयमिति । अथ वा गुण एव कश्चिद्विधीयते यजमानशब्देनेति ।

(५) सिद्धान्तस्तु—प्रस्तरयजमानयोर्गोमहिषयोरिवात्यन्तभिन्नत्वान्न सम्भवतीतरेतरनामता-यजमानस्य गुणत्वे होमादौ तस्यापदीयमाणत्वात्कर्मलोपप्रसङ्ग एव-तस्माद् यजमानगुणेन यागसाधकत्वेन युक्तो विधेयः प्रस्तरो यजमानशब्देन स्तूयत इति ।

प्रभाकरमतेन पूर्ववत् ॥

एतदेव द्वादशाधिकरणमभिप्रेत्याह प्रस्तर इति । 'प्रस्तरे' प्रस्तरम्प्रति—'यष्टृवाक्' यष्टा यजमानः इति 'वाक्' उक्तिरुच्चारणं स्तुतिरिति यावत्—'गुणात्' यागसाधकत्वरूपाद्यजमानगुणसत्त्वमूलिकैवेति योजना ॥१३॥

(१४) १।४।२४ अग्निर्वै ब्राह्मणो जात्या

(१) आग्नेयो वै ब्राह्मण इत्यपरं सन्दिग्धार्थं वाक्यम् ।

(२) तत्र आग्नेयशब्दो विचारविषयः ।

(३)(४)(५) तत्र पूर्वाधिकरणवदेव संशयपूर्वपक्षसिद्धान्ताः । स्तुतमूलन्तु समानजन्मतैव—अग्नेर्ब्राह्मणस्य च मुखादेव प्रजापतिनोत्पादितत्वादिति ॥

प्रभाकरमतेन पूर्ववत् ।

तदेतत्त्रयोदशाधिकरणमभिप्रेत्याह अग्निरिति । 'ब्राह्मणः'-'जात्या' जन्मना प्रजापतिमुखादुत्पन्नत्वरूपेण साधारणगुणद्वारा-'अग्निः' इति स्तूयते-'आग्नेयो ब्राह्मण' इत्यस्मिन् वाक्य इति योजना ॥

एष एव न्याय 'ऐन्द्रो राजन्यः' 'वैश्यो वैश्वदेवः' इत्यादिषु वाक्येषु॥१४॥

(१५) १।४।२५ यूपे सूर्य इति स्तुतिः ।

(१) आदित्यो यूप इत्यपि सन्दिग्धार्थं वाक्यम् ।

(२) तत्रादित्यशब्दो विषयः ।

(३)(४)(५) तत्रापि संशयादयः पूर्ववदेवानुसन्धेयाः। स्तुतिमूलं तु तेजस्वित्वसाम्यमिति।

प्रभाकरमतेन पूर्ववत्।

एतच्चतुर्दशाधिकरणमभिप्रेत्याह यूप इति। 'यूपे' यूपविषये-'सूर्य इति' उक्तिः 'स्तुतिः' एवेति योजना।

एष एव न्यायो यजमानो यूप इत्यस्मिन् वाक्ये ॥१५॥

## (१६) १।४।२६ प्रशंसाऽश्वे पशूक्तिः स्यात्

(१) इदमपरं सन्दिग्धार्थं वाक्यम्—'अपशवो वा अन्ये गोश्वेभ्यः पशवो गोअश्वाः' इति।

(२) तत्र पशुशब्दो विषयः।

(३) पशुशब्देन किं गुणः कश्चिद्विधीयत उत स्तुतिरेवायमिति संशयः।

(४) गुणविधिरेवायं—गवाश्वयोः पशुत्वरूपो गुणो विधीयत इति पूर्वपक्षः।

(५) सिद्धान्तस्तु-अर्थवाद एवायं गवाश्वौ स्तौति-ईदृशो हि गवाश्वयोर्महिमा यदनयोरपेक्षयाऽजादयः पशवोऽप्यपशव इव भवन्तीत्यर्थः।

प्राभाकरमतं पूर्ववत् ॥

तदेतत्पञ्चदशाधिकरणमभिप्रेत्याह-प्रशंसेति। 'अश्वे' अश्वविषये—'पशूक्तिः' पशवो गोअश्वा इति—'प्रशंसा' एव पशुगुणोत्कर्षं प्रदर्शयतीति भावः ॥१६॥

## (१७) १।४।२७ भूम्ना स्युः सृष्टयो मताः ॥ ३१ ॥

(१) सृष्टीरुपदधातीत्यपरं सन्दिग्धार्थं वाक्यम्।

(२) तत्र सृष्टिशब्देनात्र सृष्टिनामप्रसिद्धैर्मन्त्रैर्या इष्टका उपधीयन्ते ता उच्यन्ते। अयमेव सृष्टिशब्दोऽत्र विचारविषयः।

(३)संशयश्च-सृष्टिशब्देनात्र किं 'ब्रह्माऽसृज्यत भूतान्यसृज्यन्त' इत्यादिमन्त्ररूपो गुण इष्टकानामुपधाने विधीयत उत स्तुतिरेवायम्मन्त्राणामिति।

(४) तत्र पूर्वपक्षः—सृष्टिनाम्ना प्रसिद्धा मन्त्रा अनेन शब्देनोपधानगुणत्वेन विधीयन्त इति।

(५) सिद्धान्तस्तु-उक्ता मन्त्रा अनेनानूद्यन्ते इष्टकाः स्तोतुम्। यद्यपि सर्वेषु मन्त्रेषु सृजतिर्धातुर्नोपलभ्यते तथाऽपि बहुषु तस्य सत्त्वात्ते सृष्टिनाम्ना प्रसिद्धाः। स्तुतेश्चार्थः-'यथा नानावाक्यात्मकेषु मन्त्रेषु सृष्टिशब्दबहुत्वं तथैवेष्टकास्वपि बहुत्वमिति'। तथा चात्र 'भूमा' बहुत्वमेव स्तुतेर्मूलमिति।

प्राभाकरमतमपूर्ववत् ॥

तदेतत्षोडशाधिकरणमभिप्रेत्याह–भूम्नेति । 'भूम्ना' बहुत्वगुणयोगेनैव 'सृष्टयः' सृष्टिनाम्ना प्रसिद्धाः–'मताः' अवबुद्धाः–इष्टका इति शेषः ॥१७॥

## (१८) १।४।२८ प्राणभृत् प्राणभृद्योगात्

प्राणभृत उपदधातीत्यत्रापि प्राणभृच्छब्देन सृष्टिन्यायेन मन्त्रो विधीयत इति पूर्वपक्षे सिद्धान्तः–इष्टकोपाधानविधावस्मिन् 'एतस्यैव प्राणान् दधातीति' वक्ष्यमाणार्थवादोपपत्तये लिङ्गप्रकरणप्राप्तमन्त्रस्यानुवादः क्रियते प्राणभृच्छब्देन । यद्यपि प्रकृतमन्त्रेष्वेकस्मिन्नेव प्राणशब्द उपलभ्यते ततश्चैक एव प्राणशब्दं लिङ्गं बिभ्रत् 'प्राणभृत्' भवति तथाऽपि तत्सहचरिता अन्येऽपि तन्नाम्ना गृह्यन्त इति ।

एतत्सप्तदशमधिकरणमभिप्रेत्याह प्राणभृदिति । 'प्राणभृतः' प्राणशब्दधारिणो मन्त्रस्य 'योगात्' सहचारात् तल्लिङ्गरहितोऽपि मन्त्रः–'प्राणभृत्' भवति तन्नाम्नोच्यते स्तोतुमिति भावः ॥१८॥

## (१९) १।४ २९ सन्देहे निर्णयः स्तुतेः ।

(१) सन्दिग्धार्थानि कतिचिद् वाक्यान्युदाहृत्य तदर्थावगमाय न्यायानुपवर्ण्येदानीं वाक्यार्थसन्देहापनुत्तये एकः सामान्योपयोगी न्यायो वर्णनीयः प्राप्नोति ।

(२) अक्ताः शर्करा उपदधातीति वाक्यमत्र विषयः ।

(३) तत्र संशयः–पाषाणखण्डानां शर्कराणामभ्यञ्जनं यदत्र विहितं तदञ्जनं केन द्रवद्रव्येण कर्तव्यम्–जलेन तैलेन घृतेन वेति ।

(४) तत्र पूर्वपक्षः—येन केनापि द्रव्येणाञ्जनमञ्जनसामान्यस्य श्रुतावुक्तत्वात् कस्यचिदेकस्याञ्जकद्रव्यस्योपयोगनियमे मानाभावादिति ।

(५) सिद्धान्तस्तु–उक्तस्य वाक्यस्य शेषे तेजो वै घृतमिति घृतस्य स्तुतिरुपलभ्यते । तेन चात्र घृतस्यैवाञ्जनद्रव्यविशेषस्य विधिरुन्नीयते घृतेनैवाञ्जनीयाः शर्करा इति ।

एतदष्टादशाधिकरणमभिप्रेत्याह सन्देह इति । 'सन्देहे' किं कर्तव्यमिति संशये सति 'स्तुतेः' अर्थवादादेव 'निर्णयः' भवतीति शेषः ॥ १९ ॥

## (२०) १।४।३० अनुष्ठानावसायोऽर्थात्

(१) सन्देहस्यापरमुदाहरणं प्रदर्श्यते ।

(२) 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति वाक्यत्रयमत्र विषयः ।

(३) अत्र विहितानां त्रयाणामवदानसाधनानां स्रुवस्वधितिहस्ताना-

ऽवध्ये कस्योपयोगः कार्योऽवदेयविशेषेष्वाज्यमांसपुरोडाशेष्विति संशयः।

(४) तत्र पूर्वपक्षः। सङ्कीर्ण एवैषामयोगः—यत्र कुत्रापि द्रव्येऽवद्येयस्य कस्याप्यवदानसाधनस्योपयोगः कर्तव्यः—व्यवस्थापकस्य प्रमाणस्याभावादिति।

(५) सिद्धान्तस्तु—नात्र व्यवस्थापकप्रमाणाभावः। शक्तिरेवात्र व्यवस्थापिका। यस्य साधनस्य यद्द्रव्यावदाने शक्तिस्तस्यैव तद्द्रव्यावदाने प्रयोगः कर्तव्यः। तथा च द्रवद्रव्याणामवदानं स्रुवेण कार्यम्, मांसस्यात्रविशेषेण स्वधितिना पुरोडाशस्य च हस्तेनैवेति स्रुवादीनां त्रयाणां योग्यतैव नियामिका भवतीति॥

एतद्न्नविंशाधिकरणमभिप्रेत्याह अनुष्ठानेति। 'अनुष्ठानस्य' कर्तव्यस्य 'अवसायः' निश्चयः-'अर्थात्' तत्तद्वस्तुयोग्यताद्वारा भवतीति शेषः॥

न्यायास्त्वेकोनविंशतिः॥

पादार्थमुपसंहरति न्याया इति। अत्र चतुर्थे पादे 'एकोनविंशतिः न्यायाः' अधिकरणानि इति॥ भाष्यानुसारेणैषा सङ्ख्या वार्तिकानुसारेण तु विंशतिरधिकरणानि प्रथमस्याधिकरणस्य तत्राधिकरणद्वयात्मकत्वाङ्गीकारात्॥ ३२॥

एवं च—

विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम्।
प्रथमाध्यायगैः पादैर्धर्मे मानमुदीरितम्॥

इति प्रथमाध्याये चतुर्थः पादः॥

समाप्तश्च प्रथमोऽध्यायो धर्मप्रमाणनिरूपकः॥

# अथ द्वितीयोऽध्यायः कर्मभेदनिरूपकः ॥

## तत्र प्रथमः पादः ॥

(१)२।१।१-४ एकः पदार्थो जनयत्यपूर्वं
स नूनमाख्यातपदाभिधेयः ।

(१) प्रमाणमुपजीव्यत्वात्प्रथमेऽध्याय ईरितम् ।
मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते ॥

इयमेवात्राध्यायसङ्गतिः।धर्मःकथंलक्षण इति प्रथमेऽध्याये निरूपितम्।इदानीं को धर्मः कानि कर्माणि धर्मव्यपदेशभांजीति विविच्यते। कुमारिलमतेनैव चात्र कर्मभेदो मुख्योऽध्यायार्थः । तदुपोद्घाततदपवादतत्प्रसक्तानुप्रसक्तत्वेनान्योऽर्थो गौणः । प्राभाकरमतेन तु शास्त्रभेद एव द्वितीयाध्यायार्थो मुख्यः । कर्मणां तद्विधायकानां शास्त्राणां वा भेदे निरूपणीये तद्भेदनिरूपकाणां मध्ये फलमेव मुख्यमिति कृत्वा तत्स्वरूपतत्प्रमाणादिविचार एवादावुपोद्घातरूपेण क्रियते।

विधिवाक्यघटकानां पदानां केन पदेन सम्बन्धइत्यत्र प्रथमेऽधिकरणे चिन्त्यते।

(२) सामान्यतो विधिवाक्योक्तं कर्मफलभूतमपूर्वमेवात्र विषयः ।

(३) तत्र संशयः—विधिवाक्ये किं सर्वैरेव पदैरपूर्वं सम्बध्यत उतैकेनैवेति ।

(४) पूर्वपक्षश्च—सर्वैरेव पदैरपूर्वं सम्बध्यते—तस्य फलत्वात् सर्वेषां च पदानां फलान्वयित्वादिति ।

(५) सिद्धान्तस्तु—एकेनैव पदेनैकस्यापूर्वस्य सम्बन्धः एकस्यानेकसम्बन्धकल्पने गौरवात् । तस्मादेकमपूर्वमेकेनैव पदेन प्रतिपाद्यते पदान्तरं च तच्छेषतयाऽन्वेतीति ।

तदेतत्प्रथमाधिकरणस्य प्रथमवर्णकमभिप्रेत्याह एक इति । 'एकः पदस्यार्थः' एकेन पदेन योऽत्र उक्तः स एव 'अपूर्वं जनयति' अपूर्वजनकत्वेनावधार्यत इति योजना ।

(१) एकेनैव पदेनापूर्वं प्रतिपाद्यत इति साधिते किन्तत्पदं येन तत्प्रतिपाद्यत इतीदानीं चिन्त्यते द्वितीयवर्णके ।

(२) विधिवाक्यमेवात्र विषयः ।

(३) तत्र संशयः-अपूर्वं विधिवाक्यगतनामपदेनाभिधीयत उताख्यातपदेनेति ।

(४) पूर्वपक्षस्तत्र-नामपदेनैवोच्यतेऽपूर्वम् द्रव्यादीनां सिद्धरूपाणामेव फलम्प्रति साधनत्वसम्भवादिति ॥

(५) सिद्धान्तस्तु-क्रियां विना द्रव्याणि फलं साधयितुं न क्षमन्ते। ततश्च भावनावाचिनाऽऽख्यातेनैवापूर्वम्प्रतीयत इति।

एतदेव प्रथमाधिकरणद्वितीयवर्णकमभिप्रेत्याह—स नूनमिति। 'सः' एकपदार्थो योऽपूर्वं जनयति स-'नूनं' निश्चयेन-'आख्यातपदाभिधेयः' वाक्यगतो य आख्यातशब्दस्तेनैव योऽभिधीयतेऽर्थः स एवापूर्वस्य जनक इति योजना।

इयं च भावनाऽऽख्यातपदगतप्रत्ययेनैवोच्यते। सा च फलोत्पत्त्यनुकूलपुरुषप्रयत्नरूपा सर्वधात्वर्थसाधारणी। तथाहि पचतीत्युक्ते 'पाकं करोति'त्यर्थः प्रतीयते। तत्र पाके लिङ्गसंख्याद्युपेतो धात्वर्थः सिद्धस्वभावः। करोतीत्यंशस्तु लिङ्गसंख्यादिरहितः साध्यस्वभावः। अस्य च साध्यस्वभाव आख्यातप्रत्ययेन द्योत्यते। एवं च पाकं करोतीत्यस्य ओदनमुत्पादयति-भवितुरोदनस्य भवनानुकूलं व्यापारं करोतीत्यर्थः। अयं च व्यापार ओदनरूपं फलं भावयतीत्यस्य भावनेति नाम्ना प्रसिद्धः। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यजेतपदगताख्यातप्रत्ययस्य भावयेत् ( फलविशेषम् ) इति भावनैवार्थः सम्पद्यते। तत्र किम्भावयेदित्यपेक्षायां स्वर्गस्य भाव्यत्वसमर्पकत्वेन 'स्वर्गकाम' इत्यस्यान्वयः। केन भावयेदित्यपेक्षायां यजिधात्वर्थो याग एव करणत्वेनान्वेति। कथम्भावयेदित्यपेक्षायां च ज्योतिष्टोमनाम्ना प्रसिद्धः कर्मकलाप इतिकर्तव्यतया समर्प्यते ज्योतिष्टोमेनेत्यनेन पदेन।

सेयमंशत्रयवत्यार्थी भावनेत्युच्यते। इयं चार्थी भावना पुरुषप्रयत्नरूपा स्वयं शाब्द्या भावनया भाव्या। तस्यां च शाब्दभावनायां पुरुषप्रयत्न एव भाव्यः-विधायकलिङादिरेव करणम्-अर्थवादादिसम्पादिता स्तुतिरेवेतिकर्तव्यतेति ॥१॥

(२) २।१।५ विधेर्बलात्तावदपूर्वसिद्धिः।

(१)अपूर्वमाख्यातप्रत्ययबोधितेनार्थेन प्रत्याय्यत इत्युक्तम्। अपूर्वस्यास्तित्वमेव त्वद्यत्वेऽपि न सिद्धमित्यपूर्वास्तित्वमिदानीं साधनीयम्भवति।

(२) अपूर्वमेवात्र विचारविषयः।

(३) अपूर्वमस्ति न वेति संशयः।

(४) तत्र पूर्वपक्षः-नास्त्यपूर्वम्-तत्सद्भावे मानाभावात्-स्वर्गादेरेव फलत्वेनाभिधानात्प्रतीयमानत्वाच्चेति।

(५) सिद्धान्तः—ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागस्य स्वर्गसाधनत्वमुक्तम् । यथा चैतत्स्वर्गसाधनत्वं यागस्योपपद्येत तथाऽवश्यं कल्पनीयम् । यागानुष्ठानसमाप्त्यनन्तरमेव स्वर्गो न सिध्यतीति तत्समाप्तिस्वर्गप्राप्त्यन्तराल उभयानुस्यूतमुभयसम्बन्धकं किमपि कल्पनीयम्—अन्यथा यागस्य स्वर्गम्प्रति करणत्वं न स्यात् । एवं च विधिवाक्योक्तयागस्वर्गसाध्यसाधकभावसामञ्जस्याय यत् किमपि कल्प्यते तस्यैव विधिव्यतिरिक्तप्रमाणान्तरागम्यत्वादपूर्वमिति नाम कृतमिति ॥

प्राभाकरमतेन च यागस्यैव सूक्ष्मरूपेणात्मनि चिरकालं वर्तमानत्वादुपपद्यत एव साक्षात् सम्बन्धो यागस्वर्गयोरिति नास्त्यन्तर्गडुभूतस्यापूर्वस्य कल्पनावसर इति पूर्वपक्षे—यागस्य सूक्ष्मरूपेणावस्थानस्य कल्पनायां नास्ति किमपि प्रमाणम्—नियोगस्तु विधिवाक्यगतप्रत्येकपदेनानभिहितोऽपि समस्तेन वाक्येनाभिधीयते । अयमेव नियोगोऽपूर्वमिति नाम्ना व्यवह्रियते । विधिवाक्येन चाभिहितत्वात्तस्यापलापोऽयुक्त इति सिद्धान्तः ॥

इदमेव द्वितीयमधिकरणमभिप्रेत्याह विधेरिति । 'विधेः' विधिवाक्यस्य 'बलात्' प्रामाण्यात्-'अपूर्वस्य' 'सिद्धिः'—अपूर्वास्तित्वसिद्धिरिति योजना ।

किंरूपेण चास्यापूर्वस्यावस्थानमित्यस्मिन् विषये गुरुभाट्टयोर्मतभेदः । भाट्टमतेन यागेनात्मनि याग एव वा चिरस्थायी कश्चित्फलजननसमर्थः संस्कारविशेषो जन्यते स एवापूर्वमिति कथ्यते । गुरुमतानुयायिनस्तु संस्काररूपतामस्य नेच्छन्ति । तन्मतेन नियोगरूपतैवास्य । नियोगस्यापि यागजन्यत्वात्कथं फलोत्पत्तिपर्यन्तमवस्थानमिति शङ्कायां सहकार्यन्तरापेक्षैवैषां शरणम् । किन्त्वेवं सति यागस्यैवेयमपेक्षा कुतो न कल्प्यते—तथा सत्यनन्तरोत्पत्त्यभावः फलस्य समाहितः स्यात् इत्यादि प्राभाकरप्रदीपादनुसन्धेयम ॥ २ ॥

## (३) २।१।६–८ संस्कारकर्मैव किलावघातः ॥ १ ॥

(१) अनुष्ठितेन कर्मणाऽपूर्वाख्यं फलं चरमफलनिष्पत्त्यनुकूलं जन्यत इत्युत्सर्गतः सिद्धे तत्र केचिदपवादा अपि भवन्ति । त एवेदानीं विचार्यन्ते ॥

(२) व्रीहीनवहन्तीत्यत्र विषयवाक्यम् ॥

(३) अत्र विहितेनावघातेनापूर्वं जन्यते न वेति संशयः ॥

(४) तत्र पूर्वपक्षः—यजेतेत्यादिविधिविहितेन यागेन यथाऽपूर्वं जन्यते तथैवावहन्तीति विधिविहितेनावघातेनापि—अन्यथा तत्कर्मविधानस्य वैयर्थ्यापत्तेरिति ॥

(५) सिद्धान्तस्तु—दृष्टे फले सम्भवत्यदृष्टस्यापूर्वस्य कल्पने नास्ति प्रमाणम्। अवघातस्य चास्त्येव तुषविमोकरूपं दृष्टमेव फलम्। अतो नास्ति प्रयोजनमस्यादृष्टापूर्वरूपफलकल्पनाया इति ॥

प्राभाकरमतेन तु यथा सक्तून् जुहोतीत्यत्र सक्तुभिर्जुहोतीति विभक्तिविपरिणामं कृत्वा सक्तुभिर्होतव्यमित्यर्थः प्राप्यते—स च सक्तुहोमः साक्षात् फलसाधनतयावकल्पते—एवमेव व्रीहिनवहन्तीत्यत्रापि व्रीहीभिरवहन्तव्यमिति विभक्तिविपरिणमय्यावघातस्य साक्षात्फलसाधनत्वं भविष्यतीति पूर्वपक्षे-दृष्टान्तवैषम्यमिह वर्तते सक्तून्जुहोतीत्यत्र सक्तुहोमे सक्तूनां भस्मीभूतत्वाद् दृष्टफलजनकत्वासम्भवेनागत्या तस्यापूर्वसाधकत्वं कल्प्यते अवघातस्य तु तुषविमोकरूपं दृष्टमेव फलं प्रधानभूतयागाङ्गपुरोडाशसम्पादनानुकूलमुपलभ्यते-तद्द्वारैव च प्रधानफलेनापि सम्बन्धस्य लाभान्नास्त्यवकाशस्तस्य साक्षादपूर्वसाधकत्वकल्पनाया इति सिद्धान्तः ॥

इदमेव तृतीयमधिकरणमभिप्रेत्याह संस्कारकर्मेति। 'अवघातः' व्रीहीनवहन्तीत्यनेन विहितः—'किल' निश्चयेन 'संस्कारकर्म' एव। व्रीहीणां तुषविमोकरूपसंस्कारस्यैव जनकं कर्म-न तु साक्षादपूर्वजनकमिति योजना ॥

एतदधिकरणमूलक एव कर्मणां गुणप्रधानभावेन विभागः। तथाहि यानि विहितानि कर्माणि द्रव्येषु दृष्टातिशयजनकानि न भवन्त्यत एव च विध्युपपत्तयेऽदृष्टफलोत्पादकतया कल्प्यन्ते तान्येव प्रधानानि—यानि तु द्रव्येष्वेव दृष्टातिशयमुत्पादयन्ति—येषां चात एवादृष्टफलकल्पने प्रमाणं नास्ति-तानि गुणकर्माणीति। अयं च गुणप्रधानभावस्तृतीये विस्तरेण चिन्तयिष्यते ॥ ३ ॥

## (४) २।१।९-१२ सम्मार्जनं संस्करणं स्रुगादेः

(१) अयमपरोऽपवादः, दर्शपूर्णमासयोर्जुह्वादीनां सम्मार्जनं विहितं 'स्रुचः सम्मार्ष्टीति'।

(२) इदमेव स्रुक्सम्मार्ज्जनमत्र विषयः ॥

(३) तत्र संशयः—किमिदं सम्मार्जनं स्वतन्त्रमेवापूर्वं जनयत् प्रधानकर्म भवत्युतापूर्वाजनकं गुणकर्मैवेति ॥

(४) तत्र पूर्वपक्ष —प्रधानकर्मैवैतत्। यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वादिति न्यायेन सम्मार्जनेन द्रव्यस्याचिकीर्षितत्वात्स्रुग्रूपस्य द्रव्यस्य गुणभूतत्वात्प्रधानमेतदिति। व्रीह्यादौ चावघातादिभिर्गुणकर्मभिरिव द्रव्ये सम्मार्जनेन स्रुचि कश्चिद्दृष्टोऽतिशयो न कश्चन इत्यपि तस्यादृष्टफलजनकत्वम्प्रधानतां च सूचयतीति ॥

(५) सिद्धान्तस्तु—क्रतुसाधनत्वेनैव स्रुचामीप्सिततमत्वेन कर्मत्वं स्रुच इत्यत्र द्वितीयाविभक्त्योच्यते—अतश्च तासामेवात्र प्रधानत्वं सम्मार्जनस्य च गुणकर्मत्वमेव । यदि सम्मार्जनोत्पन्नः कश्चिद्दृष्टोऽतिशयो न दृश्येत तर्ह्यदृष्टं कल्प्येत—दृश्यते त्वतिशयः परिमार्जितत्वरूपः इति ॥

एतदेव चतुर्थाधिकरणमभिप्रेत्याह—सम्मार्जनमिति । 'सम्मार्जनं' स्रुचः सम्मार्ष्टीत्यनेन वाक्येन विहितम्—'स्रुगादेः' संस्करणं संस्कारकं गुणकर्मेति योजना ॥ ४ ॥

## (५) २।१।१३–२९ न देवतार्थः स्तुतशस्त्रपाठः ।

(१) पूर्वाधिकरणस्यायमपवादः–'प्रउगं शंसति' 'निष्कैवल्यं शंसतीति' अप्रगीतमन्त्रसाध्यत्वेन शस्त्रनाम्ना प्रसिद्धं स्तुतिद्वयं विहितम्-एवमेव 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इति प्रगीतमन्त्रसाध्यत्वेन स्तोत्रनाम्ना प्रसिद्धं स्तुतिद्वयं विहितम् ।

(२) एते एव स्तोत्रशस्त्रे अत्र विषयत्वेन गृहीते ॥

(३) ते अधिकृत्य संशयः–। एते गुणकर्मणी उत प्रधाने एवेति ॥

(४) तत्र पूर्वपक्षः–पठ्यमानेषु मन्त्रेषु देवतानां संस्कृतत्वात्पूर्वाधिकरणन्यायेन गुणकर्मैव स्तोत्रशस्त्रमन्त्रपाठ इति ॥

(५) सिद्धान्तस्तु—मन्त्रवाक्यानि यदा देवतानां गुणसम्बन्धमभिदधति तदैव तेषु स्तुतिशस्त्रनाम्नोरन्वर्थः प्रयोगः–यदा तु तानि गुणद्वारेण केवलं देवतानां स्मारकाणि तदा तन्नाम्नोर्मुख्यार्थस्तेषु न स्यात् । एवं श्रौतयोरनयोर्नाम्नोरबाधितामन्वर्थतां रक्षितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमभ्युपेतव्यमिति ॥

एतदेव पञ्चममधिकरणमभिलक्ष्याह–न देवतार्थ इति । 'स्तुतशस्त्रयोः' गीतमन्त्रसाध्यागीतमन्त्रसाध्ययोः स्तुत्योः 'पाठः'–'देवतार्थः' देवतास्मारकत्वेन तत्संस्काररूपं गुणकर्म–'न' भवतीति योजना ॥ ५ ॥

## (६) २।१।३०–३१ मन्त्रे स्थितं भावपदं विधिर्नो

(१) वैदिकवाक्यविहितेषु कर्मसु गुणप्रधानभावो विचारितः । विहितानां च कर्मणाम्भेदस्य विचारः करिष्यतेऽग्रिमे पादे । अत्र च वैदिकवाक्यस्थाख्यातपदानि सर्वाण्येव गुणप्रधानकर्मविधायकान्येव भवन्तीति मतिः सम्भवति । तन्निराकरणायेदं विचारान्तरं प्रस्तयते ॥

(२) वेदवाक्यस्थाख्यातपदमेवात्र विषयः ॥

(३) तत्र यत्र क्वचन वेदवाक्ये मन्त्रे ब्राह्मणे वाऽऽख्यातपदमुपलभ्यते तत्सर्वत्र कर्मविधायकमुत नेति संशयः ॥

(४) तत्र पूर्वपक्षः—यथा ब्राह्मणगतमाख्यातपदं कर्मविधायकं तथा मन्त्रगतमपि, वैदिकवाक्यत्वेनोभयोस्तुल्यत्वादिति ॥

(५) सिद्धान्तस्तु—येषु वाक्येषु यच्छब्दो दृश्यते ('देवांश्च याभिर्यजते' इत्यत्र मन्त्रे) तत्रानुवादकत्वस्य स्पष्टत्वान्न विधायकत्वम्—एवमेव यत्रोत्तमपुरुषः ('देवसदनं दामीत्यत्र मन्त्रे')-आमन्त्रणं वा ('अग्नीदग्नीन् विहरेत्यत्र मन्त्रे')-तत्र सर्वत्र न कर्मविधायकत्वम्। अतश्च वेदवाक्यस्थाख्यातानां न सर्वत्र गुणप्रधानकर्मविधायकत्वमेवापि तु क्वचिदभिधायकत्वमात्रमेव। एवञ्च मन्त्रगताख्याताख्यातपदानामभिधायकत्वमेव न विधायकत्वमिति ॥

एतदेव षष्ठाधिकरणमभिप्रेत्याह मन्त्रे स्थितमिति। 'मन्त्रे स्थितं' मन्त्रगतम्-'भावपदम्' आख्यातपदं-'न विधिः' न कर्मविधायकमिति योजना॥६॥

## (७) २।१।३२ मन्त्रस्तु वेदः क्रियमाणवाची ॥ २ ॥

(१) मन्त्रगत आख्यातशब्दो न विधायक इति स्थितम्। मन्त्रलक्षणं त्ववश्यत्वेऽपि न कृतमिति तदेवेदानीं परीक्ष्यते ॥

(२) अहेर्बुध्निय मन्त्रं मे गोपायेति वैदिकवाक्योक्तो मन्त्रोऽत्र विषयः॥

(३) मन्त्रस्य लक्षणम्भवति न वेति संशयः ॥

(४) नैव भवति किमप्यनुगतं लक्षणमिति पूर्वपक्षः ॥

(५) सिद्धान्तस्तु—अनुगतलक्षणासम्भवेऽपि यमृषयस्त्रयीविदो विदुरित्यनेनैवोक्तवाक्यशेषेण 'यत्राभियुक्ता मन्त्रा इति नाम प्रयुञ्जते तदेव मन्त्रशब्दवाच्यमित्येव' लक्षणं स्वीक्रियते ॥

एतदेव सप्तममधिकरणमभिप्रेत्याह मन्त्रस्त्विति। 'क्रियमाणस्य' आमन्त्रणप्रलपनाख्यानपरिदेवनान्वेषणस्तवनप्रैषादिरूपस्य कर्मणः 'वाची' वाचकः-'वेदः' वेदवाक्यम्-'मन्त्र' इति कथ्यत इति योजना ॥

तत्रामन्त्रणवाची मन्त्रः—'अग्न आयाहि वीतय' इति।

प्रलपनवाची—'अक्षी ते इन्द्र पिङ्गले दुलेरिव' इति।

आख्यानवाची—'इयं वेदिरिति'।

परिदेवनवाची—'अम्बे अम्बिके अम्बालिके' इति।

अन्वेषणवाची—'इह वा सह वा' इति।

स्तवनवाची—'अग्निर्मूर्धा' इति।

प्रैषवाची—'अग्नीदग्नीन् विहर' इति ॥ ७ ॥

## (८) २।१।३३ मन्त्रेतरो ब्राह्मणशब्दवाच्यः

(१) मन्त्रस्य लक्षणमुक्त्वा मन्त्रेतराणां वेदवाक्यानां ब्राह्मणनाम्ना प्रसिद्धानां लक्षणमिदानीं विचारणीयं भवति ॥

(२) 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्येतद्वैदिकवाक्यगतो ब्राह्मण-शब्द एव विचारविषयः ॥

(३) ब्राह्मणस्यास्यानुगतं लक्षणं सम्भवति न वेति संशयः ॥

(४) पूर्वपक्षः—न सम्भवत्यनुगतं लक्षणमिति ॥

(५) सिद्धान्तस्तु–वेदस्य मन्त्रब्राह्मणात्मकत्वेन द्विधा विभक्तत्वात् पूर्वाधिकरणोक्तलक्षणलक्षितान्मन्त्रभागादवशिष्टो वेदभागो ब्राह्मण इत्येवादुष्टं लक्षणमिति ॥

तदेतदष्टममधिकरणमभिप्रेत्याह–मन्त्रेतर इति। 'मन्त्रात्' 'इतरः' भिन्नः–'वेदभाग' इति शेषः–'ब्राह्मणशब्दवाच्यः' भवतीति योजना ॥ ८ ॥

## (९) २।१।३४ नोहादयो मन्त्रगतास्तु मन्त्राः।

(१) याज्ञिकप्रयोगेषु केचिद्वेदानाम्नाता अपि शब्दा मन्त्रवत्प्रयुज्यन्ते। तेषां स्वरूपं विचार्यते ॥

(२) 'अग्नये जुष्टं निर्वपामी'त्यस्य मन्त्रस्य स्थाने सौर्ये चरौ 'सूर्याय जुष्टं निर्वपामीति' शब्दाः प्रयुज्यन्ते । इदं च शब्दान्तरकरणमूहनाम्ना प्रसिद्धम्। अयमेवात्र विचारविषयः।

(३) अयमूहितशब्दो मन्त्रो भवति न वेति संशयः।

(४) तत्र पूर्वपक्षः—भवत्येवायम्मन्त्रो मन्त्रेण सहैकवाक्यत्वादिति।

(५) सिद्धान्तस्तु—याज्ञिकप्रसिद्धत्वरूपमन्त्रलक्षणस्यात्राभावान्नैतस्य मन्त्रत्वमिति ॥

तदेतन्नवममधिकरणमभिप्रेत्याह नोहादय इति। 'मन्त्रगताः' मन्त्रमध्ये निवेशिताः—'ऊहादयः' ऊहप्रवरनामधेयाक्षराणि—'मन्त्राः' मन्त्रनामधेया 'न' भवन्तीति योजना ॥ ९ ॥

## (१०) २।१।३५ ऋक् पादबद्धो भवतीह मन्त्रः

(१) मन्त्रसामान्यलक्षणमुक्त्वा मन्त्रविशेषाणां लक्षणान्युच्यन्ते ॥

(२) ऋक्मन्त्रोऽत्र विषयः ॥

(३) तत्र संशयः–ऋचो लक्षणं सम्भवति न वेति ॥

(४) तत्र पूर्वपक्षः–न सम्भवति—अनुगतस्य कस्यापि लक्षणस्यासम्भवादिति ॥

(५) सिद्धान्तस्तु–सम्भवत्येवानुगतं लक्षणम्–यस्मिन्मन्त्रे अर्थानुसारेण पादव्यवस्था भवति स एव ऋक्शब्दवाच्य इति ॥

तदेतद्दशममधिकरणमभिलक्ष्याह ऋगिति। 'पादबद्धः' पादैर्विभक्तः 'मन्त्रः'–'इह' वेदे–'ऋक्' तन्नामधारी 'भवतीति' योजना ॥ १० ॥

(११) २।१।३६ मन्त्रस्य गीतिम्प्रवदन्ति साम ॥ ३ ॥

पूर्वाधिकरणवदेवात्रापि सङ्गत्यादयः। यथा तत्र ऋङ्मन्त्रलक्षणं तथाऽत्र साममन्त्रलक्षणम्।

तदेतदेकादशाधिकरणमभिप्रेत्याह मन्त्रस्येति। 'मन्त्रस्य' 'गीतिम्' गानमेव—न त्वक्षराणि—'साम' इति 'प्रवदन्ति' इति योजना ॥ ११ ॥

(१२) २।१।३७ ऋक्सामभिन्नो यजुरेव मन्त्रः

यजुर्मन्त्रलक्षणपरमधिकरणमिदम्। अत्रापि पूर्ववदेव सङ्गत्यादयः॥ तदेतद्द्वादशाधिकरणमभिप्रेत्याह—ऋगिति। 'ऋक्सामभ्याम्' 'भिन्नः'—मन्त्रः—'यजुरेव' यजुरिति नाम्ना प्रसिद्ध इति योजना।

एवं च 'पादेनार्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः'–'गीतिरूपा मन्त्राः सामानि'–'वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि'–इति पर्यवसितमसङ्कीर्णं लक्षणं त्रिविधस्य मन्त्रस्य ॥ १२ ॥

(१३) २।१।३८-४५ यजुर्विशेषो निगदो न भिन्नः।

(१) प्रोक्षणीरासादयेत्येवंरूपाः केचन मन्त्रा निगदा इति कथ्यन्ते। तल्लक्षणविचार इदानीं प्रस्तूयते ॥

(२) उक्ता मन्त्रा एवात्र विषयः ॥

(३) त एते निगदा ऋगादिष्वेवान्तर्भवन्त्युत तेभ्यः पृथगेव चतुर्थप्रकार एवेति संशयः ॥

(४) तत्र पूर्वपक्षः—पादगीत्योर्ऋक्सामलक्षणयोरभावात् यजुर्लक्षणस्य प्रश्लिष्टपाठस्य सत्त्वेऽपि उच्चैस्त्वरूपधर्मभेदेन उपांशुपठनीययजुष्यन्तर्भावानुपपत्तेरुक्तेभ्यस्त्रिभ्यो मन्त्रप्रकारेभ्यो भिन्नश्चतुर्थ एव प्रकारो निगदानामिति ॥

(५) सिद्धान्तस्तु—प्रश्लिष्टपाठत्वाद् यजुष्ट्वमेव निगदानाम्। यश्चोच्चैस्त्वरूपधर्मभेदस्स परप्रत्यायननिमित्त एवेति न स प्रकारभेदे मूलम्भवतीति ॥

तदेतत्त्रयोदशाधिकरणमभिप्रेत्याह यजुर्विशेष इति। 'निगदः' तन्नाम्ना ख्यातो मन्त्रः–'यजुर्विशेष एव उच्चैस्त्वविशिष्टं यजुरेवायमिति'–'न भिन्नः' यजुषो भिन्नप्रकारको न भवतीति योजना ॥ १३ ॥

(१४) २।१।४६ साकाङ्क्षमेकार्थमिहैकवाक्यम्

(१) मन्त्रविचारप्रसङ्गेन कियत्पर्यन्तं वाक्यमेकमेकमन्त्रत्वेन प्रयोक्तव्यं कियदवसानं चानियतपरिमाणस्य यजुष इति निर्णेतं विचारान्तरं प्रस्तूयते ॥

(२) 'देवस्य त्वा सवितुः प्रसवे अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां अग्नये जुष्टं निर्वपामीति' एतादृशा मन्त्रा अत्र विचारविषयः ॥

(३) अत्र किमेकं वाक्यमुतानेकानि वाक्यानीति संशयः ॥

(४) तत्र पूर्वपक्षः-अत्र नानावाक्यानि परस्परं भिन्नान्येव—एकत्व-नियामकस्य कस्यापि दुर्बोधत्वादिति ॥

(५) सिद्धान्तस्तु-'यद्व विभागे साकाङ्क्षम् अविभागे चैकार्थं तदेकं वाक्यमिति' वाक्यैक्यप्रयोजकस्य सर्वत्र सुबोधत्वम् । एतन्नियामकानु-सारेण च प्रकृतं देवस्य त्वेत्याद्येकमेव वाक्यम् । अग्नये जुष्टमित्यादिपद-समूहे पृथक्कृते देवस्य त्वेति पूर्वः समूहः साकाङ्क्षो भवति-एकीकृते तु कृत्स्नस्यैक एव निर्वापोऽर्थो लभ्यते इति ॥

तदेतच्चतुर्दशाधिकरणमभिप्रेत्याह साकाङ्क्षमिति । यत् 'एकार्थं' सत् विभागे सति 'साकाङ्क्षम्' भवति तदेव-'इह' यजुर्निर्णयविषये-'एकवा-क्यम्' एकवाक्यत्वेन प्रयोक्तव्यमिति योजना ॥ १४ ॥

## (१५) २।१।४७ भिन्नं यजुः स्याद्विनियोगभेदात् ॥ ४ ॥

(१) एकवाक्यतानियामकमुक्त्वा तदपवादरूपेण भिन्नवाक्यत्वनिया-मकविचारः प्रस्तूयते ॥

(२) 'इषे त्वोर्जेत्वे'त्यादिपदसमूहोऽत्र विचारविषयः ॥

(३) कृत्स्नोऽयं पदसमूह एकमेव वाक्यमुत भिन्नानि वाक्यानीति संशयः ।

(४) तत्र पूर्वपक्षः—एक एवायम्मन्त्रः-मन्त्रस्यादृष्टत्व एकस्यैवादृ-ष्टस्य कल्पने लाघवन्नानादृष्टकल्पने च प्रमाणाभावादिति ॥

(५) सिद्धान्तस्तु-प्रकृतपदसमूहं खण्डशः कृत्वा विनियोग उपलभ्यते-'इषेत्वेति शाखां छिनत्ति-ऊर्जे त्वेत्यनुमार्ष्टि' इत्येवमादिः । एतद्विनियोगा-नुसारेण चानुष्ठेयार्थस्मारकत्वादर्थभेदेन प्रत्येकस्य खण्डस्य भिन्नत्वमे-वाभ्युपेयमिति ॥

एतदेव पञ्चदशाधिकरणमभिप्रेत्याह भिन्नमिति । 'विनियोगस्य' शास्त्रोक्तस्य 'भेदात्' यत्र भिन्न एव विनियोगो लभ्यते तत्र तद्विनियोग-बलात् 'यजुः' भिन्नं 'स्यात्' न च तत्रैकवाक्यत्वमिति योजना ॥ १५ ॥

## (१६) २।१।४८ रजाशयादिष्वनुषज्य पूर्तिः

(१) यजुःपरिमाणविचारप्रसङ्गेन यत्र यजुरपेक्षितपदरहितं साकाङ्क्ष-मेवोपलभ्यते तत्र का गतिरितीदानीं विचार्यते ॥

(२) विषयीभूतं यजुश्चात्र-'याते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा याते अग्ने रजाशया-याते अग्ने हराशया' इति ॥

(३) अत्र 'याते अग्ने रजाशया' इत्येतावत्पदसमूहः साकाङ्क्ष इवोपलक्ष्यते-तन्निराकाङ्क्षत्वाय किं लौकिकान्येव पदान्यध्याहर्तव्यान्युत वैदिकान्येव कुतश्चिन्मन्त्रान्तरादनुषञ्जनीयानीति संशयः ॥

(४) तत्र पूर्वपक्षः—लौकिक एव वाक्यशेषोऽत्राध्याहर्तव्यः मन्त्रान्तरभागानां तत्रैवोपक्षीणत्वान्नोपपद्यते तेषामनुषञ्जनमिति ।

(५) सिद्धान्तस्तु—वैदिकस्य मन्त्रस्याकाङ्क्षा वैदिकेनैव वाक्यशेषेण पूरणीया। तथा च तनूर्वर्षिष्ठेत्यादिभागः पूर्वमन्त्रस्योत्तरमन्त्रेऽनुषज्यत इति ॥

तदेतत् षोडशाधिकरणमभिप्रेत्याह रजाशयादिष्विति। 'रजाशयादिषु' साकाङ्क्षमन्त्रभागेषु-'अनुषज्य' वैदिकादेव वाक्यान्तरात्पदान्याहृत्य-'पूर्तिः' निराकाङ्क्षता अपेक्षितवाक्यशेषस्य प्रपूरणम्-कर्तव्येति योजना ॥१६॥

## (१७) २।१।४८अच्छिद्रवाचोऽप्यनुषङ्ग एव ।

इदमपरमुदाहरणमनुषङ्गस्य । 'चित्पतिस्त्वा पुनातु-वाक्पतिस्त्वा पुनातु-देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति' मन्त्रोऽत्र पूर्ववदेव ॥ अत्र साकाङ्क्षाणि पदानि निराकाङ्क्षस्य मन्त्रस्य पूर्वमेवोपलभ्यन्ते पूर्वोदाहृतवाक्ये तु तत्पश्चादिति भेदादेव विचारान्तरप्रवर्तनम् ॥

तदेतत्सप्तदशाधिकरणमभिप्रेत्याह अच्छिद्रवाच इति । 'अच्छिद्रवाचः'-'अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभि'रिति वाक्यशेषस्य-'अनुषङ्ग एव' चित्पतिस्त्वा पुनातु-वाक्पतिस्त्वा पुनात्वित्यनयोः साकाङ्क्षयोर्मन्त्रभागयोरिति शेषः ॥ १७ ॥

## (१८) २।१।४९ न स्याद्व्यवाये कथितोऽनुषङ्गः

(१) उक्तस्यानुषङ्गन्यायस्यापवादो विविच्यते ॥

(२) 'सं ते प्राणो वातेन गच्छतां-समङ्गानि यजत्रैः-सं यज्ञपतिराशिषेति' यजुषस्तृतीये खण्डे संयज्ञपतिरित्येव विषयः ॥

(३) समित्युपसर्गोऽत्र साकाङ्क्षः केन क्रियापदेन संयुज्यताम्-किम्प्रथमवाक्यगतगच्छतामित्यनेनोताध्याहृतेन केनचिदन्येनेति संशयः ॥

(४) तत्र पूर्वपक्षः-पूर्वाधिकरणन्यायेनात्रैव यजुषः प्रथमखण्डे यत् क्रियापदं लभ्यते तस्यैवात्रानुषङ्गेण वाक्यं पूरणीयमिति ॥

(५) सिद्धान्तस्तु- प्रथमतृतीयखण्डयोर्मध्ये अङ्गानीति बहुवचनान्तपदस्य व्यवधानात् गच्छतामित्यस्य क्रियापदस्य सम्बन्धस्रोतसो विच्छिन्नत्वान्न सम्भवत्यन्वयस्तृतीयवाक्यस्थस्योपसर्गस्य प्रथमवाक्यस्थक्रियापदेनेति । अतोऽत्र यथोचितं वाक्यशेषोऽन्यत एवाध्याहर्तव्य इति ॥

तदेतदष्टादशाधिकरणमभिप्रेत्याह न स्यादिति । 'व्यवाये' अनन्वययो-

न्यपदस्य व्यवधाने-'कथितः' पूर्वाधिकरणन्यायानुसारी-'अनुषङ्गः' वाक्यपरिसमाप्तिः 'न स्यात्' इति योजना ॥ १८ ॥

न्यायास्तु पादे नव वै दशापि ॥ ५ ॥

'पादे' द्वितीयाध्यायस्य प्रथमे-'नव वै दश' ऊनविंश 'न्यायाः' अधिकरणानि ॥ प्रथमाधिकरणस्य द्वितीयं वर्णकं पृथग् गणयित्वाऽत्रोनविंशसङ्ख्यापूर्तिर्भवति ॥ ५ ॥

इति द्वितीयेऽध्याये प्रथमः पादः ।

# अथ द्वितीयाध्यायस्य द्वितीयः पादः ॥

## (१) २।२।१ शब्दान्तरे विधियुते खलु कर्मभेदः

(१) प्रासङ्गिकमपूर्वादिकं विविच्य अध्यायविषयः कर्मभेदोऽधुना विविच्यते ॥

(२) आख्यातप्रत्ययेनैवापूर्वमुच्यत इति प्रसाधितम्-तथा चैकप्रकरणगतानि पर्यायधातुनिष्पन्नान्याख्यातानि यजति-ददाति-जुहोतीत्यादीन्युदाहरणम् ॥

(३) किमेतैराख्यातैः प्रत्येकं भिन्नमेव कर्मोच्यत उतैकमेवेति संशयः ।

(४) तत्र पूर्वपक्षः—यस्मात् सर्वेष्वेक एवाख्यातप्रत्ययो भावनावाची तस्मादेकैव भावनैकमेवापूर्वमेकमेव कर्म सर्वैरुच्यते । न च धातुभेदाद्भेदः । धातोर्भावनावाचित्वाभावेन तत्राप्रयोजकत्वादिति ।

(५) सिद्धान्तस्तु—यद्यप्याख्यातमेव भावनायाः प्रयोजकम्-तथाऽप्याख्यातस्य प्रतिधातु भिन्नत्वमेव-ततश्च बहूनामाख्यातानामेकैकधातुविशेषानुरक्तत्वेनैव भावनावाचित्वेन यागदानहोमभावनाः परस्परं भिन्ना एवेति । अत्र च शब्दान्तरमेव कर्मभेदे हेतुः ॥

तदेतत्प्रथममधिकरणमभिप्रेत्याह शब्दान्तर इति-'विधियुते' विधिप्रत्यययुते-'शब्दान्तरे' शब्दभेदे सति-'कर्मभेदः' प्रतिशब्दं भिन्नमेव कर्म भवतीति योजना ।

प्रभाकरमतेन तु शास्त्रभेद एवाध्यायार्थो न कर्मभेदस्तथा च यजेतेत्यादिनानापदयुतं शास्त्रमेकमेवेति पूर्वपक्षे-प्रतिशब्दं नियोगस्य भिन्नत्वाद् भिन्नान्येव शास्त्राणीति सिद्धान्तः ॥ १ ॥

## (२) २।२।२ भूयःश्रुतिश्च समिदादियजीन् भिनत्ति ।

(१) पूर्वाधिकरणे आख्यातपदभेदेन भिन्नत्वमवधारितम् । इदानीं च यत्रैकमेवाख्यातपदमभ्यस्यते तद्विचार्यते ।

(२) समिधो यजति–तनूनपातं यजति–इडो यजति–बर्हिर्यजति–इति वाक्यं विषयः ।

(३) अत्र यजतिचतुष्टयेन किमेकमेव कर्मोच्यते उत चत्वारि कर्माणीति संशयः ॥

(४) तत्र पूर्वपक्षः—पूर्वाधिकरणवद् धातुभेदस्याभावाद् भावनाभेदस्य नास्ति सम्भावना । ततश्चाख्यातपदस्यैक्याद् भावनाया अप्यैक्यमेवेति ॥

(५) सिद्धान्तस्तु–यजतिपदाभ्यासेनैव कर्मणां भेदः स्पष्टतया सूचितो भवति । कर्मैक्येऽभ्यासो निरर्थक एव स्यात् । तथा चात्राभ्यास एव कर्मभेदे हेतुरिति ॥

तदेतद् द्वितीयाधिकरणमभिप्रेत्याह भूयःश्रुतिरिति । 'भूयः श्रुतिः' यजतिपदस्याभ्यासः–'समिदादियजीन्' समिधो यजतीत्यादिवाक्यचतुष्टयोक्तयागान्–'भिनति' भिन्नकर्मत्वेनावस्थापयतीति योजना ॥ २ ॥

## (३) २।२।३–८ वाक्यन्न कर्म विदधाति य एवमादि

(१) शब्दान्तरेणाभ्यासेन च भिन्नं कर्म विधीयत इत्युक्तम्–कुत्र पुनः कर्मान्तरं न विधीयत इतीदानीं चिन्त्यते ।

(२) 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते'–इत्येवमादिवाक्यमत्र विषयः ।

(३) अत्र यजतिना कर्मान्तरं विधीयतेऽथवा वाक्यान्तरेण विहितस्यैव कर्मणोऽयमनुवाद इति संशयः ।

(४) तत्र पूर्वपक्षः–कर्मान्तरमेवात्र विधीयते–पूर्वाधिकरणन्यायेनेति ।

(५) सिद्धान्तस्तु–द्रव्यदेवताफलानामनुक्तत्वान्नायं कर्मान्तरविधिरपि तु विहितानुवाद एव । एषैव गतिः सर्वेषां विद्वद्वाक्यानामिति ।

तदेतत् तृतीयमधिकरणमभिप्रेत्याह वाक्येनेति । 'य एवमादि' 'य एवं विद्वान्' इत्याद्यक्षराणि आदौ यस्य तद्–'वाक्यं' 'कर्म' भिन्नं कर्म–'न विदधाति'–अपि त्वनुवदत्येवान्यत्र विहितं कर्मेति योजना ॥ ३ ॥

## (४) २।१।६–१२ स्यादन्तरालवचने यजतेर्विधानम् ॥ ६ ॥

(१) पुनर्यत्र कर्मान्तरमेव विधीयते तस्य वाक्यस्य विचारः ।

(२) 'जामि वा एतस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजतीति' वाक्यमत्र विषयः ।

(३) अत्र यजतिना कर्मान्तरं विधीयत, उत विहितमेवानूद्यत इति संशयः ।

(४) तत्र पूर्वपक्षः—पूर्वाधिकरणन्यायेन प्रकरणस्थेन वाक्यान्तरेण विहितस्य यागस्यानुवाद एवानेन यजतिना क्रियते इति ।

(५) सिद्धान्तस्तु—अन्तरालरूपकालस्योपांशुत्वरूपगुणस्य चात्रोक्तत्वादुपांशुनामकं यागान्तरमेवात्र विधीयते इति ॥

तदेतच्चतुर्थमधिकरणमभिप्रेत्याह स्यादन्तरालेति । 'अन्तरालवचने' उपांशुयाजमन्तरा यजतीत्यस्मिन् वाक्ये-'यजतेः' यजतीत्यस्मात् पदात्-'विधानं' विधिरेव-'स्यात्'-न त्वनुवादमात्रमिति योजना ॥ ४ ॥

## (५) २।२।१३-१६ आघारसन्ततविधिर्गुणमात्रनिष्ठः

(१) कर्मान्तरविधेरन्यदुदाहरणम् ।

(२) आघारमाघारयति-ऊर्ध्वमाघारयति-ऋजुमाघारयतीति वाक्यत्रयमत्र विषयः ।

(३) अत्रान्त्याभ्यां वाक्याभ्यां द्वे कर्म्मणी विधीयेते ययोरनुवाद आद्येन वाक्येन क्रियतेऽथवाऽऽद्येनैव विहिते कर्मण्यन्त्याभ्यां गुणविशेषौ विधीयेते इति संशयः ।

(४) तत्र पूर्वपक्षः—कर्मविधायके एवान्त्ये द्वे वाक्ये-अन्यथाकल्पने मानाभावात् । तथा चाद्येन वाक्येन तयोः कर्मणोरनुवाद एव क्रियत इति ।

(५) सिद्धान्तस्तु-आद्येनैव वाक्येनाघाररूपं कर्म विधीयते-तत्रैव च कर्मणि ऊर्ध्वत्व-ऋजुत्वरूपगुणद्वयं विधीयतेऽन्त्येन वाक्यद्वयेन-न कर्मान्तरमिति ॥

तदेतत्पञ्चममधिकरणमभिप्रेत्याह आघारेति । 'आघारसन्ततविधिः' 'ऊर्ध्वमाघारयति-ऋजुमाघारयति' इत्याघारस्याभ्यासेन विधानम्-'गुणमात्रनिष्ठः'-ऊर्ध्वत्व-ऋजुत्वरूपगुणद्वयमेव विधत्ते-कर्म त्वाद्येनैव विधीयत इति योजना ।

एष एव न्यायः 'अग्निहोत्रं जुहोति-दध्ना जुहोति-पयसा जुहोतीति' वाक्यत्रयेऽपि ॥ ५ ॥

## (६) २।२।१७-२० सोमेन यागविधिरस्य गुणो ग्रहोक्तिः ।

(१) उक्तस्यैव न्यायस्योदाहरणान्तरम् ।

(२) सोमेन यजेत-ऐन्द्रवायवं गृह्णाति-मैत्रावरुणं गृह्णातीति वाक्यत्रयमत्र विषयः ।

(३) अत्र चाद्येन वाक्येन कर्म विधीयते यद्विषये चेतराभ्यां गुणौ विधीयेतेऽथवाऽन्त्याभ्यां विहितयोरेव कर्मणोराद्येनानुवाद इति संशयः ।

(४) तत्र पूर्वपक्षः-अन्त्याभ्यामेव वाक्याभ्यां कर्मविधानमाद्येन तु तदनुवाद एवेति ।

(५) सिद्धान्तस्तु—आद्येनैव वाक्येन यागरूपकर्म विधीयते इतराभ्यां च वाक्याभ्यां तस्मिन्नेव यागे ग्रहणरूपः संस्कारविशेषो विधीयत इति ॥

तदेतत् षष्ठमधिकरणमभिप्रेत्याह सोमेनेति । 'सोमेन' सोमेन यजेतेत्यनेन वाक्येन-'यागविधिः' यागरूपं कर्म विधीयते-ग्रहोक्तिः'ऐन्द्रवायवं गृह्णातीत्यादौ वाक्ये यद् ग्रहणमुच्यते 'तत्'-'अस्य' सोमवाक्यविहितस्य यागस्यैव-'गुणः' इति योजना ॥ ६ ॥

## (७) २।२।२१ भेत्त्री यजेर्भवति सप्तदशत्वसङ्ख्या

(१) शब्दान्तरेणाभ्यासेन च कर्मभेद उक्तः । इदानीं संख्याकृतः कर्मभेदो विविच्यते ।

(२) 'सप्तदश प्राजापत्यान् पशूनालभेतेति' विषयवाक्यम् ।

(३) अत्र विहितं कर्मैकमेवोत सप्तदश कर्माणीति संशयः ॥

(४) तत्र पूर्वपक्षः—आलभेतेति कर्माभिधायकस्यैकत्वादेकमेवात्र कर्म सप्तदशपश्वालम्भनात्मकमिति ।

(५) सिद्धान्तस्तु-प्रजापतिदेवताकं पश्वालम्भनरूपं कर्मैकम् । तादृशस्य कर्मणो बहुत्वाय बहुवचनप्रयोगस्तस्मिंश्च बहुत्वे विशेषः सप्तदशसङ्ख्या निर्दिश्यते—अतोऽत्र सप्तदशैव कर्माणि-कर्मभेदश्च सङ्ख्याकृत एवेति ।

तदेतत्सप्तममधिकरणमभिप्रेत्याह भेत्त्रीति । 'सप्तदशत्वसङ्ख्या' 'सप्तदश प्राजापत्यान् पशूनालभेते'त्यस्मिन् वाक्ये उक्ता-'यजेः' यजिधात्वर्थस्य यागरूपस्य कर्मणः आलभेतेत्यनेनोक्तस्य-'भेत्त्री' भेदकर्त्री भिन्नत्वसूचिका भवतीति योजना ॥ ७ ॥

## (८) २।२।२२ ज्योतिः प्रभृत्यपि भवेद्ध यजिभेत्तृ नाम ॥ ७ ॥

(१) शब्दान्तराभ्याससङ्ख्याकृतकर्मभेदेषूदाहृतेषु संज्ञाकृतकर्मभेदोऽधुना प्रदर्श्यते ॥

(२) 'अथैष ज्योतिः-अथैष विश्वज्योतिः-अथैष सर्वज्योतिः-अनेन सहस्रदक्षिणेन यजेतेति' विषयवाक्यम् ॥

(३) अत्र किमेकमेवान्यत्र विहितं कर्म ज्योतिष्टोमं ज्योतिःशब्देनानूद्य तत्र सहस्रदक्षिणत्वरूपो गुणो विधीयत उत ज्योतिर्नामकं भिन्नमेव कर्म विधीयत इति संशयः ॥

(४) तत्रैकमेव-कर्म ज्योतिष्टोममनूद्य तत्र सहस्रदक्षिणत्वरूपो गुणो विधीयत इति पूर्वपक्षः ॥

(५) सिद्धान्तस्तु-अथेत्यनेन ज्योतिष्टोमप्रकरणस्य विच्छिन्नत्वान्नास्त्यत्र तेन सम्बन्धः—ज्योतिःशब्दश्चापूर्वमेव नामान्यत्राविहितमेव कर्मान्तरं समर्पयति—अतोऽत्र ज्योतिष्टोमाद् भिन्नान्येव 'ज्योतिः'-'विश्वज्योतिः'-'सर्वज्योतिः' इति त्रिभिः संज्ञाभिस्त्रीणि भिन्नान्येव कर्माणि विधीयन्त इति ॥

तदिदमष्टमाधिकरणमभिप्रेत्याह ज्योतिःप्रभृतीति । 'ज्योतिःप्रभृति' ज्योतिरित्यादिकम् 'नाम' संज्ञा-'अपि' संख्यावत्-'यजिभेत्'-यागभेदकं कर्मभेदसूचकं-'भवेत्' इति योजना ॥ ८ ॥

## (९) २।२।२३ भिन्ना विरुद्धगुणभागिति वाजिनेज्या

(१) देवताभेदकृतकर्मभेद इदानीं निरूप्यते ॥

(२) 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'त्यत्र विषयवाक्यम् ॥

(३) तप्ते दुग्धे दधिनि प्रक्षिप्ते यो घनीभूतः पिण्डो जायते तस्यैव नाम 'आमिक्षेति' अवशिष्टजलभागस्य च 'वाजिन'मिति । तदेतदत्र वाजिभ्यो वाजिनमित्यनेन द्वितीयेन वाक्येन किं कर्मान्तरं विधीयत उत पूर्ववाक्यविहितं कर्म प्रत्येव किञ्चिद् गुणान्तरं विधीयत इति संशयः ॥

(४) तत्र पूर्वपक्षः—पूर्ववाक्येन विश्वेभ्यो देवेभ्य आमिक्षाद्रव्यस्यार्पणं विहितम्—द्वितीयेन वाक्येन च तदेव वैश्वदेवदेवताकं यागमनूद्य वाजिनरूपद्रव्यान्तरं विधीयत आमिक्षया सह समुच्चयार्थं विकल्पार्थं वेति ॥

(५) सिद्धान्तस्तु-वैश्वदेवयागस्य सहशिष्टेनामिक्षाद्रव्येणावरुद्धत्वाद् द्रव्यान्तरस्य तत्र प्रवेशासम्भवात् वाजिनरूपद्रव्यसम्प्रदानकदेवतान्तरमेव वाजिभ्य इति पदेन समर्प्यते-ततश्च वाजिरूपदेवताभ्यो यस्मिन् कर्मणि वाजिनरूपद्रव्यं प्रदीयते तत् कर्म भिन्नमेव द्वितीयेन वाक्येनोच्यत इति ॥

तदिदं नवमाधिकरणमभिप्रेत्याह भिन्नेति । 'वाजिनेज्या' वाजिनयागः 'वाजिभ्यो वाजिनमि'त्यनेन वाक्येनोक्तः-'विरुद्धगुणभाक्' पूर्ववाक्यविहितामिक्षायागस्य गुणो वैश्वदेवदेवतारूपस्तस्माद् 'विरुद्धम्' भिन्नम्, 'गुणम्' वाजिभ्य इत्यनेन पदेनोक्तं-'भजते' या सा तथाभूता भवति-'इति' अस्मात्कारणात्—'भिन्ना' आमिक्षायागात् भिन्नमेव कर्मेति योजना ॥ ९ ॥

## (१०) २।२।२४ दध्ना जुहोति पयसेति न होमभेदः ।

(१) पूर्वन्यायापवादः ॥

(२) 'अग्निहोत्रं जुहोति–दध्ना जुहोती'त्यत्र विषयवाक्यम् ॥

(३) दध्ना जुहोतीत्यनेनाग्निहोत्राद् भिन्नं कर्मान्तरं विधीयत उत तस्मिन्नेव दधिरूपगुणो विधीयत इत्यत्र संशयः ॥

(४) तत्र पूर्वपक्षः–यथा पूर्वाधिकरणे आमिक्षाद्रव्यकाद् वैश्वदेवयागाद्भिन्नमेव वाजिनद्रव्यकं यागान्तरं द्वितीयवाक्येन विधीयते–तथैवात्राप्यग्निहोत्राद्भिन्नमेव कर्म दधिद्रव्यकं विधीयत इति ॥

(५) सिद्धान्तस्तु–पूर्वत्र वैश्वदेवयागस्यामिक्षाद्रव्येण निरुद्धत्वान्नासीद् वाजिनरूपद्रव्यान्तरप्रवेशसम्भवः–अत्र त्वग्निहोत्रं न केनापि द्रव्यान्तरेणावरुद्धम्–प्रत्युतास्त्येव तस्य द्रव्याकाङ्क्षेति तदर्थं द्वितीयवाक्येन दधिद्रव्यं विधीयत इति ॥

अयमेव न्यायः–'अग्निहोत्रं जुहोति–पयसा जुहोती'त्यत्रापि द्रष्टव्यः॥

तदिदं दशमाधिकरणमभिप्रेत्याह दध्नेति । 'दध्ना जुहोति' 'पयसेति' इत्येताभ्यां वाक्याभ्यां 'न होमभेदः' अग्निहोत्राद् भिन्नं कर्म न विधीयते अपि तु तत्रैव द्रव्यरूपगुणो विधीयत इति योजना ॥ १० ॥

## (११) २।२।२५–२६ कर्मान्तरे न समवैति दधीन्द्रियार्थम्

(१) अन्योऽयं कर्मभेदापवादः ॥

(२) दध्नेन्द्रियकामस्य जुहुयादित्यत्र विषयवाक्यम् ॥

(३) अत्र किम्प्रकृतादग्निहोत्राद् भिन्नमेव कर्म विधीयत उत तत्रैव फलविशेषसिद्ध्यर्थं गुणो विधीयत इति संशयः ॥

(४) तत्र पूर्वपक्षः–प्रकृतादग्निहोत्रादन्यदेव कर्मात्रोच्यत इति ।

(५) सिद्धान्तस्तु–कर्मान्तरविधाने प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गाद् गुणविशिष्टकर्मान्तरविधाने च गौरवात् इदं वाक्यं प्रकृतमेवाग्निहोत्रमुद्दिश्येन्द्रियरूपफललाभाय दधिरूपं गुणं विदधातीति ।

तदिदमेकादशाधिकरणमभिप्रेत्याह कर्मान्तर इति । 'इन्द्रियार्थं' इन्द्रियरूपफलसम्पादकं–'दधि' द्रव्यं–'कर्मान्तरे' प्रकृताग्निहोत्राद् भिन्ने कर्मणि–'न समवैति' न प्रविशति—अपि तु तस्मिन्नेवाग्निहोत्रे प्रयुज्यत–इत्यन्वयः ॥ ११ ॥

## (१२) २।२।२७ भिन्ने यजौ फलविधिः सह रेवतीभिः ॥ ८ ॥

(१) इदमपरं कर्मभेदोदाहरणम् ॥

(२) 'त्रिवदग्निष्टुदग्निष्टोम' इति वाक्यस्य सन्निधाविदमपरं वा-

क्यम्—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति' । इदमेवात्र विषयः ।

(३) अत्र द्वितीयेन वाक्येन किम्प्रकृतेऽग्निष्टुद्याग एव पशुफलाप्तये रेवतीनामृचां वारवन्तीयसाम्ना सम्बन्धकरणं विधीयत उत तत्सामगुणकं पशुफलकमन्यदेव कर्म विधीयत इति संशयः ॥

(४) तत्र पूर्वपक्षः—यथाऽग्निष्टुति ब्रह्मवर्चसकामस्य वायव्यास्वृक्ष्वग्निष्टोमसामगानं विहितं वाक्यान्तरेण तथैवानेनापि वाक्येन तस्मिन्नेवाग्निष्टुद्यागे रेवतीष्वृक्षु वारवन्तीयसामगानत्वं विधीयते पशुकामस्य पूर्वाधिकरणन्यायेनेति ॥

(५) सिद्धान्तस्तु–पूर्वाधिकरणसाम्यमत्र नास्ति । तत्र हि दध्नो होमसाधनत्वं प्रत्यक्षेण ज्ञेयं न शास्त्रैकबोध्यमतस्तत्र फलसम्बन्धमात्रं तस्य शास्त्रगम्यम्—इह तु रेवत्यृगाधारकवारवन्तीयसामगानस्याग्निष्टुत्कर्मसाधनत्वं पशुफलसाधनत्वं चेत्युभयमपि शास्त्रैकबोध्यमेव । तथा च पूर्वपक्षाश्रयणे दुर्वारो वाक्यभेदप्रसङ्गः । तेनोक्तसामगुणकं पशुफलकं कर्मान्तरमेवात्र विधीयत इति ।

तदिदं द्वादशाधिकरणमभिप्रेत्याह भिन्ने यजाविति । एतस्यैव रेवतीष्विति वाक्ये–'भिन्ने' प्रकृताग्निष्टुत्कर्मणोऽन्यस्मिन्–'यजौ' यागे कर्मणि–'रेवतीभिः सह फलविधिः' वारवन्तीयसामविशिष्टरेवतीनामृचां गुणभूतानां विधिना पशुरूपस्य फलस्य च विधिना सहैव कर्मान्तरविधिरिति योजना । तथा च 'रेवतीष्वृक्षु वारवन्तीयसामकरणवता कर्मणा पशुरूपं फलं भावये'दिति विध्यर्थः पर्यवसितः ॥ १२ ॥

## (१३) २।२।२८–२९ हीषादि सौभरफलं नियमाय शिष्टम्

(१) भेदापवादोऽत्र विचार्यते ।

(२) 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीते'त्यस्यानन्तरं पुनः श्रूयते 'हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामायेत्यादि'–इदमेवात्र विषयवाक्यम् ।

(३) सौभरं नाम सामविशेषः निधनं नाम साम्नोऽन्तिमो भागः । एवं चानेन वाक्येन सौभरसम्पाद्यमानवृष्ट्यादिफलेभ्योऽन्यान्येव वृष्ट्यादिफलानि साधयितुमुक्त एव सौभरे हीषादिनिधनविशेषो विधीयते, अथवा सौभरसम्बन्धेनोक्तान्येव फलानि तत्रैव हीषादिनिधनसाध्यत्वेनानूद्यन्त इति संशयः ।

(४) तत्र पूर्वपक्षः—पूर्ववाक्योक्तेभ्योऽन्यान्येव फलानि जनयितुं हीषादिविशेषो विधीयते–हीषादिवाक्ये वृष्टिकामायेति चतुर्थीश्रवणात्–

एवं च सौभरस्य तद्विशेषस्य हीषस्य निधनस्य च फलभूते द्वे वृष्टी भवतस्तदुभयमेलनान्महती वृष्टिरिति ।

(५) सिद्धान्तस्तु-सौभरविधौ यो वृष्टिकामः स एव हीषादिविधौ प्रत्यभिज्ञायते । अतः पूर्वोक्तान्येव फलानि हीषादिवाक्येष्वनूद्यन्ते हीषादिनिधननियमनार्थम् । तस्मादयं सौभर एव हीषादिनिधनविशेषनियमविधिर्न फलान्तरविधिरिति ॥

तदिदं त्रयोदशाधिकरणमभिप्रेत्याह हीषादीति 'सौभरफलम्' सौभरस्य फलमेव फलं यस्य तत्-'हीषादि' निधनविशेषः-'नियमाय' फलविशेषापेक्षया निधनान्तरव्यावृत्त्या हीषाद्येकमात्रनिधनप्रयोगं नियमयितुं 'शिष्टं' विहितम्-'हीषिति वृष्टिकामाये'त्यनेन वाक्येनेति योजना ॥ १३ ॥

पादे त्रयोदश नयानुपवर्णयन्ति ॥ ६ ॥

पादार्थमुपसङ्गृह्णाति पाद इति । 'पादे' द्वितीयस्याध्यायस्य द्वितीये 'त्रयोदश न्यायान् उपवर्णयन्ति' सम्प्रदायविद इति शेषः ॥ ६ ॥

इति द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

# द्वितीयाध्यायस्य तृतीयः पादः ।

---

## (१) २।३।१-२ ज्योतिष्टोमे ग्रहाग्रत्वम्

(१) कर्मविशेषाणां भेदो विचार्यते ॥

(२) 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति ज्योतिष्टोमविधिः । तमेव ज्योतिष्टोमं प्रकृत्य श्रूयते 'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामा आग्रयणाग्रान्' इति । एतदेवात्र विषयवाक्यम् । अत्र सोमशब्देन सोमलतासाधनको यागो विधीयते । तस्मिंश्च यागे माध्यन्दिने सवने पृष्ठस्तोत्रे रथन्तरबृहज्जगन्नामकानि सामानि विकल्पेन विहितानि । ऐन्द्रवायवः मैत्रावरुणः आश्विनः शुक्रः मन्थ्याग्रयणः उक्थ्यः ध्रुवः इत्यादिनामका सोमरसधारकाः पात्रविशेषा ग्रहनामधेया भवन्ति । सोमयागस्य रथन्तरसामोपेतत्वपक्षे एतेषु ग्रहेषु ऐन्द्रवायव एव प्रथमं गृहीतव्यः, बृहत्सामोपेतत्वपक्षे शुक्रः, जगत्सामोपेतत्वपक्षे आग्रयणः । इत्येवोक्तस्य विषयवाक्यस्यार्थः ॥

(३) अत्र सन्देहः–अत्र यो ग्रहाग्रताविशेषो विधीयते स किं ज्योतिष्टोमस्यैव (रथन्तरसामादिगुणयुक्तस्य) उत रथन्तरसामादिनाम्नः कर्मान्तरस्येति ॥

(४) तत्र पूर्वपक्षः–प्रकृतो ज्योतिष्टोमो गायत्रादिसामोपेतः। तस्यैव व्यावृत्त्यर्थमिह वाक्ये रथन्तरादयो गुणाः कीर्त्यन्ते। अत ऐन्द्रवायवादिग्रहाग्रत्वविशिष्टानि कर्मान्तराण्येवात्र विधीयन्त इति ॥

(५) सिद्धान्तस्तु–प्रकरणादत्र ज्योतिष्टोमस्यैव ग्रहणम्। गृहीते च तस्मिन् तद्विषये ग्रहाग्रत्वविशेषो गुणो विधीयते। न च रथन्तराद्यभिधानेन ज्योतिष्टोमस्य व्यावृत्तिः–प्रातस्सवने तस्य गायत्रादिसामोपेतत्वेऽपि पृष्ठस्तोत्रे रथन्तरादियोगस्यापि सम्भवात् ॥

तदेतत्प्रथममधिकरणमभिप्रेत्याह ज्योतिष्टोम इति। 'ज्योतिष्टोमे' तन्नामके प्रकृत एव कर्मणि 'ग्रहाग्रत्वम्' ऐन्द्वायवादिग्रहाग्रत्वरूपो गुणो विधीयत इति शेषः ॥ १ ॥

## (२) २।३।२ राजा क्षत्रिय उच्यते।

(१) पूर्वाधिकरणापवाद इदानीं प्रस्तूयते ॥

(२) अस्ति राजसूयो नाम यागः–'राजा राजसूयेन स्वाराज्यकामो यजेतेति'। तस्यैव राजसूयस्य प्रकरणे एका अवेष्टिनामिका इष्टिः श्रूयते 'आग्नेयमष्टाकपालं निर्वपेत् हिरण्यं दक्षिणा–ऐन्द्रमेकादशकपालम् ऋषभो दक्षिणा–वैश्वदेवं चरुम् पिशङ्गी प्रष्ठौही दक्षिणा–मैत्रावरुणीमामिक्षाम् वशा दक्षिणा–बार्हस्पत्यं चरुम् शितिपृष्ठो दक्षिणा' इति। तस्यामेवावेष्टौ यजमानजातिभेदेन हविषां क्रमव्यत्ययोऽपि श्रूयते–'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वा तमभिघारयेत् यदि राजन्य ऐन्द्रम्–यदि वैश्यो वैश्वदेवम्' इति। एतदेवात्र विषयवाक्यम् ॥

(३) अत्र सन्देहः–अस्मिन् उत्तरे वाक्ये किं विधीयते–किं राजसूयान्तर्गतावेष्टेः पृथगेव कर्मान्तरम्–उत तदेव कर्म प्रकृत्य यजमानजातिभेदमूलकं हविष्क्रमभेदमात्रम्। एष च सन्देहः सन्देहान्तरमूलकः–'राजा राजसूयेन यजेते'त्यत्र राजसूयविधायके विधौ राजशब्दः किं क्षत्रियमात्रवचन उत यः कश्चिद् राज्यं कर्म करोति तद्वचनः ? ॥

(४) तत्र पूर्वपक्षः–राजशब्दो राज्यकर्मकर्तृपरक एव नेयः। यौगिकोऽयं राजशब्दः। राजकर्म जनपदपुररक्षणादिरूपं यः करोति स एव राजशब्दवाच्यः। अत एवाक्षत्रियेपि जनपदरक्षणादिकर्मकर्तरि राजशब्दो लोके प्रयुज्यते। एवं च सर्व एव राजकर्मकर्तारोऽधिकृता; राज-

सूयेऽवेष्टौ च। तथा चावेष्टिरपि पूर्वाधिकरणन्यायेन राजसूयाङ्गमेव। उत्तरवाक्यं च जातिभेदेनावेष्टौ कश्चित् क्रमव्यत्ययं विदधाति न पुनः कर्मान्तरमिति ॥

(५) सिद्धान्तस्तु–राजशब्दो रूढ्या क्षत्रियजातिवचनः। रूढिश्च योगाद्बलीयसी। यत्र क्वचिद् ब्राह्मणादौ राजशब्दः प्रयुज्यते तत् रक्षणादिकार्यसादृश्यमूलिकया गौण्यैव वृत्त्या। एवं च ब्राह्मणवैश्ययो राजसूयेऽनधिकृतत्वाद् उत्तरे वाक्ये यदवेष्ट्याख्यं कर्म प्रकृत्य ब्राह्मणादय उक्ताः तन्न राजसूयाङ्गम्भवितुमर्हति–सर्वथा कर्मान्तरमेव तत् ब्राह्मणादिकर्तृकम्। एवं च राजसूयान्तर्गतायामवेष्टौ ब्राह्मणवैश्ययोरनधिकारेऽपि तद्बहिरवेष्टौ कर्मान्तरे सर्वथाऽधिकार एव इति ॥

एतदभिप्रेत्याह–राजेति। 'क्षत्रिय' एव 'राजा उच्यते'–राजा राजसूयेन यजेतेति राजसूयस्य विधिवाक्ये इति शेषः–तथा च राजसूयेऽनधिकृतत्वाद् ब्राह्मणक्षत्रिययोरवेष्टिः कर्मान्तरमेवेति स्वतः सिद्धोऽधिकरणसिद्धान्तो न साक्षादभिहितः ॥ २ ॥

## (३) २।३।४। आधानं कर्तृभिर्भिन्नम्

(१) अग्न्याधानमेकं कर्म सर्वकर्मशेषभूतं न प्रतिकर्म भिन्नमिति विचार्यते ॥

(२) 'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य' इति विषयवाक्यम् ॥

(३) तत्र सन्देहः–यदाधानकर्मास्मिन् वाक्ये निर्दिश्यते तत् किमन्यतः प्राप्तमत्र वाक्ये केवलतत्कर्मोद्दिश्य ब्राह्मणादिसम्बन्धेन वसन्तादिकालो विधीयते–उतात्रैव वाक्ये अग्न्याधानकर्मणो विधानमिति ॥

(४) तत्र पूर्वपक्षः–अग्न्याधानं विना यागमात्रस्यासम्भवात् 'ज्योतिष्टोमेन यजेत' 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यादि यागविधिभिरेवाधानस्य विधिः कल्प्यते। तत एव चाधानस्य प्राप्तत्वात् तदर्थं विध्यन्तरस्याप्रयोजकत्वात् उक्तवाक्ये यो विधिस्तस्य स्वरूपमित्थमेव यत् 'अन्यतः प्राप्तं यदाधानकर्म तद् यदि ब्राह्मणः कुर्यात् वसन्त एव कुर्यात्, यदि राजन्यः कुर्याद् ग्रीष्मे कुर्यात्, यदि वैश्यः कुर्यात् शरदि कुर्यात्' इति ॥

(५) सिद्धान्तस्तु–अग्नीनादधीत इति साक्षादाधानस्य विधिं विहाय यागसामान्यविधिबलेन विध्यन्तरकल्पनस्यान्याय्यत्वात् प्रकृतवाक्ये आधानस्य विधिरिति स्वीकर्तव्यम्। अतोऽनेन वाक्येन वसन्तादिकालविशिष्ट ब्राह्मणादिकर्तृकमाधानं विधीयते इति ॥

एतदभिप्रेत्याह--आधानमिति । 'आधानम्' वसन्त इत्यादिवाक्येन विहितमग्न्याधानम्-'कर्तृभिः' ब्राह्मणक्षत्रियवैश्यैः विधिवाक्यनिर्दिष्ट-ब्राह्मणादिसम्बन्धेन-'भिन्नम्'—वसन्ते ब्राह्मणेन कृतमाधानं ग्रीष्मे राजन्येन कृतात् शरदि च वैश्येन कृतात् आधानात् भिन्नमेवेत्याशयः ॥ ३ ॥

## (४) २।३।५-११ भेदो दाक्षायणे न हि ॥

(१) कर्मविशेषभेदाभेदो विचार्यते ॥

(२) दर्शपूर्णमासौ प्रकृत्य श्रूयते-'दाक्षायणयज्ञेन यजेत प्रजाकामः' इति । एतदेवात्र विषयवाक्यम् ॥

(३) तत्र सन्देहः-दाक्षायणशब्देन किं कर्मान्तरं विधीयते उत दर्शपूर्णमासयोरेव दाक्षायणनामको गुणविशेषो फलविशेषमुद्दिश्य विधीयत इति॥

(४) तत्र पूर्वपक्षः-दाक्षायणनामकं कर्मान्तरमेव विधीयते । दाक्षायणनामा नास्ति कश्चिद् गुणो यो दर्शपूर्णमासावुद्दिश्य विधीयेत । दाक्षायणनामकेन यागेन प्रजां भावयेदिति स्पष्टोऽर्थो वाक्यस्यावगम्यत इति ॥

(५) सिद्धान्तस्तु-दर्शपूर्णमासावेवोद्दिश्य दाक्षायणनामको गुणविशेषो फलविशेषाय विधीयते । कोऽसौ गुणो दाक्षायणनामक इति चेत्-दाक्षायणशब्द आवृत्तिवाचकः । आवृत्त्या युक्तो दर्शपूर्णमासयज्ञ एव प्रजारूपफललाभाय क्रियते । आवृत्तिप्रकारस्तु 'द्वे अमावास्ये द्वे पौर्णमास्यौ यजेत' इति वाक्याल्लभ्यते । एवं च प्रकृतयोरेव दर्शपूर्णमासयोः प्रजाफलसिद्ध्यर्थमावृत्त्याख्यगुणविधिः न कर्मान्तरविधिरिति ॥

एतदेवाभिप्रेत्याह—भेद इति । 'दाक्षायणे' दाक्षायणपदवाच्ये 'न' भेदः दर्शपूर्णमासयागादिति शेषः । दाक्षायणपदवाच्यं दर्शपूर्णमासयागाद् भिन्नं कर्मान्तरन्न भवतीत्यर्थः ॥ ४ ॥

## (५) २।३।१२-१५ वायव्यं यजिमत् कर्म

(१) पूर्वाधिकरणापवादः ॥

(२) अनारभ्य श्रूयते 'वायव्यं श्वेतमालभेत भूतिकाम इति' । दर्शपूर्णमासप्रकरणे च श्रूयते 'ईषामालभेत' इति [ईषा च शकटगतो दीर्घः काष्ठविशेषः] । अनारभ्याधीतं पूर्ववाक्यमेवात्र विषयवाक्यम् ॥

(३) तत्र सन्देहः-दर्शपूर्णमासप्रकरणोपलब्धवाक्ये य ईषालम्भ उक्तः तमुद्दिश्यैव किं श्वेतरूपो गुण उक्तवाक्येन विधीयते-उत कर्मान्तरमेवानेन विधीयते-यदि च कर्मान्तरं तत्रापि किंस्वरूपमिदं कर्मान्तरम्-किं वाक्योक्तालम्भनमात्ररूपमुतालम्भनसहितयागरूपमिति ॥

(४) तत्र प्रथमः पूर्वपक्षः-दर्शपूर्णमासगतेषास्पर्शमुद्दिश्यैव श्वेतरूपो

गुणोऽत्र विधीयते–तस्य च श्वेतकाष्ठस्य वायुना स्पृश्यमानत्वाद् वायव्यता भवति–इति । द्वितीयश्च–यदापि कर्मान्तरं विधीयते तदाऽपि यथाश्रुतमालम्भनमात्रं विधीयते न याग इति ॥

(५) सिद्धान्तस्तु–कर्मान्तरमेव विधीयते–तच्च यागस्वरूपमेव । तथाहि वायुर्देवता श्वेतः पशुविशेषः–अस्य च पशोर्वायुदैवतत्वं स्पष्टमुच्यते वाक्ये । अयं च द्रव्यदेवतासम्बन्धो यागद्वारैव सम्भवतीत्यतो यागरूपं कर्म कल्पयति–साक्षादुक्तस्य चालम्भनकर्मणो यागेऽप्यावश्यकत्वमस्त्येवेति सर्वमवदातम् ॥

एतदेवाभिप्रेत्याह वायव्यमिति । 'वायव्यं'–वायव्यं श्वेतमालभेतेति वाक्ये यदुक्तं आलम्भनं कर्म तत् 'यजिमत्' द्रव्यदेवतासम्बन्धकल्पितयागसम्बद्धमेवेत्याशयः ॥ ५ ॥

## (६) २।३।१६–१७ वत्सालम्भो यजिर्न हि ।

(१) पूर्वाधिकरणापवादः ॥

(२) अग्निहोत्रप्रकरणे गोदोहाधिकारे श्रूयते–'वत्समालभेतेति' । इदमेव विषयवाक्यम् ॥

(३) तत्र सन्देहः–किमत्र यागान्तरं विधीयते उत प्रकृताग्निहोत्रप्रकरणोक्तवत्ससम्बन्धेनालम्भनरूपो गुणो विधीयते–इति ॥

(४) तत्र पूर्वपक्षः–पूर्वाधिकरणन्यायेन यागान्तरमेवात्र विधीयत इति॥

(५) सिद्धान्तस्तु–अत्र वत्सालम्भनरूपोऽग्निहोत्रसंस्कार एव विधीयते । पूर्वाधिकरणवाक्यवन्नात्र वाक्ये देवतासम्बन्ध उक्तो येन तद्वद् द्रव्यदेवतासम्बन्धद्वारा यागकर्म कल्प्येतेति ॥

एतदभिप्रेत्याह–वत्सालम्भ इति । 'वत्सालम्भः' 'न' 'यजिमत्'–न यागरूपं कर्मापि तु अग्निहोत्राख्ययागस्य संस्कारगुण एवेति शेषः ॥ ६ ॥

## (७) २।३।१८ चरूपधाने न यजिः

(१) पञ्चमाधिकरणस्यापवादान्तरम् ।

(२) "नैवारश्चरुर्भवति–चरुमुपदधाति"–इति विषयवाक्यम् ।

(३) तत्र सन्देहः–अत्र वाक्ये किं यागो विधीयते–उतोपधानमात्रमिति।

(४) पूर्वपक्षः–अत्र याग एव विधीयते–तत्र च यागे वाक्यशेषोक्तो बृहस्पतिरेव देवता । एवं च नैवारचरुद्रव्यको बृहस्पतिदेवताको याग एव विधीयते । यागे उपयुक्तस्य च चरोः शेषस्य प्रतिपत्तिमात्रमुपधानमिति ।

(५) सिद्धान्तस्तु–उपधानमात्रमत्र विधीयते । वाक्योक्ताख्यातेन

उपधानस्य सम्बन्धः प्रत्यक्षः यागस्य तु वाक्यशेषबलेनानुमेय एवेति न यागविधिरयमिति ।

एतदभिप्रेत्याह-चरूपधान इति । चरोः उपधाने 'यजिः' यागो न विहित इति शेषः ॥ ७ ॥

## (८) २।३।१९ त्वाष्ट्रोत्सर्गो विधीयते ।

(१) पञ्चमाधिकरणस्यापवादान्तरम् ।

(२) विषयवाक्यम्-'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्य श्रुतम्-'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति ।

(३) संशयः-इदं वाक्यं किं कर्मान्तरं विधत्ते उत प्रकृतत्वाष्ट्रपात्नीवतयागमुद्दिश्य पर्यग्निकरणरूपं गुणमात्रमिति ।

(४) पूर्वपक्षः-पर्यग्निसंस्कृतपशुद्रव्यकं पत्नीवद्देवताकमुत्सृजनरूपं कर्मान्तरविधानमेव वाक्यस्य साक्षादन्वयेनार्थो लभ्यते । अतः पञ्चमाधिकरणसिद्धान्तवदत्रापि कर्मान्तरमेव विधीयते ॥

(५) सिद्धान्तः-पञ्चमाधिकरणवाक्यमनारभ्याधीतम्-इह तु वाक्यं त्वाष्ट्रपात्नीवत्प्रकरणे पठ्यते।एतद्वाक्योक्तश्च पात्नीवतः पशुः पूर्ववाक्योक्त एव पात्नीवत इत्यपि स्पष्टं प्रत्यभिज्ञायते । तमेव च पात्नीवतं पशुमनूद्य द्वितीये वाक्ये पर्यग्निकरणरूपः संस्कार उच्यते । स एव च संस्कारः उक्तपशुगुणत्वेन उत्सृजन्तीत्याख्यातेन विधीयते । एवं त्वाष्ट्रम्पात्नीवतमेवोद्दिश्य पर्यग्निसंस्काररूपो गुणोऽत्र विधीयते न कर्मान्तरमिति ॥

एतदभिप्रेत्याह-त्वाष्ट्रोत्सर्ग इति । त्वाष्ट्रस्य त्वष्टृदेवताकस्य पूर्ववाक्योक्तस्य पात्नीवतस्यैव पशोः पर्यग्निसंस्कृतस्य उत्सर्गो विधीयते वाक्येनेति शेषः ॥ ८ ॥

## (९) २।३।२० अदाभ्यः प्रकृतौ ग्राह्यः

(१) अपवादान्तरम् ।

(२) अनारभ्य श्रूयते-'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते' इति । एतदेव विषयवाक्यम् ।

(३) सन्देहः-अदाभ्यनामकयागान्तरविधानमेतदुत ज्योतिष्टोमाङ्गसोमपात्रविशेषस्यैव विधानमिति ।

(४) पूर्वपक्षः-अदाभ्यशब्दस्य अपूर्वशब्दत्वात् तन्नामको याग एव स्वतन्त्रो 'यजते' इत्यनेनाख्यातेन विधीयत इति ।

(५) सिद्धान्तः-अदाभ्य इति नाम-किन्तु ग्रहस्यैव न यागस्य-'गृहीत्वा' इति शब्दस्यानन्तरमेव पाठात् यजतेस्तु व्यवहितत्वात् इति ॥

एतदभिप्रेत्याह-अदाभ्य इति । 'प्रकृतौ' यागे ज्योतिष्टोमे एव 'अदा-

भ्यः' तन्नामको ग्रहः ग्राह्यः-न त्वेतन्नामको यागः कर्तव्यः इति ॥ ९ ॥

## (१०) २।३।२१-२३ नाग्निवाचा यजिं वदेत् ॥

(१) अपवादान्तरम् ।

(२) अस्ति विधिः 'अग्निं चिनुते' इति । एतदेवात्र विषयवाक्यम् ।

(३) तत्र सन्देहः-किमत्राग्निशब्देन यागनामधेयेन यागान्तरं विधीयते उत द्रव्यवाचकेन ज्योतिष्टोमादिष्वेव चयनरूपो गुणो विधीयत इति ।

(४) पूर्वपक्षः-यागान्तरमेव विधीयते । उक्तवाक्यादनन्तरमेव पठ्यते-'अग्निमग्निष्टोमेनानुयजति तमुक्थ्येन' इत्यादि । अनेन स्पष्टं सूच्यते यत् अग्निशब्दो यागवाची यागस्यैवोक्थ्यस्तोत्रादिसम्बन्धसम्भवात्-इति।

(५) सिद्धान्तः-रूढ्या अग्निशब्दो वह्निद्रव्यमेव वक्ति । इयं च रूढिः क्लृप्ता उक्थ्यस्तोत्रादिलिङ्गकल्प्याद् यागवाचित्वाद् बलीयसी । न चात्र यागस्वरूपं प्रतिभाति द्रव्यदेवतावाचकपदाभावात् । अतो न यागनामेदमपि तु ज्योतिष्टोमादिगतवह्निद्रव्यवाचकमेव । 'चयनं' च तस्यैव द्रव्यस्य संस्कारविशेषः । एवं संस्कृतस्य च वह्निद्रव्यस्य ज्योतिष्टोमादावेव विनियोगः-इति ।

एतदभिप्रेत्याह—नाग्निवाचेति । 'अग्निवाचा' अग्निशब्देन 'यजिं' यागं 'न वदेत्'-न विधीयेत इति ॥ १० ॥

## (११) २।३।२४ सत्रेऽग्निहोत्रमन्यत् स्यात्

(१) विवेचितो गुणभेदमूलकः कर्मभेदः । प्रकरणभेदमूलक इदानीं विविच्यते ।

(२) विषयवाक्यम्-कुण्डपायिनामयने श्रूयते-'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति'-इति ।

(३) सन्देहः-अन्यतः प्राप्तमग्निहोत्रकर्म अनूद्य मासरूपो गुणोऽत्र विधीयते उत ततो भिन्नमेव मासाग्निहोत्ररूपं कर्मेति ।

(४) पूर्वपक्षः-प्राप्तमेव नित्याग्निहोत्रमनूद्य मासरूपो गुणोऽत्र विधीयते इति ।

(५) सिद्धान्तः-नेदं वाक्यन्नित्याग्निहोत्रप्रकरणे श्रूयते-श्रूयते त्वेतत् अयनप्रकरणे-उपसद्भिश्चरित्वा तदनन्तरमेव कर्तव्यतया विहितमत्र कर्म । न च उपसदोऽग्निहोत्रे सन्ति । अतो न नित्याग्निहोत्रानुवादोऽयमपि तु कर्मान्तरविधिरेव । कर्मान्तरत्वे चात्र प्रकरणान्तरमेव प्रमाणम् ॥

एतदेवाभिप्रेत्याह-सत्र इति । 'सत्रे' कुण्डपायिनामयनप्रकरणे यत् 'अग्निहोत्रं' विहितं तद् नित्याग्निहोत्रात् 'अन्यत्' कर्मान्तरमेवेत्यर्थः ॥

भाष्यकारमतेनेत्थमेव सिद्धान्तप्रदर्शनम् । न चैतद् वार्तिककारानु-

मतम्। उक्तप्रदर्शनप्रकारेण यद्यपि मासाग्निहोत्रविषयकः सिद्धान्तः सिद्धो भवति तथाऽपि मासं दर्शपूर्णमासाभ्यां यजेतेत्यत्र तेन प्रकारेण न सिद्धिः–अत्र उपसद्भिश्चरित्वेत्यस्याभावात्। एतदेव वार्तिककारस्य अरुचिबीजम्। सिद्धान्ते तु न मतभेदः॥ वार्तिककारमतेन सिद्धान्त-प्रतिपादनं यथा–अत्र कर्मभेदे प्रकरणविच्छेद एव प्रमाणम्। तथाहि मासाग्निहोत्रवाक्यकाले नित्याग्निहोत्रवाक्यन्नैव विपरिवर्तते। अविपरि-वर्तमाने च पूर्वकर्मणि उत्तरस्य भेदः स्पष्टमेवावभासते। कालाद्युद्देशेन च कर्तव्यं कर्म विधीयमानं यद्यन्येन वाक्येन तद्रूपमेवोपस्थाप्यते तत-स्तदेवेत्यकर्मान्तरबुद्धिर्भवति। अथ त्वीषदपि तिरोधानान्नोपतिष्ठते पूर्वकर्म ततः परम्प्रति विधीयमानत्वेनैव विहितादन्यत्वबुद्धिर्जाता न शक्याऽपनेतुमिति कर्मान्तरत्वमेव भवतीति॥ ११॥

## (१२) २।३।२५ आग्नेयोऽन्यो रुगर्थिनः।

(१) फलरूपानुपादेयद्वारा प्रकरणकृतकर्मभेदस्य प्रकारान्तरम्प्रदर्श्यते।

(२) अनारभ्य श्रूयते–'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' इति विषयवाक्यम्।

(३) सन्देहः–किं प्रकृतिभूतदर्शपूर्णमासगतमेवाग्नेययागमनूद्यात्र रु-ग्रूपं फलं विधीयते–उत कर्मान्तरमेवेति।

(४) पूर्वपक्षः—दर्शपूर्णमासान्तर्गतमेवाग्नेययागमनूद्यात्र फलं विधी-यते। न पूर्वाधिकरणन्यायावतारोऽत्र। तत्र हि अयनप्रकरणे श्रुतत्वाद्विधे-स्तद्विहितकर्मणो भेदः सिद्धः। अत्र तु वाक्यं न कस्यचिदपि प्रकरणे श्रु-तम्। अतो न प्रकरणान्तरेण कर्मभेदसिद्धिः इति।

(५) सिद्धान्तः—प्रकरणान्तरत्वाभावेऽपि कस्यापि कर्मणः प्रकरणेन सम्बन्धाभावात् प्रकृतिदर्शपूर्णमासप्रकरणापेक्षयाऽसन्निधिरस्त्येव। अय-मेव चासन्निधिः कर्मभेदं साधयति। एवं च सर्वथा रुक्कामेष्टिः कर्मान्तर-मेवेति।

एतदभिप्रेत्याह आग्नेय इति। 'रुगर्थिनः' रुक्कामस्य 'आग्नेयः' 'अन्यः' दर्शपूर्णमासगतादाग्नेयादिति शेषः॥ १२॥

## (१३) २।३।२६ सैवान्नकामस्यावेष्टिः

(१) पूर्वाधिकरणापवादः।

(२) 'आग्नेयोऽष्टाकपालः पुरोडाशो भवति' इत्यादिवाक्येषु विहिता अवेष्टिः। तस्या एव प्रकरणे फलमाम्नातम्–'एतयाऽन्नाद्यकामं याजयेत्' इति। एतदेवात्र विषयवाक्यम्।

(३) तत्र सन्देहः-पूर्ववाक्यकलापविहिताया अवेष्टेः कर्मान्तरमियम-न्नाद्यकामस्यावेष्टिर्विधीयते-उत तामेवावेष्टिमनूद्य फलमात्रं विधीयते-इति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन कर्मान्तरमेव विधीयत इति ।

(५) सिद्धान्तः—न कर्मान्तरमत्र विधीयते- किन्तर्हि पूर्वोक्तामेवावेष्टिमनूद्य फलविशेषो विधीयते । एतयेत्येष शब्दो न शक्नोति अवेष्ट्या भिन्नं कर्म वक्तुम्—सन्निहितस्यैव हि प्रतिनिर्देशक एषशब्दः । तस्मादवेष्टिरेवान्नाद्यकामकर्तव्यतयाऽनूद्यते ।

एतदेवाभिप्रेत्याह—सैवेति । 'सैव' पूर्वगतवाक्यकलापोक्तैव 'अवेष्टिः' 'अन्नकामस्य' अन्नाद्यरूपफलविशेषकामस्य- अत्र वाक्ये अनूद्यत इति शेषः ॥ १३ ॥

## (१४) २।३।२७-२८ आग्नेयः पर्वणोर्भवेत् ॥

(१) पूर्वाधिकरणापवादः ।

(२) 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति श्रूयते । तदनन्तरम्पुनः 'यदाऽग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति ।

(३) तत्र सन्देहः—एकमेवाग्नेयकर्मोभयोरपि वाक्ययोरुक्तमुत भिन्ने एव कर्मणी इति ।

(४) पूर्वपक्षः—अविशेषपुनःश्रुतिलक्षणेनाभ्यासेन भिन्ने एव कर्मणी । एवं च अमावास्याकाले द्विःप्रयोग आग्नेयस्य-एकः प्रयोगः पूर्ववाक्योक्तोऽपरश्च द्वितीयवाक्योक्तः । तथा दर्शपूर्णमासयागे त्रिःप्रयोग आग्नेयस्य-(१)पूर्ववाक्येनोक्तोऽमावास्यायाम्, (२)पूर्ववाक्योक्तः पौर्णमास्याम्-(३)उत्तरवाक्योक्तोऽमावास्यायामिति ॥

(५) सिद्धान्तः—प्रत्यभिज्ञानादेवाग्नेयस्यैकत्वे सिद्धे द्वितीयस्य अमावास्यामात्रवाचकस्य वाक्यस्य पूर्ववाक्योक्तकर्मणोऽनुवादकत्वमेव। अनुवादश्च ऐन्द्राग्नस्तुत्यर्थः। यद्यप्याग्नेयोष्टाकपालोऽमावास्यायां भवति तथाऽपि केवलेनाग्निना न तथा साधुर्भवति यथेन्द्रसहितेनाग्निनेत्यत 'ऐन्द्राग्नः कर्तव्य' इति विधेयस्यैव प्रशंसा सम्पाद्यतेऽनुवादेनेति ।

एतदभिप्रेत्याह आग्नेय इति । 'आग्नेयः' आग्नेयाख्यं कर्म 'पर्वणोः' अमावास्यायाम् पौर्णमास्यां चेति द्विरेव-'भवेत्' न त्रिरिति भावः ॥१४॥

पादे चतुर्दश न्याया भाष्यकारेण वर्णिताः ।

उक्तार्थमेतत् ॥

इति द्वितीयस्य तृतीयः ।

## द्वितीयाध्यायस्य चतुर्थः पादः ॥

### ( प्रयोगभेदविचारात्मकः )

(१) २।४।१-७ न विहित इति यावज्जीवकालोऽग्निहोत्रे

(१) पर्यवसिते कर्मभेदनिरूपणे तत्सम्बद्ध एव प्रयोगभेदो विचार्यते।

(२) 'यावज्जीवमग्निहोत्रं जुहोति' इति विषयवाक्यम् ।

(३) सन्देहः—किमत्र यावज्जीविकता कर्मधर्मः-उत कर्तृधर्मः इति ।

(४) पूर्वपक्षः-'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यनेन यत् काम्यमग्निहोत्रं विहितं तदेव जुहोतीत्यनेनानूद्य 'यावज्जीव'पदेन तस्य मरणावधिकालोविधीयते। तथा चेदं वाक्यं काम्याग्निहोत्रमुद्दिश्य यावज्जीवकालं विदधाति। एवं चास्य काम्यानुष्ठानस्य मरणपर्यन्तता सिध्यति। अन्यथा 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यनेन सकृदेवानुष्ठानं स्यात् । तस्मात् काम्याग्निहोत्रकर्मणो यावज्जीवमभ्याससिद्ध्यर्थमेव यावज्जीवकालरूपस्य कर्मधर्मस्यैवायं विधिस्तथा च नित्यकाम्यप्रयोगौ सम्मिलितावेकमेव कर्म यावज्जीवव्याप्यं सम्पादयतः इति ॥

(५) सिद्धान्तः—यावज्जीवपदस्य सत्यपि काललक्षकत्वे न कालवाचकत्वम् । कृत्स्नजीवनपर्याय एवेदं पदम् । न च जीवनं कस्यचित् कर्मणो धर्मो भवितुमर्हति-तस्य पुरुषधर्मत्वात् । तमेव पुरुषधर्मं निमित्तीकृत्याग्निहोत्रप्रयोगोऽत्र वाक्ये विधीयते। न चात्र कर्मभेदः। प्रयोगभेद एवात्र लभ्यते। न च प्रयोगनैरन्तर्यापत्तिः-सायम्प्रातःकालयोरेव स्पष्टं विहितत्वात् । तस्मात् जीवनस्य पुरुषधर्मत्वात् नित्यकाम्यप्रयोगौ भिन्नावेव ।

एतदभिप्रेत्याह —न विहित इति । 'यावज्जीवकालः' 'अग्निहोत्रे' अग्निहोत्रकर्मधर्मत्वेन 'न विहितः'-अपि तु पुरुषधर्मत्वेनैवेति शेषः ॥ १ ॥

(२) २।४।८-३२ मुनिरापि बहुशाखं कर्म चैकं जगाद ॥

(१) उक्तान् षट्कर्मभेदकान् विहायान्यः कर्मभेदकः शाखाभेदादिरूपोऽस्ति न वेति विचार्यते ।

(२) समुपलभ्यन्ते दर्शपूर्णमासविधायकानि वाक्यानि नानाशाखासु काठकाण्वमाध्यन्दिनतैत्तिरीयाद्यासु ।

(३) तत्र सन्देहः—प्रतिशाखं किम्भिन्नमेव कर्म दर्शपूर्णमासाख्यं विधीयते-उत एकमेवेति ।

(४) पूर्वपक्षः—काठकादयो नामभेदाः। नामभेदश्च कर्मभेदक इति स्थितम् प्राक्। अतः शाखाभेदेन कर्म भिन्नमिति।

(५) सिद्धान्तः—सर्वत्रोक्तस्य दर्शपूर्णमासस्यैकमेव रूपं। दर्शपूर्णमासेति नामाप्येकमेव सर्वत्रोपलभ्यते। तस्मादनन्यथासिद्धरूपप्रत्यभिज्ञानात् शाखाभेदेऽपि कर्म न भिद्यते—इति।

एतदभिप्रेत्याह—मुनिरिति। 'मुनिः' जैमिनिः 'बहुशाखं' बह्वीषु शाखासु उक्तं 'कर्म' 'एकम्'—अभिन्नम्—इति 'जगाद' ॥ २ ॥

विदितसकलतत्त्वैः शिष्यसम्बोधनार्थं—
नययुगलमिहोक्तं नीतिविद्भिः समीक्ष्य ॥

'नययुगलम्' द्वे अधिकरणे। 'नीतिविद्भिः' मीमांसान्यायवेत्तृभिः। स्पष्टमन्यत् ॥

इति द्वितीयस्य चतुर्थः ॥



## इति द्वितीयोऽध्यायः ॥



# अथ तृतीयोऽध्यायः ॥

## प्रथमः पादः

## ( अङ्गत्वविचारपरः )

३।१।१ प्रथमं प्रतिज्ञाधिकरणमनुक्रमणिकायां नैवोक्तम् ग्रन्थकृता । तत्र कारणं स्पष्टम् । अत्राधिकरणस्वरूपं नास्ति । द्वितीयतृतीयाध्याययोः पौर्वापर्यसम्बन्धनिरूपकमेवेदमाद्यं सूत्रमिति सर्वसम्मतम् । तथा चोक्तम्–'द्वितीये कर्मणां भेदे सिद्धे, भिन्नक्रियास्वयम् बुभुत्सितः शेषशेषिभावोऽतोऽत्राभिधीयत' इत्यधिकरणमालायाम् । अतो नेदमधिकरणमपि तु शेषलक्षणाधिकरणस्योपोद्घातरूपः प्रस्ताव एवेति नात्राधिकरणत्वेन सन्निवेशितम् । अतोऽत्राधिकरणसङ्ख्या चतुर्दशैव न पञ्चदशेत्यवधातव्यम् ॥

### (१) ३।१।२ यो यदर्थः स तच्छेषः

(१) निरूपिते कर्मणां भेदे किं कर्म प्रधानं 'शेषि' किञ्च गौणं 'शेष' इतीदानीं विचारपथमवतरति ।

(२) कर्मणामङ्गप्रधानबोधकानि सर्वाणि वाक्यान्यत्र विषयवाक्यत्वेन परिगृह्यन्ते ।

(३) शेषस्य लक्षणं सम्यक् सम्भवति न वेति सन्देहः ।

(४) पूर्वपक्षः—न सम्भवति शेषस्य लक्षणम् । शेषस्य स्वरूपमेव निरूपयितुं न शक्यते । तथाहि शेषत्वं नाम किम् ? अविनाभूतत्वम्–प्रयोज्यत्वम्–विध्यन्तविहितत्वं वा ? न तावदाद्यः–तथासति स्वाम्यपि दासस्य शेषः स्यात्–दर्शपूर्णमासान्तर्गतप्रधानकर्मणामपि परस्परं शेषत्वं स्यात् ॥ नापि द्वितीयः–पुरोडाशकपालेन तुषानुपवपतीत्यत्र तुषोपवापं प्रति शेषस्यापि कपालस्य तत्प्रयोज्यत्वाभावात् शेषत्वं न स्यात् । नापि तृतीयः–विध्यादिविहितस्य पलाशशाखाच्छेदस्य सत्यपि शेषत्वे विध्यन्तविहितत्वाभावात् । तस्मान्नास्ति शेषतायां किञ्चित् स्वरूपमिति ॥ न च शेषत्वसाधकः कश्चिद् हेतुरस्ति–'विमतः शेषः एवंरूपत्वात्' इति कस्यचिद् हेतोर्निरूपयितुमशक्यत्वादिति ॥

(५) सिद्धान्तः—'विमतः प्रयाजादिः शेषः परार्थत्वात् भृत्यादिवत्' इति हेतुः सुनिरूपः । तथा च 'परार्थः शेष' इति लक्षणमदुष्टमेव । एवं च शेषत्वस्य हेतुः स्वरूपं च निरूपितं भवति इति ।

एतदभिप्रेत्याह—यो यदर्थं इति । 'यः' पदार्थः 'यदर्थः' स 'तस्य शेष' इति योजना ॥ १ ॥

## (२) ३।१।३—६ कर्माण्यपि फलादिनः ।

(१) शेषस्य लक्षणे निरूपिते तस्य लक्ष्यमिदानीं निरूप्यते ।

(२) स्फ्यकपालादिकं द्रव्यम्—अरुणिमादिको गुणः-अवघातप्रोक्षणादिकः संस्कारः-दर्शपूर्णमासादिकं कर्म-स्वर्गादि फलम्-पुरुषश्च कर्ता। यत्र यत्र वाक्ये एतान्युक्तानि तानि सर्वाण्यत्र विषयवाक्यत्वेन परिगृह्यन्ते।

(३) अत्र सन्देहः—किं द्रव्यादयः पुरुषान्ताः सर्वं एव शेषस्य लक्ष्या उत कानिचिदेवेति ।

(४) पूर्वपक्षः ( बादरिमतम् )-द्रव्यगुणसंस्कारा एव शेषा न कर्मफलपुरुषाः। द्रव्यादिषु त्रिष्वेव नियतः शेषभावः । एते सर्वत्र शेषभूताः परोपकारित्वस्यैष्वेव वर्तमानत्वादिति ।

(५) सिद्धान्तः—यथा द्रव्यादयस्त्रयः परार्थास्तथैव कर्मफलपुरुषा अपीत्येतेषामपि सुस्पष्टं शेषत्वम् । तथाहि दर्शपूर्णमासादि फलार्थमेव क्रियते-फलं च पुरुषार्थमेव सम्पद्यते-पुरुषश्चौदुम्बरीसम्मानादिषु गुणभूतः श्रूयते ॥ तस्माद् द्रव्यादिष्वेव शेषत्वं न कर्मादिष्विति न समीचीनाऽवधारणा । इयांस्तु विवेकः । द्रव्यगुणसंस्काराणां यागम्प्रति शेषत्वं नियतं कर्मादीनां त्वापेक्षिकम् । तथाहि कर्मणः फलम्प्रति शेषत्वेऽपि द्रव्यम्प्रति प्रधानत्वमेव-फलस्य पुरुषम्प्रति शेषत्वेऽपि यागम्प्रति प्राधान्यम्-पुरुषस्यौदुम्बरीसम्मानादि प्रति शेषत्वेऽपि फलम्प्रति प्राधान्यमिति ॥

एतदभि त्याह—कर्मादीति । 'कर्मादि' कर्मफलपुरुषा अपि 'फलादिनः' फलपुरुषकर्मणां यथाक्रमं शेषः—न केवलं द्रव्यगुणसंस्कारा एवेति शेषः [ फलादिन इति नपुंसकलिङ्गकफलादिशब्दस्य षष्ठ्येकवचने रूपम् । एवमेव पाठ उपलभ्यते ] ॥ २ ॥

## (३) ३।१।७—१० व्रीह्यादेरवघातादि

(१) शेषशेषिभावविचारे दृष्टान्तविशेषाः प्रदर्श्यन्ते । तत्रादौ संस्कारस्य शेषत्वं प्रदर्श्यते ।

(२) दर्शपूर्णमासौ प्रकृत्य अवघातप्रोक्षणादयो व्रीहिधर्माः, उत्पवनावेक्षणादय आज्यधर्माः, तथा च गोप्रस्नुत्वणादयः साान्नाय्यधर्मा विहिताः ।

(३) तत्र सन्देहः—अवघातादयो धर्माः सर्वेषु द्रव्येषु कर्तव्या उत तेष्वेव द्रव्येषु यत्र तैः कश्चिदुपकारः स्यात् । तथाहि अवघातः किं व्रीहिष्वेव कार्यं उताज्येष्वपीति ।

(४) पूर्वपक्षः। सर्वे एव धर्मा एकस्यैव दर्शपूर्णमासकर्मणः प्रकरणे विहितास्तस्यैव फलहेतुतया तस्यैवापूर्वेण सङ्गच्छन्ते—अवान्तरस्य कस्यचिदपूर्वान्तरस्याभावात्। फलापूर्वप्रयुक्त्या चानुष्ठीयमाना धर्माः यस्मिन् कस्मिन्नपि दर्शपूर्णमासयागसम्बद्धे द्रव्येऽनुष्ठिताः फलापूर्वं साधयन्त्येवेति सर्वे सर्वत्रानियमेन कर्तव्या इति।

(५) सिद्धान्तः—दर्शपूर्णमासान्तर्गता आग्नेयादयो भिन्नक्षणवर्तिनो यागाः स्वस्वावान्तरापूर्वेणैव फलापूर्वं साधयन्ति। एवं च पुरोडाशद्रव्यकयागजन्यमेवापूर्वं पुरोडाशद्रव्यव्रीहिधर्माणाम्प्रयोजकम्—आज्यधर्माणां च आज्यद्रव्यकयागजन्यमेवापूर्वं प्रयोजकम्। एवं च तत्तदपूर्वविशेषप्रयुक्ता धर्मास्तत्तदपूर्वसाधनप्रकृतिद्रव्येष्वेव व्यवतिष्ठन्ते। तथा चावघातादिः पुरोडाशप्रकृतिभूतेषु व्रीहिष्वेव व्यवतिष्ठते इति।

एतदेवाभिप्रेत्याह—व्रीह्यादेरिति। 'अवघातादि' अवघातः प्रोक्षणं च 'व्रीह्यादेः' यागविशेषसाधनपुरोडाशादिप्रकृतिभूतस्यैव—'शेषः' अङ्गमिति शेषः ॥ ३ ॥

## (४) ३।१।११ स्फ्यादिरुद्धननादिनः।

(१) अङ्गत्वविशेषविचारः प्रवर्तते।

(२) दर्शपूर्णमासयोः श्रूयते—'स्फ्यश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या च उलूखलं च मुसलं च दृषच्च उपला च एतानि वै दश यज्ञायुधानि' इति।

(३) तत्र सन्देहः—यत् यत् कर्म स्फ्यादिभिः कर्तुं शक्यं तेषु सर्वेष्वेतेषामुपयोगः साङ्कर्येण—उत यद् येन कर्मणा सह विधिपूक्तं तत्रैव तस्योपयोगो व्यवस्थितः इति।

(४) पूर्वपक्षः—स्फ्यादीनां यज्ञायुधीयत्वमेवात्र वाक्ये समाम्नातम्। साङ्कर्येणापि प्रयोगे सिध्यत्येव सर्वेषां यज्ञायुधत्वम्। अतो यथोपयोगं सर्वत्र सर्वेषामुपयोगः कर्तव्यः इति।

(५) सिद्धान्तः—'स्फ्येनोद्धन्ति' 'कपालेषु श्रपयति' 'अग्निहोत्रहवण्या हवींषि निर्वपति' 'शूर्पेण विविनक्ति' 'कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति' 'शम्यया दृषदुपदधाति' 'उलूखलमुसलाभ्यामवहन्ति' 'दृषदुपलाभ्यां पिनष्टि' इति वाक्येषु स्फ्यादिभिः प्रत्येकं यत् कर्तव्यं तस्य विधिः स्पष्टमुपलभ्यते। एवं च स्फ्यादिद्रव्याणाम्प्रतिकर्म व्यवस्थैव भवति न साङ्कर्येण उपयोगः। विषयवाक्ये यत्तेषां परिगणनं तत्तेषां यज्ञायुधत्वसूचनार्थम्—तस्य च 'यज्ञायुधानि सम्भरन्ति' इत्यासादनविधाने उपयोगः इति।

एतदभिप्रेत्याह स्फ्यादिरिति। 'स्फ्यादिः'—स्फ्यश्च कपालानि चेत्या-

दि:-'उद्धननादिनः' शेषः इतिशेषः। एवं च स्फ्येन उद्धननमेव-कपालेषु श्रपणमेव-अग्निहोत्रहवण्या हविर्निर्वपणमेव-शूर्पेण विविनेजनमेव-कृष्णाजिने उलूखलस्यावस्तरणमेव-शम्यायां दृषदुपधानमेव-उलूखलमुसलाभ्यामवहननमेव-दृषदुपलाभ्यां पेषणमेव कर्तव्यमिति निष्कर्षः ॥ ४ ॥

## (५) ३।१।१२ आरुण्यं क्रयणस्याङ्गम्

(१) अङ्गत्वविचारोऽनुवर्तते।

(२) ज्योतिष्टोमप्रकरणे श्रूयते-'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति।

(३) तत्र सन्देहः—'अरुणया'पदेनोक्त आरुण्यरूपो गुणः किं क्रयसाधनीभूतया गवैव सम्बध्यते-उत यानि ज्योतिष्टोमसम्बद्धानि द्रव्याणि तैः सर्वैरेवेति।

(४) पूर्वपक्षः—'अरुणया' पदेनारुण्यगुण उच्यते। स च गुणोऽमूर्तः। न चामूर्तस्य क्रयसाधनत्वमुपपद्यते। एवं च 'अरुणया'पदगततृतीयाश्रुत्याऽभिहित आरुण्यगुणस्य विनियोगो नोपपद्यते। ततश्च प्रकरणमेव तद्विनियोजकत्वेन स्वीकर्तव्यम्। प्रकरणे च नानाद्रव्याणि ज्योतिष्टोमसाधनान्युक्तानि ग्रहचमसादीनि। तस्मात् सर्वैरेव ज्योतिष्टोमसाधनभूतद्रव्यैर्ग्रहचमसादिभिरारुण्यगुणस्य सम्बन्ध इति।

(५) सिद्धान्तः—यद्यप्यारुण्यगुणोऽमूर्तस्तथापि वाक्योक्तां गां व्यवच्छिनत्त्येव। इयं च गौः सोमक्रयसाधनम्। तस्मात् तद्गोद्वारा तद्व्यवच्छेदकस्यारुण्यगुणस्यापि तत्साधनत्वं सिध्यत्येव। एवं च आरुण्यगुणस्य क्रयेणान्वयः। तथा च सति-'आरुण्यगुणविशिष्टया एकहायन्या गवा सोमं क्रीणातीति' वाक्यार्थः पर्यवस्यति। इति ॥

एतदभिप्रेत्याह—आरुण्यमिति। 'आरुण्यं' अरुणयेतिपदेनोक्त आरुण्यगुणः 'क्रयणस्य अङ्गम्' सोमक्रये अन्वितम् न ज्योतिष्टोमप्रकरणाम्नातैः सर्वैर्द्रव्यैरिति शेषः ॥ ५ ॥

## (६) ३।१।१३-१५ न ग्रहैक्यं विवक्षितम्।

(१) अङ्गत्वविचारः प्रवर्तते।

(२) सोमयागे श्रूयते-'दशापवित्रेण ग्रहं सम्मार्ष्टि' इति। 'दशापवित्रं' वस्त्रखण्डः 'ग्रहः' सोमरसधारणार्थः पात्रविशेषः।

(३) अत्र सन्देहः-ग्रहमित्यत्र यदेकत्वमुच्यते तत्सम्मार्जनाङ्गत्वेन विवक्षितन्न वा-अर्थात् किमेकस्यैव ग्रहस्य सम्मार्जनं कर्तव्यमुत सर्वेषामिति।

(४) पूर्वपक्षः—एक एव ग्रहः सम्मार्जनीयः श्रुत्युक्तस्यैकत्वस्य परित्यागानौचित्यात् इति।

(५) सिद्धान्तः—अत्र वाक्ये ग्रहस्य प्राधान्यं स्पष्टम्प्रतीयते-सम्मार्जनं च ग्रहम्प्रति गुणः। एवं च 'प्रतिप्रधानं गुण आवर्तनीय' इति न्यायेन यावन्तो ग्रहा यागे उपयुज्यन्ते ते सर्वं एव सम्मार्जनीयाः इति।

एतदभिप्रत्याह—न ग्रहैक्यमिति। 'ग्रहैक्यम्' ग्रहं सम्मार्ष्टीत्यत्र यत् ग्रहस्यैकत्वं उक्तम् तत् 'न विवक्षितम्' उद्देश्यगतसंख्याया अविवक्षितत्वात्। अतो नैक एव ग्रहः सम्मार्जनीयः अपि तु सर्व एवेत्याशयः॥६॥

## (७) ३।१।१६-१७ चमसानान्न सम्मार्गः.

(१) उक्ताधिकरणस्यापवादः।

(२) 'ग्रहं सम्मार्ष्टीति' वाक्यं सोमयागप्रकरणे श्रुतम्।

(३) सन्देहः—ग्रहमात्रस्य सम्मार्जनमत्र विवक्षितमुत सोमसम्बन्ध्युपकरणान्तराणां चमसानामपीति।

(४) पूर्वपक्षः—ग्रहमित्यत्रैकवचनन्न विवक्षितमिति स्थितम्-तथैव ग्रहमित्यत्र प्रातिपदिकार्थभूतं ग्रहत्वमप्यविवक्षितम्। एवं च ग्रहशब्दस्य सोमोपयुक्तपात्रमात्रस्योपलक्षकत्वात् सोमावसेकनिर्हरणादिसाधकानां चमसानामपि सम्मार्गो भवतीति।

(५) सिद्धान्तः—पूर्वाधिकरणन्यायो नात्रावतरति। तत्र हि वाक्यभेदापत्त्या एकत्वस्याविवक्षा स्वीकृता। ग्रहत्वे तु नास्ति तदापत्तिः। ततश्च सत्यपि प्रयोजने प्रमाणाभावात् चमसानां सम्मार्गो नास्ति इति।

एतदभिप्रेत्याह—चमसानामिति॥ ७॥

## (८) ३।१।१८ यूपेऽरत्निर्गुणः पशोः।

(१) अङ्गविशेषविचारो वर्तते।

(२) 'सप्तदशारत्निर्वाजपेयस्य यूप' इति वाजपेयप्रकरणे श्रूयते।

(३) तत्र सन्देहः—सप्तदशारत्निशब्दोक्तं यत् ऊर्ध्वमानं तद् वाजपेयस्याङ्गमुत वाजपेययागगतपशोरिति।

(४) पूर्वपक्षः—वाजपेयस्य यागस्यैवाङ्गं तन्मानम्–सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यात्। प्रकरणं चैवमेवानुगृह्णाति। यदि मानविशेषस्य यागेन साक्षात्सम्बन्धो न सम्भवेत् तर्हि यागगतषोडश्यादिपात्रद्वारैव तन्मानस्य यागेन सम्बन्धः स्वीकार्य इति।

(५) सिद्धान्तः—'सप्तदशारत्निर्यूप' इति सामानाधिकरण्याद् यूपेनैव सप्तदशारत्नितायाः साक्षात्सम्बन्धः। यूपस्य च पश्वङ्गत्वात् तन्मानं यूपद्वारा पशोरङ्गम्भवति। पशोश्च वाजपेययागाङ्गत्वात् पशुद्वारा वाजपेयस्याप्यङ्गम्भवत्येव तन्मानमिति। सर्वमवदातम्।

एतदभिप्रेत्याह यूप इति । 'यूपे' यूपसम्बद्धो यो'ऽरत्निः' सप्तदशा-रत्निरूप ऊर्ध्वमानविशेषः स 'पशोः' वाजपेयगतपशोरेव 'गुणः' अङ्ग-मित्यर्थः ॥ ८ ॥

## (९) ३।१।१९–२० अभिक्रमः प्रयाजाङ्गम्

(१) अङ्गत्वविचारो वर्तते ।

(२) दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते–'अभिक्रामन् जुहोति' इति ।

(३) तत्र सन्देहः—यदत्र वाक्ये आहवनीयमभितः सञ्चरणम् 'अभि-क्रामन्' इति पदेन विहितं तत् अभिक्रमणं किं प्रयाजमात्रस्य कतुरङ्गमुत कृत्स्नस्य यागस्य कर्तुरिति ।

(४) पूर्वपक्षः—उक्तमभिक्रमणं कृत्स्नदर्शपूर्णमासयागस्य कर्त्रा स-म्बध्यते न पुनः प्रयाजमात्रस्य कर्त्रा । क्रियारूपं हि तत् कर्त्रैव सम्बध्येत न प्रयाजरूपक्रियान्तरेणेति ॥ वार्तिककारमतेन पूर्वपक्षस्वरूपं यथा-प्रक-रणस्य सान्निध्यापेक्षया बलीयस्त्वात् प्रयाजसन्निधौ विहितमप्यभिक्रमणं प्रकरणबलाद् दर्शपूर्णमासस्य सकलस्यैवाङ्गं न प्रयाजमात्रस्येति ।

(५) सिद्धान्तः—दर्शपूर्णमासयागोऽपि क्रियारूप एव । एवं च अ-भिक्रमणस्य यथा क्रियारूपेण प्रयाजेन सम्बन्धासम्भवस्तथैव दर्शपूर्ण-मासरूपक्रिययाऽपीति । एवं सति प्रयाजस्य सन्निधाने विहितत्वात् सन्नि-धिबलात् प्रयाजमात्रस्य कर्तुरङ्गमिति ॥ वार्तिककारमतेन सिद्धान्तः-यद्य-प्यभिक्रमणवाक्यं दर्शपूर्णमासयागमहाप्रकरणे श्रुतं तथाऽप्यस्त्येव तद-न्तर्गतं प्रयाजस्यावान्तरं प्रकरणम् । प्रकृतं वाक्यं चास्मिन्नेवावान्तरप्रक-रणे श्रूयते-प्रत्युताभिक्रमणविधायकं वाक्यमुभयतोऽपि प्रयाजवाक्यैरेव संश्लिष्टम् । तथा चाभिक्रमणं प्रयाजमात्रे सन्निविशते । एव प्रयाजद्वारा च दर्शपूर्णमाससम्बन्धस्याप्युपलम्भात् महाप्रकरणमप्यनुगृहीतं भवति । कृत्स्नयागसन्निवेशे त्ववान्तरप्रकरणं विरुध्येतेति ॥

एतदभिप्रेत्याह—अभिक्रम इति । 'अभिक्रमः' अभिक्रमणं 'प्रयाजस्य' प्रयाजमात्रस्य-'अङ्गम्' न कृत्स्नस्य दर्शपूर्णमासयागस्येति शेषः ॥ ९ ॥

## (१०) ३।१।२१ इष्ट्यङ्गमुपवीतिता

(१) पूर्वाधिकरणापवादः ।

(२) दर्शपूर्णमासप्रकरणे सप्तमाष्टमयोरनुवाकयोः सामिधेन्य उक्ताः नवमे निविदः दशमे काम्याः सामिधेनीकल्पाः । एकादशे च यज्ञोपवीत-माम्नातम्-'निवीतम्मनुष्याणां प्राचीनावीतं पितॄणाम् उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति ।

(३) तत्र सन्देहः—किं सामिधेनीरेवानुब्रुवाण उपवीतं धारयेदुत सर्वमेव दर्शपूर्णमासप्रकरणोक्तमनुतिष्ठता उपवीतं धार्यम् इति । अर्थात् उपवीतं सामिधेनीमात्रस्याङ्गमुत प्राकरणिकसकलपदार्थानामिति ।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सामिधेनीप्रकरणस्यात्रावान्तर-प्रकरणत्वात् तद्बलात् सामिधेनीमात्रस्याङ्गमुपवीतमिति ।

(५) सिद्धान्तः—नैवात्र पूर्वाधिकरणन्यायावतारः । अत्र हि अन्य-ङ्गभूतनिवित्प्रकरणेन सामिधेनीप्रकरणस्य विच्छेदात् । न चोपवीतसन्नि-हितदशमानुवाकोक्तकाम्यसामिधेन्यङ्गता उपवीतस्य सन्निध्यपेक्षया प्रक-रणस्य बलीयस्त्वात् प्राकरणिकसकलपदार्थाङ्गतैवोपवीतस्य न्याय्येति ।

एतदभिप्रेत्याह इष्ट्यङ्गमिति । 'उपवीतिता' उपवीतधारणम् 'इष्टेः' समस्तस्य दर्शपूर्णमासयागस्य 'अङ्गम्' न सामिधेनीमात्रस्येत्याशयः ॥१०॥

## (११) ३।१।२ वारणं यज्ञमात्राङ्गम्

(१) अष्टमाधिकरणापवादः ।

(२) आधानप्रकरणे दारुपात्रं यज्ञार्थं श्रूयते-'तस्माद्वारणो यज्ञा-वचर' इति ।

(३) तत्र सन्देहः—अत्रोक्तस्य वारणस्य पात्रस्य किं सर्वेषु यज्ञेषु दर्शपूर्णमासादिषु विनियोग उत प्राकरणिकाधानाङ्गभूतेषु पवमानहविः-ष्वेव तस्य निवेश इति ।

(४) पूर्वपक्षः—वारणपात्रं प्रकरणबलाद् आधाने अन्वेति–साक्षात् आधाने तु तस्य प्रयोजनाभावात् तदङ्गेषु पवमानहविःष्वेव तन्निविशते । एवमेव हि प्रकरणमनुगृहीतं भवति इति ।

(५) सिद्धान्तः—यथाऽग्निसंस्कारत्वेनाधानं विहितं तथैव पवमान-हवींष्यपि । अत आधानस्य पवमानहविषां च तुल्यमेवाग्निम्प्रति गुण-त्वम् । तथा च सति पवमानहविषामाधानस्य च परस्परमङ्गाङ्गिभावो न सम्भवति । एवं च प्रकरणस्य पात्रं प्रति विनियोजकत्वाभावात् 'वारणो यज्ञावचर' इति वाक्येन यज्ञसामान्यं प्रत्यङ्गत्वम्पात्रस्य । तथा च दर्शपूर्णमासादिसर्वयज्ञेषु वारणपात्रस्य विनियोग इति ।

एतदभिप्रेत्याह—वारणमिति । 'वारणं' वारणपात्रम् 'यज्ञमात्रस्य' यज्ञसामान्यस्य सर्वेषां यज्ञानामिति यावत् 'अङ्गम्' इति ॥ ११ ॥

## (१२) ३।१।२३ वार्त्रघ्न्यावाज्यभागयोः ।

(१) पूर्वाधिकरणापवादः ।

(२) दर्शपूर्णमासप्रकरणे श्रूयते–'वार्त्रघ्नी पूर्णमासेऽनूच्येते' । वार्त्र-

घ्नीयुगलं च होत्रकाण्डे आज्यभागयोः क्रमे-'अग्निर्वृत्राणि जङ्घनत्' इति 'त्वं सोमासि सत्पतिः' इत्येवंरूपमनुवाकेनाम्नातम् ॥

(३) तत्र सन्देहः—वार्त्रघ्नीयुगलस्य किं पूर्णमासे विनियोग उताज्यभागयोरिति ।

(४) पूर्वपक्षः—'वार्त्रघ्नी पूर्णमासेऽनूच्येते' इति विधिवाक्येन स्पष्टमुक्तं वार्त्रघ्न्योः पूर्णमासाङ्गत्वम् । तच्च प्रमाणान्तराभावेऽवश्यं स्वीकार्यमिति ।

(५) सिद्धान्तः—प्रयाजमन्त्रानुवाकस्यानन्तरमेवायमनुवाकः पठितः। स च अङ्गयोः-आज्यभागयोः क्रमः, न तु मुख्ययोर्दर्शपूर्णमासयोः। तस्मान्न मन्त्रयोः मुख्ययागाङ्गत्वं किन्तु आज्यभागाङ्गत्वम् । अपरं च-यद्यपि 'अग्निर्वृत्राणि जङ्घनत्' इति वार्त्रघ्नीगताद्यस्य अग्निलिङ्गकस्य मन्त्रस्य पूर्णमासे निवेशः कथंचित् आग्नेयपुरोडाशद्वारा सम्भवति—तथापि द्वितीयस्य सोमलिङ्गकस्य मन्त्रस्य तत्र निवेशो नैव सम्भवति—पूर्णमासयागे सोमदेवताया अभावादिति ॥

एतदभिप्रेत्याह—वार्त्रघ्न्याविति । 'वार्त्रघ्न्यौ' वार्त्रघ्नीमन्त्रयुगलम् 'आज्यभागयोः' अङ्गम्—न तु पूर्णमासस्येति शेषः ॥ १२ ॥

## (१३) ३।१।२४-२५ न मुष्टिर्वाग्यमार्थोऽथ

(१) क्रमेण विनियोगोऽङ्गानाम्प्रदर्शितः । तदपवादोऽधुना प्रदर्श्यते।

(२) ज्योतिष्टोमप्रकरणे श्रूयते='मुष्टी करोति-वाचं यच्छति-दीक्षितमावेदय...', इति ।

(३) तत्र सन्देहः—मुष्टीकरणं किं वाग्यमस्याङ्गमुत सर्वस्य प्राकरणिकस्य कर्मकलापस्येति ।

(४) पूर्वपक्षः—मुष्टीकरणवाङ्नियमनवाक्ययोर्नैरन्तर्येण पठितत्वात् क्रमप्रामाण्येन मुष्टीकरणं वाङ्नियमनस्यैवाङ्गमिति ।

(५) सिद्धान्तः—नैरन्तर्येऽपि वाक्ययोः परस्परनैरपेक्ष्यात् न तदुक्तयोरङ्गाङ्गिभावः । स्वतन्त्रे एव एते वाक्ये स्वतन्त्रे एव कर्मणी मुष्टीकरणवाङ्नियमनरूपे विदधतः। अत एव मुष्टीकरणन्न वाङ्नियमस्याङ्गमपि तु कृत्स्नस्य ज्योतिष्टोमीयकर्मकलापस्य । कृत्स्ने हि कर्मणि हस्तचापलनिवारणेन उपकरोति मुष्टीकरणमिति ।

एतदभिप्रेत्याह—न मुष्टिरिति । 'मुष्टिः' मुष्टीकरणं 'वाग्यमार्था' वाङ्नियमनस्य अङ्गन्न भवत्यपि तु समस्तस्य प्राकरणिकस्य कर्मकलापस्येत्यर्थः ॥

भाष्ये तु 'मुष्टीकरणं वाग्यमश्च किं दीक्षितावेदनस्य ( तृतीयवाक्यो-

कस्य) अङ्गमुत कृत्स्नप्रकरणे तयोर्निवेश' इत्येवम्प्रकारः सन्देहः प्रदर्शितः। विचारप्रकारश्चात्रापि पूर्वोक्त एव ॥ १३ ॥

(१४) ३।१।२६–२७ चतुर्धाऽऽग्नेय एव हि

(१) अङ्गानां क्रमद्वारा विनियोगो विचारितः। इदानीं किं तादृशो विनियोगः समस्तस्यैव भवत्युतांशतोऽपीति विचार्यते।

(२) दर्शपूर्णमासप्रकरणे श्रूयते-'आग्नेयं चतुर्धा करोति' इति।

(३) तत्र सन्देहः—अत्रोक्तं चतुर्धाकरणं किमाग्नेये एव निविशते–उत आग्नेये आग्नीषोमीये ऐन्द्राग्ने च सर्वत्रेति।

(४) पूर्वपक्षः—यथाऽऽग्नेयः पुरोडाशोऽग्निना सम्बद्धस्तथैवाग्नीषोमीयैन्द्राग्नयोरपीति आग्न्येयपदेन त्रयाणामपि लक्षितत्वात् त्रिष्वपि चतुर्धाकरणस्य निवेश इति।

(५) सिद्धान्तः—'आग्नेय' इति तद्धितो न सम्बन्धमात्रार्थे विहितः किन्तु देवतासम्बन्धे, न च केवलोऽग्निः आग्नीषोमीयस्य ऐन्द्राग्नस्य वा देवता। ततश्च आग्नेयनाम्ना साक्षात् सम्बन्धः केवलाग्निदैवतस्यैव पुरोडाशस्य नेतरयोरिति न तेन नाम्ना सर्वेषामुपलक्षणम्। एवं च आग्नेये एव चतुर्धा करणन्नेतरयोरिति।

एतदभिप्रेत्याह—चतुर्धेति। 'चतुर्धा' चतुर्धाकरणम् 'आग्नेये एव' पुरोडाशे नाग्नीषोमीयैन्द्राग्नयोरित्याशयः ॥ १४ ॥

पादे चतुर्दश न्याया भाष्यकारेण वर्णिताः।

अस्याः कारिकायाः प्रामाण्येन भाष्ये प्रथमस्योपोद्घातसूत्रस्याधिकरणत्वं न प्रामाणिकमित्यस्मिन् पादेऽधिकरणानां सङ्ख्या चतुर्दशैव न पञ्चदशेति ज्ञेयम् ॥

इति तृतीयस्य प्रथमः ॥

## अथ तृतीयस्य द्वितीयः ।

### (१) ३।२।१–२ मन्त्रो न गौणे विनियोजनीयः

(१) लिङ्गप्रमाणेन मन्त्राणामङ्गत्वमिदानीं विचार्यते ।

(२) 'बर्हिर्देवसदनं दामि' इति बर्हिर्लवनप्रकाशको मन्त्रो तत्प्रकाशनलिङ्गेन लवनक्रियायां विनियुज्यते। लवितव्यं च बर्हिर्द्विविधं भवति मुख्यं गौणं च । मुख्यं कुशकाशादिदशविधदर्भरूपम् गौणन्तु तत्सदृशं तृणान्तरम् ।

(३) तत्र सन्देहः—किंमुख्यस्यैव बर्हिषः कुशादेर्लवने मन्त्रस्य विनियोग उत गौणस्यापि तृणान्तरस्य इति ।

(४) पूर्वपक्षः—मुख्यवद् गौणस्यापि शब्देनोच्यमानत्वं तुल्यम्। तथा च सति मुख्यवद् गौणेऽपि बर्हिषि लवनं प्राप्तं तत्र च लवनप्रकाशकमन्त्रस्यापि विनियोगो भवत्येवेति ।

(५) मुख्यस्य शीघ्रतरप्रतीतत्वेन तस्मिन् मन्त्रं विनियुज्य चरितार्थं लवनप्रकाशनसामर्थ्यरूपं लिङ्गं विलम्बितप्रतीततया गौणस्य प्रतीक्षां न करोति । तस्मात् मुख्यस्यैव बर्हिषो लवने मन्त्रो विनियोजनीयः ।

एतदभिप्रेत्याह—मन्त्र इति । 'मन्त्रो' 'गौणे' मन्त्रलिङ्गपरामृष्टेऽपि 'न विनियोजनीयः'–अपि तु मुख्ये एवेत्याशयः ॥ १ ॥

### (२) ३।२।३–४ श्रुत्यैन्द्रमन्त्रोऽग्निगुणो यथार्थः ।

(१) पूर्वाधिकरणापवादः ।

(२) अग्निचयने 'निवेशनः सङ्गमनः' इत्यादि मन्त्रः श्रूयते—तस्य च 'ऐन्द्री' इति समाख्यानम्—तस्योत्तरार्धे 'इन्द्रो नस्थौ' इति इन्द्रपदस्योपलम्भात्। एतदृग्विषयं च ब्राह्मणवाक्यम्–'निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति । अत्र च मन्त्रप्रकाशनसामर्थ्यरूपेण लिङ्गेनास्य मन्त्रस्य इन्द्रदेवताककर्मणि विनियोगः सूच्यते—ब्राह्मणवाक्यस्थविधिना तु गार्हपत्योपस्थाने ।

(३) तत्र सन्देहः—किमैन्द्र्या ऋचा इन्द्रोपस्थाने विनियोग उत गार्हपत्योपस्थाने—इति ।

(४) पूर्वपक्षः—ब्राह्मणवाक्येन गार्हपत्योपस्थाने विनियुज्यमानो मन्त्रोऽर्थम्प्रकाशयन् इन्द्रपदस्य मुख्यया वृत्त्या प्रसिद्धमेव स्वर्गाधिपतिं सहस्राक्षमिन्द्रं प्रकाशयति । गार्हपत्यं त्वग्निं 'इन्द्र'शब्दः स्वप्रकृतिभू-

तैन्द्दिदीप्ताविति धातोर्दीप्त्यर्थद्वारिकया गौण्यैव वृत्त्या प्रकाशयेत् । तथाच पूर्वाधिकरणन्यायेन मुख्यार्थस्यैव शीघ्रतरप्रतीत्या उपस्थितत्वात् तस्य च परित्यागे मानाभावात् इन्द्रोपस्थाने एव मन्त्रस्य विनियोग उचितः । ब्राह्मणवाक्येन च विसंवादं वारयितुं तत्रत्येन गार्हपत्यशब्देन गौण्या वृत्त्या इन्द्रः स्वर्णरूपस्य गृहस्य पतिरिति व्युत्पत्तिद्वारिकया-इन्द्रो लक्ष्यते--एवं चोभयत्रापि इन्द्रस्यैवोच्यमानत्वात् संवादो लभ्यते-इति ।

(५) सिद्धान्तः—पूर्वपक्षप्रदर्शितरीत्या इन्द्रगार्हपत्यशब्दयोरन्यतरस्य गौणत्वेऽवश्यम्भाविनि सति ब्राह्मणवाक्यस्य विधायकत्वाद् विधौ च लक्षणायाः सत्यां गतौ अन्याय्यत्वात् प्राप्तानुवादरूपे मन्त्र एव इन्द्रशब्देन गार्हपत्योऽग्निर्लक्षणीयः । एवं च लक्षणाया गार्हपत्याग्निप्रकाशनसमर्थस्य ऐन्द्रीमन्त्रस्य ब्राह्मणवाक्यस्थसाक्षाच्छ्रुत्या गार्हपत्यस्याग्नेरेवोपस्थाने विनियोग इति ॥

एतदभिप्रेत्याह—श्रुत्येति । 'ऐन्द्रमन्त्रः'-'निवेशनः सङ्गमन' इत्यादिः 'इन्द्रो न स्था'वित्यन्तः 'ऐन्द्र'नाम्ना समाख्यातो मन्त्रः-'श्रुत्या'-'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति ब्राह्मणवाक्यरूपया-'अग्निगुणः'-अग्नेः गार्हपत्यस्यैव गुणः तदुपस्थाने विनियुज्यते । अयं च विनियोगो 'यथार्थ' एव मन्त्रगतस्येन्द्रपदस्य गौण्या वृत्त्याऽग्निरूपस्यार्थस्य लक्षितत्वात् इत्यर्थः। एवं च न कोपि विसंवादो मन्त्रब्राह्मणयोरित्याशयः ॥ २ ॥

## (३) ३।२।५-९ हविष्कृदेहीति न हन्तिमन्त्रः

(१) मन्त्राणां मुख्यार्थानुसारेण विनियोग इति सामान्यतो न्यायोऽवधारितः । तस्यापवादश्चोक्तः । अत इदानीं कस्य मन्त्रस्य सामान्येन न्यायेन बर्हिन्यायेन विनियोगः कस्य चापवादन्यायेन ऐन्द्रीन्यायेनेति विचारः प्रस्तूयते ।

(२) दर्शपूर्णमासयोः श्रूयते-'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति। देवानामर्थे या हविः सम्पादयति सा 'हविष्कृत्' तामेनां सम्बोध्य-अध्वर्युः 'एहि' इति ब्रूते । तमिमं मन्त्रमुच्चार्याध्वर्युस्त्रिवारमवघातं कुर्वन् आह्वयतीत्यर्थः ।

(३) तत्र सन्देहः—हविष्कृदेहीति मन्त्रस्य किमवघाते विनियोग उताह्वाने इति ।

(४) पूर्वपक्षः—उक्तवाक्येन मन्त्रस्यावघाते एव विनियोगः। अन्यथा आह्वानपरत्वात् श्रूयमाणं 'अवघ्नन्' इति पदमनर्थकं स्यात् । एवं च मन्त्रगतम् 'एहि' इति पदं वाक्यगतं 'आह्वयति' इतिपदं चावघातपरतयैव गौणमिति स्वीकार्यम्-ऐन्द्रीन्यायेनेति ।

(५) सिद्धान्तः—एहीति पदं आह्वानमन्तरेण नोपपद्यते। लिङ्गेन चायम्मन्त्रः आह्वाने विनियुज्यते नावघाते। न चावघ्नन्निति पदस्य वैयर्थ्यम् तस्य काललक्षकत्वात्। तथा चैवं वाक्यार्थः सम्पन्नः–'अवघातकाले यत् हविष्कृत आह्वानं तद् 'हविष्कृदेहीति' मन्त्रेण त्रिः कर्तव्यम्' इति। अतः प्रथमाधिकरणन्यायेन (बर्हिर्न्यायेन) मुख्ये एवाह्वाने मन्त्रस्य विनियोगः न तु गौणे अवघातरूपे आह्वाने। तस्मादाह्वानस्यैव शेषोऽयम्मन्त्र इति।

तदेतदभिप्रेत्याह हविष्कृदिति। 'हविष्कृदेहि' इति मन्त्रो 'हन्तिमन्त्रो' अवघातशेषभूतो मन्त्रो 'न' शेषः ॥ ३ ॥

## (४) ३।२।१० नोत्थातुमग्नीन् विहरेति मन्त्रः।

(१) तृतीयाधिकरणन्यायस्यैव दृष्टान्तान्तरम्।

(२) ज्योतिष्टोमे श्रूयते–'उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर' इति। आग्नीध्रं सम्बोध्य अग्निविहरणप्रैषरूपो मन्त्रोऽनेन वाक्येन विनियुज्यते।

(३) तत्र सन्देहः—अयम्मन्त्रः किमुत्थानशेषतया विनियुज्यते-उताग्निविहरणशेषतयेति।

(४) पूर्वपक्षः—उत्थानशेषतयैवानेन वाक्येन मन्त्रोऽयं विनियुज्यते। पूर्वाधिकरणेन 'अवघ्नन्' पदवदत्र 'उत्तिष्ठन्' पदस्य काललक्षकत्वाभावेऽस्य वैयर्थ्यमेवान्यथा स्यादिति।

(५) सिद्धान्तः—अग्निविहरणप्रैषे एवान्वितोऽयम्मन्त्रो नोत्थाने। अतोऽन्वयासमर्थस्य विनियोगासम्भवात् अगत्या 'उत्तिष्ठन्'पदस्य लक्षणया कालबोधकत्वमेवाङ्गीकार्यमिति।

एतदभिप्रेत्याह—नोत्थानमिति। 'अग्नीन् विहरेति मन्त्रः' 'न' 'उत्थातुं'-उत्थानाङ्गतया विधीयते इति शेषः ॥ ४ ॥

## (५) ३।२।११–१४ स्यात्सूक्तवाकेन यजिः प्रहारः

(१) पूर्वाधिकरणापवादः।

(२) दर्शपूर्णमासयोः श्रूयते–'सूक्तवाकेन प्रस्तरं प्रहरति' इति। 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादिको मन्त्रः 'सूक्तवाकः'–'प्रस्तरः' दर्भमुष्टिः- तस्य 'प्रहरणम्' प्रक्षेपः अग्नौ-'त्वं सूक्तवागसि' इत्यग्निं सम्बोध्य तन्मन्त्रे आम्नानात्।

(३) तत्र सन्देहः—किं सूक्तवाकः प्रस्तरप्रहरणाङ्गम् प्रत्यङ्गतयोपदिश्यते उतकाललक्षणैवेयमिति।

(४) पूर्वपक्षः—अत्र 'सूक्तवाकेन' इतिपदं कालं लक्षयति-होत्रा मन्त्रेऽस्मिन् पठ्यमाने तत्पाठकालेऽध्वर्युः प्रस्तरम्प्रहरेदित्यर्थः। न च

प्रस्तरप्रहरणं प्रत्यस्य मन्त्रस्याङ्गता सम्भवति-पूर्वाधिकरणन्यायेन तादृ-शान्वयासम्भवात् इति ।

(५) सिद्धान्तः—'सूक्तवाकेन' इति तृतीयाश्रुत्या प्रस्तरप्रहरण एव मन्त्रोऽयं विनियुज्यते। न चान्वयासम्भवः। मन्त्रो ह्ययं पूर्वमिष्टान् अग्न्यादीन् देवान् स्मारयति तद्देवताद्वारा चास्य मन्त्रस्य प्रस्तरप्रहरणे-नान्वयः। देवताकल्पनेन च तदुद्देशपूर्वकस्य प्रस्तरप्रहरणस्य ( दर्भमुष्टि-प्रक्षेपस्य ) यागत्वं सिध्यति। एवं चान्वये सिद्धेऽग्न्यादिदेवताप्रकाश-कस्य मन्त्रस्य सूक्तवाकस्य तृतीयाश्रुत्या प्रस्तरप्रहरणाङ्गतैव सिध्यतीति।

एतदेवाभिप्रेत्याह—स्यादिति । 'सूक्तवाकेन' सूक्तवाकमन्त्रद्वारा 'प्रहारः' प्रस्तरप्रहरणरूपो 'यजिः' यागः 'स्यात्'। प्रस्तरप्रहरणरूपस्य यागस्यैवाङ्गं सूक्तवाकमन्त्र इत्यर्थः ॥ ५ ॥

## (६) ३।२।१५–१८ सूक्ताभिधानाद् बहवोऽत्र मन्त्राः ।

(१) सूक्तवाकस्याङ्गत्वविषये विचारविशेषः ।

(२) 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादिको मन्त्रः 'सूक्तवाक'ना-म्ना प्रसिद्धः। समाम्नायते च दर्शपूर्णमासप्रकरणे 'सूक्तवाकेन प्रस्तर-म्प्रहरति' इति। अनेन च सूक्तवाकस्य प्रस्तरप्रहरणाङ्गता विधीयत इति निर्धारितम्पूर्वाधिकरणे ।

(३) तत्र सन्देहः–किं कृत्स्नस्य सूक्तवाकमन्त्रस्य प्रस्तरप्रहरणे विनि-योग उत विभज्य खण्डश इति ।

(४) पूर्वपक्षः—कृत्स्नमन्त्रविषये हि याज्ञिकाः 'सूक्तवाक' इत्यभिधा-नम्प्रयुञ्जते। तस्मात् समाख्याप्रामाण्येन कृत्स्नस्यैव सूक्तवाकस्य प्रस्त-रप्रहरणे विनियोग इति ।

(५) सिद्धान्तः—सूक्तवाकमन्त्रे अनेके भागा उपलभ्यन्ते। कस्मिंश्चिद् भागे पूर्णमासदेवतायाः प्रकाशनम्–यथा 'अग्नीषोमाविदं हविरजुषेताम्' इति। भागान्तरे तु दर्शदेवताप्रकाशनम्–यथा 'इन्द्राग्नी इदं हविरजुषे-ताम्' इति, 'इन्द्र इदं हविरजुषत' इति 'महेन्द्र इदं हविरजुषत' इति च। एवं च देवताप्रकाशनरूपेण लिङ्गेन तत्तद्भागमात्रेण सूक्तवाकमन्त्रस्त-त्तत्कर्मकाले व्यवस्थाप्यते। लिङ्गेन च पूर्वोक्तायाः समाख्याया बाधः। तथा च सति भागश एव सूक्तवाकस्य विनियोगः कर्मविशेषगतप्रस्तर-प्रहरणविशेषे ॥ अपरं च-सूक्तवाकशब्दस्य व्युत्पत्तिरेवं वर्ण्यते-सूक्त वक्ति-यागकाले तत्तन्मन्त्रेण सम्यगुक्तं देवं प्रकाशयतीत्यर्थः। एवमप्यस्य विभज्यैव विनियोगः सिध्यतीति]। इदमेव च ब्राह्मणवाक्येनापि स्पष्ट-मभिहितम्–'अग्निरिदं हविरजुषतेत्याह' इति ।

एतदेवाभिप्रेत्याह सूक्ताभिधानादिति । 'सूक्ताभिधानात्' सूक्तवाकना-म्नो व्युत्पत्तिबलात्-'अत्र' सूक्तवाके 'बहवः' अनेके 'मन्त्राः' । भागशो विभज्य विनियोग इत्याशयः । न तु कृत्स्नस्य प्रयोग इत्यर्थः ॥ ६ ॥

(७) ३।२।१९ काम्ये समाख्यानबलेन याज्या

(१) अङ्गत्वविचारो वर्तते ।

(२) 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयुः'-इत्यादिना काश्चित् काम्या इष्टयः समाम्नाताः काम्येष्टिकाण्डे । मन्त्रकाण्डे च 'इन्द्राग्नी रोचनादिव' इत्यादिका ऋचः याज्यानुवाक्यानाम्ना समाम्नाताः।

(३) तत्र सन्देहः—यावन्ति इन्द्राग्निदेवताकानि कर्माणि तेषु सर्वेषु याज्यानुवाक्यामन्त्रयोर्विनियोगः-उत केवलं काम्यायामेवेष्टाविति ।

(४) पूर्वपक्षः—मन्त्रलिङ्गं इन्द्राग्निरूपं देवतायुगलं प्रकाशयति । तद्बलेन च यत्र यत्र इन्द्राग्नी देवतात्वेन विहिते तत्र सर्वत्र याज्यामन्त्र-स्य विनियोगः । समाख्याबलाद् यद्यपि काम्यायामेवेष्टौ विनियोगः प्राप्नोति तथाऽपि बलवत्तरेण लिङ्गेन समाख्याया बाधः इति ।

(५) सिद्धान्तः—नात्र लिङ्गेन क्रमसमाख्ये बाधितुं शक्येते उपजी-व्यत्वात् । इन्द्राग्निदेवतास्वरूपमात्रप्रकाशनं लिङ्गम् । न च तावन्मात्रेण मन्त्रकर्मणोरङ्गाङ्गिभावः । भवति तु मन्त्रस्य 'काम्ययाज्यानुवाक्या-काण्डम्' इति समाख्या याज्ञिकेषु प्रसिद्धा । एतया च समाख्यया का-म्येष्टिकाण्डस्य याज्याकाण्डस्य च सम्बन्धावगतौ सिद्धायां काम्येष्टीनां याज्यामन्त्राणां च सामान्यतः सम्बन्धः सिद्धो भवति । विशेषतस्तु सम्बन्धः 'प्रथमायामिष्टौ प्रथमो मन्त्रो विनियुज्यते' इति क्रमबलाल्लभ्यते। एवञ्च क्रमसमाख्याबलेन काम्येष्टिष्वेव याज्या नियम्यन्त इति ।

एतदेवाभिप्रेत्याह—काम्य इति । 'समाख्याबलेन' काम्ययाज्यानु-वाक्याकाण्डमित्येवंरूपायाः समाख्यायाः बलेन-'याज्या' मन्त्रविशेषाः-'काम्ये कर्मणि' काम्येष्टावेव-'विनियुज्यन्ते' इति शेषः ॥ ७ ॥

(८) ३।२।२०-२३ आग्नेयमन्त्रः प्रकृतेः प्रयोज्यः ।

(१) प्रकरणप्रमाणकाङ्क्षत्वविचारविशेषो वर्तते ।

(२) ज्योतिष्टोमे श्रूयते-'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति । अनेन आग्नेय्या ऋचा आग्नीध्रनामकस्य मण्डपस्य विधानं विधीयते ।

(३) तत्र सन्देहः—आग्नीध्रस्य उपस्थाने या काचिद् यत्र कुत्रचि-दुपलब्धा अग्निसम्बन्धिनी ऋक् प्रयोक्तव्या उत प्रकरणगता एवाग्नि-सम्बन्धिनी ऋक् इति ।

(४) पूर्वपक्षः—अग्निर्देवता यस्या ऋचः सा आग्नेयी-इति आग्नेयी-

समाख्याबलेन या काचिदग्निदेवताका ऋक् सा सर्वा विनियुज्यत इति ।

(५) सिद्धान्तः—क्रतुविशेषप्रकरणपठितानामेव ऋचां तत्क्रतुप्रयुक्त-व्यापारसाधनत्वं प्रकरणादवगम्यते । स च व्यापारविशेषः 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठत' इति विधिवाक्येन समर्प्यते । एवं चैतद्विधिगता आग्नेयीति समाख्या प्रकरणगतेष्वेव ऋग्विशेषेषु विनिविशते । तस्मात् प्रकृताभिरेव ऋग्भिराग्नीध्रोपस्थानमिति ।

एतदेवाभिप्रेत्याह आग्नेयमन्त्र इति । 'आग्नेयमन्त्रः' अग्निदेवताप्रकाशिका ऋक्– 'प्रकृते' यस्मिन् प्रकरणे कर्मविशेषः पठितस्तत्प्रकरणगत एव कर्मणि–'प्रयोज्यः' विनियोक्तव्यः न त्वप्राकृतस्तद्देवताप्रकाशकोऽपीति भावः ॥ ८ ॥

(९) ३।२।२४–२५ सद्यासमन्त्रो ग्रहणस्य मन्त्रः

(१) अङ्गत्वव्यवस्थायां लिङ्गेन समाख्याया बाधः प्रदर्श्यते ।

(२) ज्योतिष्टोमे हुतस्य सोमस्य शेषभक्षणं विहितम्–'अभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमं भक्षयन्तीति' । भक्षणे मन्त्रश्च 'भक्षेहि' इत्याद्यनुवाके विहितः । स चानुवाको भक्षानुवाकसमाख्यया प्रसिद्धः ।

(३) तत्र सन्देहः–अयम्मन्त्रानुवाकः किं कृत्स्नो भक्षणमात्रे विनियुज्यते–उत यथालिङ्गं विभज्य ग्रहणादिषु चतुर्षु व्यापारेष्विति ।

(४) पूर्वपक्षः–भक्षणं यथा साक्षाच्चोदितं न तथा ग्रहणादीनि । न चाचोदितेषु कर्मसु मन्त्रो विनियोगमर्हति । भक्षानुवाक इति समाख्या चानुवाकं भक्षणमात्रे व्यवस्थापयति । तस्मात् कृत्स्नस्यानुवाकस्य भक्षण एव विनियोग इति ।

(५) सिद्धान्तः—अविहितान्यपि ग्रहणादीनि अर्थाक्षिप्तानि–तानि विना भक्षणस्यासम्भवात् । अतो ग्रहणादिषु चतुर्ष्वेव यथालिङ्गं खण्डशो विभज्य विनियोक्तव्यो मन्त्रः। एवं च–'भक्षेहि मा विश दीर्घायुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय एहि वसो पुरोवसो प्रियो मे हृदोऽस्याश्विनोस्त्वा बाहुभ्यां सद्यासम्' इत्यंशो ग्रहणप्रकाशकत्वाद् ग्रहणे विनियुज्यते—'नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्' इत्ययं भागोऽवेक्षणप्रकाशकत्वादवेक्षणे विनियुज्यते—'हिन्वमे गात्रा हरिवो गणान्मे मा वितीतृषः शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमतिगाः' इत्यन्तो भागः सम्यग्जरणप्रकाशकत्वात् सम्यग्जरणे विनियुज्यते—'मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु वसुमद्गणस्य सोमदेवते मतिविदः प्रातः सवनस्य गायत्रच्छन्दसोऽग्निहुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इत्ययं भागो भक्षणप्रकाशकत्वाद् भक्षणे विनियुज्यते ॥ इति ॥

एतदेवाभिप्रेत्याह—सख्यासमन्त्र इति । 'सख्यासमन्त्रः' सख्यासमि-त्यन्तो मन्त्रभागः—'ग्रहणस्य' सोमस्य ग्रहणे एव—'मन्त्रः' विनियोक्तव्य इति शेषः । न तु समस्तस्यानुवाकस्य भक्षणमात्रे विनियोग इत्याशयः॥९॥

## (१०) ३।२।२६ मन्द्रादिरेकः खलु भक्षमन्त्रः ।

(१) पूर्वाधिकरणापवादः ।

(२) भक्षानुवाकस्यान्त्यो मन्त्रः 'मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषा-णा सोमस्य तृप्यतु वसुमद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य गा-यत्रच्छन्दसोऽग्निहुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति' पूर्वाधिकरणन्यायेन भक्षणे विनियुज्यते ।

(३) तत्र सन्देहः—किं समस्त एवायम्मन्त्रो भक्षण एव विनियुज्यते-उत यथालिङ्गं खण्डशो विभज्येति ।

(४) पूर्वपक्षः-पूर्वाधिकरणन्यायेन यथालिङ्गं विभज्य खण्डश एवास्य विनियोगः । तथाहि 'मन्द्राभिभूति'रित्यारभ्य 'तृप्यत्वि'त्यन्तो भागस्तृप्ति-प्रकाशकत्वात् तृप्तौ विनियुज्यते 'वसुमद्गणस्ये'त्यारभ्य 'भक्षयामी'त्यन्तश्च भक्षणप्रकाशकत्वाद् भक्षण इति ।

(५) सिद्धान्तः— न खलु तृप्तिर्भक्षणादन्येन व्यापारेण जन्यते—भक्ष-णानुनिष्पादिन्येव हि सा । एवं च नास्ति कोऽपि कर्तृव्यापारो यस्मिन् तृप्तिप्रकाशको मन्त्रभागो विनियुज्येत। तथा च लिङ्गेन विनियोगासम्भवात् तृप्तिप्रकाशको मन्त्रभागो भक्षणप्रकाशकभागस्यैव शेषः । एवं च तृप्तिसहि-तभक्षणप्रकाशनद्वारा पुरुषोत्साहजनने भवत्येवोपयोगस्तादृशस्य शेषभू-तस्य भागस्य । तस्मात् समस्तो मन्त्रो भक्षण एव विनियुज्यते-इति ।

एतदेवाभिप्रेत्याह मन्द्रादिरिति । 'मन्द्रादिः' मन्द्राभिभूतिरित्यारभ्य भक्षयामीत्यन्तो मन्त्रः—'एकः' समस्तः-'भक्षमन्त्रः' भक्षणमात्रविनियोज्यो मन्त्रः—'खलु' निश्चयेन-नैवास्य खण्डशो विभज्य विनियोग इति ॥१०॥

## (११) ३।२।२७।२८ ऐन्द्रेषु सोमेषु तु भक्षमन्त्रो

(१) उक्तस्यैव मन्त्रस्य विनियोगविशेषश्चिन्त्यते ।

(२) उक्तस्यैव भक्षमन्त्रस्य कश्चिदंशः 'इन्द्रपीतस्येति' उपलभ्यते । ज्योतिष्टोमे च बह्व्य आहुतयो भवन्ति-इन्द्रदेवताका अनैन्द्रदेवताकाश्च । तासां चाहुतीनां शेषभक्षणान्यपि भवन्ति ।

(३) तत्र सन्देहः—किमयम्मन्त्रांशः इन्द्राहुतिमात्रस्य शेषभक्षणे विनि-युज्यते-इतरासां चाहुतीनां शेषभक्षणममन्त्रकमुत ऐन्द्र्याणामनैन्द्र्याणां सर्वासामाहुतीनां शेषभक्षणेऽस्य यथावद् विनियोगः-अथवा ऐन्द्र्याहु-

तिशेषभक्षणे इन्द्रपीतस्येति मन्त्रः इतराहुतिशेषभक्षणेषु तत्तद्देवतानामोह-पूर्वको मित्रावरुणपीतस्येत्येवंरूपो विनियुज्यते। एवं त्रयोऽत्र पक्षाः।

(४) तत्र पूर्वपक्षः—अनैन्द्रयाहुतिविशेषभक्षणममन्त्रकमेव कार्यम्। इन्द्रेण पीतस्य सोमस्य शेषं भक्षयामि इति स्पष्टो मन्त्रार्थः प्रतीयते। एवं च इन्द्रप्रदानशेषभक्षणे एवास्य मन्त्रस्य विनियोगः न मैत्रावरुणादिशेषभक्षणे इति—एकः पूर्वपक्षः॥

(५) सिद्धान्तः—सर्वेषां समन्त्रकमेव भक्षणम्। इन्द्रप्रदानशेषस्य भक्षणे 'इन्द्रपीतस्ये'ति यथाश्रुतस्य मन्त्रस्य विनियोगः। इतरदेवताप्रदानशेषभक्षणेषु तु सोहस्य मन्त्रस्य-तद्यथा 'मित्रावरुणाहुतिशेषभक्षणे मित्रावरुणपीतस्येति'-एवं सर्वत्रेति।

एतदेवाभिप्रेत्याह—ऐन्द्रेष्विति। 'ऐन्द्रेषु' इन्द्रदेवताकाहुतिशेषभूतेषु-'सोमेषु' सोमभक्षणेषु—'भक्षमन्त्रः' इन्द्रपीतस्येवंरूपो यथाश्रुतो विनियुज्यते-इति शेषः। इतरदेवताकाहुतिशेषसोमभक्षणेषु तु देवतानामोहसहित एवेत्याशयः।

[ एवं सिद्धान्तस्वरूपम् 'अपर्यवसितम्'-अवशिष्यते चात्र चिन्तान्तरम् यद् भाष्यकारेण पादावसाने सूत्रषट्केन कृतम्। तदनुसारेण च सिद्धान्तस्य पर्यवसितं स्वरूपमत्रापि पादान्त एवोनविंशाधिकरणरूपेण वर्णितम्मण्डनाचार्येणेति तत्रैव मृग्यम्।

एतत्सम्बन्धेन च न्यायमालायां अष्टत्रिंशसूत्रात्मकसप्तदशाधिकरणं यदुपन्यस्तन्तन्न धृतम्मण्डनाचार्येण। अतोऽत्राप्युपेक्षितम्। न्यायमालायां च एकादशाधिकरणसिद्धान्तं सप्तदशाधिकरणपूर्वपक्षत्वेनोपन्यस्य अनैन्द्राणां विकृतित्वासम्भवान्नास्ति तेषूहस्तस्मान्नामन्त्रकमेव तद्भक्षणमिति सिद्धान्तितम् ] ॥ ११ ॥

## (१२) ३।२।२९-३१ ऽन्यत्रापि चोहेत् पुनरुन्नतेषु।

(१) पूर्वाधिकरणे योऽयमूहरूपोऽवान्तरोऽपर्यवसितः सिद्धान्त उक्तः तत्प्रसङ्गादधिकरणपञ्चकेनोहविषयश्चिन्त्यते-कीदृशीस्ववस्थास्वीदृश ऊहः समुचितो भवेदिति।

मैत्रावरुणब्राह्मणाच्छंसि-पोत्रादय ऋत्विजो 'होत्रका' इति नाम्ना प्रसिद्धाः। तेषां होत्रकाणां सन्ति चमसाः (सोमरसपूर्णाः पात्रविशेषाः) तैर्वषट्कारानुवषट्कारयोर्होतव्यम्। चमसानामैन्द्रत्वात् होतुर्वषट्कारे प्रथममिन्द्रो हुतः। अनन्तरं हुतशेषसहिते एव चमसे सोमान्तरमभ्युन्नीय होत्रका अनुवषट्कारे देवतान्तरेभ्यो जुह्वति। एतदाहुत्यनन्तरं च हुतशेषः

सोमो भक्ष्यते भक्षमन्त्रेण 'भक्षेहि' इत्यादिना 'इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इत्यन्तेन ।

(३) तत्र सन्देहः—मैत्रावरुणाहुतिशेषभक्षणकाले किं 'इन्द्रपीतस्ये'त्यस्य स्थाने 'मित्रावरुणपीतस्ये'त्यूहनीयम्—उत' इन्द्रमित्रावरुणपीतस्येति।

(४) पूर्वपक्षः—मैत्रावरुणाहुतिशेषे इन्द्रसम्बन्धस्याभावादिन्द्रो नोपलक्षणीयो न च मन्त्रे इन्द्रपदोहः कर्तव्यः ।

(५) सिद्धान्तः—यस्मिन् काले चमसे मैत्रावरुणाद्याहुत्यर्थः सोमरसोऽभ्युन्नीयते तस्मिन् काले तत्रैन्द्राहुतिशेषस्य सत्त्वात् यः शेषः मित्रावरुणादिसम्बद्धः स इन्द्रेणापि सम्बद्ध एव भवति । तथा च सति मित्रावरुणादिभिः सह इन्द्रोऽप्युपलक्षणीयः । एवं च 'इन्द्रमित्रावरुणपीतस्य' इत्येवंरूप एवोहः स्यादिति ।

एतदेवाभिप्रेत्याह—अन्यत्रेति । 'अन्यत्र' स्वतन्त्रमैत्रावरुणादिरूपाद्भिन्ने ऐन्द्राहुतिशेषसहिते—'अपि'—'पुनरुन्नतेषु' पुनरभ्युन्नीतसोमरसाहुतिशेषभक्षणेषु—'च'—'ऊहेत्'—इन्द्रशब्दसहितमेव मित्रावरुणशब्दमिति शेषः ॥ १२ ॥

## (१३) ३।२।१२-३३ पात्नीवते तु प्रवदेन्न पूर्वाम्

(१) पूर्वाधिकरणापवादः ।

(२) ऐन्द्रवायवादयो द्विदेवत्या ग्रहाः । तेषां शेष आदित्यस्थालीमागच्छति-पुनरपि तस्याः स्थाल्याः आग्रयणस्थालीमागच्छति-तस्या आग्रयणस्थाल्याः पात्नीवताहुत्यर्थं सोमो गृह्यते-तस्य पात्नीवतस्य शेषभक्षणे भक्षमन्त्रः प्रयुज्यते ।

(३) तत्र सन्देहः—पात्नीवतशेषभक्षणे मन्त्रे इन्द्राद्या अपि देवता उपलक्षणीया उत इन्द्राद्या विहाय केवलं पत्नीवद्देवतैवेति ।

(४) पूर्वपक्षः—इन्द्राद्या अप्युपलक्षणीयाः पूर्वाधिकरणन्यायेनेति ।

(५) सिद्धान्तः—नात्र पूर्वाधिकरणन्यायावतारः । 'पात्नीवतमाग्रयणाद् गृहणाति' इति वाक्ये आग्रयणपात्रस्यापादानत्वश्रवणात्, तस्मान्निस्सारितस्य सोमरसस्य तत्सम्बन्धेऽपेते तदनन्तरं तस्माद् ग्रहात् पत्नीवद्देवताहुत्यर्थं सोमरसग्रहणं भवति । तथा सति पात्नीवतशेषे इन्द्राद्यानां पूर्वदेवतानां सम्बन्धो नास्ति । पुनरभ्युन्नीतस्तु सोमः पूर्वेण ऐन्द्रशेषेण संसृष्ट एव वर्तते—एवं संसृष्टस्य च तस्य मित्रावरुणादीनामिव इन्द्रस्यापि सम्बन्धो नापैति इति पूर्वाधिकरणतो वैषम्यम् । तस्मात् पात्नीवतशेषभक्षणे इन्द्रवाय्वादयो नोपलक्षणीया इति ।

एतदेवाभिप्रेत्याह—पात्नीवत इति । 'पात्नीवते' पात्नीवतशेषभक्षे—

'पूर्वाम्' देवताम् इन्द्रादिरूपाम्—'न प्रवदेत्' मन्त्रे नोपलक्षयेत्। केवलं 'पात्नीवतपीतस्ये'त्येतावन्मात्रमूहेदित्याशयः॥ १३॥

## (१४) ३।२।३४-३५ त्वष्टा न पात्नीवतदेवता स्यात्।

(१) पूर्वाधिकरणापवादः।

(२) पात्नीवतहोममन्त्रे श्रूयते—'अग्ना ३ इ पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा' इति।

(३) तत्र सन्देहः—पात्नीवतशेषभक्षणे भक्षमन्त्रे मन्त्रोक्तस्त्वष्टाऽप्युपलक्षणीयो न वेति।

(४) पूर्वपक्षः—उक्ते होममन्त्रे पत्नीवत इव त्वष्टुरपि सोमपातृत्वमभिहितम्। तदनु च शेषभक्षणमन्त्रे 'पत्नीवत्त्वष्टृपीतस्ये'त्येवंरूप ऊहः कर्तव्यः इति।

(५) सिद्धान्तः—उक्तेन मन्त्रेण पानकाले इन्द्रेण सहावस्थानमात्रं त्वष्टुरुच्यते न तु पातृत्वमपि। नात्र त्वष्टा सम्बोध्यते। असम्बोधितस्य च पातृत्वं न सम्भवति। न च पातृसहावस्थानमात्रेण त्वष्टुः पातृत्वम्। न च पात्नीवतग्रहस्य त्वष्टा देवता—'पात्नीवतमाग्रयणाद् गृह्णाती'त्यनेन पत्नीवत एव केवलस्य देवतात्वस्योक्तत्वात्। तस्माददेवतात्वान्न भवति त्वष्टा उपलक्षणीयो भक्षमन्त्र इति।

एतदेवाभिप्रेत्याह—त्वष्टेति। 'त्वष्टा'—'पात्नीवतदेवता'—पात्नीवतहोमस्य देवता—'न स्यात्'। तथाच न तन्नामोहो भक्षमन्त्रे—इति तात्पर्यम्॥ १४॥

## (१५) ३।२।३६ नैव त्रयस्त्रिंशदिहोपलक्ष्याः

(१) अपवादान्तरम्।

(२) उक्तस्यैव पात्नीवतस्य याज्यायामग्निं सम्बोध्याभिधीयते—'पत्नीवन्नामधारिणस्त्रयस्त्रिंशद्देवान्मादय' इति।

(३) तत्र सन्देहः—पात्नीवतशेषभक्षणमन्त्रे त्रयस्त्रिंशतामपि भवत्युपलक्षणन्न वेति।

(४) पूर्वपक्षः—उक्तयाज्यायां हूयमानेन सोमरसेन मादनीयत्वेनोक्तत्वात् त्रयस्त्रिंशतामपि तद्धोमदेवतात्वमस्त्येव। अतस्तेऽपि भक्षमन्त्रे लक्षणीया भवन्ति इति।

(५) सिद्धान्तः—यजमानेन मादनीयोऽग्निरेव केवलम्। त्रयस्त्रिंशद्देवास्तु अग्निना मादनीयत्वेनोक्ता न यजमानेन। अतो नात्र त्रयस्त्रिंशतां देवतात्वम्। तस्मान्न नोपलक्षणमपीति।

एतदेवाभिप्रेत्याह—नैवेति । 'इह' पात्नीवतशेषभक्षणे—'त्रयस्त्रिंशत्' देवा 'नैव उपलक्ष्याः' । भक्षमन्त्रे तन्नामोहो न कार्य इत्यर्थः ॥ १५ ॥

(१६) ३।२।३७ सा नोपलक्ष्या तु वषट्कृतेज्या ।

(१) पूर्वाधिकरणापवादः ।

(२) 'सोमस्याग्ने वीहीत्यनुवषट्करोती'ति श्रूयते ।

(३) तत्र सन्देहः—एतदनुवषट्कारसम्बन्धिनि भक्षेऽग्निरपि लक्षणीयो भवति न वेति ।

(४) पूर्वपक्षः—अत्राग्नेर्भवति स्पष्टमेव मान्त्रवर्णिकं देवतात्वम्—मन्त्रे हि अग्निं सम्बोध्य सोमपातृत्वस्याभिहितत्वादिति ।

(५) सिद्धान्तः—प्रकृतिभूतस्य इन्द्रचमसस्य ग्रहणेऽग्नेरनुद्दिष्टत्वात् तद्भक्षणेऽग्निरनुवषट्कारदेवो नोपलक्षितः । इन्द्र एवोद्दिष्टत्वादुपलक्षितः । तस्मात् विकृतिभूतेष्वितरेष्वपि चमसेषु उद्देश्यदेवानामेवोपलक्षणम्, नानुद्दिष्टस्याग्नेरिति न भवत्यग्निरुपलक्षणीयोऽनुवषट्कारविषये इति ।

एतदेवाभिप्रेत्याह—सा नेति । 'सा' प्रसिद्धा—'वषट्कृतेज्या' अनुवषट्कारदेवता अग्निरूपा—'न उपलक्ष्या' भक्षमन्त्रे—इति शेषः ॥ १६ ॥

[ ३८ सूत्रमेकादशाधिकरण एव विचारितम् ]

(१७) ३।२।३९–४० नेन्द्राग्निपीतो भवतीन्द्रपीतः

(१) भक्षमन्त्रोहविचारो वर्तते ।

(२) 'ऐन्द्राग्नं गृह्णातीति' सोमभक्षणं विहितम् ।

(३) तत्र सन्देहः—इदमैन्द्राग्नभक्षणं समन्त्रकमुतामन्त्रकमिति ।

(४) पूर्वपक्षः—इन्द्राग्निभ्यामपीतः सोमो भवत्येव इन्द्रेणापि पीतः—अतोऽत्रापि भवत्येव 'इन्द्रपीतस्येति' मन्त्रस्य विनियोग इति ।

(५) सिद्धान्तः—देवतानामविग्रहत्वात् पानासम्भवेन इन्द्रपीतस्येत्यस्यार्थः 'इन्द्राय दत्त' इत्येव स्वीकार्यः । ऐन्द्राग्नाहुतिस्तु न भवतीन्द्राय दत्ता, दत्ता भवति सा इन्द्राग्निभ्याम् । अतो मन्त्रो मिश्रदेवताविषयो न भवति, तथा चैन्द्राग्नस्यामन्त्रकमेव भक्षणमिति ।

एतदेवाभिप्रेत्याह—नेन्द्राग्नीति । 'इन्द्राग्निपीतः' इन्द्राग्निभ्याम् पीतः 'न भवति' 'इन्द्रपीतः' । तस्माच्च न विनियोग इन्द्रपीतस्येति मन्त्रस्यैन्द्राग्नभक्षणे इत्याशयः ॥ १७ ॥

(१८) ३।२।४१–४३ छन्दोन्तरेऽप्यस्ति च भक्षमन्त्रः

(१) भक्षमन्त्रविचारो वर्तते ।

(२) उक्त एव भक्षमन्त्रे श्रूयते—'गायत्रच्छन्दस इन्द्रपीतस्येति' ।

(३) तत्र सन्देहः—किं गायत्रच्छन्दोमात्रयुक्ते ऐन्द्रे सोमे भक्षमन्त्रः उत छन्दोन्तरयुक्तेऽपीति ।

(४) पूर्वपक्षः—मन्त्रे यत् 'गायत्रच्छन्दस' इति पदं श्रूयते तत्र 'गायत्रमेव छन्दो यस्य' इत्येवंरूपस्यैव समासस्याभिधानात् गायत्रच्छन्दोमात्रयुक्ते ऐन्द्रे सोमे भक्षमन्त्रो नान्यत्रेति ।

(५) सिद्धान्तः—गायत्रादिनानाच्छन्दोयुक्तेऽपि घटत एव गायत्रच्छन्दस इति बहुव्रीहिसमासस्य प्रयोगः । गायत्रं छन्दो यस्येत्येवं विग्रहात् । गायत्रैकच्छन्दकस्तु सोमः कोऽपि नास्ति । तस्माद् गायत्रादिनानाच्छन्दस्केऽपि ऐन्द्रभक्षणेऽस्त्येवोक्तमन्त्रप्रयोग इति ।

एतदेवाभिप्रेत्याह—छन्दोन्तरेऽपीति । 'छन्दोऽन्तरेपि' गायत्रातिरिक्तछन्दस्केऽपि भक्षणे—'भक्षमन्त्रः' गायत्रच्छन्दस इन्द्रपीतस्येत्येवंरूपः—'अस्ति' विनियुज्यते ॥ १८ ॥

## (१९) ३।२।२७–४३ स्यादिन्द्रपीतं सवनन्न सोमः ।

एकादशाधिकरणमारभ्य पादान्तपर्यन्तं यो भक्षमन्त्रोहविचारः कृतस्तस्य सर्वस्य पर्यवसितः सिद्धान्तोऽत्र निरूप्यते ।

सर्वेषां भक्षणं समन्त्रकमेव–यथाश्रुतस्यैव च इन्द्रपीतस्येत्येवंरूपस्यैव मन्त्रस्य सर्वत्र विनियोगो न सोहस्य । इन्द्रपीतशब्दस्य नायमर्थः 'इन्द्रेण पीत' इति–किन्तर्हि 'इन्द्रेण पीतः' ( सोमो ) यस्मिन्नित्येव । तथा इन्द्रपीतशब्देन समस्तः प्रातःसवनोऽभिधीयते । एवं च यथाश्रुतस्य मन्त्रस्य सकलप्रातस्सवनसम्बद्धत्वे ऐन्द्रमात्रभक्षणे नियमनासम्भवात् तत्सवनगतसर्वाहुतिशेषभक्षणे यथाश्रुतस्यैवास्य विनियोगः । एतदेवाभिप्रेत्याह–स्यादिति । 'इन्द्रपीतम्' इति 'सवनं' 'स्यात्'–इन्द्रेण पीतः सोमो यस्मिन्निति व्युत्पत्त्या—'न सोमः' इन्द्रेण पीत इति व्युत्पत्त्येति सम्बन्धः ॥ १९ ॥

### न्यायास्तु पादे दश वै नवापि ।

ऊनविंशाधिकरणान्यत्र पादे । परिगणनप्रकारस्तु न्यायमालातोऽत्र भिन्न एव । अत्र यत् ऊनविंशाधिकरणन्तत्तत्रैकादशाधिकरण एव चरमसिद्धान्तत्वेन प्रदर्शितम् । यच्च तत्र सप्तदशाधिकरणन्तदत्र नैव धृतमिति ॥

इति तृतीयस्य द्वितीयः ।

# अथ तृतीयस्य तृतीयः ।

(१) ३।३।१-८ ऋग्वेदचोदितान्युच्चैः

(१) लिङ्गबलेन मन्त्राणामङ्गत्वं विचार्य वाक्यमूलकं तद् विचार्यते।

(२) ज्योतिष्टोमे श्रूयते—'उच्चैऋ॑चा क्रियते-उपांशु यजुषां-उच्चैः साम्ना' इति ।

तत्र सन्देहः-उच्चैस्त्वादयो धर्मा मन्त्राणामुत वेदानामिति । अर्थात् ऋक्शब्देनात्र किं यत्रार्थवशेन पादव्यवस्थेति पादबद्धाक्षरा मन्त्रा एव विवक्षिता उत मन्त्रब्राह्मणात्मकः सकलऋग्वेद इति ।

(४) पूर्वपक्षः—विधिवाक्ये मन्त्रवाचिनामृगादिशब्दानां स्पष्टप्रयोगात् मन्त्रधर्मा एवोच्चैस्त्वादयः । तथा च यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना अपि ऋच उच्चैरेव पठितव्या इति ।

(५) सिद्धान्तः—उक्तानां विधिवाक्यानामुपक्रमे श्रूयते—'त्रयो वेदा असृज्यन्त अग्नेऋ॑ग्वेदः वायोर्यजुर्वेदः आदित्यात्सामवेदः' इति । एतदुपक्रमोपसंहारैकवाक्यताबलेनोपसंहारभूतेषु विधिवाक्येष्वपि ऋग्यजुस्सामशब्दा वेदपरा एव नेयाः । तथा च सति ऋङ्मन्त्रा अपि यदा यजुर्वेदचोदितास्तदोपांश्वेव पठनीया नोच्चैरिति ।

एतदेवाभिप्रेत्याह—ऋग्वेदेति । 'ऋग्वेदेन' यानि 'चोदितानि' तान्येव 'उच्चैः' पठनीयानि—न तु सर्वा एव ऋचः यत्र क्वचन वेदे चोदिता इति । एवमेव यजुर्वेदे ये मन्त्राः चोदितास्ते सर्वे उपांशु पठनीयाः । सामवेदे ये चोदितास्तेऽप्युच्चैरिति ॥ १ ॥

(२) ।३।३।९ स्वरोऽङ्गे मुख्यहेतुकः ।

(१) उच्चैस्त्वादयो वेदधर्मा इति स्थितम् । तत्र विचारविशेषः प्रवर्तते।

(२) यजुर्वेदविहिते प्रधानकर्मण्याधाने सामवेदोक्तमङ्गत्वेन वामदेव्यगानं विहितम् ।

(३) तत्र सन्देहः—यस्मिन् वेदे प्रधानकर्म विहितन्तदनुसारिणैवोच्चैस्तरत्वादिना वेदान्तरोत्पन्नमप्यङ्गभूतं कर्म योजनीयमुत यस्मिन् वेदे तदुत्पन्नं तदनुसारिणेति । तथा चाधानाङ्गभूतं वामदेव्यगानं किं यजुर्वेदधर्मेणोपांशु कर्तव्यमुत सामवेदधर्मेणोच्चैरिति ।

(५) पूर्वपक्षः—यद्यपि वामदेव्यगानं यजुर्वेदविहितस्याधानस्याङ्गं तथाऽपि सामवेदे तस्योत्पन्नत्वात् उत्पत्तेश्च शीघ्रबुद्धिहेतुत्वात् सामवेदधर्मेणोच्चैस्त्वेनैव तत्कर्तव्यमिति ।

(५) सिद्धान्तः—विनियोगो ह्युत्पत्तेर्बलवत्तरः । स च यजुर्वेदे श्रुतः 'य एवं विद्वान् वामदेव्यं गायति' इति । गुणेन च मुख्यस्यानुसरणं न्याय्यम् । अत्र चाङ्गित्वादाधानं मुख्यं सामगानं त्वङ्गत्वाद्गुणः । तथा च यथा आधानाङ्गभूता मन्त्रा आधानस्य यजुर्वेदोत्पन्नत्वादुपांशु पठ्यन्ते तथैव सामवेदोत्पन्नान्यपि सामान्युपांश्वेव गेयानि इति ।

एतदेवाभिप्रेत्याह—स्वर इति । 'अङ्गे' अङ्गभूते कर्मणि सामगानादौ—'स्वरः' उच्चैस्त्वोपांशुत्वरूपः—'मुख्यहेतुकः' मुख्यकर्मानुसार्येव भवति । एवं च यत्र विनियोगोत्पत्त्योर्विरोधस्तत्र विनियोग एव बलवत्तर इत्याशयः ॥ २ ॥

## (३) ३।३।१० ज्योतिष्टोमो यजुर्वेदे

(१) अङ्गप्रधानयोर्वेदभेदेन धर्मनिरूपणं विचारितम् । यत्र च प्रधानमेव वेदद्वये उक्तम् तत्र का गतिरिति विचार्यते ।

(२) 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्यं यजुर्वेदे सामवेदे चोपलभ्यते ।

(३) तत्र सन्देहः—वेदद्वयगतवाक्ययोः को विधिः कश्च गुणविधानायानुवादमात्रमिति, तथा चास्मिन् कर्मणि कस्य वेदस्य धर्मोऽनुसरणीय इति ।

(४) पूर्वपक्षः—नियामकहेतोरभावात् अनिश्चय एव । तथा चात्र विकल्प एव । क्वचिद् यजुर्वेदस्य क्वचिच्च सामवेदस्येति ।

(५) सिद्धान्तः—यद्यप्युत्पत्तिवाक्यं ज्योतिष्टोमस्य वेदद्वयेऽप्युपलभ्यते तथाऽपि सोमद्रव्यस्य वाय्वादिदेवतायाश्चावगतिर्यथा यजुर्वेदाद् भवति न तथा सामवेदात् । सामवेदे तु केवलं सामविशेषस्याभिधानमुपलभ्यते न द्रव्यस्य देवताया वा । अतः सामवेदस्थं ज्योतिष्टोमवाक्यं सामविशेषविधानार्थोऽनुवाद एव यजुर्वेदविहितस्य द्रव्यदेवतासहितस्य ज्योतिष्टोमकर्मण इति सिध्यति । अतो यजुर्वेदस्थवाक्यस्यैव विधित्वे स्थिते मन्त्रपाठ उपांश्वेव कार्य इति ।

एतदेवाभिप्रेत्याह—ज्योतिष्टोम इति । 'ज्योतिष्टोमः' 'यजुर्वेदे' एव विहित इति शेषः—सामवेदे तु सोऽनूदित एवेत्याशयः ॥ ३ ॥

## (४) ३।३।११ प्रमा प्रकरणम्भवेत्

(१)—श्रुतिलिङ्गवाक्यैर्विनियोगे निरूपिते प्रकरणस्य विनियोजकत्वमिदानीं निरूप्यते ।

(२) दर्शपूर्णमासप्रकरणे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यस्यानन्तरं 'समिधो यजति—तनूनपातं यजति—इडो यजति—बर्हिर्य-

जति—स्वाहाकारं यजति' इत्येतानि प्रयाजादिविधायकानि वाक्यानि श्रूयन्ते ।

(३) तत्र सन्देहः—एते प्रयाजाः किं कस्यापि कर्मान्तरस्याङ्गानि—उत न । तत्र च किमपि विनियोजकं प्रमाणमस्ति न वेति ।

(४) पूर्वपक्षः—प्रयाजानामङ्गत्वबोधकम्प्रमाणं नास्ति । श्रुत्या लिङ्गेन वाक्येन वा नैतेषामङ्गत्वं बोध्यते । नाप्यत्र प्रकरणम्प्रमाणम् । एकवाक्यतामापन्नो वाक्यसमूह एव प्रकरणम्—न च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यस्य वाक्यस्य 'समिधो यजति' इत्यादिवाक्यानां परस्पराकाङ्क्षाऽस्ति येन वाक्यैकवाक्यता कल्प्येत । तस्मात् न प्रयाजादीनां दर्शपूर्णमासाङ्गता—प्रमाणाभावादिति ।

(५) सिद्धान्तः—अस्त्येव परस्पराकाङ्क्षा 'दर्शपूर्णमासाभ्यां यजेत' इति वाक्यस्य 'समिधो यजति' इत्यादिवाक्यानाम् । तथा हि—प्रयाजादीनां पुरुषप्रवृत्तिरूपत्वात् सेवादिवत् फलसाधकत्वे—दर्शपूर्णमासयोश्च करणत्वात् प्रदीपोपकृतचक्षुर्वत् उपकरणोपकार्यत्वे सिद्धे—प्रयाजादेः किम्फलम् दर्शपूर्णमासयोश्च किमुपकरणमित्यस्त्येवाकाङ्क्षा । एवं च परस्पराकाङ्क्षामूलकमेकवाक्यतारूपं प्रकरणं समस्त्येव । तेनैव च प्रकरणेन प्रमाणेन प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं सिद्ध्यति इति ।

एतदेवाभिप्रेत्याह—प्रमेति । 'प्रकरणम्' एकवाक्यतारूपं—'प्रमा' प्रमाणम् 'भवेत्' प्रयाजादीनां दर्शपूर्णमासाङ्गत्वे—इति शेषः ॥ ४ ॥

## (५) ३।३।१३ क्रमेण विनियोगोऽस्ति

(१)—क्रमस्य विनियोजकत्वमिदानीं चिन्त्यते ।

(२) दर्शपूर्णमासयोर्याजमाने मन्त्रकाण्डे कश्चिन्मन्त्र आम्नायते—'दब्धिरस्यदब्धो भूयासम् अमुं दभेयम्' इति ।

(३) तत्र सन्देहः—किमयम्मन्त्र उपांशुयाजे विनियुज्यते न वेति ।

(४) पूर्वपक्षः—अस्योपांशुयाजाङ्गत्वे प्रमाणं श्रुतिर्वाक्यं वा नोपलभ्यते । लिङ्गं चानेककर्मसाधारणम्—प्रकरणमपि त्रयाणाम्मन्त्राणामेकमेव । तस्मादङ्गत्वनियामकप्रमाणाभावान्मन्त्रोऽयन्नोपांशुयाजाङ्गमिति ।

(५) सिद्धान्तः—आध्वर्यवकाण्डे (१)आग्नेयो(२)पांशुयाजा(३)ग्नीषोमीयकर्माणि क्रमेणाम्नातानि । याजमाने च काण्डे तद्विषया मन्त्राः क्रमेणाम्नाताः—(१)'अग्नेरहं देवयज्ययाऽन्नादो भूयासम्'—(२) 'दब्धिरस्यदब्धो भूयासममुं दभेयम्'—(३) 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' इति । एवं च क्रमप्रमाणेन मध्यवर्तिनि उपांशुयाजे मध्यवर्ती मन्त्रो विनियुज्यते इति ।

एतदेवाभिप्रेत्याह—क्रमेणेति । 'क्रमेण' क्रमरूपेण प्रमाणेन—'विनियोगः' मन्त्राणाम् 'अस्ति' भवति । न च श्रुतिलिङ्गवाक्यप्रकरणानामभावेऽङ्गत्वाभाव इति हृदयम् ॥ ५ ॥

## (६) ३।३।१३ समाख्या विनियोजिका

(१) समाख्याया विनियोजकत्वं विचार्यते ।

(२) याज्यापुरोनुवाक्यापाठादयो धर्मा ऋग्वेदे प्रोक्ताः—दोहननिर्वापादयो यजुर्वेदे—आज्यस्तोत्रपृष्ठादयः सामवेदे ।

(३) तत्र सन्देहः—किमेते धर्मा येन केनचिद् ऋत्विजाऽनियमेनानुष्ठेया उतास्ति किञ्चिद् व्यवस्थाकारणमिति ।

(४) पूर्वपक्षः—अस्यैवैते धर्मा इति नियामकस्य कस्यचिद् दुर्निरूपत्वात् येन केनापि ऋत्विजा यः कोऽपि धर्म इच्छयाऽनुष्ठेय इति ।

(५) सिद्धान्तः—'हौत्रम्' 'आध्वर्यवम्' 'औद्गात्रम्' इति तिस्रः धर्माणां समाख्या भवन्ति । एता एव समाख्या नियामिका भवन्ति । तथा च हौत्रसमाख्याता धर्मा होत्रा—आध्वर्यवसमाख्याता अध्वर्युणा—औद्गात्रसमाख्याता उद्गात्रेति भवत्येव व्यवस्था समाख्यारूपेण प्रमाणेनेति ।

एतदेवाभिप्रेत्याह—समाख्येति । 'समाख्या' अपि 'विनियोजिका' विनियोगनियामिका भवति-श्रुतिलिङ्गवाक्यप्रकरणक्रमाणाम्पञ्चानामभावे-इति तात्पर्यम् ॥ ६ ॥

## (७) ३।३।१४ बलीयसी श्रुतिर्लिङ्गात्

(१)—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां विनियोजकत्वं पृथक् पृथक् निरूपितम् । तासां परस्परविरोधे का गतिरितीदानीं विचार्यते ।

(२) 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रूयते । ऐन्द्री ऋक् च—'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इति । अस्याश्चार्थः—'भो इन्द्र कदाचिदपि घातको न भवसि-किन्त्वाहुतिं दत्तवते यजमानाय प्रीयसे' इति ।

(३) तत्र सन्देहः- किमियं ऋक् केवलमिन्द्रविषयकक्रियायामेव विनियुज्यते-उत इन्द्रविषयकक्रियायां गार्हपत्याग्निविषयकक्रियायां चेत्युभयत्र-उत इन्द्रविषयकक्रियायां गार्हपत्याग्निविषयकक्रियायां वेति विकल्पः—उत केवलगार्हपत्याग्निविषयकक्रियायामेवेति—चत्वारोऽत्र पक्षाः ।

(४) पूर्वपक्षः—मन्त्रस्येन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गात् तस्येन्द्रविषयकक्रियाङ्गत्वं स्पष्टम् । 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति विधिश्च गृहपत्युपस्थाने मन्त्रं विनियुङ्क्ते—इन्द्रश्च स्वर्गाधिपत्वाद् 'गृहपतिः' । एवं

च 'ऐन्द्रया ऋचा गृहपतिभूतमिन्द्रमुपतिष्ठेदिति' श्रुतिलिङ्गोभयबलेनार्थः पर्यवसितः। तथा च इन्द्रोपस्थानमात्रे मन्त्रस्य विनियोग इति प्रथमः॥ अथवा मन्त्रस्येन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गात्तस्येन्द्रोपस्थाने विनियोगः अथ च ऐन्द्रया गार्हपत्यमिति साक्षाच्छ्रुत्या तस्य गार्हपत्याग्न्युपस्थाने विनियोगः। श्रुतेर्लिङ्गस्य च प्रामाण्याविशेषात् उभयत्रापि विनियोग इति समुच्चयः॥ अथवा श्रुतिलिङ्गयोः प्रामाण्याविशेषात् तयोर्विरोधे विकल्प एव न्याय्यः। तथाच इन्द्रोपस्थाने गार्हपत्याग्न्युपस्थाने वा मन्त्रो विनियोज्य इति विकल्प एवेति।

(५) सिद्धान्तः—श्रुतिलिङ्गयोर्विरोधे श्रुतिरेव बलीयसी। श्रुतिर्हि साक्षाद्‌ विनियोक्त्री लिङ्गेन तु विलम्बेन विनियोगः। तथा हि मन्त्रपदान्यादौ स्वाभिधेयमर्थं प्रतिपादयन्ति—तत्पश्चात् मन्त्रस्यार्थप्रकाशनरूपसामर्थ्यं निरूप्यते—ततस्तत्सामर्थ्यबलेन साधनत्ववाचिनी प्रधानवाचिनी च श्रुतिः कल्प्यते (श्रुतिं विना विधानस्यासम्भवात्)। सा च श्रुतिः प्रकृते 'मन्त्रेणानेनेन्द्रमुपतिष्ठेत' इत्येवंरूपा। प्रत्यक्षश्रुतौ तु नास्त्यावश्यकता सामर्थ्यनिरूपणस्य श्रुतिकल्पनस्य वेत्यविलम्बेनैव प्रवृत्तिः। एवं च शीघ्रगामिन्या श्रुत्या विलम्बगामि लिङ्गं बाध्यते। प्रत्यक्षश्रुत्या—'ऐन्द्रया गार्हपत्यमुपतिष्ठेत' इत्येवंरूपया—मन्त्रस्य विनियोगे सिद्धे न भवत्याकाङ्क्षा तस्य विनियोगं प्रति, येनाऽऽकाङ्क्षाबलेन लिङ्गस्य विनियोजकत्वं कल्प्येत। तस्मात् प्रत्यक्षश्रुतिबलेन गार्हपत्योपस्थान एव मन्त्रस्य विनियोग इति।

एतदेवाभिप्रेत्याह—बलीयसीति। 'श्रुतिः' प्रत्यक्षश्रुतिः—'लिङ्गात्' अर्थप्रकाशनरूपसामर्थ्यात्—'बलीयसी' बलवत्तरप्रामाण्यवती—लिङ्गस्य बाधिकेति यावत्॥ ७॥

## (८) ३।३।१४ लिङ्गं वाक्यस्य बाधकम्

(१) श्रुतिलिङ्गयोर्विरोधे विचारिते लिङ्गवाक्यविरोधोऽधुना विचार्यते।

(२) दर्शपूर्णमासयोः श्रूयते—'स्योनं ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि—तस्मिन् सीद अमृते प्रतितिष्ठ—व्रीहीणाम्मेध सुमनस्यमानः' इति। अस्यार्थः—'भोः पुरोडाश तव समीचीनं स्थानं घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि—भो व्रीहिसारभूत त्वं समाहितमनस्कस्तस्मिन् समीचीने स्थाने उपविश तत्र स्थिरो भव' इति।

(३) तत्र सन्देहः—किं कृत्स्नो मन्त्र उपस्तरणे पुरोडाशासादने च प्रयोक्तव्यः—उत कल्पयाम्यन्त उपस्तरणे तस्मिन् सीदेत्येवमादिः पुरो-

डाशासादने। यदि वाक्यं विनियोजकं तर्हि कृत्स्न उभयत्र। अथ लिङ्गं विनियोजकं ततः कल्पयाम्यन्तः सदनकरणे (उपस्तरणे), तस्मिन् सीदेत्येवमादिरासादने। इति।

(४) पूर्वपक्षः—तस्मिन्नित्यनेन तच्छब्देन प्रकृतवाचिना पूर्वोत्तरार्धयोरेकवाक्यत्वे सति मन्त्रद्वयाभावात् कृत्स्नोऽपि मन्त्रः सदनकरणे सादने च विनियोजनीयः, तत्र सदने एव वा सादन एव वा उभयत्र वेति यथेच्छं विकल्प इति।

(५) सिद्धान्तः—पूर्वोत्तरार्धयोरेकवाक्यत्वेऽपि उत्तरार्धस्य सदनकरणप्रकाशनसामर्थ्यमकल्पयित्वा कृत्स्नस्य मन्त्रस्य सदनकरणविनियोजकश्रुतिवाक्यकल्पनस्यासम्भवात्—एवमेव पूर्वार्धस्य सादनप्रकाशनसामर्थ्यमकल्पयित्वा कृत्स्नस्य सादनविनियोजकश्रुतिवाक्यकल्पनस्यासम्भवात्—लिङ्गद्वयकल्पनव्यवधानेन वाक्यं श्रुतिं प्रति विप्रकृष्यते। पूर्वार्धस्य सदनकरणप्रकाशनलिङ्गम् उत्तरार्धस्य च सादनप्रकाशनलिङ्गम्प्रत्यक्षमेवेति लिङ्गद्वयमेतत् श्रुतिं प्रति सन्निकृष्यते। एवं च लिङ्गेन वाक्यस्य बाधात् पूर्वार्धं सदनप्रकरणे उत्तरार्धं तु सादने विनियोजनीयमिति।

एतदेवाभिप्रेत्याह—लिङ्गमिति। 'लिङ्गम्' मन्त्रस्यार्थप्रकाशनरूपसामर्थ्यम्—'वाक्यस्य' अङ्गत्वबोधकस्य—'बाधकम्'। लिङ्गवाक्ययोर्विरोधे लिङ्गेनैव विनियोगः स्वीकार्य इत्याशयः॥ ८॥

(६) ३।३।१४ वाक्येन प्रक्रिया बाध्या।

(१) श्रुतिलिङ्गविरोधो लिङ्गवाक्यविरोधश्च विचारितः। वाक्यप्रकरणविरोध इदानीं विचार्यते।

(२) दर्शपूर्णमासयोः सूक्तवाके श्रूयते—'अग्नीषोमाविदं हविरजुषेताम्, अवीवृधेताम्, महो ज्यायोऽक्राताम्—इन्द्राग्नी इदं हविरजुषेताम्, अवीवृधेताम् महोज्यायोऽक्राताम्' इति। अत्र लिङ्गसामर्थ्यात् अग्नीषोमाविति पदं पौर्णमास्यां प्रयोक्तव्यम्—'इन्द्राग्नी' इति पदं चामावास्यायाम्प्रयोक्तव्यमिति निर्णीतम्प्राक्।

(३) तत्र सन्देहः—अग्नीषोमावित्यस्यानन्तरं यत् पदजातं इदं हविरित्यादि पूर्वमन्त्रगतं तदपि स्वतन्त्रं (द्वितीयमन्त्रनिरपेक्षमेव) अमावास्यायामपि प्रयोक्तव्यम्—एवं चामावास्याप्रयोगे पठनीयो मन्त्रः 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेताम् महोज्यायोऽक्राताम्, इदं हविरजुषेताम् महोज्यायोऽक्राताम्'इति (एवम्पौर्णमासीप्रयोगे पठनीयो मन्त्र इत्थम्—'अग्नीषोमाविदं हविरजुषेताम् महोज्यायोऽक्राताम्, इदं हविर

जुषेताम् अवीवृधेताम् महो ज्यायोऽक्रातामिति )-एवं च प्रकरणमनुगृहीतम्भवति--अथवा वाक्यसामर्थ्यात् पूर्वमन्त्रस्यावशिष्टोऽपि भागः पौर्णमास्यायामेव प्रयोक्तव्यो नामावास्यायां तथा उत्तरमन्त्रस्याप्यवशिष्टो भागोऽमावास्यायामेव प्रयोक्तव्यो न पौर्णमास्याम्--तथाच पौर्णमास्याम्पठनीयो मन्त्रः 'अग्नीषोमाविदं हविरजुषेताम् अवीवृधेताम् महोज्यायोऽक्राताम्'इत्येतावन्मात्रमेव--अमावास्यायां च 'इन्द्राग्नी इदं हविरजुषेताम् अवीवृधेताम्, महोज्यायोऽक्राताम्'इत्येतावन्मात्रमेवेति।

(४) पूर्वपक्षः--देवतानामोत्कर्षानन्तरम् योऽवशिष्टः पूर्वमन्त्रस्य भागः सोऽपि अमावास्यायाम्पठनीयः। एवमेव हि एषाम्मन्त्रभागानां सर्वशेषत्वबोधको दर्शपूर्णमासप्रकरणपाठोऽनुगृह्यते--इति।

(५)सिद्धान्तः--अग्नीषोममन्त्रशेषस्य इन्द्राग्निपदान्वयाश्रवणात् प्रकरणेन प्रथमं तदन्वयरूपं वाक्यं कल्पनीयम्--तेन च कल्पितेन वाक्येन इन्द्रादिप्रकाशनसामर्थ्यरूपं लिङ्गं कल्पनीयम्--तच्च कल्पितं लिङ्गम् 'अनेन मन्त्रभागेन इन्द्राग्निदेवताकक्रियाऽनुष्ठेया'इति विनियोजिकां श्रुतिं कल्पयति। एवं च प्रकरणविनियोगयोर्मध्ये व्यवधानत्रयम्भवति। अग्नीषोममन्त्रस्य तु पौर्णमासीसम्बन्धः साक्षाद् वाक्याल्लब्धः तद्देवताप्रकाशनसामर्थ्यरूपं लिङ्गं तद्बलेन च विनियोजिकां श्रुतिमेव कल्पयतीत्यत्र वाक्यविनियोगयोर्मध्ये लिङ्गश्रुतिरूपं व्यवधानद्वयमेव। तस्मात् प्रकरणस्य वाक्येन बाधितत्वात् मन्त्रशेषोऽपि तत्रैव तिष्ठति--तथा च अग्नीषोमावित्यादेर्मन्त्रभागस्य अक्रातामित्यन्तस्य समस्तस्य पौर्णमास्यामेव प्रयोगः इन्द्राग्नी इत्यादेश्च भागस्य अक्रातामित्यन्तस्य समस्तस्यामावास्यायामेवेति।

एतदेवाभिप्रेत्याह--वाक्येनेति। 'वाक्येन' 'प्रक्रिया' प्रकरणम् 'बाध्या'--विनियोगरूपादर्थात् अधिकतरव्यवधानादित्याशयः ॥ ६ ॥

## (१०) ३।३।१४ प्रक्रिया बाधते क्रमम्

(१) प्रकरणक्रमविरोधो विचार्यते।

(२) राजसूये पश्विष्टिसोमयागा बहवः प्रधानभूताः। तत्राभिषेचनीयाख्यः कश्चित् सोमयागः। तस्य सन्निधौ देवनादयः श्रूयन्ते--'अक्षैर्दीव्यति--राजन्यं जिनाति (जयतीत्यर्थः)--शौनःशेपमाख्यापयति ( बह्वृचब्राह्मणे समाम्नातं शुनःशेपविषयमुपाख्यानम् )।

(३) तत्र सन्देहः--देवतादयः किं सन्निधिबलादभिषेचनीयाङ्गमुत प्रकरणबलात् राजसूयगतसर्वयागाङ्गमिति।

(४) पूर्वपक्षः--अभिषेचनीययागस्य सन्निधौ देवनादीनां पठितत्वात् क्रमप्रमाणेन तस्यैवाङ्गमेते इति ।

(५) सिद्धान्तः--राजसूयस्य कथंभावाकाङ्क्षायामनुवृत्तायामेव विहिता देवनादयः प्रकरणेन राजसूयाङ्गानि । राजसूयश्च बहुयागात्मक इति तत्रत्यसकलयागशेषत्वं देवनादीनाम् । प्रकरणेन च क्रमो बाध्यते--अर्थविप्रकर्षात् । तथा हि अभिषेचनीयस्य देवनादिष्वाकाङ्क्षाभावात् क्रमबलात्सावान्तराकाङ्क्षा कल्पनीया--तद्द्वारा च वाक्यलिङ्गश्रुतयः कल्पनीयाः--इतरत्र तु राजसूयाकाङ्क्षारूपमहाप्रकरणस्य सत्त्वात तत्कल्पनाया आवश्यकत्वात् तावता सन्निकृष्यते विनियोगस्येति ।

एतदेवाभिप्रेत्याह--प्रक्रियेति । 'प्रक्रिया' प्रकरणम्--'क्रमम्' 'बाधते अर्थविप्रकर्षादिति भावः ॥ १० ॥

## (११) ३।३।१४ क्रमः समाख्यां बाधेत

(१) क्रमसमाख्याविरोधो विचार्यते ।

(२)--'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः 'पौरोडाशिकम्' इति याज्ञिकैः समाख्यायते । पठ्यते त्वयम्मन्त्रः इध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके । इध्माबर्हिःसम्पादनस्य मुष्टिनिर्वापस्य चान्तरालं सान्नाय्यपात्राणां देश उक्तः ।

(३) तत्र सन्देहः--मन्त्रोऽयं किं पुरोडाशकाण्डोक्तानामुलूखलजुह्वादीनां शोधनेऽङ्गम्--उत सान्नाय्यपात्रशोधने इति ।

(४) पूर्वपक्षः--समाख्याबलेन पुरोडाशकाण्डोक्तानां सर्वेषाम्पात्राणां शोधनेऽङ्गमयम्मन्त्र इति ।

(५) सिद्धान्तः--पौरोडाशिकमिति समाख्यायां प्रकृतिः पुरोडाशमात्रमभिधत्ते तद्धितप्रत्ययश्च काण्डम्--न चैतावता सकलपुरोडाशपात्राणां मन्त्रसन्निधिः प्रत्यक्षो भवति । तस्मात् काण्डसमाख्याबलेन सन्निधिं कल्पयित्वा तत्सन्निध्यन्यथानुपपत्त्या परस्पराकाङ्क्षारूपं कृत्स्नं पात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुतीः कल्पयित्वा तया श्रुत्या विनियोगो भवितुमर्हति । सान्नाय्यपात्राणां तु मन्त्रसन्निधिः प्रत्यक्ष एव, न तु कल्पनीयः । तथा हि इध्माबर्हिःसम्पादनस्य मुष्टिनिर्वापस्य चान्तरालं सान्नाय्यपात्राणां देश उक्तः--मन्त्रश्चेध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते । तेन च प्रत्यक्षेण सन्निधिना प्रकरणादीनां चतुर्णामेव कल्पनाऽऽवश्यकी । एवं च समाख्यापेक्षया क्रमस्य भवति सन्निकर्षः--ततश्च क्रमेण समाख्याया बाधात् मन्त्रोऽयं सान्नाय्यपात्रशोधनाङ्गमेव भवतीति ।

एतदेवाभिप्रेत्याह—क्रम इति । स्पष्टार्थम् ॥ ११ ॥

## (१२) ३।३।१४ बाधः प्राप्ते क्वचिद्ध भवेत्

(१) लिङ्गादीनामर्थविप्रकर्षाद् बाध उक्तः । अस्य च बाधस्यौचित्यं विचार्यते ।

(२)—लिङ्गादिभिः समाख्यान्तैः प्रमाणैरुक्तस्याङ्गत्वस्य बाध उक्तः ।

(३) तत्र सन्देहः—प्रमाणोक्तस्य बाधो युक्तो न वेति ।

(४) पूर्वपक्षः—प्राप्तस्य प्रवृत्तिरस्त्येवेति न तन्निवारणं युक्तम् । तस्मात् प्रमाणप्राप्तस्याङ्गत्वस्य नैव युक्तो बाध इति ।

(५) सिद्धान्तः—बुद्ध्या विषयीकृतस्य सम्भवति बाधः । यद् बुद्धिमात्रविषयीकृतं तन्न भवति प्रवृत्तम्—अनुष्ठानरूपफलपर्यवसानाभावात् । अतः प्राप्तस्यापि अङ्गत्वस्य अनुष्ठानात् प्राक् भवत्येव बाधः पटुतरप्रमाणप्राप्तेनाङ्गत्वान्तरेणेति ।

एतदेवाभिप्रेत्याह–बाध इति । 'प्राप्ते'—दुर्बलप्रमाणेन बोधिते सत्यप्यङ्गत्वे'—'क्वचित्'—पटुतरप्रमाणान्तरप्राप्तिसत्त्वे—'बाधः' 'भवेत्' । नात्र किञ्चिदनौचित्यमित्याशयः ॥ १२ ॥

## (१३) ३।३।१५।१६ अहीनोपसदां सङ्ख्या

(१) अङ्गत्वविशेषविचारोऽनुवर्तते । तत्र श्रुतिप्रकरणविरोधे विचारः ।

(२) ज्योतिष्टोमप्रकरणे श्रूयते—'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति । एकेन अह्ना निष्पाद्यत्वात् 'साह्नो' ज्योतिष्टोमः । दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात् पूर्वं कर्तव्या होमा 'उपसदः' ॥

(३) तत्र सन्देहः—यदत्र वाक्ये उपसदां द्वादशत्वमुक्तं तत् किं ज्योतिष्टोमे एव निविशते—उत अहीननामके कर्मान्तरे—इति ।

(४) पूर्वपक्षः—प्रकरणबलादुपसद्द्वादशत्वं ज्योतिष्टोमस्यैवाङ्गम् । 'अहीन'शब्दश्च 'न हीन' इति व्युत्पत्त्या ज्योतिष्टोमस्यैव विशेषणम्—तत्रैव सोमयागप्रकृतित्वेन सर्वेषामङ्गानामुपदेशात् । एवं च ज्योतिष्टोमे उपसदां त्रित्वद्वादशत्वयोर्विकल्पः इति ।

(५) सिद्धान्तः—आवृत्तसोमयागरूपो द्विरात्रत्रिरात्रादिरहर्गणः—तस्मिन्नेव 'अहीन'शब्दो रूढः । रूढिश्च विग्रहनिरपेक्षत्वात् शीघ्रबुद्धिहेतुः । अतो ज्योतिष्टोमवाचिनः 'साह्न'शब्दाद् भिन्नैवेयमहीनसंज्ञा ज्योतिष्टोमाद् भिन्नमहर्गणमेवाभिधत्ते । तस्मिंश्चाहर्गणे षष्ठीश्रुत्योक्तमुपसद्द्वादशत्वं निविशते । तथा च द्वादशसङ्ख्यायाः प्रकरणादपकर्ष इति ।

एतदेवाभिप्रेत्याह—अहीनेति । 'सङ्ख्या'—द्वादशसङ्ख्या—'अहीनोपसदाम्' अहीननाम्नि अहर्गणे या उपसदः तासामेव—न तु ज्योतिष्टोमोपसदामिति भावः ॥ १३ ॥

## (१४) ३।३।१७-१९ द्वियज्ञे प्रतिपद्विधिः

(१) अङ्गत्वविचारो वर्तते । श्रुतिप्रकरणविरोध एव विचारान्तरम् ।

(२) ज्योतिष्टोमे श्रूयते—'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्-एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः' इति । स्तोत्रस्योपक्रमे पठनीया ऋक् अत्र प्रतिपच्छब्देनाभिधीयते ।

(३) अत्र सन्देहः—उदाहृता प्रथमा प्रतिपत् ज्योतिष्टोमे निविशते—उत यजमानद्वययुक्ते कस्मिंश्चिद् यागान्तरे इति ।

(४) पूर्वपक्षः—प्रकरणबलात् ज्योतिष्टोमस्यैवाङ्गम्प्रतिपत् । तस्यैव यागस्य अवस्थाविशेषेषु यजमानद्वयं सम्भाव्यते । तादृश्यामेवावस्थायां ज्योतिष्टोमे उदाहृताया प्रतिपदः सन्निवेश इति ।

(५) सिद्धान्तः—यजमानद्वित्वं कुलायनामके यज्ञे साक्षादाम्नातम्—'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति । एवमेव यजमानबहुत्वं सत्रष्वाम्नातम् । तथा च 'द्वयोर्यजमानयो'रिति ब्राह्मणवाक्ये द्विशब्दरूपया श्रुत्या प्रकरणं बाधित्वा कुलायेषु आद्यायाः प्रतिपद उत्कर्षः कार्यः । तथैव द्वितीयाया उपसदः सत्रेषु सन्निवेशः । ज्योतिष्टोमे तु साक्षाच्छ्रूयमाणस्य यजमानैकत्वस्य त्यक्तुमशक्यत्वान्न तस्य द्वित्वं बहुत्वं वा सम्भवति इति ।

एतदेवाभिप्रेत्याह—द्वियज्ञ इति । 'प्रतिपद्विधिः' प्रतिपदः-युवं हि स्थ इत्याद्यायाः-'विधिः'—'द्वियज्ञे' द्वयोर्यजमानयोः यज्ञे-अन्वेतीति शेषः ॥१४॥

## (१५) ३।३।२०-२३ विधेया जाघनी यागे

(१) प्रकरणादुत्कर्षस्यापवादः ।

(२) दर्शपूर्णमासप्रकरणे श्रूयते—'जाघन्या पत्नीः संयाजयन्ति' इति । 'जाघनी' पशोः पुच्छम्—पत्नीशब्दश्च आहुतिचतुष्टयात्मकस्य पत्नीसंयाजकर्मणो नामधेयस्यैकदेशः—आहुतिचतुष्टयानां तृतीयाहुतौ देवपत्नीनां देवतात्वात् तद्द्वारैव 'पत्नीसंयाज' इति नाम्नः प्रवृत्तिः ।

(३) तत्र सन्देहः—किमत्र जाघनीमुद्दिश्य पत्नीसंयाजरूपस्तत्संस्कारो विधीयते उत ज्योतिष्टोमाङ्गभूतपत्नीसंयाजमुद्दिश्य जाघनी विधीयत इति।

(४) पूर्वपक्षः—जाघनीमुद्दिश्य पत्नीसंयाजाख्यः संस्कारोऽत्र साक्षाच्छ्रुत्या विधीयते । जाघनी च पशौ समवैति—न दर्शपूर्णमासयोः ।

अतः पूर्वाधिकरणन्यायेन दर्शपूर्णमासप्रकरणादुत्कृष्यास्य जाघनीसंस्कारस्याग्नीषोमीय एव पशौ सन्निवेश इति ।

(५) सिद्धान्तः—जाघनीशब्देन पशोर्भागोऽभिधीयते। यद्यपि दर्शपूर्णमासयोः पशोरभावात् पशोर्भागविशेषः पुच्छो नास्ति—तथाऽपि कर्मान्तरे व्यापादितात् पशोः सोऽत्रानेतुं शक्यते—क्रयादिना वा। न चैवं वर्तमानाया जाघन्या पत्नीसंयाजे संस्कार्यत्वम् । तृतीयया हि जाघन्याः साधनत्वमभिधीयते । तस्मात् जाघनी दर्शपूर्णमासाङ्गभूतपत्नीसंयाजाख्यस्य कर्मणोऽङ्गम्। पत्नीसंयाजे चान्यत्र घृतं विहितम्। अतस्तेन वाक्येन प्रकृतेन च वाक्येन पत्नीसंयाजे घृतजाघन्योर्विकल्पः। तथाच नात्रोत्कर्षो जाघन्याः दर्शपूर्णमासप्रकरणादिति ।

एतदेवाभिप्रेत्याह—विधेयेति। 'जाघनी'—'यागे' दर्शपूर्णमासप्रकरणगतपत्नीसंयाजाख्ये कर्मणि तत्साधनतया—'विधीयते'—नास्याः प्रकरणादुत्कर्ष इत्याशयः॥ १५ ॥

## (१६) ३।३।२४-३१ दीर्घसंस्थासु तर्दनम्

(१) वाक्यप्रकरणयोर्विरोधे विनियोगविचारः प्रवर्तते ।

(२) ज्योतिष्टोमे श्रूयते—'दीर्घसोमे सन्तृद्येद् धृत्यै' इति । तस्यार्थः-सोमयागविशेषो दीर्घसोमः—तस्मिन् सोमाभिषवाधारयोरधिषवणफलकयोः सन्तर्दनम् [ अन्योन्यनियोगेन शैथिल्यं मा भूदिति दृढसंश्लेषणम् ] कार्यमिति ।

(३) तत्र सन्देहः—इदं सन्तर्दनं किं प्रकरणबलात् ज्योतिष्टोमस्यैवाङ्गमुत वाक्यबलात् दीर्घसोमनामकस्य यागान्तरस्येति ।

(४) पूर्वपक्षः—प्रकरणबलात् प्रकृतावेव ज्योतिष्टोमे सन्तर्दनस्य सन्निवेशः। तस्मिन्नेव च 'दीर्घसोम' इति नाम्नः—'दीर्घस्य यजमानस्य सोम' इति व्युत्पत्त्या—अन्वयः। इति ।

(५) सिद्धान्तः—षष्ठीसमासात् कर्मधारयो बलीयानिति निषादस्थपत्यधिकरणे स्थापयिष्यते। तथा सति 'दीर्घसोम' इत्यत्र दीर्घत्वं सोमस्य धर्मो न यजमानस्य। न चास्य नाम्नो ज्योतिष्टोमेऽन्वयः दीर्घशब्दवैयर्थ्यापत्तेः। तस्मात् प्रकृतिरूपं सोमयागं ज्योतिष्टोमं व्यावर्तयितुमेवायं दीर्घशब्दः प्रयुक्त इति निश्चीयते। विकृतिषु हि उक्थ्यादिषु ग्रहाधिक्याद् भवत्येव प्रकृत्यपेक्षया दीर्घत्वम्—द्विरात्रादिषु चावृत्त्या दीर्घत्वम्। तस्माद् वाक्येन प्रकरणं बाधित्वा विकृतिष्वेव सन्तर्दनस्य सन्निवेशः—न तु प्रकृतौ ज्योतिष्टोमे—तत्सम्बन्धेन सन्तर्दनस्य साक्षाद् बाधितत्वात ('अधिषवणेन सन्तृणत्तीति' साक्षाच्छ्रुत्या ।

एतदेवाभिप्रेत्याह—दीर्घेति । 'दीर्घसंस्थासु' ज्योतिष्टोमापेक्षया दीर्घासु संस्थासु उक्थ्याद्यासु—'सन्तर्दनम्'—सन्निविशत इति शेषः॥१६॥

## (१७) ३।३।३२-३३ नाद्यप्रयोगे प्रावर्ग्यम्

(१) वाक्यप्रकरणविरोधे विचारान्तरम् ।

(२) ज्योतिष्टोमे प्रवर्ग्याख्यं कर्म प्रकृत्य श्रूयते—'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति ।

(३) तत्र सन्देहः—अयं प्रवर्ग्यप्रतिषेधः किं ज्योतिष्टोमे सर्वत्र समवैति—उत तस्य प्रथमे एव प्रयोगे इति ।

(४) पूर्वपक्षः—ज्योतिष्टोमे सर्वत्र प्रतिषेधः—प्रकरणबलात्—अथ च 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम' इत्यत्र ज्योतिष्टोमस्यैव प्रथमयज्ञत्वेनाभिधानादिति ।

(५) सिद्धान्तः—'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति' इति वाक्येन क्रतौ प्रवर्ग्यं विहितम् । तन्निषेधस्य च तत्र सम्बन्धः प्रकरणबलादेव लभ्यते । तथाच वाक्येन प्रकरणस्य बाधितत्वात् न सम्भवात सर्वत्र ज्योतिष्टोमप्रयोगे प्रवर्ग्यनिषेधः । सम्भवति च साक्षाच्छ्रुतस्य निषेधस्य सम्बन्धो ज्योतिष्टोमस्य प्रथमे प्रयोगे—तथैव तस्य श्रुतत्वात्—निषेधवाक्ये च प्रथमशब्देन निषेधस्य प्रयोगपरत्वनिर्णयात्—इति ।

एतदेवाभिप्रेत्याह—नाद्येति । 'आद्यप्रयोगे'—ज्योतिष्टोमस्य प्रथमे प्रयोगे—'प्रावर्ग्यं न भवति—भवति तत्र प्रवर्ग्यनिषेध इत्याशयः ॥ १७ ॥

## (१८) ३।३।३४ विकृतौ पौष्णपेषणम्

(१) वाक्यप्रकरणविरोधे विचारान्तरम् । [यद्यपि प्रागुक्तसन्तर्दनन्यायेनैष गतस्तथापि आगाम्यधिकरणद्वयविचारप्रस्तावनारूपेणात्र प्रवर्तते ]

(२) दर्शपूर्णमासप्रकरणे श्रूयते—'तस्मात् पूषा प्रपिष्टभागः अदन्तको हि स' इति ।

(३) तत्र सन्देहः—पेषणस्य प्रकृतौ सन्निवेश उत विकृताविति ।

(४) पूर्वपक्षः—प्रकरणबलात् प्रकृतावेव दर्शपूर्णमासकर्मण्यस्य निवेश इति ।

(५) सिद्धान्तः—वाक्येन प्रकरणस्य बाधात् विकृतावेव पेषणस्य निवेशः—विकृतावेव दन्तरहितस्य पूष्णो देवतात्वम् पिष्टभागत्वं चोक्तमिति ।

एतदेवाभिप्रेत्याह—विकृताविति । 'विकृतौ' विकृतियागे—नतु प्रकृतिभूतदर्शपूर्णमासयागे—'पौष्णपेषणम्' पौष्णस्य पूष्णो भागस्य पेषणम्—निविशत इति शेषः ॥ १८ ॥

## (१९) ३।३।३५–३८ चरावेव पिषिः पौष्णे

(१)-(२) पौष्णपेषणविषये विचारः।

(३) सन्देहः—पौष्णस्य भागस्य यत् पेषणं विहितं तत् किं चरावेव भवति—उत चरौ पुरोडाशे पशौ चेति सर्वद्रव्येषु—इति।

(४) पूर्वपक्षः—वाक्येन निर्विशेषेण विहितत्वात् सर्वेषु द्रव्येषु पेषणमिति।

(५) सिद्धान्तः—पुरोडाशे हि स्वभावत एव प्राप्तत्वान्नास्त्यावश्यकता पेषणस्य विधानस्य। पशौ च पेषणे कृते हृदयाद्याकारनाशे सति हृदयस्याग्रेऽवद्यतीति विहितावदानानामसम्भवः स्यात्। एवं च नान्वयः पेषणविधेः पुरोडाशे पशौ वा। तस्मात् चरावेव पेषणमिति।

एतदेवाभिप्रेत्याह—चराविति। 'पौष्णे'—पूष्णो भागभूते—'चरौ एव'—न तु पुरोडाशे पशौ वा—'पिषिः' पेषणम्—अन्वेतीति शेषः॥१९॥

## (२०) ३।३।३९–४६ नैन्द्रापौष्णेऽस्ति पेषणम्

(१) पौष्णविषये विचारान्तरम्।

(२)—पौष्णो भागः क्वचिदेकदैवत्यः पूषमात्रदेवताकः क्वचिद् द्विदैवत्यः। तथाहि राजसूये श्रूयते 'सोमापौष्णं चरुं निर्वपति—ऐन्द्रापौष्णं चरुम्' इति।

(३) तत्र सन्देहः—पौष्णभागस्य पेषणं यद् विहितं तत् किमेकदैवत्ये पूषमात्रदेवताके भागे निविशते—उत द्विदैवत्ये इन्द्रापूषदेवताकेऽपीति।

(४) पूर्वपक्षः—द्विदैवत्येऽपि चरावदन्तस्य पूष्णः सत्त्वात् तत्रापि पेषणं कर्तव्यमेवेति।

(५) सिद्धान्तः—याग एव पेषणस्य प्रयोजको न देवता—यागमन्तरेण केवलदेवतायाः फलजनकत्वाभावात्। एवं च पौष्णस्य यागस्य पेषणप्रयोजकत्वे सिद्धे तत् पेषणं द्विदैवत्ये यागे न गन्तुमर्हति। तथा च ऐन्द्रापौष्णे चरौ न भवति पेषणमिति।

एतदेवाभिप्रेत्याह—नैन्द्रापौष्ण इति। 'ऐन्द्रापौष्णे' इन्द्रपूषदेवताके द्विदैवत्ये चरौ—'पेषणं नास्ति'॥ २०॥

पादेऽस्मिन् विंशतिर्न्याया भाष्यकारेण वर्णिताः।

स्पष्टार्थम्॥

इति तृतीयस्य तृतीयः।

# अथ तृतीयाध्यायस्य चतुर्थः पादः ।

## (१) ३।४।१-९ स्तुतिर्निवीतं विहितोपवीतेः

(१) श्रुतिप्रकरणयोर्विरोधे लिङ्गवाक्यविरोधे च विनियोगविचारोऽनुवर्तते ।

(२) दर्शपूर्णमासयोः श्रूयते—'निवीतम्मनुष्यधर्मः—प्राचीनावीतं पितृणाम्—उपवीतं देवानाम्—उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति ।

(३) निवीतम्मनुष्यधर्म इत्यत्र सन्देहः प्रथमः—किमयं विधिरुतार्थवादः । द्वितीयः—यदि विधिः किन्निवीतं मनुष्यधर्मत्वेन विधीयते उत कर्मधर्मत्वेनेति ।

(४) पूर्वपक्षः—निवीतस्य विधिरेवायम् । मनुष्याणामिति च षष्ठ्या पुरुषधर्मत्वेनैव तद् विधीयते । तथाच सर्वपुरुषसाधारणोऽयं धर्मो यन्निवीतधारणम् । अथवा आचार्यातिथ्यादिमनुष्यार्चनादिकर्माङ्गमिदमिति ॥ द्वितीयः पूर्वपक्षस्तु—प्रकरणबलाद्दर्शपूर्णमासान्तर्गतप्रयाजादिकर्मधर्मत्वेनैव निवीतं विधीयते । तथाच प्रयाजादिकर्मसम्बन्धिपुरुषधर्मो निवीतमिति षष्ठ्यनुगृहीतप्रकरणबलादवसेयमिति ।

(५) सिद्धान्तः—अत्रोक्तं निवीतादिकं वासोविषयं न यज्ञसूत्रविषयम् । वाससो निवीतत्वं च सौकर्यरूपदृष्टार्थत्वेन प्राप्तमेवेति न तस्य विधानं युक्तम् । न च प्रकरणात् प्रयाजादिकर्माङ्गत्वेन विधानम्—वाक्यभेदप्रसङ्गात् । तथाहि 'उपव्ययत' इत्यनेन वाक्यांशेनोपवीतं विधीयते—इत्यवश्यमेव स्वीकार्यम् । [ अन्यथा 'देवलक्ष्ममेव तत् कुरुते' इति स्तुतिर्वृथव स्यात् । ] तथासति यद्यपरेण वाक्यांशेन निवीतं विधीयेत भिद्येतैव तर्हि वाक्यम् । सम्भवति च निवीतप्राचीनावीतयोरुपवीतस्तुत्यर्थत्वेनैकवाक्यत्वम् । सम्भवति चैकवाक्यत्वे वाक्यभेदेन पृथग्विधानमयुक्तम् । एवं च 'निवीतप्राचीनावीते मनुष्यपितृविषयत्वाद् दैविके कर्मण्ययोग्ये उपवीतमेव तु योग्यम्' इति पर्यवसितः समस्तवाक्यार्थः । तथा च निवीतमित्यर्थवाद एव । ततश्च किन्धर्मत्वेन विधिरयमिति संशय एव नोदेतीति ।

एतदेवाभिप्रेत्याह—स्तुतिरिति । 'विहितायाः' उपव्ययत इत्यनेन विहितायाः—'उपवीतेः'—'स्तुतिः' अर्थवाद एव—'निवीतम्'—न त्वयं विधिः पुरुषधर्मस्य क्रतुधर्मस्य वेत्याशयः ।

इतोऽनन्तरं वार्तिकादौ चत्वार्यधिकरणानि दशमादिपञ्चदशसूत्रा-

न्तात्मकानि। नैतानि भाष्ये धृतानि। अत एव मण्डनाचार्येणापि परित्यक्तानि वेदितव्यानि। तानि च—(१) उपवीतस्य दर्शपूर्णमासाङ्गत्वम्—उपवीतस्य विधित्वम्—(३) उपवीतोदग्रतयोरनुवादत्वम्—(४) समिद्धारणस्य विधित्वमिति।

## (२) ३।४।१६ प्राचीनवंशस्तुतये प्रतीची।

(१) प्रथमाधिकरणसदृश एवायं विचारः।

(२) ज्योतिष्टोमे श्रूयते—'प्राचीनवंशं करोति—देवमनुष्या दिशो व्यभजन्त—प्राचीं देवाः दक्षिणां पितरः प्रतीचीं मनुष्याः उदीचीं रुद्राः—यत् प्राचीनवंशं करोति देवलोकमेव तद्यजमान उपावर्तते' इति।

(३) तत्र सन्देहः—'प्रतीचीम्मनुष्या'इति किं विधिरुतार्थवादः।

(४) पूर्वपक्षः—विधिरेवायम्—'मनुष्याः प्रतीचीं विभजेयुः' इति च तस्यार्थः। तस्यैव च विधेः स्तुतिः पुराकल्परूपा—'प्रतीचीं मनुष्या व्यभजन्त' इति।

(५) सिद्धान्तः—यस्य मण्डपविशेषस्योपरिवंशाः प्रागग्रा भवन्ति स 'प्राचीनवंशः'। तस्यैवायं विधिः—तद्विधिनैव सहैकवाक्यत्वम् 'प्रतीचीम्मनुष्या व्यभजन्त इत्यस्य। तथा चार्थवाद एवायन्न विधिरिति।

एतदेवाभिप्रेत्याह—प्राचीनेति। 'प्राचीनवंशस्य' मण्डपविशेषस्य 'स्तुतये' अर्थवाद एव—'प्रतीची' मण्डपसम्बन्धेन प्रतीच्युक्तिरिति—न त्वयं विधिरित्याशयः॥ २॥

## (३) ३।१।१७ पूर्णादितन्त्रं विहितं स्तवाय

(१) निवीतविचारस्यैवायं प्रपञ्चः।

(२)—ज्योतिष्टोमे श्रूयते 'यत् पूर्णं तन्मनुष्याणामुपरि, अर्धो देवानाम्, अर्धः पितृणाम्' इति। तथा दर्शपूर्णमासयोः पिण्डपितृयज्ञे श्रूयते 'यत् परुषि दितं तद् देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत् समूलं तत् पितृणाम्, समूलं बर्हिर्भवति व्यावृत्त्यै'। [ 'परुषि' पर्वणि 'दितं' खण्डितम्। तथा ज्योतिष्टोमे दीक्षार्थाभ्यङ्गे श्रूयते—घृतं देवानाम् मस्तु पितृणाम्, निष्पक्वम्मनुष्याणाम्, तद्वा एतत् सर्वदेवत्यं यन्नवनीतं, यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति। 'मस्तु' दधिभवं मण्डम्, 'निष्पक्वं' शिरसि प्रक्षेप्तुमीषद्विलीनं नवनीतं तक्रं वा। तथाच दर्शपूर्णमासयोः पुरोडाशप्रकरणे श्रूयते—'यो विदग्धः स नैर्ऋतः योऽशृतः स रौद्रः, यः शृतः स दैवः, तस्मादविदहता श्रपयितव्यः स दैवत्वाय'। [ 'विदग्धः' अतिपक्वः 'अशृतः' अपक्वः। ]

(३) तत्र सन्देहः--पूर्णत्वाद्युक्तयो विधयोऽर्थवादा वा-अथ विधयः किं पूर्णत्वादयो मनुष्यधर्मत्वेन विहिता उत कर्मधर्मत्वेनेति ।

(४) पूर्वपक्षः--अर्थवत्त्वात् मनुष्यसम्बन्धाच्च पूर्णत्वादयो मनुष्य-धर्मा एव—तेषामेव चात्र विधय इति ।

(५) सिद्धान्तः--मन्थनपात्रस्याधोभागमात्रेण पूरणस्य–बर्हिषि समूलच्छेदस्य- अभ्यङ्गे नवनीतस्य—पुरोडाशे यथोचितपाकस्य—विधेयतयाऽवशिष्टं सर्वं तस्य विधेयस्य स्तावकमेव । अतोऽर्थवादा एवैते न विधय इति ।

एतदेवाभिप्रेत्याह—पूर्णेति । 'पूर्णादितन्त्रम्'—'पूर्णा' 'परुषि दितम्' इत्यादिवाक्यजातम्—'स्तवाय' तत्तद्विधेयस्य स्तुत्यर्थमेव—'विहितम्' उपात्तम्—न विध्यर्थमिति शेषः ॥ ७ ॥

## (८) ३।४।१८-१९ क्रत्वङ्गभावोऽनृतवारणस्य

(१) श्रुतिलिङ्गादिबलाबलविचारप्रकरणे विधिवाक्यानां विचारानन्तरं निषेधवाक्यानि विचार्यन्ते ।

(२) दर्शपूर्णमासयोराम्नायते—'नानृतं वदेत्' इति ।

(३) तत्र सन्देहः--किमत्रानृतवदनप्रतिषेधः केवलपुरुषधर्मत्वेन विधीयते—उत क्रतुयुक्तपुरुषधर्मत्वेनानूद्यते—उत केवलक्रतुधर्मत्वेनानूद्यते—उत क्रत्वर्थत्वेन विधीयत इति ।

(४) पूर्वपक्षः—(१)प्रतियोगिनोऽनृतवदनस्य पुरुषधर्मत्वात् तन्निषेधस्यापि पुरुषधर्मत्वमेव--तच्चात्र विधीयते । (२) अथवा आख्यातश्रुतेः प्रकरणस्य चाविरोधाय क्रतुयुक्तपुरुषधर्मत्वमेवानृतवदननिषेधस्य--स्मार्तनिषेधेन च तस्य प्राप्तत्वात् अस्मिन् वाक्ये तद् अनूद्यते । (२) अथवा प्रकरणबलात् प्रयाजादिवत् क्रतावेवारादुपकारकत्वमेवानृतवदननिषेधस्य । अस्य च निषेधस्य सार्वत्रिकस्य क्रतावपि प्राप्तत्वादस्मिन् वाक्ये अनुवाद एवेति त्रयोऽत्र पूर्वपक्षाः ।

(५) सिद्धान्तः—'सत्यमेव वदेन्नानृतम्' इत्यनेन स्मार्तेन नियमेनानृतवदननिषेधस्य पुरुषधर्मत्वेन प्राप्तत्वात् प्रकृतवाक्ये यो निषेधः स क्रत्वर्थ एव । क्रतौ चान्यतोऽप्राप्तत्वात् अत्र विधिरेव तस्य, नानुवादः । एतद्व्यतिक्रमे च क्रतोरेव वैगुण्यम्—अतश्च क्रतुगाम्येव तत्प्रायश्चित्तमपि । पुरुषार्थनियमातिक्रमे तु पुरुषस्य प्रत्यवायः स्मार्तं च प्रायश्चित्तमिति विशेष इति ।

एतदेवाभिप्रेत्याह—क्रत्वङ्गभाव इति । 'अनृतवारणस्य' अनृतवदननिषेधस्य—'क्रत्वङ्गभावः' क्रतुधर्मत्वम्—'विधीयते' इति शेषः ॥ ८ ॥

## (६) ३।४।२०—२२ जञ्जभ्यमानः प्रकृतोऽधिकारी ।

(१) श्रुतिलिङ्गादिविरोधचिन्ता ऽनुवर्तते ।

(२) दर्शपूर्णमासप्रकरणे श्रूयते—'प्राणो वै दक्षः अपानः क्रतुः तस्मात् जञ्जभ्यमानो ब्रूयात्—मयि दक्षक्रतू इति प्राणापानावेवात्मन्यधत्त' इति । [ गात्रविनामेन विदारितमुखपुरुषो 'जञ्जभ्यमानः' ]

(३) तत्र सन्देहः—किमयन्धर्मः यज्ञे निविशते उत पुरुषगतत्वेन नीयत इति ।

(४) पूर्वपक्षः—वाक्यबलात् पुरुषगत एवायं धर्मः । 'ब्रूयात्' इति पुरुषश्रुतेः पुरुषप्रयत्नस्य विवक्षितत्वात् वाक्यबलेन प्रकरणादुत्कर्षः ।

(५) सिद्धान्तः—क्रतावपि जञ्जभ्यमानपुरुषसम्भवात् वाक्यप्रकरणयोर्विरोधाभावे सति उभाभ्यां क्रतुयुक्तपुरुषसंस्कारकत्वमेव मन्त्रवचनस्य प्रतीयते इति ।

एतदेवाभिप्रेत्याह—जञ्जभ्यमान इति । 'प्रकृतः' प्राकरणिकक्रतुसम्बद्धः—जञ्जभ्यमानः' पुरुषः—'अधिकारी' मन्त्रपाठे इति शेषः । प्राकरणिकदर्शपूर्णमाससंयुक्तपुरुषधर्म एव मन्त्रपाठ इति भावः ॥ ५ ॥

## (६) ३।४।१७ पुंसो निषेधः शतयातनोक्त्या

(१) प्रतिषेधान्तरस्याङ्गत्वविचारो वर्तते ।

(२) दर्शपूर्णमासप्रकरणे श्रूयते—'यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्—तस्माद् ब्राह्मणाय नावगुरेत्' इति ।

(३) तत्र सन्देहः—अयं ब्राह्मणावगुरणनिषेधः किं क्रत्वर्थं उत पुरुषार्थं इति ।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन क्रत्वर्थ एवायन्निषेधः । तथाच यज्ञकाले ब्राह्मणावगुरणन्न कर्तव्यमित्यस्यार्थः ।

(५) सिद्धान्तः—पूर्वाधिकरणन्यायोऽत्र नावतरति । तत्र हि प्राणापानधारणस्य आत्मनि पुरुषे प्रागेव सिद्धत्वात्तस्य मन्त्रोच्चारणफलत्वन्न सम्भवति—अत एव क्रत्वङ्गत्वम् । इह तु शतसंवत्सरयातनारूपस्य ब्राह्मणावगुरणफलस्यात्मनि प्रागसिद्धत्वात् यातनापरिहारस्य निषेधफलस्यात्मनि पुरुष एव सम्भवः । अतोऽत्र निषेधस्य केवलपुरुषार्थत्वम्—ततश्च प्रकरणादस्योत्कर्षो न्याय्यः इति ।

एतदेवाभिप्रेत्याह—पुंस इति । 'शतयातनोक्त्या' शतं यातयेदिति श्रुतिबलेन—'निषेधः' ब्राह्मणाय नावगुरेदित्येवंरूपः—'पुंसः' पुरुषार्थः एवेत्यर्थः ॥ ७ ॥

## (७) ३।४।२४–२५ सर्वार्थताऽसंवदतेर्मलिन्या

(१) निषेधान्तरविचारः ।

(२) दर्शपूर्णमासप्रकरणे श्रूयते—'मलवद्वाससा न संवदेत' इति । [ 'मलवद्वासाः' रजस्वला स्त्री ] ।

(३) तत्र सन्देहः—किं मलवद्वाससा स्त्रिया सह संवादस्य दर्शपूर्णमासाङ्गस्य प्रतिषेधात् अस्य प्रतिषेधस्य क्रत्वङ्गता—उत पुरुषस्य सर्वत्र संवादस्य प्रतिषेधात् अस्य पुरुषाङ्गत्वमिति ।

(४) पूर्वपक्षः—प्रकरणबलात् संवादनिषेधस्य क्रत्वङ्गतैव । तथाच दर्शपूर्णमासानुष्ठाने प्रसक्तः पुरुषः रजस्वलया न संवदेतेत्यस्यार्थ इति ।

(५) सिद्धान्तः—'यस्य व्रत्येऽहनि पत्न्यनालम्भुका भवति तामपरुध्य यजेतेति' रजस्वलायाः पत्न्या यज्ञावसरेऽसत्त्वात्तया सह संवादस्याप्रसक्तत्वात्तस्य प्रतिषेधोऽन्याय्यः । ततश्च सार्वत्रिककेवलपुरुषार्थताऽस्य निषेधस्य । क्वचिदपि रजस्वलया संवादो न कार्य इति तस्यार्थः ।

एतदेवाभिप्रेत्याह—सर्वार्थतेति । 'मलिन्या' रजस्वलया—'असंवदतेः'—संवादप्रतिषेधस्य—'सर्वार्थता' सकलसाधारणपुरुषार्थत्वम्—न केवलयज्ञप्रसक्तपुरुषार्थत्वमित्याशयः ॥ ७ ॥

## (८) ३।४।२६–३० पुंसो हिरण्यस्य धृतिः क्रतोर्न ।

(१) प्रकरणविशेषासम्बद्धानामङ्गत्वविचारः प्रस्तूयते ।

(२) अनारभ्य श्रूयते—'तस्मात् सुवर्णं हिरण्यं धार्यम्—सुवर्ण एव भवति दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति ।

(३) तत्र सन्देहः—अत्रोक्तं हिरण्यधारणं क्रत्वङ्गमुत पुरुषार्थमिति ।

(४) पूर्वपक्षः—यदेतद् हिरण्यधारणं तस्य वेदविहितत्वेन वैदिकक्रियारूपत्वात् क्रतुस्मारकत्वं ततश्चास्य क्रत्वङ्गतैव—तथाच क्रतूपयुक्तं हिरण्यं धारणेन संस्क्रियत इति भावः इति ।

(५) सिद्धान्तः—वाक्यमिदं यदि क्रतुप्रकरणे श्रुतं स्यात् सम्भवेत्तर्हि तस्य क्रतुस्मारकत्वम् । इदं त्वनारभ्याधीतम् । न च हिरण्यं क्रतावव्यभिचरितम्—येन क्रतुं स्मारयेत् । एवं च क्रतौ नियमने प्रमाणाभावात् केवलपुरुषार्थतैव धारणस्योचितेति ।

एतदेवाभिप्रेत्याह पुंस इति । 'हिरण्यस्य धृतिः' धारणं—'पुंसः' पुरुषाङ्गमेव—'न क्रतोः' न क्रत्वङ्गमित्यर्थः ॥ ८ ॥

## (९) ३।४।३१–३३ जयादयो वैदिकहोमशेषाः ।

(१) अनारभ्याम्नातानां वाक्येन सिद्धकत्वङ्गभावानां पदार्थानां सम्बन्धविशेषा इदानीं विचार्यन्ते ।

(२) अनारभ्य श्रूयते—'येन कर्मणा ईर्त्सेत् तत्र जयां जुहुयात्—राष्ट्रभृतो जुहोति अभ्यातानाञ्जुहोति' इति [ 'ईर्त्सेत्' ऋद्धिमिच्छेत्—'जया' चित्तं च स्वाहेत्याद्याहुतिरूपा—ऋताषाडित्याद्याहुतिरूपा 'राष्ट्रभृतः'—अग्निर्भूतानामित्याद्याहुतिरूपा 'अभ्यातानाः' ] ।

(३) तत्र सन्देहः—एता आहुतयः किं लौकिकेषु कृष्यादिषु वैदिकेषु अग्निहोत्रादिषु सर्वेषु निविशन्ते उत वैदिकेष्वेवेति ।

(४) पूर्वपक्षः—वैदिककर्मणेव लौकिककर्मणापि ऋद्धेरिष्यमाणत्वात् सङ्कोचे प्रमाणाभावात् जयादिहोमः सर्वकर्माङ्गमिति ।

(५) सिद्धान्तः 'यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतः' इति वाक्येन होममुद्दिश्याहवनीयाग्निविधानम्—न च कृष्यादौ आहवनीयाग्निसम्भवः । तस्मात् आहवनीयवत्सु वैदिककर्मस्वेव जयादिहोमानां निवेश इति ।

एतदेवाभिप्रेत्याह—जयादय इति । 'जयादयः' होमाः—'वैदिकानामेव' 'होमानां' 'शेषाः' अङ्गभूताः—न लौकिकानामित्याशयः ॥ ९ ॥

## (१०) ३।४।३४-३५ अश्वग्रहे वैदिकजेऽङ्गमिष्टिः

(१) अनारभ्याधीतानि कानिचित्कर्माणि वैदिककर्मप्रयुक्तान्युत लौकिकव्यवहारप्रयुक्तानीति विचार्यते ।

(२) अस्त्यश्वप्रतिग्रहेष्टिः—'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति—यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्' इति । [ प्रतिग्रहपदेनात्र दानं विवक्षितमित्यग्रिमेऽधिकरणे निर्णेष्यते ] ।

(३) तत्र सन्देहः—किमियमिष्टिर्लौकिकेऽश्वप्रतिग्रहे कार्या उत वैदिके इति । [लोके भिक्षमाणो वाऽभिक्षमाणो यत्राश्वं लभते तत्राश्वप्रतिग्रहो लौकिकः पौण्डरीकयज्ञेऽश्वसहस्रं दक्षिणा ज्योतिष्टोमे गौश्चाश्वश्चेत्यश्वप्रतिग्रहो वैदिकः] ।

(४) पूर्वपक्षः—विशेषाश्रवणात् लौकिकवैदिकोभयप्रतिग्रहप्रयुक्तेयमिष्टिः [ अथवा 'न केसरिणो ददाति' इति लौकिकाश्वदानस्य निषिद्धत्वात् तस्यैव दानस्य प्रायश्चितरूपेयमिष्टिर्लौकिकदानमात्रे प्रयुक्तेति अपरः पक्षः ] ।

(५) सिद्धान्तः—'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति' इत्यश्वप्रतिग्रहे जलोदरव्याधिरूपो दृष्ट एव दोषः श्रूयते । न च लौकिकस्याश्वप्रतिग्रहस्य तद्व्याधिजनकत्वं कुत्रापि दृश्यते । वैदिकस्य तु

सम्भवत्येव जन्मान्तरविषयं दोषश्रवणम् । अतो वैदिके एवाश्वप्रतिग्रहे इयमिष्टिरिति ।

एतदेवाभिप्रेत्याह—अश्वग्रह इति । 'वैदिकजे' वैदिककर्माङ्गभूते एव 'अश्वग्रहे' अश्वप्रतिग्रहे—'इष्टिः' अश्वप्रतिग्रहेष्टिः—'अङ्गम्' इति सम्बन्धः ॥ १० ॥

## (११) ३।४।३६-३७ उपक्रमात् सा तुरगस्य दातुः ।

(१) पूर्वाधिकरणविषयस्याश्वप्रतिग्रहेष्टेः कर्तृविषयो विचारः प्रस्तूयते ।

(२) [ पूर्वाधिकरणोदाहृतमेवात्रापि विषयवाक्यम् ] ।

(३) तत्र सन्देहः—इयमश्वप्रतिग्रहेष्टिः किं यस्मै अश्वो दीयते तेन प्रतिग्रहकर्त्रा कर्तव्या—उत यो ददाति तेन प्रतिग्रहकारयित्रेति ।

(४) पूर्वपक्षः—'प्रतिगृह्णीयात्' इति स्पष्टश्रवणात् प्रतिग्रहीतुरेवेष्टिरिति ।

(५) सिद्धान्तः—उदाहृतवाक्यस्योपक्रम एवंरूप उपलभ्यते—'प्रजापतिर्वरुणायाश्वमनयत् [ दत्तवानित्यर्थः ] स स्वां देवतामार्छत् [ वरुणदेवतां जलोदररोगप्रदां प्राप्तवानित्यर्थः ] स पर्यदीर्यत [ रोगेण विदीर्णो बभूवेत्यर्थः ] स एतं वारुणं चतुष्कपालमपश्यत्—तं निरवपत्—ततो वै स वरुणपाशादमुच्यत' इति । अनेन चोपक्रमेण स्पष्टं सूच्यते यदश्वदातुरेवेयमिष्टिरिति । असञ्जातविरोध्युपक्रमबलेन च विधिवाक्येऽपि प्रतिगृह्णीयात्'इतिपदं 'प्रतिग्राहयेत्' इत्येवमन्तर्भावितणिजर्थपरतयैव नेयमिति । प्रतिग्रहस्य प्रयोजककर्त्रा दात्रैवेयमिष्टिः कर्तव्येति ।

एतदेवाभिप्रेत्याह—उपक्रमादिति । 'उपक्रमात्' उदाहृतवाक्यस्योपक्रमवाक्यबलात्—'सा' अश्वप्रतिग्रहेष्टिः—'तुरगस्य दातुः' दात्रैव कर्तव्या, न प्रतिग्रहीत्रेत्यर्थः ॥ ११ ॥

## (१२) ३।४।३८-३९ वेदोक्तपाने वमने चरुः स्यात्

(१) पूर्वाधिकरणद्वयसदृशमेव विचारान्तरम् ।

(२) अनारभ्य श्रूयते—'सौमेन्द्रं चरुं निर्वपेत् श्यामाकं सोमवामिनः' इति ।

(३) तत्र सन्देहः—लौकिकस्य सोमपानस्य वमने सौमेन्द्रचरुनिर्वापः—उत वैदिकस्येति । [ 'वैदिकं' सोमपानं ज्योतिष्टोमे तद्विकृतिषु सत्त्रात्रेषु दशरात्रेषु च, 'लौकिकं' सोमपानं यत् शरीरधातुसाम्यार्थं क्रियते ] ।

(४) पूर्वपक्षः—'इन्द्रियेण वा एष वीर्येण व्यृध्यते यः सोमं वमति' इति सोमवमने दृष्टदोषः श्रूयते। स च शरीरधातुसाम्यार्थपानव्यापद्येव सम्भवति। तद्दोषशान्तये एव च चरुनिर्वापविधानम्। तस्मात् लौकिके एव पाने वमने चरुनिर्वाप इति।

(५) सिद्धान्तः—लौकिकं सोमपानं तु वमनार्थमेव क्रियते। अतस्तद्वमने दोषो न सम्भवति। तस्मात् यद् दोषश्रवणमुदाहृतं तद् वैदिक एव सोमपाने सम्बध्यते। वैदिकं तु पानं जरायतुमेव भवति, न वमितुम्। अतोऽत्रैव वमननिमित्तकं प्रायश्चित्तं स्यात्। तस्मात् वैदिक एव पाने वमने वेदोक्तदोषसमाधानार्थं प्रायश्चित्तं सोमैन्द्रचरुनिर्वापरूपं भवतीति।

एतदेवाभिप्रेत्याह—वेदोक्तेति। 'वेदोक्तं' वैदिककर्माङ्गत्वेन विहितं यत् 'पानं' सोमस्य तस्मिन् एव—'वमने' सति—'चरुः' सोमैन्द्रचरुनिर्वापः—'स्यात्' करणीय इति शेषः—न तु लौकिकपानवमने इत्याशयः ॥ १२ ॥

## (१३) ३।४।४०-४२ स्यात् स्वामिनो वै वमने स यागः

(१) पूर्वाधिकरणप्रसक्त एवायं विचारः।

(२) पूर्वाधिकरणोदाहृतमेवात्र विषयवाक्यम्।

(३) तत्र सन्देहः—यदेतत् वैदिकसोमपानवमने प्रायश्चित्तं सोमैन्द्रचरुनिर्वापाख्यं कर्म तत् किं यज्ञसम्बन्धिनां सर्वेषां ऋत्विजां यजमानस्य च वमने स्यात्—उत यजमानस्यैवेति।

(४) पूर्वपक्षः—विशेषाभिधानाभावात् ऋत्विजां यजमानस्य च वमने स्यात् प्रायश्चित्तमिति।

(५) सिद्धान्तः—'यो वमति स निर्वपात' इति वचनेन निर्वप्तुरेव वमनं चरुनिमित्तम्। निर्वप्ता च यजमानः। तस्मात् यजमानस्यैव वमने चरुविधिः इति।

एतदेवाभिप्रेत्याह—स्यादिति। 'स्वामिनः' 'वै' यजमानस्य एव—'वमने' 'स' सोमैन्द्रचरुरूपः—'यागः' 'स्यात्' कर्तव्य इति ॥ १३ ॥

## (१४) ३।४।४२-४७ न सर्वदानं हविषोऽवखण्ड्य

(१) अङ्गविषये विचारविशेषः।

(२) दर्शपूर्णमासयोः श्रूयते—'आग्नेयोऽष्टाकपाल' इति। [ अष्टसु कपालेषु सम्पादितः पुरोडाशोऽ'ष्टाकपालः' ]

(३) तत्र सन्देहः—किं कृत्स्नोऽपि पुरोडाशोऽग्नये त्यक्तव्यः—उत किञ्चिद् दातव्यं किञ्चिच्छेषयितव्यमिति।

(४) पूर्वपक्षः—कृत्स्नोऽपि पुरोडाशोऽग्नये त्यक्तव्यः—आग्नेय इत्यत्र हि तद्धितेन कृत्स्नस्य पुरोडाशस्य अग्निदेवतासम्बन्धोऽवगम्यते । समस्तस्य त्यागमन्तरेण चैष न सम्भवतीति ।

(५) सिद्धान्तः—'द्विर्हविषोऽवद्यति' इत्यवदानद्वयं श्रूयते । अवदेयं चाङ्गुष्ठपर्वमात्रम् । ततो हविषः पुरोडाशस्य सकाशादङ्गुष्ठपर्वद्वयमात्रं खण्डयित्वा त्यक्तव्यम्—इतरत्तु शेषणीयम् । देवतासम्बन्धश्चांशद्वयमात्रेणापि सम्पद्यते इति ॥

एतदेवाभिप्रेत्याह—न सर्वेति । 'हविषः' पुरोडाशस्य—'सर्वदानं' कृत्स्नस्य त्यागो—'न' किन्तर्हि—'अवखण्ड्य' पुरोडाशात् पर्वद्वयमात्रमवच्छिद्यैव त्यक्तव्यमिति शेषः ॥ १४ ॥

## (१५) ४।८।४३-५१ शेषक्रिया सर्वहविर्भ्य एव

(१) अङ्गविषये विचारविशेषान्तरम् ।

(२) दर्शपूर्णमासयोः श्रूयते—'शेषात् स्विष्टकृतेऽवद्यति' इति ।

(३) तत्र सन्देहः—यदिदं शेषावदानम् तत् किं सर्वेषां हविषामाग्नेयादीनां त्रयाणामेव शेषैः कार्यमुत यस्य कस्यचिदेकस्येति ।

(४) पूर्वपक्षः—त्रयाणां हविषां यस्यकस्यचिदेकस्य हविषः शेषेण शेषावदानम् । तावतैव हि शास्त्रानुष्ठानं सिध्यति इति ।

(५) सिद्धान्तः—यद् हविर्यज्ञे उपयुक्तमभूत् तत्संस्कारार्थमेव शेषावदानं विहितम् । अयं च संस्कारः सर्वेषां हविषां समानमपेक्ष्यते । तस्मात् सर्वेषां हविषां शेषैः स्विष्टकृते शेषावदानम् इति ।

एतदेवाभिप्रेत्याह शेषक्रियेति । 'सर्वेभ्यो हविर्भ्यः'—त्रिभ्योऽपि आग्नेयादिभ्यः—'शेषक्रिया' शेषावदानं स्विष्टकृते कर्तव्यमिति शेषः ॥ १५ ॥

## (१६) ३।४।५२-५३ यद्येकतः सा हविषस्तु मुख्यात्

(१) पूर्वाधिकरणसम्बद्ध एव विचारः कृत्वाचिन्तारूपः ।

(२) पूर्वाधिकरणपूर्वपक्षं स्वीकृत्यापि एकस्यैव हविषः शेषावदाने—

(३) सन्देहः—किं यतः कुतश्चिद् एकस्मात् शेषावदानमुत प्रथमादेव हविष इति ।

(४) पूर्वपक्षः—नियामकस्याश्रुतत्वात् यस्मात्कस्माच्चिद् हविःशेषाच्छेषावदानं कर्तव्यमिति ।

(५) सिद्धान्तः—प्रथमस्यातिक्रमे मानाभावात् प्रथमहविःशेषेणैव संस्कारसिद्धौ इतरत्र प्राप्त्यभावादस्ति नियामकम् । तस्मात् प्रथमहविषः एव शेषावदानमिति ।

एतदेवाभिप्रेत्याह—यद्येकत इति। 'यदि' पूर्वाधिकरणपूर्वपक्षानु-सारेण—'एकतः' एकस्मादेव हविषः शेषावदानं स्यात् तदा 'सा' शेष-क्रिया 'मुख्यात्' प्रथमहविषः एव स्यादिति ॥ १६ ॥

(१७) ३।४।५४–५७ परिक्रयार्थो न भवेद् विभागः

(१) पुरोडाशविषये विचारान्तरम्।

(२) दर्शपूर्णमासप्रकरणे चतुर्धाकृतपुरोडाशविषये यजमानस्योक्तिः-'इदं ब्रह्मणः इदं होतुः इदमध्वर्योः इदमग्नीधः' इति।

(३) तत्र सन्देहः—योऽयं ऋत्विङ्नाम्ना निर्देशः पुरोडाशभागस्य स किं तेषां परिक्रयाय उत भक्षणायेति।

(४) पूर्वपक्षः—अयं निर्देशो न भक्षणार्थः, भक्षणस्याश्रुतत्वात्। ततो भृतिदानेन तान् तानृत्विजः परिक्रेतुमेवायम्। दक्षिणावत् पुरोडाशभा-गोऽपि ऋत्विजां वेतनमेवेति।

(५) सिद्धान्तः—'अग्नये जुष्टं निर्वपामि' इति कृत्स्नस्य पुरोडाशस्य देवतार्थं सङ्कल्पितत्वेन—तत्र यजमानस्य स्वामित्वमेव नास्ति—ततश्च न सम्भवति तद्भागस्य ऋत्विक्परिक्रयार्थं विनियोगः। भक्षणं तु उपयुक्त—हविःशेषस्य प्रतिपत्तिकर्मरूपं युक्तमेव। एवं च पुरोडाशस्य भक्षणार्ह-त्वाद् तद्भक्षणेन कर्मकराणामृत्विजामुत्साहजननार्थोऽयं निर्देश इति।

एतदभिप्रेत्याह—परिक्रयार्थ इति। 'विभागः' इदं ब्रह्मण इत्यादि पुरोडाशभागनिर्देशः 'परिक्रयार्थः' दक्षिणावत् ऋत्विजां वेतनदानार्थः-'न भवेत्'—अपि तु भक्षणार्थ एवेत्याशयः ॥ १७ ॥

न्यायास्तु पादे दश सप्त चात्र ॥

अस्मिन् पादे सप्तदशैवाधिकरणानि भाष्यकारमतेनेति ॥

इति चतुर्थः पादः ॥



## अथ पञ्चमः पादः ।

### (१) ३।५।१-१२ आज्यान्न शेषकार्याणि

(१) सर्वेभ्यो हविर्भ्यः शेषावदानमिति न्यायस्यापवादो विचार्यते।

(२) दर्शपूर्णमासयोः शेषकार्याणि श्रूयन्ते—'उत्तरार्धात् स्विष्टकृते समवद्यति' 'इडामुपह्वयति' इत्यादीनि ।

(३) तत्र सन्देहः—किमुपांशुयाजद्रव्यात् आज्यात् स्विष्टकृदादिशेषावदानं कर्तव्यमुत नेति ।

(४) पूर्वपक्षः—आज्यादपि शेषकार्यं कर्तव्यम्—'सर्वेभ्यो हविर्भ्यः समवद्यति' इति वाक्येन सर्वेभ्यो हविर्भ्यः शेषकार्यस्य प्रापितत्वादिति ।

(५) सिद्धान्तः—सम्पन्नप्रयोजनस्यैव हविर्द्रव्यस्य शेषः शेषावदानरूपां प्रतिपत्तिमपेक्षते । ध्रौवं त्वाज्यं न सम्पन्नप्रयोजनम् तेन कर्तव्यानामुपस्तरणादीनामसम्पन्नत्वात् । तस्मादाज्येन न भवति शेषकार्यमिति ।

एतदेवाभिप्रेत्याह—आज्यादिति । 'आज्यात्' ध्रौवाज्यात्—'शेषकार्याणि' शेषावदादानि—'न' कर्तव्यानीति शेषः ॥ १ ॥

### (२) ३।५।१३ साकम्प्रस्थाय्यके च न ।

(१) शेषकार्यप्रसङ्गेन विचारान्तरम् ।

(२) दर्शपूर्णमासयोः श्रूयते—'साकम्प्रस्थायीयेन यजेत' इति ।

(३) तत्र सन्देहः—अस्मिन् कर्म्मणि साकम्प्रस्थाय्यात् स्विष्टकृते शेषावदानम्भवति न वेति ।

(४) पूर्वपक्षः—दर्शपूर्णमासविकारो हि साकम्प्रस्थाय्यम् । अतः प्रकृतिवद् विकृतावपि भवत्येव शेषावदानमिति ।

(५) सिद्धान्तः—न भवत्यत्र शेषावदानम्—शेषस्यासत्त्वात् । 'आज्यभागाभ्यां प्रचर्य आग्नेयेन पुरोडाशेन अग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह' इति वाक्येन सकलस्य हविषो हुतत्वान्न भवत्यत्र शेषो येन शेषावदानं स्यादिति ।

एतदेवाभिप्रेत्याह—साकम्प्रस्थाय्यके-इति । 'साकम्प्रस्थाय्यके' कर्मणि-'च' 'न' भवति शेषकार्यमिति शेषः ॥ २ ॥

### (३) ३।५।१४-१५ सौत्रामणीग्रहे न स्युः

(१) शेषकार्यविषये विचारान्तरम् ।

(२) सौत्रामणीनामके यागे श्रूयते-'पयोग्रहाः सुराग्रहाश्च गृह्यन्ते' इति ।

(३) तत्र सन्देहः—एतेभ्यो ग्रहेभ्यः शेषकार्यं भवति न वेति ।

(४) पूर्वपक्षः—प्रकृतिगतसोमग्रहेभ्य इव एभ्योऽपि शेषकार्यमस्ति । न चात्र साकम्प्रस्थाय्यवच्छेषाभावः—'उच्छिनष्टि न सर्वं जुहोति' इति शेषयितव्यश्रवणात् । इति ।

(५) सिद्धान्तः—उक्तस्यावशेषस्यान्यत्रोपयोगः श्रूयते—'ब्राह्मणं परिक्रिणीयादुच्छेषणस्य पातारम्' इति, 'यदि ब्राह्मणं न विन्देत वल्मीकवपायामवनयेत्' इति, 'शतातृणायामवनयेत्' इति च । एवं च शेषस्यान्यत्रोपयोगात् नास्ति शेषः । ततश्च न शेषकार्यमिति ।

एतदेवाभिप्रेत्याह—सौत्रामणीति । 'सौत्रामणीग्रहे' सौत्रामणीयागसम्बन्धिनि ग्रहे—'न स्युः' शेषकार्याणीति शेषः ॥ ३ ॥

## (४) ३।५।१६-१७ सर्वपृष्ठेष्टितः सकृत् ॥

(१) शेषकार्ये विचारान्तरम् ।

(२)-'य इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेत्' इति विहितायां सर्वपृष्ठेष्टौ षट् देवताः श्रूयन्ते—'इन्द्राय राथन्तराय इन्द्राय बार्हताय इन्द्राय वैराजाय इन्द्राय शाक्वराय इन्द्राय रैवताय' इन्द्राय वैरूपाय इति । तत्र स्वरूपेणैक इन्द्रः पृष्ठस्तोत्रेषु विहितानां षण्णां रथन्तरादिसाम्नां सम्बन्धेन विशेष्यमाणः षोढा भिद्यते । सर्वासामेवैतासामिन्द्रदेवतानामेक एव साधारणः पुरोडाशो विधीयते 'द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय' इति ।

(३) तत्र सन्देहः—एषां षण्णां कर्मणां शेषकार्यं प्रतिकर्म भिद्यते-तथा च सर्वपृष्ठेष्टौ षट् शेषकार्याणि उत सकृदेव शेषकार्यं सर्वसाधारणमिति ।

(४) पूर्वपक्षः—अत्र देवताभेदेन प्रदानभेदेन च कर्मणां भेदे सति प्रतिकर्म शेषकार्यं कर्तव्यत् षट्कृत्त्वः इति ।

(५) सिद्धान्तः—कर्मणां भेदेऽपि हविःशेषस्य अविभागात् शेषस्यैकत्वमेव । ततश्च शेषकार्यं सकृदेव भवतीति ।

एतदेवाभिप्रेत्याह—सर्वपृष्ठेष्टित इति । 'सर्वपृष्ठेष्टितः' सर्वपृष्ठेष्टिकर्मणि प्रदत्तात् पुरोडाशात्—'सकृत्' एकमेव भवति शेषकार्यमिति शेषः ॥ ४ ॥

## (५) ३।५।१८ द्विरैन्द्रवायवे भक्षः

(१) शेषकार्यविचारोऽनुवर्तते । पूर्वाधिकरणापवादोऽयम् ।

(२) ज्योतिष्टोमे भवत्यैन्द्रवायवो नाम द्विदेवत्यो ग्रहः ।

(३) तत्र सन्देहः—अत्र किं शेषकार्यभूतं भक्षणं सकृदुत द्विरिति ।

(४) पूर्वपक्षः—भक्षस्य सोमसंस्कारार्थत्वात् सोमस्य चैकत्वात् सकृदेव भक्षणमिति।

(५) सिद्धान्तः—ऐन्द्रवायवे द्विर्भक्षणम्—'द्विरैन्द्रवायवस्य भक्षयति' इति वचनात्। इति।

एतदेवाभिप्रेत्याह—द्विरिति। 'ऐन्द्रवायवे' ग्रहे—'भक्षः' शेषभक्षणम् 'द्विः' द्विवारं भवतीति ॥ ५ ॥

## (६) ३।५।१६–२१ ज्योतिष्टोमेऽस्ति भक्षणम्।

(१) शेषकार्यविचारोऽनुवर्तते।

(२) ज्योतिष्टोमे सोमयागे सोमरसो द्रव्यमाम्नातम्।

(३) तत्र सन्देहः—सोमे भक्षरूपं शेषकार्यमस्ति न वेति।

(४) पूर्वपक्षः—नास्ति भक्षः सोमेषु। सोमभक्षणस्यानाम्नानात् शेषस्य चाभावात्। 'यद् ग्रहान् जुहोति' इति वाक्येन कृत्स्नस्य सोमस्य हुतत्वान्नास्ति शेषो यस्य भक्षणं स्यादिति।

(५) सिद्धान्तः—'अल्पं जुहोति' इति विशेषवचनात् सिध्यत्येव शेषः। तद् भक्षणं चापूर्वार्थप्रतिपादकवचनेभ्योऽवगम्यते। तथाहि–'आश्विनं भक्षयन्ति' 'द्विरैन्द्रवायवस्य भक्षयन्ति' 'सदसि भक्षयन्ति' इत्यादीनि वचनानि भक्षणमपूर्वार्थं प्रतिपादयन्ति। ततः सोमविधानादस्त्येव भक्षः सोमेष्विति ॥

एतदेवाभिप्रेत्याह—ज्योतिष्टोम इति। 'ज्योतिष्टोमे' सोमयागे–'भक्षणं' सोमशेषस्य 'अस्ति' एव इति ॥ ६ ॥

## (७) ३।५।२२ समाख्या कल्पयेद् भक्षम्

(१) भक्षरूपशेषकार्ये विचारोऽनुवर्तते।

(२) ज्योतिष्टोमे श्रूयते—'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणाम् प्र यजमानस्य प्रयन्तु सदस्यानाम्' इति।

(३) तत्र सन्देहः—अत्र चमसिनां भक्षोऽस्ति सोमस्य न वेति।

(४) पूर्वपक्षः—वचनाभावान्नास्त्येव भक्षश्चमसिनामिति।

(५) सिद्धान्तः—'होतुश्चमसः' इति सोमपात्रस्य समाख्या। चमसशब्दश्च भक्षणमभिदधाति–'चम्यते भक्ष्यतेऽस्मिन् पात्रविशेषे' इति व्युत्पत्त्या। एवं च चमसगतस्य सोमस्य शेषभक्षणं समाख्ययैव प्राप्तम्। होतुश्च चमसेन सम्बन्धो भक्ष्यभक्षकभावेनैव सम्भवति। तथाच सति होतुर्भक्षणं विना 'होतुश्चमस' इति नामैव न सिध्येत्। यद्यत्र पात्रे होता न चमेत् न भक्षयेदयं होतुश्चमसः। एवं च 'होतुश्चमस' इति समाख्ययैव

होतृकर्तृकं तत्पात्रविशेषस्थितस्य सोमस्य शेषभक्षणम्प्राप्तम् । एवमेवान्येषां चमसिनां ब्रह्मादीनाम् । तस्मादस्ति चमसिनामपि भक्ष इति ॥

एतदभिप्रेत्याह—समाख्येति । 'समाख्या' होतुश्चमस इत्येवंरूपा- 'भक्षम्' भक्षणं पात्रविशेषस्थितसोमशेषस्य—'कल्पयेत्' प्रमापयेदिति सम्बन्धः ॥ ७ ॥

(८) ३।५।२३-२६ सुब्रह्मण्यो न भक्षयेत् ॥

(१) शेषभक्षविचारोऽनुवर्तते ।

(२) पूर्वोदाहृतवाक्ये 'प्रोद्गातॄणामिति' श्रूयते ।

(३) तत्र सन्देहः—एवं चमसं किमेक एव ऋत्विक् उद्गातृनाम्ना प्रसिद्धो भक्षयेत् अथवा उद्गात्रोपलक्षिताः सर्व एव ऋत्विजो भक्षयेयुः- अथवा यद्वः छन्दोगा एव ऋत्विजः सुब्रह्मण्यादयो भक्षयेयुः-अथवा सुब्रह्मण्यरहिता एव छन्दोगा भक्षयेयुरिति ।

(४) पूर्वपक्षः—(१) 'उद्गातॄणां चमस' इति समाख्यया पूर्वाधिकरण- न्यायेनैक एव ऋत्विक् यस्य नाम उद्गातेति तच्चमसशेषं भक्षयेत् । (२) अथवा उद्गातॄणामिति बहुवचनस्यैकस्मिन्नसम्बन्धात् सर्व एव ऋत्विजस्तच्चमसशेषं भक्षयेयुः । (३) अथवा ये ऋत्विजश्छन्दोगाः सा- मगानकर्मणि नियुक्तास्त एव सर्वे भक्षयेयुः-सामगानकर्तृत्वात्तेषामप्यु- द्गातृसमाख्यासम्बन्धादिति ।

(५) सिद्धान्तः—सामगानकर्तॄणां सर्वेषां शेषभक्षणे प्राप्तेऽपि तेषा- मेकस्य सुब्रह्मण्यस्य न भवति भक्षणम् । सद एव भक्षणस्थानम्-न च तत्र सुब्रह्मण्यस्य प्रवेशः । तस्मात् सुब्रह्मण्यस्य सामगत्वेऽपि तद्वर्जिता- नामेव सामगानां भक्षणमिति ।

एतदेवाभिप्रेत्याह—सुब्रह्मण्य इति । 'सुब्रह्मण्यः' सुब्रह्मण्यनामकः सामगानकर्ता 'न भक्षयेत्' उद्गातृचमसशेषमिति शेषः ॥

[ यः पक्षोऽत्र तृतीयपूर्वपक्षरूपेण प्रदर्शितः स एव भाष्यकारमतेन सिद्धान्तः । तन्मतेन यत् किञ्चित् सर्वेषां सामगानां प्राप्तं तस्मात् क- स्यापि सामगानकर्तुरपच्छेदो न न्याय्यः साक्षाद्वचनमन्तरेणेति । यश्च पक्षोऽत्र मूले सिद्धान्तत्वेन प्रदर्शितः स वार्तिककारसम्मतः सिद्धान्त इति विवेचनीयम् ] ॥ ८ ॥

(९) ३।५।२७-३० ग्रावस्तुतो विधिभक्षः

(१) समाख्यामूलकानि भक्षणानि निरूपितानि । श्रुतिमूलकानी- दानीं विचार्यन्ते ।

(२) ज्योतिष्टोमे चतुर्णां होतॄणाम्मध्ये चतुर्थो ग्रावस्तुन्नामकः ।

(३) तद्विषये सन्देहः—अयं ग्रावस्तुत् सोमं भक्षयेदुत नेति।

(४) पूर्वपक्षः—ग्रावस्तुतो नास्ति भक्षः, अनाम्नानात्। चमसिनामेव भक्षो विहितः, न च ग्रावस्तुत् चमसी—चमसिनां होत्रादीनां परिगणने तन्नाम्नोऽनभिधानादिति।

(५) सिद्धान्तः—सत्यं चमसिनां परिगणने ग्रावस्तुतो नाभिधानम्। किन्तु सोमभक्षणे चमसित्वन्न कारणम्। श्रुत्या सर्वेषामेव ऋत्विजां तत्राधिकारात्। तथाहि श्रुतिः—'यथा चमसमन्यांश्चमसिनो भक्षयन्ति अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इति—[ 'हरिरसि हारियोजन' इति मन्त्रेण गृह्यमाणश्च ग्रहो हारियोजनः ]। एवं च सर्वेषां भक्षणेऽधिकारात् भवत्येव ग्रावस्तुतोऽपि भक्ष इति।

एतदेवाभिप्रेत्याह—ग्रावस्तुत इति। 'ग्रावस्तुतः' तन्नामकस्य ऋत्विजः—'भक्षः' सोमशेषभक्षणम्—'अस्त्येवेति' शेषः। कुतः ? 'विधेः'—'सर्व एव हारियोजनस्य लिप्सन्ते' इति श्रुत्या सर्वेषाम्भक्षणेऽधिकारस्याम्नानादित्यर्थः ॥ ९ ॥

## (१०) ३।५।३१ वषट्कर्ता च भक्षयेत्।

(१) श्रुतिमूलकशेषभक्षणविचारोऽनुवर्तते।

(२) 'वषट्कर्तुः प्रथमभक्षः' इति श्रूयते। [ वषट्करणं होत्रा क्रियते ]

(३) तत्र सन्देहः—अनेन वाक्येन किं वषट्करणं भक्षनिमित्ततया आम्नायते—उत भक्षस्य प्राथम्यमात्रं विधीयते—इति।

(४) पूर्वपक्षः—भक्षस्य समाख्ययैव प्राप्तत्वात् तस्य प्राथम्यमात्रं विधीयते—इति।

(५) सिद्धान्तः—'प्रथमभक्ष' इत्यस्य समस्तपदत्वेन 'यो भक्षः स प्रथम' इत्येवं विच्छिद्यान्वेतुमयोग्यत्वात् प्राथम्यविशिष्टभक्षणमत्र विधीयते। तस्मिंश्च भक्षणे वषट्करणं निमित्तमिति।

एतदेवाभिप्रेत्याह वषट्कर्तेति। 'वषट्कर्ता' वषट्करणकर्मकर्ता होता 'च' 'भक्षयेत्' सोमशेषं, तस्मिंश्च भक्षणे वषट्करणमेव निमित्तमित्याशयः ॥ १० ॥

## (११) ३।५।३१ होमाभिषवकर्ता च

(१) भक्षणस्य निमित्तान्तराणि विचार्यन्ते।

(२) 'प्रैतु होतुश्चमसः' 'वषट्कर्तुः प्रथम भक्षः' 'हारियोजनस्य सर्वे लिप्सन्ते' इति ज्योतिष्टोमप्रकरणे वाक्यानि।

(३) तत्र सन्देहः—किमत्रोक्तान्येव भक्षनिमित्तान्युतान्यदपि—इति।

(४) पूर्वपक्षः—समाख्या-वाक्य-श्रुतिप्रामाण्येन त्रिभिरुदाहृतैर्वाक्यैस्त्रीण्येव भक्षनिमित्तानीति ।

(५) सिद्धान्तः—'हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति श्रूयते । [उत्तरवेद्याः प्रतीचीने सदसः प्राचीने मण्डले 'अभिषवः', उत्तरवेद्यां 'होमः' सदसि 'भक्षणम्'।] अत्र 'अभिषवहोमौ' अन्यतः प्राप्तौ निमित्तत्वेनानूद्य 'भक्षणं' विधीयते । तस्माद् होमाभिषवयोरपि भक्षनिमित्ततेति ।

एतदभिप्रेत्याह—होमेति । 'होमश्च' 'अभिषवश्च' तयोः 'कर्ता' 'च'-भक्षयेत्—सोमशेषमिति शेषः ॥ ११ ॥

## (१२) ३।५।३३-३५ परस्य चमसेऽपि तौ ॥

(१) शेषभक्षणविषये पात्रविशेषविचारः प्रवर्तते ।

(२) 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणामिति' चमसानामृत्विक्सम्बन्धिनी समाख्या ।

(३) तत्र सन्देहः—होमाभिषवकर्तुर्यद् भक्षणं तत् किं चमसेषूत नेति ।

(४) पूर्वपक्षः—समाख्यया चमसानां होतृब्रह्मोद्गातृमात्रसम्बन्धे सिद्धेऽन्येषां भक्षणं चमसेषु नैव प्राप्तमिति ।

(५) सिद्धान्तः—'सदसि हुत्वा भक्षयन्ति' इति वाक्यस्य समाख्यया बाधो न युक्तः । अतो भवत्येव चमसेषु भक्षणं होमाभिषवकर्मनिमित्तकमपीति ।

एतदेवाभिप्रेत्याह—परस्येति । 'तौ' होमाभिषवकर्तारौ-'अपि'-'परस्य' होत्रादेः ऋत्विजो-नाम्ना समाख्याते-'चमसे' भक्षयन्तीति शेषः॥१२॥

## (१३) ३।५।३६-३८ भक्षक्रमो यथाप्राप्ति

(१) भक्षसम्बन्धि विचारान्तरम् ।

(२) एकस्मिन् पात्रे सर्वे ऋत्विजो भक्षयन्ति ।

(३) तत्र क्रमविषये सन्देहः—भक्षणकाले कः प्रथमं भक्षयेत्-अध्वर्युरुतान्यः कोऽपीति ।

(४) पूर्वपक्षः—अध्वर्युरेव प्रथमं भक्षयेत् । तस्यैव हस्ते सोमपात्रं ध्रियते । अतः पात्रसन्निधानात् तस्यैव प्रथमं भक्षणम्—इति ।

(५) सिद्धान्तः—लिङ्गवाक्याभ्यां होतुरेव प्रथमं भक्षणं सिध्यति । तथाहि 'होतेव नः प्रथमः पाहि' इति ऋत्विजोऽध्वर्युं सम्बोध्य प्रार्थयन्ते । तस्यार्थः—'यथा होताऽस्मत्तः पूर्वं भक्षयित्वा शेषप्रदानेनास्मान् पालितवान् तथा त्वमपि पाहि' इति । तदेतद् होतुः प्रथमभक्षणे लिङ्गम्

वाक्यं चोपलभ्यते–'वषट्कर्तुः प्रथमभक्ष' इति । वषट्कर्ता च होतैव । तस्माद् होतैव प्रथमं भक्षयेदिति ।

एतदभिप्रेत्याह—भक्षक्रम इति । 'भक्षक्रमः' ऋत्विजां भक्षणक्रमः–'यथाप्राप्ति' प्राप्त्यनुसारमेव–भवेदिति शेषः । 'प्राप्तिश्च' होतुरेव । तथा हि कार्यक्रमे प्रथमं वषट्करणं होत्रा तदनन्तरं होमोऽध्वर्युणा क्रियते–एवं भक्षनिमित्तयोर्वषट्करणहोमयोः वषट्करणस्यैव प्रथमं प्राप्तत्वात् तन्निमित्तस्यैव भक्षणस्य प्रथमं 'प्राप्तिः'–तदेवं प्राप्त्यनुसारमेव भक्षणमृत्विजामिति सिद्धे होतुरेव प्रथमं भक्षणमिति भावः ॥ १३ ॥

(१४) ३।५।४० पानं चोपहवेन हि ।

(१) भक्षविषये विचारान्तरम् ।

(२) एकस्मिन् पात्रे सोमोऽनेकैर्ऋत्विग्भिर्भक्ष्यते ।

(३) तत्र सन्देहः—किमनुज्ञातेनव भक्षयितव्यमुताननुज्ञातेनेति ।

(४) पूर्वपक्षः—अनुज्ञाभक्षयोरुभयोरावश्यकत्वे गौरवात् अननुज्ञातेन भक्षणम् । अनुज्ञाया नास्त्यावश्यकतेति ।

(५) सिद्धान्तः—'तस्मात् सोमो नानुपहूतेन पेय' इति स्पष्टश्रवणात् उपह्वानरूपाया अनुज्ञाया आवश्यकत्वम् इति ।

एतदेवाभिप्रेत्याह—पानं चेति । 'पानं' सोमपानं 'च'—'उपहवेन' उपह्वानेन सह अनुज्ञापूर्वकमेव—कर्तव्यमिति शेषः ॥ १४ ॥

(१५) ३।५।४१–मन्त्रेणोपहवः कार्यः

(१) पूर्वाधिकरणसम्बद्ध एव विचारः ।

(२) अनुज्ञातेन भक्षयितव्यमिति स्थितम् ।

(३) तत्र सन्देहः–इदमनुज्ञानं किं वैदिकेन वाक्येनोत लौकिकेनेति ।

(४) पूर्वपक्षः–नियमे प्रमाणाभावात् लौकिकेनैव वाक्येनानुज्ञानमिति ।

(५) सिद्धान्तः–'उपहूत उपह्वयस्व' इति मन्त्रो लिङ्गात् अनुज्ञापने समाम्नातः सामर्थ्येन तत्र विनियुज्यते । इदमेव नियमे प्रमाणम् । तस्माद् वैदिकेनैव वाक्येनानुज्ञानमिति ।

एतदेवाभिप्रेत्याह मन्त्रेणेति । 'मन्त्रेण'–उपहूत उपह्वयस्वेति मन्त्ररूपेण वैदिकवाक्येनैव–'उपहवः' सोमपानाय निमन्त्रणमनुज्ञानं–'कार्यः'–न लौकिकेनेति तात्पर्यम् ॥ १५ ॥

(१६) ३।५।४२–प्रत्युक्तिः पूर्वमन्त्रभाक् ।

(१) पूर्व एव विचारोऽनुवर्तते ।

(२) अनुज्ञापनवचनमवगतम् । अथ प्रतिवचनमावश्यकम्–

(३) तत्र प्रतिवचने सन्देहः–किं लौकिकेन तदुत वैदिकेनेति ।

(४) पूर्वपक्षः-उपहूत इत्यादिमन्त्रोऽनुज्ञापने विनियुक्तः। अतः प्रतिवचने अन्यदेव वाक्यं लौकिकं प्रयोक्तव्यमिति।

(५) सिद्धान्तः-उपहूत उपह्वयस्वेति मन्त्रे उपह्वयस्वेति मध्यमपुरुषकवचनान्तो भागः प्रश्नसमत्वात् अनुज्ञापने समर्थः, 'उपहूत' इति प्रथमपुरुषैकवचनान्तस्तु उत्तरसमत्वात् प्रतिवचने समर्थः। तस्मात् लिङ्गेन मन्त्रो विभज्य विनियोजनीयः-एको भागोऽनुज्ञापनेऽन्यः प्रतिवचने। एवं च प्रतिवचनमपि वैदिकेनैव वाक्येनेति।

एतदेवाभिप्रेत्याह-प्रत्युक्तिरिति। 'प्रत्युक्तिः' प्रतिवचनमपि-'पूर्वमन्त्रभाक्' उपहूत इत्यादिपूर्वोदाहृतमन्त्रभागेनैव भवतीति भावः॥ १६॥

## (१७) ३।५।४३-समपात्रस्त्वनुज्ञाप्यः

(१) पूर्वविचारशेष एवायम्।

(२) अस्ति भक्षेऽनुज्ञापनमिति स्थितम्। भक्षणं च केषाञ्चिदेकस्मिन्नेव पात्रे केषाञ्चिद् भिन्नपात्रेषु।

(३) तत्र सन्देहः-यः कश्चिद् भक्षकोऽनुज्ञाप्य उत समानपात्र एवेति।

(४) पूर्वपक्षः-अनुज्ञापनस्यादृष्टार्थत्वात् विशेषस्यानभिधानाच्च यः कश्चिदनुज्ञापनीयः भिन्नपात्रः समानपात्रश्चेति।

(५) सिद्धान्तः-अस्त्यनुज्ञाने दृष्टप्रयोजनम्। साधारणे हि वस्तुनि कथञ्चिद् भागाधिक्येऽपराधो भवति। अतो भक्षणे न्यूनाधिकत्वपरिहारार्थमेवानुज्ञापनम्। तच्च समानपात्रिणामेव सम्भवति। तस्मात् समानपात्राणामेवानुज्ञापनमिति।

एतदेवाभिप्रेत्याह-समपात्र इति। 'समपात्रः' एकपात्रभक्षक एव 'अनुज्ञाप्यः'-भक्षणे, न भिन्नपात्र इति शेषः॥ १७॥

## (१८) ३।५।४४-४६-याज्यापाठी वषट् पठेत्।

(१) भक्षविशेषविषये विचारः।

(२) अस्ति ज्योतिष्टोमः। तत्र ऋतुयागेषु श्रूयते-'यजमानस्य याज्या-सोऽभिप्रेष्यति होतरेतद्यजेति-स्वयं वा निषद्य यजति' इति।

[ हौत्रे काण्डे समाम्नाताः सर्वा याज्याः समाख्यया होतुरेव प्राप्ताः। तासु काचिद् याज्या उदाहृतया श्रुत्या होतुरपनीय यजमानस्य विधीयते-तदनुसारेण च यजमानः स्वेच्छया होतारं वा प्रेष्यति स्वयं वा याज्यां पठतीति उदाहृतयैव श्रुत्या विकल्पोऽप्युपात्तः। ]

(३) तत्र यजमानेन स्वपाठपक्षे सन्देहः-किमत्र यजमानस्य वषट्करणनिमित्तको भक्षोऽस्ति न वेति।

(४) पूर्वपक्षः—उक्तश्रुत्या यजमानस्य याज्यापाठमात्रं विहितं न वषट्-करणम् । अतो याज्याया होतुरपनीय यजमानगतत्वेऽपि वषट्करणं तन्नि-मित्तको भक्षश्च यथापूर्वं होतुरेव न यजमानस्येति ।

(५) सिद्धान्तः—'स्वयं वा निषद्य यजति' इति पक्षस्य स्वीकारे यज-मानेन स्वयमेव यागः कर्तव्यः । स च यागो वषट्कारमन्तरेण न सम्भवति । याज्यावषट्कारयोश्च समानकर्तृकत्वम् 'याज्याया अधिवषट्-करोति' 'अनवानं यजति' इति वाक्याभ्यामवगतम् । [ 'अनवानं यजतीति' वाक्येन याज्यावषट्कारयोर्मध्ये श्वासो निषिध्यते । ] तस्मात् याज्यया सह वषट्कारोऽपि होतुरपैति—तदपाये च वषट्कारनिमित्तकं भक्षण-मपि तस्मादपेत्य यजमाने एव निविशते । अतोऽस्मिन् पक्षे वषट्-कारनिमित्तकभक्षणं यजमानस्यैवेति ।

एतदेवाभिप्रेत्याह याज्येति । 'याज्यापाठी' यो याज्यापाठं करोति—यजमानो वा होता वा—स एव 'वषट् पठेत्' वषट्कारं वषट्करणनिमित्तकं भक्षणं च कुर्यात् । अतो यदा वषट्कारो होत्रा न क्रियते तदा तन्निमित्त-कं भक्षणमपि तेन न क्रियते—अपि तु याज्योपाठकेन वषट्कर्त्रा यजमा-नेनैवेत्याशयः ॥ १८ ॥

## (१९) ३।५।४७-५१—फलस्य भक्षणादि स्यात्

(१) भक्षविषय एव विचारोऽनुवर्तते ।

( २ ) ज्योतिष्टोमे श्रूयते—'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्यु-न्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमम्' इति ।

( ३ ) तत्र सन्देहः—अनेन वाक्येन सोमप्रतिनिधित्वेन यः फलच-मसो विहितः स किं भक्षमात्रमुद्दिश्य—उत यागद्रव्यमपि । किं राजन्य-वैश्यकर्तृके ज्योतिष्टोमे यज्ञाहुतिष्वपि सोमस्थाने फलचमसः प्रतिनि-धीयते—उत भक्षणमात्रे—इति ।

( ४ ) पूर्वपक्षः—वाक्यस्योपक्रमोपसंहारयोर्भक्षविषयत्वाद् भक्षण-मात्रे फलचमसो निविशते—नाहुतिष्विति ।

( ५ ) सिद्धान्तः—'यदाऽन्यांश्चमसाञ्जुह्वति अथतस्य दर्भतरुणकेनो-पहत्य जुहोति' इति श्रुतम् । अत्र च फलचमसेनव यागमङ्गीकृत्य दर्भ-तरुणकरूपो गुणो विधीयते । अत आहुतिरपि फलचमसेनेत्यवगम्यते । किञ्च यागप्रदेयद्रव्यस्यैव संस्कारो भक्षः । स च यागमन्तरेण नोपपद्यते । तस्मादाहुतिष्वपि सोमस्य स्थाने फलचमस एव निविशते—इति ।

एतदेवाभिप्रेत्याह—फलस्येति । 'फलस्य' फलचमसस्य न्यग्रोधस्तिभिनीदधिसम्मिश्रितद्रव्यस्य—'भक्षणादि' यागाहुतिभक्षणं च स्यात्—न केवलं भक्षणमिति शेषः ॥ १९ ॥

(२०) ३।५।५२–५३ सोमपा ब्राह्मणाः शतम् ॥

(१) राजन्यकर्तृकयागविशेषविषये भक्षविचारः ।

(२) राजसूयाङ्गे दशपेयनामके यागे श्रूयते—'शतं ब्राह्मणाः सोमं पिबन्ति—दशदशैकैकमनुप्रसर्पन्ति' इति । अत्र यजमानस्य राजन्यस्य चमसहस्तस्यानुप्रसर्पणं विहितम् ।

(३) तत्र सन्देहः—इदं राजन्ययजमानचमसानुप्रसर्पणं किं राजन्यैरेव कार्यमुत ब्राह्मणैरिति ।

(४) पूर्वपक्षः—दशपेयो हि ज्योतिष्टोमस्य विकृतिः। अतो ज्योतिष्टोमधर्माणामत्र सन्निवेशः । ज्योतिष्टोमे च भिन्नजातिभिर्भक्षणं नास्ति। अतोऽत्रापि यजमानसजातीयैरेव भक्षणं प्राप्तम् । अतो राजन्ययजमानेन सह नवभी राजन्यैरेव भक्षणं कार्यमिति ।

(५) सिद्धान्तः—प्रकृते ज्योतिष्टोमात् प्राप्तेषु दशसु चमसेषु भक्षणाय अनुप्रसर्पतां पुरुषाणां 'दश दश' इति वीप्सया प्रतिचमसं दशसङ्ख्यां विधायार्थसिद्धां शतसङ्ख्यामनूद्यैव सङ्ख्यातानां सर्वेषां ब्राह्मण्यं विधीयते 'शतं ब्राह्मणाः पिबन्ति' इत्यनेन । अथ च सोमभक्षणं यजमानस्यापि राजन्यस्य सर्वथाऽप्राप्तमेव, तदर्थं फलचमसस्य विहितत्वात्—एवं च सति कुतः सम्भवत्यन्येषां राजन्यानां सोमभक्षणम् । तस्मात् ब्राह्मणा एव सोमभक्षकाः दशपेयेऽपीति ।

एतदेवाभिप्रेत्याह—सोमपा इति । 'शतम् ब्राह्मणा' एव न राजन्याः—'सोमपा' सोमशेषं भक्षयन्तीत्यर्थः ॥ २० ॥

पादेऽस्मिन् विंशतिन्याया भाष्यकारेण वर्णिताः ।

स्पष्टम् ॥

इति तृतीयस्य पञ्चमः ।

## अथ तृतीयस्य षष्ठः ।

### (१) ३।६।१–८ न पर्णता स्याद् विकृतौ द्विरुक्तेः

( १ ) अङ्गत्वविचारे यत्र श्रुतिलिङ्गादीनि षट् प्रमाणानि न प्रसरन्ति तत्र का गतिरितीदानीं विचार्यते ।

( २ ) अनारभ्य श्रूयते—'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति ।

( ३ ) तत्र सन्देहः—जुह्वाः या पर्णमयताऽत्र विहिता सा किं प्रकृतौ विकृतावुभयत्र निविशते—उत विकृतावेवेति ।

( ४ ) पूर्वपक्षः—इदं विधिवाक्यं प्रकृतिविकृत्योरुभयोस्तुल्यमेव प्रवर्तते—उभयत्र जुह्वाः सत्त्वात् । तस्मात् जुह्वाः पर्णमयता प्रकृतौ विकृतौ च निविशते—इति ।

( ६ ) सिद्धान्तः—यत् प्रकृतौ वर्तते तत् 'प्रकृतिवद्विकृतिः कर्तव्या' इत्यतिदेशेन विकृतावपि प्राप्नोति । एवं च प्रकृतौ प्राप्ताया जुहूपर्णताया विकृतावतिदेशवाक्येनैव प्राप्तत्वे यदि तस्या एव पुनः साक्षाद् विध्यन्तरेण विधानं स्यात् तर्हि द्विरुक्तिरेव स्यात् । सा तु न न्याय्या । तस्मात् प्रकृतावेव निविशते पर्णमयतेति ।

एतदेवाभिप्रेत्याह—न पर्णतेति । 'पर्णता' जुह्वाः पर्णमयता—'विकृतौ' यागे—'न स्यात्' न प्राप्नोति—'द्विरुक्तेः' । तस्या विकृतिगामित्वे अतिदेशवाक्येन प्राप्तायाः पुनर्विधिवाक्येन प्राप्तिर्यदि स्यात् तर्हि वृथा पुनरुक्तिरेव स्यात्, तस्मात् कारणात् प्रकृतिगामित्वमेव पर्णताया न प्रकृतिविकृत्युभयगामित्वमित्याशयः ॥ १ ॥

### (२) ३।६।९ न साप्तदश्यं प्रकृतौ विरोधात् ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) अनारभ्य श्रूयते—'सप्तदश सामिधेनीरनुब्रूयात्' इति । ['प्रवो वाजा अभिद्यव' इत्याद्या अग्निसमिन्धनार्था ऋचः 'सामिधेन्यः'] ।

( ३ ) तत्र सन्देहः—सामिधेनीनां साप्तदश्यं यदत्रोक्तं तत् किं प्रकृतौ निविशते उत विकृताविति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेनेदं साप्तदश्यं प्रकृतावेव निविशते । एवं च विध्यन्तरप्राप्तेन पाञ्चदश्येन विकल्प्यत इदं साप्तदश्यं प्रकृताविति ।

( ५ ) सिद्धान्तः—विकृतावेव साप्तदश्यं निविशते । प्रकृतौ पाञ्चदश्येनावरुद्धानां सामिधेनीनां सङ्ख्यान्तराकाङ्क्षाया अनुत्थानात् । न च पाञ्चदश्यसाप्तदश्ये तुल्यबले येन विकल्पः स्यात् । पाञ्चदश्ये हि प्रकरणमनुग्राहकमधिकतरम् न तु तत् साप्तदश्ये उपलभ्यते इति ।

एतदेवाभिप्रेत्याह—न साप्तदश्यमिति । 'साप्तदश्यं' सामिधेनीगतसप्तदशसङ्ख्या—'प्रकृतौ न' निविशते इति शेषः । कुतः—'विरोधात्'—प्रकृतिगतसामिधेनीनां पञ्चदशसङ्ख्यया सप्तदशसङ्ख्याया इति यावत् ।

## (३) ३।६।१० गोदोहनादेर्विकृतौ विधिर्नो

( १ ) पूर्वाधिकरणापवादः ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'चमसेनापः प्रणयेत्—गोदोहनेन पशुकामस्य' इति ।

( ३ ) तत्रैवञ्जातीयकेषु नैमित्तिकविधानेषु सन्देहः—गोदोहनं यदत्र पशुकामनिमित्तकत्वेन विहितं तत् किं प्रकृतौ निविशते—उत विकृतौ—इति ।

( ४ ) पूर्वपक्षः—प्रकृतेः पूर्वोक्तेन पात्रेण चमसेनैव निराकाङ्क्षीकृतत्वात्—नैमित्तिकस्य पात्रान्तरस्य विकृतावेव निवेश इति ।

( ५ ) सिद्धान्तः—कामनाविशेषनिमित्तकेन गोदोहनेन अविशेषेण प्राप्तस्य चमसस्य सङ्कोचनीयत्वात् प्रकृतावेव गोदोहनस्य सन्निवेश इति।

एतदेवाभिप्रेत्याह—गोदोहनादेरिति । 'गोदोहनादेः' नैमित्तिकतया विहितस्य गोदोहनस्य अन्यस्य च तादृशस्य पदार्थस्य—'विधिः' विधानं सन्निवेशः 'विकृतौ नो' अपि तु प्रकृतावेवेति शेषः ॥ ३ ॥

## (४) ३।६।११–१३ नाधानमङ्गं खलु पावमान्याः ॥

( १ ) अनारभ्य विहितानामङ्गानां विचारोऽनुवर्तते ।

( २ ) अस्ति पवमानेष्टिविधिः—'अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति । तासामेवेष्टीनाम्प्रकरणे सामाम्नातमाधानम्—'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति ।

( ३ ) तत्र सन्देहः—इदमाधानं किं पवमानेष्टीनामङ्गम् उत न इति।

( ४ ) पूर्वपक्षः—अङ्गमेवाधानम्पवमानेष्टीनाम् । दर्शपूर्णमासविकृतिषु पवमानेष्टिषु प्रकृतिगताहवनीयाद्यग्नीनामिष्ट्यङ्गत्वे सिद्धे तदग्निद्वाराऽग्निसंस्कारस्याधानस्यापि तदङ्गत्वं दुर्वारमिति ।

( ५ ) सिद्धान्तः—इदमाधानं न कस्यचिदपि यागस्य प्रकरणे पठितम । अतो न कस्याप्येतदङ्गम् । यद्यपि पवमानेष्टिप्रकरणे पठि-

\ तमाधानम् तथाऽपि इष्टीनामाधानस्य चोभयोरप्यग्निसंस्कारार्थत्वान्न परस्परमङ्गाङ्गिभावः। तस्मान्नाधानमिष्टीनामङ्गमिति ।

एतदेवाभिप्रेत्याह—नाधानमिति । 'आधानम्' अग्न्याधानम्—'पावमान्याः' इष्टेः 'अङ्गं' 'न' 'खलु' अङ्गं न भवतीत्यर्थः ॥ ४ ॥

## (५) ३।६।१५-१५ अग्न्यर्थमेतन्न गुणः क्रतूनाम्

(१) अनारभ्य विधानविचारोऽनुवर्तते । तत्र पर्णमयीन्यायापवादः ।

(२) 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति अग्न्याधानं विहितम् ।

(३) तत्र सन्देहः—इदमाधानं किम्प्रकृतियागार्थमुत सर्वकर्मार्थमिति ।

(४) पूर्वपक्षः—यथाऽन्येऽनारभ्यवादाः प्रकृत्यर्थास्तथाऽयमपि । तस्मात् आधानम्प्रकृतियागार्थमेवेति ।

(५) सिद्धान्तः—आधानमेतन्न प्रकृतीः प्रकृत्य श्रूयते। न चात्र सन्ति श्रुतिलिङ्गादीनि प्रमाणानि येनास्य क्रत्वङ्गता स्यात् । यत्रानारभ्यविहितस्याङ्गत्वं श्रुत्यादिप्रमाणसिद्धं तत्र भवत्यवसरोऽस्य विचारस्य 'कस्येदमङ्गमिति'। आधानस्य त्वङ्गत्वमेव न सिध्यति । तस्मात् अग्निसंस्काररूपमाधानम्—अग्नयश्च सर्वकर्मार्थाः—इत्याधानमपि सर्वकर्मार्थं न प्रकृत्यर्थमिति ।

एतदेवाभिप्रेत्याह—अग्न्यर्थमिति । 'एतत्' आधानम् ( पूर्वोक्तम् )- 'अग्न्यर्थम्' सर्वकर्मसम्पादकाहवनीयाद्यग्न्यर्थम्—'न' तु 'क्रतूनाम्' यागविशेषाणाम् 'गुणः' अङ्गमित्यर्थः ॥ ५ ॥

## (६) ३।६।१६-१७ न पावमानीष्मति पावमानी ।

(१) आधानसंस्कृताग्निपवमानेष्टिविषये विचारः ।

(२) अग्निसंस्कारकाः सन्ति पवमानेष्टयः ।

(३) तत्र सन्देहः—पवमानेष्ट्या संस्कृतेऽग्नौ पवमानेष्टयः कर्तव्याः—उतासंस्कृत एवेति ।

(४) पूर्वपक्षः—पवमानादिभिरिष्टिभिरेवाग्नयः संस्क्रियन्ते—एवं संस्कृतेष्वेवाग्निषु अग्निहोत्रदर्शपूर्णमासादिक्रतवः क्रियन्ते। एत एव च क्रतवः पवमानेष्टीनां प्रकृतयः । अतः प्रकृतिवत् पवमानेष्टयोऽपि संस्कृते एवाग्नौ कर्तव्याः—इति ।

(५) सिद्धान्तः—अग्निसंस्कारार्था एव पवमानेष्टयः क्रियन्ते। पवमानेष्ट्यनुष्ठानमर्थमपि यदि पवमानेष्ट्यन्तरस्यापेक्षा स्यात्तर्हि तस्या अपि

सम्पादनार्थमग्निसंस्कारार्थपवमानेष्ट्यन्तरं कर्तव्यमित्यनवस्था स्यात्। तस्मात् पवमानेष्ट्योऽसंस्कृते एवाग्नौ कर्तव्याः इति ।

एतदेवाभिप्रेत्याह—न पावमानीमिति ।'पावमानीम् प्रति' पवमानेष्टिसम्पादनार्थम्—'पावमानी' पवमानेष्टिः द्वितीया—'न' कर्तव्येति शेषः। तथा च पवमानेष्टिसंस्काररहिते एवाग्नौ पवमानेष्टिः कर्तव्येत्याशयः ॥६॥

## (७) ३।६।१८–२७ धर्मास्तु दैक्षस्य पशोः समीपात्

(१) अङ्गत्वबोधकप्रमाणानां मध्ये क्रमस्य प्रकरणेनानपनोदः चिन्त्यते ।

(२) ज्योतिष्टोमप्रकरणे त्रयः पशवः समाम्नाताः—अग्नीषोमीयः सवनीयः अनुबन्ध्यश्चेति । पशुधर्माश्च समाम्नाताः—उपाकरणम् ('प्रजापतेर्जायमाना' 'इमं पशुम्' इति ऋग्भ्यामुपस्पर्शनम् )—पर्यग्निकरणम् ( दर्भज्वालया त्रिः प्रदक्षिणीकरणम् )—उपानयनम् अक्ष्णया बन्धः—यूपे नियोजनम्—संज्ञपनम्—विशसनम्—इत्येवमादयः ।

(३) तत्र सन्देहः—किमेते धर्मास्त्रिष्वपि पशुषु अग्नीषोमीयसवनीयानुबन्ध्येषु कर्तव्या उताग्नीषोमीयसवनीययोरेव उत सवनीये एव—उताग्नीषोमीये एवेति ।

(४) पूर्वपक्षः—त्रयाणामपि ज्योतिष्टोमप्रकरणे तुल्यमेव समाम्नानम्। तस्मात् त्रिष्वपि धर्माः कर्तव्याः। न चैते ज्योतिष्टोम एव प्राप्ताः तत्र साक्षात्पशुधर्माणामाकाङ्क्षाभावात्। तस्मादङ्गिनि अनर्थका अङ्गेषु पशुषु निविशमानाः सर्वेष्वपि पशुष्वविशेषेण निविशन्ते। अथवा सवनीयस्य पूर्वदिनकृत्यसम्बद्धत्वात्तत्रैवैकस्मिन् उक्ता धर्माः। अथवा क्रमप्रकरणबलेनाग्नीषोमीयसवनीययोर्द्वयोः कर्तव्या इति त्रयोऽत्र पूर्वपक्षाः।

(५) सिद्धान्तः—अग्नीषोमीयमात्रे धर्मा निविशन्ते। अस्ति ह्यत्र विशेषः सन्निधिलक्षणः। सुत्यानामकादहः प्राचीने औपवसथ्यनामकेऽह्नि धिष्ण्यनिर्माणादूर्ध्वमेत धर्मा उक्ताः। अग्नीषोमीयस्यापि तदेव स्थानम्। सवनीयस्तु सुत्याह्नि श्रूयते—अनुबन्ध्यश्चावभृथान्ते। तस्मात् सन्निधिप्रमाणेन धर्मा अग्नीषोमीय एव सम्बध्यन्ते न सवनीये अनुबन्ध्ये वेति ।

एतदेवाभिप्रेत्याह—धर्मा इति। 'धर्माः' उपाकरणादयः—'दक्षस्य' अग्नीषोमीयस्य एव 'पशोः'—भवन्ति इति शेषः, न त्वन्ययोर्द्वयोः सवनीयानुबन्ध्ययोरिति भावः। कस्मादित्यपेक्षायामाह—'समीपात्' सन्निधिप्रमाणबलादित्यर्थः ॥ ७ ॥

## (८) ३।६।२८–२९ दोहद्वये दोहगुणः समत्वात् ॥

(१) स्थानस्य श्रुत्यादिभिरपनोदः—पूर्वाधिकरणापवादः ।

( २ ) दर्शपूर्णमासयोः स्तो द्वौ दोहौ—एकः सायमपरः प्रातः। सन्ति च दोहधर्माः—पलाशशाखाहरणम्, तया शाखया वत्सापाकरणम्, गवाम्प्रस्थापनम् प्रस्नावनम्, गोदोहनमित्येवमादयः।

( ३ ) तत्र सन्देहः—एते धर्माः किं सायन्दोहार्था उत प्रातर्दोहार्था उत उभयार्था इति।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन प्रथमोक्ते सायन्दोहे एवैते धर्मा निविशन्ते। औपवसथ्ये ह्यह्नि तान् धर्मान् समामनन्ति—तस्मिन्नेव चाह्नि सायन्दोहोऽप्याम्नातः। तस्मात् क्रमप्रामाण्येन सायन्दोह एव धर्मा इति।

( ५ ) सिद्धान्तः—प्रकरणेनोभयदोहसम्बद्धाः धर्माः क्रमेण तु सायन्दोहमात्रसम्बद्धाः। क्रमश्च प्रकरणेन बाध्यते। तस्मात् उभयोरपि दोहयोर्निविशन्ते धर्माः। न च पूर्वाधिकरणन्यायावतारोऽत्र। तत्र हि विशसनादिधर्माणां सोमेऽनन्वयात् प्रकरणमानर्थक्यप्रतिहतं न क्रमबाधनक्षमम्—इह तु न तथेति।

एतदेवाभिप्रेत्याह—दोहद्वय इति। 'दोहगुणः' शाखाहरणादयो दोहधर्माः—'दोहद्वये' उभयोरपि सायम्प्रातर्दोहयोः—निविशते इति शेषः। कुत इत्यपेक्षायामाह 'समत्वादिति'। धर्माणामङ्गत्वबोधकप्रमाणस्य प्रकरणस्य द्वयोरपि दोहयोः तुल्यत्वेन प्राप्तत्वात्॥ ८॥

## (६) ३।६।३० सर्वग्रहार्थाः सवनस्थधर्माः

( १ ) स्थानापनोदस्योदाहरणान्तरम्।

( २ ) ज्योतिष्टोमे दश ग्रहा भवन्ति—ऐन्द्रवायवाद्याः प्रातःसवने, मरुत्वतीयादयो माध्यन्दिनसवने, आदित्यादयस्तृतीयसवने। सादनसम्मार्गादयो धर्माश्च प्रातःसवनीयग्रहसन्निधावाम्नाताः—'ग्रहाः साद्यन्ते' 'दशापवित्रेण ग्रहं सम्मार्ष्टि' इति।

( ३ ) तत्र सन्देहः—एते धर्माः किं सर्वेषु ग्रहेषु कर्तव्या उत प्रातःसवनीयग्रहमात्रेष्विति।

( ४ ) पूर्वपक्षः—प्रातःसवनीया ग्रहाः प्रथमोक्तास्तत्सन्निधा च धर्मा उक्ताः। तस्मात् तेष्वेव धर्मा अनुष्ठेया नेतरेष्विति।

( ५ ) सिद्धान्तः—प्रकरणेन सर्वेषां ग्रहाणां धर्मैः सम्बन्धस्तुल्य एव। वाक्येन च ते ग्रहमात्रस्य विधीयन्ते। सन्निधिश्च वाक्यप्रकरणाभ्यां बाध्यते। तस्मात् सर्वेषु ग्रहेषु अनुष्ठेया इति।

एतदेवाभिप्रेत्याह—सर्वेति। 'सवनस्थधर्माः' सवनत्रयसम्बन्धिग्रहेष्वनुष्ठेयतया समाम्नाताः सादनादयो धर्माः—'सर्वग्रहार्थाः' प्रातर्माध्य-

न्दिनतृतीयसवनसम्बन्धिषु सर्वेषु ग्रहेषु अनुष्ठेया इत्यर्थः ॥ ९ ॥

(१०] ३।६।३१ पशुत्रयार्था रशना सधर्मा ।

(१) पूर्वविचारसदृशमेव विचारान्तरम् ।

(२) ज्योतिष्टोमे त्रयः पशवः—अग्नीषोमीयः सवनीयः अनुबन्ध्यश्च। तत्र यूपवेष्टनार्था रशना श्रूयते तद्गता धर्माश्च-परिव्याणम् त्रिवृत्करणम् दर्भमयत्वञ्च। एते च धर्मा अग्नीषोमीयपशुसन्निधौ समाम्नाता उपलभ्यन्ते।

(३) तत्र सन्देहः—एते धर्माः किमग्नीषोमीयपशुमात्रेऽनुष्ठेया उत त्रिष्वपि पशुष्विति।

(४) पूर्वपक्षः—सर्व एते धर्माः अग्नीषोमीयपशुमात्रेऽनुष्ठेयाः। तस्यैव सन्निधाववान्तरप्रकरणे च तेषां समुपलम्भादिति।

(५) सिद्धान्तः—तृतीयाश्रुत्या वाक्येन च परिव्याणादीनां धर्माणां यूपधर्मता, प्रकरणमात्रेण क्रमेण वाऽग्नीषोमीयपशुधर्मता। यूपश्च पशुत्रयसाधारणः। तस्मात् त्रिष्वपि पशुषु धर्मा अनुष्ठेयाः। अग्नीषोमीयादतिरिक्ते सवनीये च परिव्याणत्रिवृत्त्वयोः सम्बन्धो लिङ्गादप्यवगम्यते—'त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इत्यत्र॥

एतदेवाभिप्रेत्याह—पश्विति। 'सधर्मा' परिव्याणादिधर्मैः सहिता—'रशना' यूपवेष्टनार्था रज्जुः—'पशुत्रयार्था' त्रयाणामपि अग्नीषोमीयसवनीयानुबन्ध्यानामङ्गमित्यर्थः॥ १०॥

(११) ३।६।३२-३४ अंशुग्रहाङ्गं प्रकृतिस्थधर्माः

(१) वाक्यप्रकरणयोर्बाधाबाधविचारः।

(२) ज्योतिष्टोमाद् दूरे अनारभ्यैव द्वौ ग्रहौ अंश्वदाभ्यौ श्रुतौ—'अंशुं गृह्णाति' 'अदाभ्यं गृह्णाति' इति।

(३) तत्र सन्देहः—सादनसम्मार्गादयो ग्रहधर्मा अंश्वदाभ्ययोरनुष्ठेया न वेति।

(४) पूर्वपक्षः—अनयोर्ग्रहयोर्नानुष्ठेया धर्माः। ते हि प्रकरणेन ऐन्द्रवायवादिष्वेव ग्रहेषु व्यवस्थापिता नान्यत्र प्रवेशं लभन्ते—इति।

(५) सिद्धान्तः—'ग्रहाः साद्यन्ते' इत्यादिवाक्यैः सादनादीनां सामान्यतो ग्रहमात्रस्य धर्मत्वम्। सर्वग्रहसाधारणाश्च धर्मा अंश्वदाभ्ययोरपि निविशन्ते। वाक्यं च प्रकरणं बाधते। तस्मादंश्वदाभ्ययोरपि धर्मा अनुष्ठेया एवेति।

एतदेवाभिप्रेत्याह—अंशुग्रहेति। 'प्रकृतिस्थधर्माः' ज्योतिष्टोमप्रकरणे उक्ताः सादनादयो ग्रहधर्माः—'अंशुग्रहाङ्गम्' अंशुनामकस्यापि ग्रहस्य

अङ्गम्,—तत्राप्यनुष्ठेया इति यावत् ॥ ११ ॥

(१२) स्युरिष्टका दूरगताः सधर्माः ॥

(१) वाक्यप्रकरणयोर्विरोधे विचारोऽनुवर्तते ।

(२) अनारभ्य श्रूयते—'चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधाति' इति । सन्ति च प्रकरणे इष्टकाधर्मा आम्नाताः प्रथमचितौ 'अखण्डामकृष्णां कुर्यात्' इति ।

(३) तत्र सन्देहः—इमे धर्माः किं प्रकरणसमाम्नातचितावेव निविशन्ते—उताप्रकरणपठितास्वपीति ।

(४) पूर्वपक्षः—षण्णां चितीनाम्मध्ये प्रथमचितावेवाम्नाताः धर्मा अखण्डत्वादयः । अतः प्रकरणबलात् तस्यामेव व्यवस्थिता इतरासु चित्रिण्यादिषु न कर्तव्या इति ।

(५) सिद्धान्तः—यद्यपि वाक्यत्रयमप्यनारभ्याधीतं तथाऽपि 'य एवंविद्वानग्निं चिनुते' इति यदग्न्यपूर्वं तत्सम्बन्धित्वेनैवाप्रकरणपठिता अपि चित्रिण्यादयोऽपि वाक्येन विनियुज्यन्ते । अखण्डत्वादयश्च अग्निसाधनभूतानां सर्वासामिष्टकानां धर्माः, न प्रथमचितिमात्रस्येति वाक्यादवगम्यते । वाक्यं च प्रकरणाद् बलवत्तरम् । तस्मात् अग्निसाधनभूतासु चित्रिण्यादीष्टकास्वपि निविशन्तेऽखण्डत्वादयो धर्मा इति ।

एतदेवाभिप्रेत्याह—स्युरिति । 'दूरगताः' अप्रकरणपठिता अपि—'इष्टकाः' चित्रिण्यादयः—'सधर्माः' अग्निसाधनीभूतानां सर्वासाम् इष्टकानां ये साधारणा धर्मा अखण्डत्वादयः तद्वत्यः—'स्युः' भवेयुः, कर्तव्या इति यावत् ॥ १२ ॥

(१३) ३।६।३६ नैमित्तिके धर्मगणः श्रुतौ नो

(१) अङ्गत्वविषये विचारविशेषः ।

(२) ज्योतिष्टोमे श्रूयते सोमप्रतिनिधिरूपेण फलचमसः—'स यदि राजन्यं वा वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभीराहृत्य ताः सम्पिष्य दधनि उन्मृज्य तमस्मै प्रयच्छेद् भक्षम्, न सोमम्' इति । ज्योतिष्टोमे च सन्ति केचन सोमधर्माः—मानम् उपावहरणम् क्रयः अभिषवः इत्येवमादयः ।

(३) तत्र सन्देहः—किमेते धर्माः सोममात्रेऽनुष्ठेया उत तत्प्रतिनिधौ फलचमसेऽपीति ।

(४) पूर्वपक्षः—यथा सोमस्य यागसाधनत्वं तथैव फलचमसस्यापि । तस्मात् मानादयो धर्मा यागद्रव्यसंस्कारभूताः यथा सोमे तथैव फलचमसेऽपि निविशन्ते—इति ।

( ५ ) सिद्धान्तः—नित्या मानादयः संस्कारा नित्यं द्रव्यं सोमं संस्कार्यं लब्ध्वा चरितार्थाः सन्तो नान्यं संस्कार्यमपेक्षन्ते । फलचमसस्तु सोमस्थानापन्नो नैमित्तिकः । अतो न तत्र संस्कारविधयः प्रवर्तन्ते । तस्मात् मानादयो धर्माः सोममात्रेऽनुष्ठेया न फलचमसे—इति ।

एतदेवाभिप्रेत्याह—नैमित्तिक इति । 'श्रुतो धर्मगणः' विहितो मानादिधर्मसमूहः—'नैमित्तिके' अनित्ये द्रव्ये सोमप्रतिनिधिभूते फलचमसे—'न'—'निविशते' इति शेषः । नित्ये सोमे एव ते धर्मा अनुष्ठेया इत्याशयः ॥ १३ ॥

(१४) ३।६।३७-३९ धर्मोपदेशः प्रतिनिध्युपात्ते ।

( १ ) पूर्वाधिकरणापवादरूपो विचारः ।

( २ ) 'व्रीहिभिर्यजेत' इति विहितानां व्रीहीणामसम्भवे नीवाराः व्रीहिसादृश्यात् प्रतिनिधित्वेन स्वीक्रियन्ते साक्षात्तद्विध्यभावेऽपि । सन्ति च अवघातादयो धर्मा व्रीहिषु ।

( ३ ) तत्र सन्देहः—किमेते धर्मा प्रतिनिधिष्वप्यनुष्ठेया उत प्रधानेष्वेव व्रीहिषु—इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन प्रधान एव धर्मा अनुष्ठेया न प्रतिनिधिष्विति ।

( ५ ) सिद्धान्तः—व्रीहिशब्दो हि जातिविशेषेणाकारविशेषेण चोपेतं द्रव्यविशेषमाचष्टे । नीवारेषु यद्यपि स जातिविशेषो नास्ति तथाऽप्याकारविशेषोऽस्त्येव । तावन्मात्रेण च तेष्वपि व्रीहिशब्दाभिधेयता । तस्मात् नीवारेष्वपि अवघातविधिः प्रवर्तते । तथा च तेष्वपि अवघातादयो धर्मा अनुष्ठेयाः—इति ।

एतदेवाभिप्रेत्याह धर्मेति । 'प्रतिनिध्युपात्ते' प्रतिनिधिरूपेण विहिते पदार्थे—'धर्मोपदेशः' धर्मविधिः—'प्रवर्तते' इति शेषः । तथा च प्रतिनिधिष्वपि धर्मा अनुष्ठेया इति भावः ॥ १४ ॥

(१५) ३।६।४० पूतीकखण्डोऽप्युपदिष्टधर्मा

( १ ) त्रयोदशाधिकरणस्यापवादान्तरम् ।

( २ ) 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इति सोमस्यालाभे तत्प्रतिधित्वेन पूतीकाः साक्षाद् विहिताः । सन्ति चाभिषवादयः सोमधर्माः ।

( ३ ) तत्र सन्देहः—किं सोमधर्माः श्रुतेषु तत्प्रतिनिधिषु पूतीकेष्वनुष्ठेया न वेति ।

(४) पूर्वपक्षः—अत्र सोमाभावं निमित्तीकृत्य पूतीकलताखण्डानां विहितत्वात् त्रयोदशाधिकरणन्यायेन सोमाभिषवक्रयादिधर्मविधिः पूतीकेषु न प्रवर्तते । तस्मात् तेषु नैवानुष्ठेया धर्माः—इति ।

(५) सिद्धान्तः—नायं त्रयोदशाधिकरणन्यायविषयः पूतीकानामत्र प्रतिनिधित्वेन श्रुतत्वात् । तस्मान्नीवारन्यायेन पूतीकेष्वपि सोमधर्मा अनुष्ठेया एवेति ।

एतदेवाभिप्रेत्याह—पूतीकेति । 'पूतीकखण्डः' सोमप्रतिनिधित्वेन श्रुतः पूतीकलताखण्डः 'अपि'—'उपदिष्टधर्मा'—'उपदिष्टाः' विहिताः 'धर्माः' अभिषवादयः सोमधर्माः धर्माः यस्य स इति मध्यमपदलोपः । सोमधर्मास्तत्प्रतिनिधिषु पूतीकेष्वप्यनुष्ठेया इत्यर्थः ॥ १५ ॥

## (१६) ३।६।४१–४७ संस्थासु नाङ्गान्युपदेशभाञ्जि ॥

(१)—अङ्गत्वविवेके विचारविशेषोऽनुवर्तते ।

(२)—समष्टिरूपेणैकोपि ज्योतिष्टोमः संस्थाभेदेन सप्तधा विभज्यते । तथा हि—(१) यज्ञायज्ञियस्तोत्रपर्यन्तो भागः प्रथमा संस्था 'अग्निष्टोम'नाम्ना प्रसिद्धा—(२) तत ऊर्ध्वमुक्थ्यस्तोत्रपर्यन्तो भागो द्वितीया संस्था 'उक्थ्य' इत्युच्यते—(३) तथैव षोडशीति तृतीया संस्था—(४) अतिरात्र इति च चतुर्थी—एवम्प्रकारेण सप्त संस्था भवन्ति ॥ एतादृशस्य सप्तसंस्थात्मकस्य ज्योतिष्टोमस्य प्रकरणे दीक्षणीयेष्ट्यादीनामङ्गानां विधिराम्नातः ।

(३) तत्र सन्देहः—किमेतान्यङ्गानि प्रथमसंस्थाविशेषेऽग्निष्टोममात्रे निविशन्ते—उत सर्वासु संस्थासु तुल्यमेवेति ।

(४) पूर्वपक्षः—उक्तानामङ्गानां विधिर्यथा प्रथमसंस्थाविशेषेऽग्निष्टोमे प्रवर्तते तथैवेतरेष्वपि संस्थाविशेषेषु—प्रकरणसम्बन्धस्य सर्वत्र समानत्वात् । यथा चाग्निष्टोमः फलवांस्तथैवोक्थ्यादयोऽपि । तस्मात् सप्तस्वपि संस्थासु दीक्षणीयादयो धर्मा अनुष्ठेया इति ।

(५) सिद्धान्तः—उक्थ्यादयः संस्था नाग्निष्टोमेन तुल्याः । यस्मात् तेषां पृथक् फलान्युक्तानि तस्मात् स्पष्टं ज्ञायते यदेता अग्निष्टोमस्य गुणविकारा एव । अतो न सर्वसंस्थासाधारणं प्रकरणमपि त्वग्निष्टोमस्यैव अथ चोक्थ्यादीनामन्तर्भावितग्निष्टोमकत्वात् ज्योतिष्टोमो न कदाचिदप्यग्निष्टोमं व्यभिचरति—उक्थ्यादींस्तु व्यभिचरत्येव—विनापि तैरग्निष्टोमदशायां ज्योतिष्टोमत्वसम्भवात् । तस्मादग्निष्टोममात्रसंस्थस्य ज्योतिष्टोमस्येदं प्रकरणम्—ततश्च तेन प्रकरणेन दीक्षणीयाद्यङ्गानामग्निष्टोम एव सन्निवेशो नोक्थ्यादिसंस्थान्तरेषु—इति ।

एतदेवाभिप्रेत्याह—संस्थास्विति । 'अङ्गानि' दीक्षणीयादीनि—'संस्थासु' सर्वासु सप्तसु—'न उपदेशभाञ्जि' न विधिप्राप्तानि—अपि त्वेकस्यामेव संस्थायामग्निष्टोमनाम्ना प्रसिद्धायामप्राप्तानीत्याशयः ॥१६॥

न्यायास्तु पादे परिकीर्तिताः स्तुः
समीक्ष्य सम्यक् दश चैव षट् च ॥

स्पष्टार्थम् ॥

इति तृतीयस्य षष्ठः ।

# अथ तृतीयस्य सप्तमः ।

## (१) ३।७।१-५ बर्हिः सर्वहविःशेषः

(१) वाक्यप्रकरणद्वाराऽङ्गत्वनियमनमनुवर्तते ।

(२)—दर्शपूर्णमासयोः श्रूयते 'बर्हिषि हवींष्यासादयति' । बर्हिस्सम्बन्धेन च कतिचिद्धर्मा अपि समाम्नाताः 'बर्हिर्लुनाति' इत्यादयः ।

(३) तत्र संशयः—बर्हिरादयस्तद्धर्माश्च किम्प्रधानमात्रस्याङ्गमुत प्रधानस्याङ्गानां चेति ।

(४) पूर्वपक्षः—प्रकरणबलात्प्रधानमात्रस्याङ्गान्येते इति ।

(५) सिद्धान्तः—अङ्गानामपि हवींषि प्रधानस्यापूर्वमुपकुर्वन्त्येव । तस्मात् प्रधानापूर्वसाधनत्वेन तेषामप्यङ्गानि वेद्यादयस्तद्धर्माश्चेति ।

एतदेवाभिप्रेत्याह—बर्हिरिति । 'बर्हिः' हविरासादनाधाररूपेणोपात्तः—'सर्वहविःशेषः' सर्वेषां प्रधानानान्तदङ्गानां च हविषां 'शेषः' अङ्गमिति ॥ १ ॥

## (२) ३।७।६ मुख्यार्थाः स्वामिसंस्क्रियाः ।

(१) पूर्वाधिकरणापवादः ।

(२) ज्योतिष्टोमे केशश्मश्रुवपनपयोव्रतादयो यजमानसंस्काराः समाम्नाताः । ज्योतिष्टोमे च ग्रहैः सोमहोमः प्रधानकर्म अग्नीषोमीयपशुयागादयोऽङ्गम् ।

(३) तेषु सन्देहः—एते किम्प्रधानमात्रस्य शेषा उताङ्गानामपीति ।

(४) पूर्वपक्षः—प्रधानस्याङ्गानां च शेषा एते । कर्तृधर्मा एते, कर्तृत्वं

च यथा प्रधाने तथाऽङ्गेष्वपि। तस्मात् वपनादिभिर्य उपकारः स उभयत्र समानः—इति।

(५) सिद्धान्तः—द्वे हि यजमानस्य रूपे—क्रियाकर्तृत्वम्फलभोक्तृत्वं च। तयोः फलभोगोऽदृष्टः क्रियानिष्पत्तिस्तु दृष्टा। वपनादिकृतस्योपकारस्य चादृष्टत्वात् भोक्तृशेषा एव वपनादय इति सिध्यति। साक्षात् फलभोगसाधनं च प्रधानमेव कर्म। तथा सति वपनादयः प्रधान एव कर्मणि निविशन्ते। एवं चादृष्टफलभोजिनो यजमानस्य यः शास्त्रीयः संस्कारो वपनादिकृतः स प्रधान एव युक्तो नाङ्गेषु। प्रकरणमपि प्रधानस्यैव न मुख्यानामिति।

एतदेवाभिप्रेत्याह—मुख्यार्थं इति। 'स्वामिसंस्क्रियाः' स्वामिनो यजमानस्य 'संस्क्रियाः' संस्काराः वपनादिकृताः—'मुख्यार्थाः' प्रधानकर्मार्थाः, नाङ्गकर्मार्था इति शेषः॥ २॥

## (३) ३।७।७-८ साङ्गार्था सौमिकी वेदिः

(१) पूर्वाधिकरणापवादः।

(२) दार्शिकीं वेदिं मध्येऽन्तर्भाव्य प्राचीनवंशो मण्डपोऽवस्थितः। ततः पूर्वस्यां दिशि सदोहविर्धानादीनां पर्याप्तो भूभागविशेषस्तैः सदःप्रभृतिभिः सह 'सौमिकी वेदिः' इत्युच्यते।

(३) तत्र सन्देहः—किमियं वेदिः मुख्यस्य सोमयागस्यैवोपकरोत्युताग्नीषोमीयादीनामङ्गानामपीति।

(४) पूर्वपक्षः—उक्ता वेदिर्मुख्यस्य सोमयागस्यैवोपकरोति न तु तदङ्गानाम्,—मुख्यस्यैव चिकीर्षितत्वात्। तथा चात्र वाक्यम्—'षट्त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेन—इयति शक्ष्यामहे'। अस्य च 'उक्तप्रमाणके भूभागे फलहेतुभूतं सोमयागं कर्तुं शक्ष्यामहे' इत्येवार्थः। अथ चाग्नीषोमीयादीनां सदोहविर्धानादिमण्डपनिरपेक्षमनुष्ठानं वेदेरन्यत्रापि सम्भवति-सोमयागस्य त्वनुष्ठानं वेद्यामेव भवति नान्यत्र—इति।

(५) सिद्धान्तः—'इयति शक्ष्यामहे' इति वाक्यं साङ्गम्मुख्यं परामृशति—तादृशस्यैव फलसाधनत्वात्। अतो मुख्याङ्गयोश्चिकीर्षितत्वतुल्यत्वात् मुख्यस्य अङ्गानां चोपकरोति वेदिः इति।

एतदेवाभिप्रेत्याह—साङ्गार्था इति। 'सौमिकी वेदिः' 'साङ्गार्था' अग्नीषोमीयाद्यङ्गसहितस्य मुख्यस्य सोमयागस्योपकरोतीति भावः॥ ३॥

## (४) ३।७।९-१० साङ्गार्थप्रदर्शनम्॥

(१) पूर्वविचारसदृशं विचारान्तरम् ।

(२) दर्शपूर्णमासयोः श्रूयते 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रा अमावास्याम्' । [ 'पृथिवी होता' इत्यादिको मन्त्रः 'चतुर्होता'-'अग्निर्होता'-इत्यादिको मन्त्रः 'पञ्चहोता' । इमौ मन्त्रौ आज्यादिहविष उपस्पर्शनार्थौ विहितौ । ]

(३) तत्र सन्देहः—इदमभिमर्शनं किमङ्गप्रधानार्थमुत प्रधानमात्रार्थमिति ।

(४) पूर्वपक्षः—अभिमर्शनं प्रधान एव निविशते पौर्णमास्यामावास्याशब्दयोः प्रधानपरत्वादिति ।

(५) सिद्धान्तः—पौर्णमास्यमावास्याशब्दौ साङ्गप्रधानवाचिनौ । तस्मात् प्रधाने तदङ्गेषु च यानि हवींषि तेषु सर्वेष्विदमभिमर्शनं भवतीति।

तदेतदभिप्रेत्याह—साङ्गार्थमिति । 'अभिमर्शनम्' हविष उपस्पर्शनम्—'साङ्गार्थम्' अङ्गसहितप्रधानकर्मार्थम्—प्रधाने कर्मणि तस्याङ्गेषु च यानि हवींषि तेषु सर्वेषु तस्य सम्बन्ध इत्यर्थः ॥ ४ ॥

## (५) ३।७।११-१२ दीक्षा सदक्षिणा नाङ्गे

(१) पूर्वाधिकरणापवादः ।

(२) ज्योतिष्टोमे भवन्ति दीक्षाः दक्षिणाश्च । 'तिस्रो दीक्षाः' 'द्वादशशतं दक्षिणा' इत्यादि ।

(३) तत्र सन्देहः—इयं दीक्षा दक्षिणा च किमङ्गेषु प्रधाने च निविशेते—उत प्रधानमात्रे इति ।

(४) पूर्वपक्षः—दीक्षा दक्षिणा च प्रधानस्याङ्गानां चोपकरोति । प्रधानकर्मणाज्योतिष्टोमेन सम्बद्धे दीक्षादक्षिणे-प्रधानं च कर्माङ्गैः सम्बद्धम् । तस्मात् परस्परासम्बन्धो भवत्येवाङ्गानामपि दीक्षादक्षिणाभ्यामिति।

(५) सिद्धान्तः—दीक्षादक्षिणयोः साक्षात्सम्बन्धः प्रधानेनैव गम्यते । परम्परासम्बन्धश्च साक्षात्सम्बन्धस्यासम्भवे एव गृह्यते । इह तु नास्त्यसम्भवः साक्षात्सम्बन्धस्य । तस्मात् प्रधानेनैव सम्बन्धः ।

एतदेवाभिप्रेत्याह—दीक्षेति । 'सदक्षिणा' दक्षिणासहिता—'दीक्षा' दीक्षा दक्षिणा च-'अङ्गे न' निविशते-अपि तु प्रधाने एवेति तात्पर्यम् ॥५॥

## (६) ३।७।१३-१४ वेदिर्यूपशुणो न हि ।

(१) अङ्गत्वविचारोऽनुवर्तते ।

(२) अस्ति ज्योतिष्टोमेऽग्नीषोमीयः पशुः । तत्सम्बन्धेन यूपं प्रकृत्य श्रूयते—'अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि' इति ।

[यूपं स्थापयितुं कियद्विस्तारवान् अवटः कर्तव्य इत्यपेक्षायां तन्निर्णयाय यूपमूलस्य स्थौल्यमङ्गुल्यादिभिर्मातव्यम् भवति ।]

( ३ ) तत्र सन्देहः—किम् 'अन्तर्वेदि' इति यूपाङ्गत्वेन वेदिरुपदिश्यते—उत देशलक्षणार्थमेव 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इत्युच्यते इति ।

( ४ ) पूर्वपक्षः—मीयमानस्य यूपस्याङ्गत्वेन वेद्यभ्यन्तरभागो विधीयते । तथाहि मीयमानस्य यूपस्यार्धं वेद्यभ्यन्तरे भवतीति लभ्यते । एवमेव हि वेदिश्रुतिरनुगृहीता भवति—इति ।

( ५ ) सिद्धान्तः—यदि संस्कृतो वेद्यभ्यन्तरभागोऽर्धमन्तर्वेदीत्यनेन वाक्येन यूपाङ्गत्वेन विधीयते तर्हि असंस्कृतो वेदिबहिर्भागोऽपि 'बहिर्वेदी'त्यनेन वाक्येन विधातव्यः । तथा सति वाक्यभेदो दुर्निवारः । एतद्वाक्यभेदपरिहाराय वेदेरभ्यन्तरबहिर्भागाभ्यामुपलक्षितो लौकिक एव देशो मीयमानयूपोचितो विधीयते—इत्येव स्वीकार्यम् । तस्मात् लौकिकदेश एवात्र यूपाङ्गत्वेन विधीयते न वेदिभाग इति ।

एतदेवाभिप्रेत्याह—वेदिरिति । 'वेदिः' वेदिभागः—'नहि यूपगुणः' न यूपाङ्गत्वेन विधीयत इत्यर्थः ॥ ६ ॥

## (७) ३।७।१५–१७ हविर्धानं गुणो नर्चाम्

( १ ) अङ्गत्वविचारः ।

( २ ) ज्योतिष्टोमे श्रूयते—'उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति । हविर्धाननामकयोः शकटयोर्यस्मिन्नेकस्मिन् दक्षिणे शकटे सोमस्याभिषवः क्रियते तं सामिधेनीभिः सम्बन्धयेदित्यर्थः ।

( ३ ) तत्र सन्देहः—किं हविर्धानं सामिधेनीनामङ्गत्वेन विधीयते ( तथाच हविर्धानविशिष्टाः सामिधेन्योऽनुवक्तव्या इत्यर्थः )—उत हविर्धानेन अनूच्यमानानां सामिधेनीनां देशो लक्ष्यते इति ।

( ४ ) पूर्वपक्षः—हविर्धानस्य सामिधेन्यङ्गत्वमत्र स्पष्टं प्रतीयते । न चात्र वाक्यभेदादिदोषापत्तिरिति ।

( ५ ) सिद्धान्तः—देशलक्षणार्थमेवेदं वाक्यम्—'यस्मिन् देशे सुन्वन्ति तस्मिन् देशे सामिधेन्योऽनुवक्तव्या' इति । दक्षिणोत्तरहविर्धानसमीपदेशयोरनियमेन प्राप्तौ दक्षिणस्यैव हविर्धानस्य समीपदेशो विहितो भवति । एवं च हविर्धानेन तत्सन्निधिर्लक्ष्यते । तथा सति नियममात्रविधानालाघवम् । इतरस्मिन् पक्षे तु अभिषवोपलक्षितस्य दक्षिणस्य हविर्धानस्य सामिधेन्यङ्गत्वमत्यन्तमप्राप्तमेव विधीयते—इति गौरवम् इति ।

एतदेवाभिप्रेत्याह । हविर्धानमिति । 'हविर्धानम्'—'ऋचाम्' सामि-

धेनीनाम्--'गुणः' अङ्गं 'न' भवतीति शेषः। अपि तु देशविशेष एव तेन लक्ष्यत इति भावः॥ ७॥

## (८) ३।७।१८–२० स्वामीत्युक्त्यैव नान्यकृत्॥

(१) द्रव्याणां कर्मणां चाङ्गत्वविषये श्रुत्यादीनां बलाबलं विविच्याधुनाऽनुष्ठातॄणां विषये तद् विचारणीयं प्राप्नोति। तत्रादौ केऽनुष्ठातार इत्येव विचार्यते।

(२) 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि श्रूयते।

(३) तत्र सन्देहः—दर्शपूर्णमासनाम्ना प्रसिद्धं यत् कर्मजातं तत्सर्वं किं स्वर्गकामेन यजमानेनैवैकेनानुष्ठातव्यमुत सङ्कल्पवरणमात्रं यजमानः स्वयं कुर्यात् अन्यत् सर्वमन्यः कुर्यात्–अथ किञ्चित् स्वयं किञ्चिदन्य इति।

(४) पूर्वपक्षः—स्वयं यजमान एव सर्वाणि कर्माणि कुर्यात्। यतः कर्मफलं स्वयं कर्म प्रयुञ्जानस्यैव भवतीति दृश्यते। शब्दोऽपि तथैवाभिधत्ते—'यः स्वर्गकामः स एव दर्शपूर्णमासाख्यं कर्म कुर्यादि'ति।

(५) सिद्धान्तः—निखिलकर्माननुष्ठानेऽपि यजमानस्य यागकर्तृत्वं तत्फलभाक्त्वं च न हीयते। यथा क्षेत्रस्वामी यद्यपि हलकर्षणादिकर्म अन्यैर्हालिकादिभिः कारयति तथाऽपि सस्यरूपं फलं तस्यैव भवति—एवमेव यद्यपि यागाङ्गानि कर्माणि यजमानोऽन्यैर्ऋत्विग्भिः कारयति तथाऽपि तद्यागफलं तस्यैव भवति। ऋत्विजां परिक्रयश्च शास्त्रविहितः। परिक्रयश्च कर्मानुष्ठानसाहाय्यसम्पादनमात्रप्रयोजनः। यदि परिक्रीतैर्ऋत्विग्भिः कर्माणि न क्रियेरन् तर्हि तेषां परिक्रयोऽदृष्टार्थ एव स्यात्। अथ च सकलानां कर्मणामेकेन पुरुषेण स्वयमनुष्ठानमपि न सम्भवति। परिक्रीतेन पुरुषेण यत् कार्यते तत् स्वयमेव क्रियते। तस्मात् सङ्कल्पवरणादिकमेव यजमानः स्वयं कुर्यात् अन्यानि सकलानि त्वन्यद्वारेणैव इति।

एतदभिप्रेत्याह स्वामीति। 'स्वामीति उक्त्या'—यस्मात् यजमानः स्वामीति नाम्नाऽभिधीयते तस्मात् स 'अन्यकृत्'—सङ्कल्पवरणादिकात् 'अन्यस्य' कर्मकलापस्य 'कर्ता' अनुष्ठाता 'न' भवति। येषामयं स्वामी ते यदि तदर्थं कर्माणि न कुर्वीरन् तर्हि स्वामित्वं व्यर्थं स्यात्। तस्मात् यागस्य यः स्वामी स नैव कुर्यात् यागाङ्गकर्माणि—तानि तेन परिक्रीतैर्ऋत्विग्भिरेव सम्पादनीयानीत्यर्थः॥ ८॥

## (९) ३।७।२१–२४ भतिनामर्त्विजो भिन्नाः

(१ परिक्रीतैरन्यैः पुरुषैः कर्माणि कार्याणीति स्थितम्। तेषामृत्विजां विषये विचारः प्रवर्तते।

(२) कर्मणामनुष्ठातारः श्रूयन्ते—'अध्वर्युर्विभजति' 'प्रतिप्रस्थाता मन्थिनं जुहोति' इत्यादि।

(३) तत्र सन्देहः—परिक्रेतव्यानामृत्विजां सङ्ख्यानियमोऽस्ति न वेति।

(४) पूर्वपक्षः—अनुष्ठातृसङ्ख्यानियमो न श्रूयते। अतो यावद्भिः पुरुषैः कर्मानुष्ठानं सम्भाव्यते तावन्तः परिक्रेतव्याः। अतो न सङ्ख्यानियमः। यद्येक एव सकलकर्मानुष्ठानक्षमः पुरुष उपलभ्यते तदा स एवैको वरणीयः—अन्यथा द्वौ त्रयो वा आवश्यकतानुसारेण वरणीया इति॥

(५) सिद्धान्तः। कर्तृविशेषसम्बद्धा एव सर्वे कर्मविशेषाः श्रूयन्ते—'तान् पुरोऽध्वर्युर्विभजति—प्रतिप्रस्थाता मन्थिनं जुहोति—नेष्टा पत्नीमभ्युदानयति—उन्नेता चमसाननुन्नयति-प्रस्तोता प्रस्तौति—उद्गाता उद्गायति-प्रतिहर्ता प्रतिहरति—सुब्रह्मण्यः सुब्रह्मण्यामाह—होता प्रातरनुवाकमनुब्रूते—मैत्रावरुणः प्रेष्यति चानु चाह—अच्छावाको यजति—ग्रावस्तुत् ग्रावस्तोत्रीयामन्वाह' इति। यच्च कर्म यत्पुरुषकर्तव्यत्वेनाम्नातं तत् तेनैव कर्तव्यमतस्तत्करणार्थं सोऽवश्यं वरणीयः। तस्माद्यावन्तः पुरुषा कर्मविशेषसम्बद्धा नाम्नाऽऽम्नातास्तावन्त एव वरणीयाः—सत्यपि सकलकर्मानुष्ठानक्षमे पुरुषे कर्मसङ्करो नैव कार्य इति॥

एतदभिप्रेत्याह—प्रतिनामेति। 'ऋत्विजः' कर्मानुष्ठानार्थं परिक्रेतव्याः पुरुषाः—'प्रतिनाम' प्रतिपदोक्ताध्वर्य्वादिनामानुसारेण—'भिन्नाः' पृथगेव वरणीया भवन्तीति। कर्मसङ्करीकरणं नोचितमित्याशयः॥९॥

## (१०) ३।७।२५ चमसाध्वर्यवः पृथक्।

(१) ऋत्विजां विषये विचारोऽनुवर्तते।

(२) 'चमसाध्वर्यून् वृणीत' इति चमसाध्वर्युनाम्ना केचन श्रुताः।

(३) तत्र सन्देहः—चमसाध्वर्युनाम्ना य उक्तास्ते किं पूर्वाधिकरणोक्तेभ्यो ऋत्विग्भ्यो भिन्ना उत त एव नामान्तरेणोपवर्णिता इति॥

(४) पूर्वपक्षः—अध्वर्युनाम्नोक्ता पूर्वोक्ताध्वर्यव एते-चमससम्बन्धमात्रमत्र विवक्षितमिति॥

(५) सिद्धान्तः—अध्वर्यवः सर्वे स्वस्वनामभिः पृथगेव यथोक्ताः तथैवात्र चमसाध्वर्यवोऽपीति पृथगेवैते इति॥

एतदभिप्रेत्याह चमसाध्वर्यव इति। 'चमसाध्वर्यवः'—पूर्वोक्तेभ्यः—ऋत्विग्भ्यः—'भिन्नाः' व्यतिरिक्ता इति॥१०॥

## (११) ३।७।२६ बहवस्ते बहुश्रुत्या

(१) तेषामेव चमसाध्वर्यूणां विषये विचारोऽनुवर्तते।

( २ )—पूर्वोक्तमेव—'चमसाध्वर्यून् वृणीत' इति विषयवाक्यम् ।

( ३ ) किमेते बहव एवेति नियमः—उत एको द्वौ बहवो वेत्यनियम इति सन्देहः ।

( ४ ) तत्र पूर्वपक्षः—ग्रहैकत्ववदुद्देश्यगतत्वादविवक्षितमत्र बहुत्वम् । अतश्चमसाध्वर्यूणां सङ्ख्यानियमो नास्ति ।

( ५ ) सिद्धान्तः—विवक्षितमेवात्र बहुत्वम् । न चात्र ग्रहैकत्वन्यायः प्रवर्तते । तत्र 'ग्रहं सम्मार्ष्टि' इति ग्रहाणामुत्पत्तिवाक्यन्न भवति—अतस्तत्रोक्तमेकत्वमविवक्षितम्—अत्र तु चमसाध्वर्यूणामुत्पत्तिवाक्यमेवैतत्—अतस्तेषामुपादेयत्वात् तद्गतं बहुत्वं विवक्षितम् । तस्मात् बहव एव चमसाध्वर्यव इति भवत्येव नियम इति ।

एतदभिप्रेत्याह—बहव इति । 'ते'—चमसाध्वर्यवः—'बहव' एव—कुतः—'बहुश्रुत्या'—यस्मात् तेषां बहुत्वं साक्षात्-'श्रुत्या' वाक्येन उक्तम् तस्मादिति सम्बन्धः ॥ ११ ॥

## (१२) ३।७।२७ दश ते लिङ्गदर्शनात् ॥

( १ ) चमसाध्वर्यु विषय एव विचारान्तरम् ।

( २ ) पूर्वोक्तमेवात्र विषयवाक्यम् ।

( ३ ) चमसाध्वर्यवो बहव इत्युक्तम्—कियन्तो बहवः–त्रय एव वोत ततोऽधिका इति भवति सन्देहः ।

( ४ ) तत्र पूर्वपक्षः—बहुत्वमात्रस्योक्तत्वात् बहुत्वस्य च त्रिभिरेव चरितार्थत्वात् ततोऽधिकसङ्ख्याग्रहणे प्रमाणाभावात् त्रय एव चमसाध्वर्यव इति ।

( ५ ) सिद्धान्तः—चमसाध्वर्यवो दश भवेयुः । चमसानां दशसङ्ख्यकत्वात् प्रतिचमसमेकस्य चमसाध्वर्योरुक्तत्वात् । तथाहि ज्योतिष्टोमावकारे दशपेये श्रूयते—दश चमसाध्वर्यवो दश दश एकैकं चमसमनुसर्पन्तीति । एवञ्च लिङ्गम्भवति दशसङ्ख्यास्वीकरणे—इति ।

एतदभिप्रेत्याह—दशेति । 'ते' चमसाध्वर्यवः 'दश' भवन्तीति शेषः–कुतः—'लिङ्गदर्शनात्'—'दश चमसाध्वर्यव' इत्यादिवाक्यरूपस्य दशसङ्ख्यालिङ्गस्य दृष्टत्वात् ॥ १२ ॥

## (१३) ३।७ २८–२९ शमिताऽध्वर्युरेव स्यात्

( १ ) ऋत्विग्विशेषविषये विचारोऽनुवर्तते ।

( २ ) 'शमितारमुपनयीत' इत्यस्त्युक्तः कश्चिदनुष्ठातृविशेषः ।

( ३ ) तत्र सन्देहः—अयं शमितृनामकोऽनुष्ठाता किमध्वर्य्वाद्यन्तर्गत एव कश्चिदुत तेभ्यो व्यतिरिक्त इति ।

( ४ ) पूर्वपक्षः--अध्वर्य्वाद्यतिरिक्तनाम्नाऽयमुक्तः । तस्माच्छ-मितृसंज्ञकः कश्चिदन्य आनेतव्यः । अपि च 'क्लोमा चोध्वं बैकर्तनं च शमितुः स्यात्--तद् ब्राह्मणाय दद्यात् यद्यब्राह्मणः स्यादिति' वाक्ये श-मितुरब्राह्मणत्वमपि सम्भाव्यते---न च सम्भवत्यब्राह्मणत्वं कस्मिंश्चिदध्य-ध्वर्य्वादावृत्विजि । तस्मादपि तेभ्यो भिन्न एव शमितेति ।

( ५ ) सिद्धान्तः-शमितुर्नास्ति पृथग्वरणं क्वचिदुक्तम् । अतो न व्य-तिरिक्तः शमिता । अध्वर्य्वादिष्वेव यः कश्चिदृत्विक् पशुशमनरूपं कार्यं करोति स एव तत्कर्मसंयोगात् शमितृनामभाग् भवति । अब्राह्मणाशङ्का तु यजमानविषयैव । तस्मान्न व्यतिरिक्तः शमितेति ।

एतदभिप्रत्याह—शमितेति । 'अध्वर्युरेव' पशुशमनकार्यकरत्वात् 'शमिता' शमितृसंज्ञको भवति—न कश्चिदन्य इति शेषः । नाध्वर्युः शमिता अपि तु प्रतिप्रस्थात्रादय एव शमनकर्म कुर्वन्ति—अतस्त एव शमितार इति विस्तरकाराः । 'शमनादध्वर्युरेव शमिता' इति भाष्यवचन-विरुद्धमेव तदिति नादरणीयम् ॥ १३ ॥

(१४) ३।७।३० उपगाः प्रकृता मताः ।

( १ ) पूर्वाधिकरणसदृशं विचारान्तरम् । न च पूर्वाधिकरणन्याये-नास्यापि गतार्थता-अत्रोपगेति नाम्ना सूच्यते यत् प्रधानादुद्गातृनाम-काद् ऋत्विजोऽन्यः पार्श्वस्थः कोऽप्ययं न मुख्यर्त्विजामेक इति । न चैवं विशेषज्ञापकं किञ्चिच्छमितृनामविषये ।

( २ ) ज्योतिष्टोमे उपगनामकोऽनुष्ठातोक्तः ।

( ३ ) तत्र सन्देहः—किमयमुपगोऽध्वर्य्वादिष्वेक उत तेभ्यो व्यति-रिक्त एव कश्चित् इति ।

( ४ ) पूर्वपक्षः—यथा लोके मुख्येभ्यो गायकनायकादिभ्योऽन्ये पा-र्श्वस्था उपगातारो भवन्ति तथाऽत्रापि मुख्येभ्योऽध्वर्युहोत्रोद्गात्रादिभ्य ऋत्विग्भ्यो व्यतिरिक्त एवोपगः । पृथङ्नाम्ना पार्थक्यस्य स्पष्टं सूचि-तत्वादिति ।

( ५ ) सिद्धान्तः—यद्यध्वर्य्वादिभ्यो व्यतिरिक्त उपगः स्यात् तर्हि उपगानुरूपं कर्माध्वर्यौ नैव प्रसक्तं स्यात् । तथाच 'नोध्वर्युरुपगायेत्' इति प्रतिषेधोऽनर्थकः स्यात् । तस्मादध्वर्य्वादिष्वेवैक उपग इति सिद्धम् इति ।

एतदभिप्रेत्याह—उपगा इति । 'प्रकृताः' यज्ञप्रधानानुष्ठातारोऽध्व-र्य्वादयो ये वरणीयर्त्विज उक्ताः ते एव 'उपगाः' उपगानरूपकर्मसम्बद्धा उपगनामधेया 'मताः' सिद्धा इति सम्बन्धः ॥ १४ ॥

## (१५) ३।७।३१ विक्रयी प्रकृतेभ्योऽन्यः

(१) उक्तविचारसदृशं विचारान्तरम् ।

(२) अस्ति ज्योतिष्टोमे सोमस्य विक्रेता ।

(३) तद्विषये सन्देहः—किमयमध्वर्य्वादिष्वेवैक उपगवत्—उत तेभ्यो व्यतिरिक्तः कश्चिदिति ।

(४) पूर्वपक्षः—उपगवत् सोमविक्रय्यपि अध्वर्य्वादिभिरृत्विग्भिस्सहैव यागानुष्ठातृवर्गे उक्तः । तस्मात्तेषामेवान्यतमोऽयं न भिन्न इति ।

(५) सिद्धान्तः—सोमस्य क्रयणमेव ज्योतिष्टोमाङ्गत्वेन विहितं न विक्रयणम् । न चाविहितं कर्म ऋत्विजः कुर्वन्ति । तस्मादृत्विग्भ्योऽन्य एव सोमस्य विक्रेतेति ।

एतदभिप्रेत्याह—विक्रयीति । 'विक्रयी' सोमस्य विक्रेता—'प्रकृतेभ्यः' अध्वर्य्वादिभ्य ऋत्विग्भ्यः—'अन्यः' व्यतिरिक्त एवेति ॥ १५ ॥

## (१६) ३।७।३२–३५ सोमे सप्तदशर्त्विजः ॥

(१) ऋत्विजां विषये विचारोऽनुवर्तते ।

(२) अध्वर्युहोतृचमसाध्वर्यूपगसोमविक्रय्यादयः पुरुषा ज्योतिष्टोमयागाङ्गानुष्ठातृत्वेनोक्ता उपलभ्यन्ते ।

(३) तत्र सन्देहः—किमेते सर्व एवर्त्विङ्नामभाज उत केचिदेव न सर्वे इति ।

(४) पूर्वपक्षः—ऋतौ यजन्तीति ऋत्विक्शब्दस्य प्रवृत्तिनिमित्तम् । तच्च सर्वेषु समानम् । तस्मात् सर्व एवर्त्विङ्नामभाज इति ।

(५) सिद्धान्तः—'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विजः' इति स्पष्टं सप्तदशानामेव ऋत्विङ्नामभाक्त्वम् साक्षाच्छ्रुत्योक्तम् । तस्मात् ऋत्विक्शब्दस्य यौगिकार्थं परित्यज्य शास्त्रीयां च रूढिं स्वीकृत्य यागाङ्गानुष्ठातॄणाम्मध्ये सप्तदशस्वेव ऋत्विक्त्वमिति ।

एतदभिप्रेत्याह—सोम इति । 'सोमे' ज्योतिष्टोमयागे—'सप्तदश' एव न ततोऽधिकाः पुरुषाः—'ऋत्विजः' ऋत्विङ्नामभाजो भवन्तीति शेषः ॥ १६ ॥

## (१७) ३।७।३६–३७ ते तु ब्रह्मादयो नान्ये

(१) पूर्वाधिकरणविचारशेषोऽयम् ।

(२) सप्तदशानामेव ऋत्विक्त्वमिति सिद्धम् ।

(३) तत्र संशयः—क एते सप्तदशेति ।

(४) पूर्वपक्षः—विशेषस्याश्रवणात् स्वेच्छयाऽनियमेन ब्रह्मादिषु चमसाध्वर्य्वादिषु च ये केचित् ग्रहीतव्या इति ।

(५) सिद्धान्तः—श्रूयते तु विशेषः। ऋत्विग्भ्यो दक्षिणां ददातीति उक्त्वा तद्विशेषः—'ब्रह्मणे ददाति—अग्नीध्रे ददाति—' इत्यादि। एवमेव दीक्षाविधानेऽपि श्रूयते—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति—तत उद्गातारम् ततो होतारम्—ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति'—इत्यादि। एतद्दीक्षावाक्यसङ्कलनया षोडशानुष्ठातार उपलभ्यन्ते—तद्यथा-(१) अध्वर्युर्यजुर्वेदोक्तं कर्म करोति—तस्य त्रयः पुरुषाः—(२) प्रतिप्रस्थाता (३) नेष्टा (४) उन्नेता चेति। (५) ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति—तस्य त्रयः पुरुषाः (६) ब्राह्मणाच्छंसी (७) अग्नीत् (८) पोता चेति। (९) उद्गातोद्गानं करोति—तस्य त्रयः पुरुषाः (१०) प्रस्तोता (११) प्रतिहर्ता (१२) सुब्रह्मण्यश्चेति। (१३) होता शंसनं करोति—तस्यापि त्रयः पुरुषाः—(१४) मैत्रावरुणः (१५) अच्छावाकः (१६) ग्रावस्तुच्चेति॥ तस्मात् एतेष्वेवर्त्विङ्नामभाक्त्वम्, नान्येषु चमसाध्वर्यूपगादिष्विति॥

एतदभिप्रेत्याह—त इति। 'ते' ऋत्विजः—'ब्रह्मादयः एव'-'न अन्ये' चमसाध्वर्य्वादय इति शेषः॥ १७॥

(१८) ३।७।३८ स्वामिसप्तदशाश्च ते।

(१) पूर्वाधिकरणशेषोऽयं विचारः।

(२) सप्तदश ऋत्विजो भवन्ति—तत्र षोडश अध्वर्युब्रह्मादयः परिगणिताः।

(३) सप्तदशः कः किं यजमान उत सदस्यः—इतीदानीं भवति सन्देहः।

(४) पूर्वपक्षः—अध्वर्य्वादिषु षोडशसु व्यवस्थितेषु सप्तदशसङ्ख्यापूरकः कश्चिद् ऋत्विगपेक्षितः। सोऽत्र सदस्य एव भवति। स एव कर्मकरः यजमानस्तु स्वामी कर्मकर एव परिक्रियते। ऋत्विज एव परिक्रीयन्ते। तस्मात् सदस्य एव सप्तदश ऋत्विक् इति।

(५) सिद्धान्तः—स्वामी यजमान एव सप्तदशः स्यात्। यज्ञे कर्तार एव ऋत्विजो भवन्ति—यज्ञे च कर्ता स्वामी। तस्मात् स एव ऋत्विजां सप्तदश इति।

एतदभिप्रेत्याह—स्वामीति। 'ते' ऋत्विजः 'स्वामिसप्तदशाः'—'स्वामी' एव 'सप्तदशः' सप्तदशसङ्ख्यापूरकः येषां ते तथाभूता भवन्ति इति सम्बन्धः। सप्तदशश्च यजमान एवेति ध्येयम्॥ १८॥

(१९) ३।७।३९-४० तेषां समाख्यया कर्म

( १ )—के सप्तदश ऋत्विज इति व्यवस्थापितम् । अत इदानीं तेषां करणीयविषये विचारः प्रवर्तते ।

( २ ) सप्तदश ऋत्विजो ज्योतिष्टोमे समाम्नाताः ।

( ३ ) तैः किमनियमेन सर्वं पुरुषकार्यं सर्वैः करणीयमुतास्ति काचिद्व्यवस्थेति संशयः ।

( ४ ) पूर्वपक्षः—यज्ञसम्पादनाय वृता ऋत्विजः सर्व एव सर्वं यथाप्राप्तं कार्यं कुर्युः नियमे प्रमाणाभावात् तेन च कार्यव्याघातप्रसङ्गादिति ।

( ५ ) सिद्धान्तः—यज्ञाङ्गकार्याणां भवति प्रतिपुरुषमृत्विक्सम्बन्धः समाख्यया । अतो यन्नाम्ना सम्बद्धं यत् कर्म समाख्यायते तत् कर्म तेनैवर्त्विजा कर्तव्यमिति कर्तृनियमः समाख्याप्रमाणेन व्यवस्थाप्यते । यानि कर्माणि आध्वर्यवनाम्ना प्रसिद्धानि तान्यध्वर्युणा कर्तव्यानि यानि हौत्राणि तानि होत्रा-इत्येवंरूपा भवत्येव व्यवस्थेति ।

एतदभिप्रेत्याह—तेषामिति । 'तेषां' ऋत्विजां 'कर्म' करणीयं कार्यं—'समाख्यया' आध्वर्यवहौत्रादिरूपया-नियमितम्भवतीति शेषः ।

[एतदधिकरणान्तर्गतमेवाधिकरणान्तरमपि भाष्यकारेण निरूपितम् । तद्यथा—आहवनीयादयोऽग्नयः किं प्रकृत्यर्था एवोत प्रकृतिविकृत्युभयार्था इति संशये पूर्वपक्षः—प्रकृतिमात्रार्था अग्नय इति—तत्र सिद्धान्तः प्रकृतिविकृत्युभयार्थास्ते—इति । एतच्चाधिकरणं प्रकृतासम्बद्धत्वेनोपेक्षितम्मण्डनमिश्रेणेति न परिगणितमत्रापीति ध्येयम् ] ॥ १९ ॥

## (२०) ३।७।४१-४२ वचनाच्च क्वचिद्ध भवेत् ॥

( १ ) पूर्वाधिकरणापवादः ।

( २ ) ऋत्विक्कार्याणां समाख्यया व्यवस्थेति व्यवस्थितम् ।

( ३ ) तत्र सन्देहः—किं सर्वत्रैवेत्थमुत कुत्राप्यन्यथाऽपि भवतीति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सर्वत्रैव समाख्यया व्यवस्थेति ।

( ५ ) सिद्धान्तः—समाख्ययैव प्रायो भवति व्यवस्था । किन्तु क्वचित् साक्षाच्छ्रुत्याऽन्यथापि भवति । यथा प्रैषानुवचनादिकानि कार्याणि 'पोत्रीयानेष्ट्रीया' इति समाख्यातानि पोतृनेष्टृकर्तव्यत्वेन प्राप्तानि । किन्तु मैत्रावरुणेन तानि क्वचित् क्रियन्ते । तच्च साक्षाच्छ्रुतोपदेशबलात्—'तस्मान्मैत्रावरुणः प्रेष्यति चानुचाहेति' भवत्युपदेश इति ।

एतदभिप्रेत्याह—वचनादिति । 'क्वचित्' स्थलविशेषेषु 'वचनात्' साक्षादुपदेशात् समाख्यानिरपेक्षमपि—'भवेत्' कर्मव्यवस्थापनमिति शेषः ॥ २० ॥

## (२१) ३।७।४३–४५ प्रशास्ता न वदेदेकम्

(१)—पूर्वाधिकरणशेषभूतो विचारः ।

(२) ज्योतिष्टोमेऽग्नीषोमीयपश्वालम्भनं प्रकृत्य—'तस्मान्मैत्रावरुणः प्रेष्यति चानुचाहेति' प्रैषानुवचनरूपं कर्मद्वयमुपदिष्टम्मैत्रावरुणकर्तव्यत्वेन–समाख्यया तु होत्रादिकर्तव्यत्वं तेषां प्राप्तम् ।

(३) तत्र सन्देहः—किं सर्वाण्यनुवचनानि सर्वे च प्रैषा मैत्रावरुणेन कर्तव्या उत यत्रानुवचनसमुच्चितः प्रैषः कर्तव्यस्तन्मात्र एवेति ।

(४) पूर्वपक्षः—उपदेशेन समाख्याया बाधात् सर्वे प्रैषाः सर्वाणि चानुवचनानि मैत्रावरुणेन कार्याणीति ।

(५) सिद्धान्तः—'प्रेष्यति चानुचाहेति' उपदेशवाक्यम् । तत्र च चकारद्वयेन प्रैषानुवचनयोः समुच्चय उच्यते । ततश्च यत्रोभयं समुच्चितं तत्रैवानेनोपदेशेन समाख्याया बाधः । तस्मात् समुच्चिते यत्र प्रैषानुवचने क्रियेते तत्रैव मैत्रावरुणकर्तृकत्वमन्यत्र तु व्यस्तयोस्तयोः समाख्याबलेन होत्रादिकर्तृकत्वमेवेति ।

एतदभिप्रेत्याह प्रशास्तेति । 'प्रशास्ता' मैत्रावरुणः—'एकं' अनुवचनमात्रम् अथवा प्रैषमात्रं 'न वदेत्' नोच्चारयेत्—समुच्चितमेव यत्र तदुभयं प्रयुज्यते तत्रैव स वदेदन्यत्र तु समाख्याप्राप्ता होत्रादय एवेत्याशयः ॥ २१ ॥

## (२२) ३।७।४६–४९ अध्वर्योश्चमसाहुतिः ।

(१) समाख्याया बाधाबाधविषये विचारविशेषः ।

(२) सन्ति चमसाहुतयः सन्ति च चमसाध्वर्युनामर्त्विजः ।

(३) तत्र संशयः–चमसाहुतिः चमसाध्वर्युभिः कर्तव्योताध्वर्युणेति ।

(४) पूर्वपक्षः—समाख्याबलात् चमसाध्वर्यव एव चमसाहुतिं कुर्युरिति ।

(५) सिद्धान्तः—सर्वे होमा आध्वर्यवनाम्नाम्नाताः । आध्वर्यवाणि च कर्माण्यध्वर्युणैव कर्तव्यानि नान्येनर्त्विजा । तस्माच्चमसहोमोऽप्यध्वर्युणैव कार्यः । न च "चमसाध्वर्यवोऽप्यध्वर्यव एव–ततश्च तेषामप्याध्वर्यवकर्मानुष्ठानेऽधिकारोऽस्त्येवेति" वाच्यम् । चमसपदविशेषसापेक्षायाः चमसाध्वर्युसमाख्यापेक्षया विशेषनिरपेक्षाया अध्वर्युसमाख्याया बलवत्तरत्वात् केवलाध्वर्युशब्दस्यैव ऋत्विक्संज्ञारूपेण प्रवृत्तिर्बलवत्तरा । तथा च सति 'आध्वर्यवो होम' इति केवलाध्वर्युशब्दगर्भया समाख्ययाऽध्वर्युरेव चमसहोममपि कुर्यात्—तस्याशक्तावेव चमसाध्वर्युः कुर्यादिति निष्कर्षः । इति ।

एतदभिप्रेत्याह—अध्वर्योरिति। 'चमसाहुतिः' चमसहोमः 'अध्वर्योः' अध्वर्योरेव—कर्तव्यो न चमसाध्वर्योरिति शेषः ॥ २२ ॥

### (२३) ३।७।५०-५१ श्येने सर्वर्त्विजां कर्म

(१) ऋत्विजां कार्यविषये समाख्याबाधाबाधयोर्विचारान्तरम्।

(२) अस्त्यौद्गात्रनाम्नाम्नातेषु श्येनः।

(३) तत्र सन्देहः—श्येनयागे किं सर्वाण्येव कार्याण्युद्गात्रैव कर्तव्यान्युतानेकैर्ऋत्विग्भिरिति।

(४) समाख्याबलात् श्येनाङ्गभूतानि सर्वाण्युद्गात्रैव कर्तव्यानीति।

(५) सिद्धान्तः—श्येनो ज्योतिष्टोमविकारः। ज्योतिष्टोमचोदकस्तु तानि तानि कर्माणि तैस्तैर्नानर्त्विग्भिः कर्तव्यत्वेन समर्पयति। श्येनरूपविकृतौ चातिदेशप्राप्तानि तानि कर्माणि तच्चोदकबलात् चोदकवचनाधीनां दुर्बलां समाख्यां बाधित्वा तत्तदृत्विग्भिः कर्तव्यानीति।

एतदभिप्रेत्याह—श्येन इति। 'श्येने' श्येनयागे—'कर्म' सर्वैर्ऋत्विग्भिर्यथोपदेशं कर्तव्यम्—न केवलमुद्गात्रेति भावः ॥ २३ ॥

त्रयोविंशतिनीतयः ॥

अत्र पादे त्रयोविंशतिरेव न्याया इत्यर्थः।

इति तृतीयस्य सप्तमः ॥

---

## अथ तृतीयस्याष्टमः पादः।

### (१) ३।८।१ परिक्रयः स्याद्द यजमानकर्म

(१) कर्मनाम्ना तत्कर्तृनियमननियमेऽपवादोऽयम्।

(२) ज्योतिष्टोमादौ दक्षिणादानेन कर्मकरा आसादयितव्याः। एतदेव तेषां 'परिक्रय' इत्युच्यते।

(३) तत्र सन्देहः—इदं परिक्रयरूपं कर्म केन कर्तव्यम्—यजमानेनोताध्वर्य्वादिना केनचिदृत्विजेति।

(४) पूर्वपक्षः—यागीयद्रव्याणां यागार्थपरित्यागरूपं कर्म विहाय सर्वं तदङ्गजातमृत्विग्भिरेव कर्तव्यम्। परिक्रयसाधनभूतं च दक्षिणादानम्।

दक्षिणा च आध्वर्यववेदे समाम्नाता । तस्मादाध्वर्यवसमाख्याबलादध्वर्युणैव दक्षिणादानं तद्द्वारा च परिक्रयणं कर्तव्यमिति ।

( ५ ) सिद्धान्तः—परिक्रयणं कर्मणामनुष्ठानात् प्रागेव भवति । परिक्रयणात् प्राक् ऋत्विजामार्त्विज्यमेव न सम्पन्नम् । आर्त्विज्याभावे च तेषां यागेन सम्बन्धो नास्ति । यजमानस्य तु फलकामद्वाराऽस्त्येव तत्साधनीभूतेन यागेन सम्बन्धः । अतः परिक्रयणं यजमानेनैव कर्तव्यम् । परिक्रयणानन्तरं च सर्वं तत्तदृत्विग्भिर्यथाश्रुतं कर्तव्यमिति ।

एतदभिप्रेत्याह—परिक्रय इति । 'परिक्रयः' ऋत्विजामानतिः—'यजमानकर्म' यजमानेनैव कर्तव्यम्—'स्यात्' भवेत् ॥ १ ॥

## (२) ३।८।२ वाक्येन स स्यात् क्वचिदन्यकर्म ।

( १ ) पूर्वाधिकरणापवादः ।

( २ )—'य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यात्' इति गोत्रयरूपदक्षिणादानं समाम्नातम् ।

( ३ ) तत्र सन्देहः—इतरदक्षिणादानवत् इदं दक्षिणादानमपि किं यजमानेनैव कर्तव्यमुतान्येनेति ।

( ४ ) पूर्वाधिकरणन्यायेन यजमानेनैवेदमपि दक्षिणाद्वारा परिक्रयणं कर्तव्यमिति ।

( ५ ) सिद्धान्तः—उक्तवाक्ये गोत्रयदानमिष्टकोपधातृणैव कर्तव्यमिति स्पष्टमुक्तम् । इष्टकोपधानं च यजमानेन न क्रियतेऽपि त्वध्वर्युणा । तस्माद् गोत्रयरूपदक्षिणादानद्वारा यत् परिक्रयणं तदध्वर्युरेव कुर्यात्—साक्षाच्छ्रुतिबलेनेति ।

एतदभिप्रेत्याह—वाक्येनेति । 'क्वचित्' स्थलविशेषे—उक्तं परिक्रयणं 'वाक्येन' साक्षाच्छ्रुतिबलेन—'अन्यकर्म' अन्येन—यजमानाद्व्यतिरिक्तेनर्त्विजाऽध्वर्युणेति यावत्—कर्तव्यं—'स्यात्' इति सम्बन्धः ॥

एतदधिकरणमाद्याधिकरणान्तर्गतमेव वर्तते भाष्ये वार्तिके च । मण्डनमिश्रेण तु पृथगुक्तम् । न्यायमालायामपि तथैव ॥ २ ॥

## (३) ३।८।३-८ स्यात् स्वामिनिष्ठं वपनादिकर्म

( १ ) कर्मविशेषकर्तृत्वविचारोऽनुवर्तते ।

( २ ) ज्योतिष्टोमविषये आध्वर्यववेदे विधयः—'केशश्मश्रु वपते—दतो धावते नखानि निकृन्तते' इति ।

( ३ ) तत्र सन्देहः—एतानि वपनादीनि किं यजमानेन कार्याण्युताध्वर्युणेति ।

( ४ ) पूर्वपक्षः—आध्वर्यवत्वेन ोक्तत्वादेतान्यध्वर्युणैव कार्याणीति ।

( ५ ) सिद्धान्तः—वपनादीनि शरीरसंस्काररूपाणि यजमानगत-मालिन्यमपनीय तस्य यागयोग्यतां सम्पादयितुं क्रियन्ते । स्पष्टमेतदुक्तं ब्राह्मणवाक्ये-'मृता वा एषा त्वक् अमेध्या यत् केशश्मश्रु मृतामेव त्वच-ममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति' इति । ( मेधम् यज्ञमिति यावत् ) । न चाध्वर्युवपनेन यजमानगताऽमेध्यताऽपैति । अतो वपनादिः संस्कारो यजमानस्यैव नाध्वर्योरिति ।

एतदभिप्रेत्याह—स्यादिति । 'वपनादिकर्म'—'स्वामिनिष्ठं' यजमा-नगतं यजमानेनैव कर्तव्यं 'स्यात्' ॥ ३ ॥

## (४) ३।८।९-११ तपोऽपि दुःखं यजमानगामि ॥

( १ ) कर्मविशेषकर्तृत्वविचार एवानुवर्तते ।

( २ ) 'द्व्यहं नाश्नाति—त्र्यहं नाश्नाति' इत्याद्युपवासरूपं तपः प्रोक्तम् ज्योतिष्टोमे ।

( ३ ) तत्र सन्देहः—एतादृशन्तपः किं यजमानेन कर्तव्यमुतर्त्विजेति ।

( ४ ) पूर्वपक्षः—अध्वर्योरेवैतद्युक्तम्—दुःखरूपत्वात्तस्य परिक्रीते-नैव पुरुषेण कर्तुमुचितत्वात् । तथा चाध्वर्यव एव काण्डे एतत्तपो विहितम्—एवमपि समाख्याबलादध्वर्युणैव कर्तव्यमिति ।

( ५ ) सिद्धान्तः—यागफलप्राप्तिरूपं यत् दुःखं तद्यजमानगामि—तस्यैव सुखस्य प्रतिबन्धकीभूतं यत् पापं तस्यैवापनुत्तये तपोऽनुष्ठा-तव्यम् । यस्य सुखं यस्य वा पापं तत्प्रतिबन्धि तेनैव तत्प्रतिबन्धापनो-दनं कर्तव्यमिति-दुःखरूपं तपो यजमानेनैवानुष्ठातव्यम् । एतत्पोषकं लिङ्गमप्युपलभ्यते—'यदा वै दीक्षितः कृशो भवति अथ मेध्यो भवति' इति—'दीक्षितो' यजमानः यदा 'कृशः' तपोऽनुष्ठानेन दुर्बलो भवति तदैव 'मेध्यः' यज्ञयोग्यो भवतीत्यर्थः ॥ इति ।

एतदभिप्रेत्याह—तपोऽपीति । 'तपः अपि' 'दुःखं' दुःखात्मकं तथाच दुरदृष्टापनोदकं सत्-'यजमानगामि' यजमानेनानुष्ठातव्यं भवतीति ॥ ४ ॥

## (५) ३।८।१२ हिरण्यमाला सकलर्त्विगङ्गम्

( १ ) समाख्यायाः संस्कारनियामकत्वे ऽपवादः ।

( २ ) वाजपेये श्रूयते 'हिरण्यमालिन ऋत्विजः प्रचरन्ति' इति । तथाच श्येने—'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति ।

( ३ ) तत्र सन्देहः—अत्रोक्तं हिरण्यमालित्वमध्वर्युमात्रस्योत सर्वेषा-मृत्विजाम् । लोहितोष्णीषत्वं च किमुद्गातृमात्रस्योत सर्वेषामिति ।

( ४ ) पूर्वपक्षः—आध्वर्यवे यजुर्वेदे हिरण्यमालित्वविधयः-औद्गात्रे सामवेदे लोहितोष्णीषत्वविधिः । तस्मात् समाख्यया हिरण्यमालित्वम-

ध्वर्योरेव लोहितोष्णीषत्वं चोद्गातुरेवेति ।

(५) सिद्धान्तः–'ऋत्विजः प्रचरन्ति' इति सर्वेषामृत्विजां सन्निधौ हिरण्यमालित्वं लोहितोष्णीषत्वं च विहितम् । सन्निधिश्च समाख्यातो बलीयसी । तस्मात् समाख्यां बाधित्वा सन्निधिः हिरण्यमालित्वं लोहितोष्णीषत्वं च सर्वैरेवर्त्विग्भिः सम्बध्नाति इति सर्वेषामेवर्त्विजां हिरण्यमालित्वादिसंस्कार इति ।

एतदभिप्रेत्याह—हिरण्यमालेति । 'हिरण्यमाला' हिरण्यमालाधारणं 'सकलर्त्विगङ्गम्' सकलानां सर्वेषां ऋत्विजामङ्गं संस्कार इति यावत् न केवलमध्वर्योरेवेति शेषः ॥ ५ ॥

## (६) ३।८।१३-१४ स्वामी सदोमानफलस्य शेषी

(१) समाख्यानियामकत्वेऽपवादान्तरम् ।

(२) ज्योतिष्टोमे श्रूयते–'यदि कामयेत् वर्षेत् पर्जन्यः नीचैस्सदो मिनुयादिति' ।

(३) तत्र सन्देहः—अत्रोक्तो वृष्टिकामो यजमानस्योताध्वर्योरिति ।

(४) पूर्वपक्षः—आध्वर्यववेदोक्तत्वाद्वाक्यस्य तत्समाख्याबलादध्वर्योरेव तत्रोक्ता कामना । अथ च 'यः कामयेत् स एव मिनुयादिति' हि वाक्यार्थः । तेन च मानकामनयोरेककर्तृकत्वम् । मानं चाध्वर्युः करोति । तस्मात् कामनाऽपि तस्यैवेति ।

(५) सिद्धान्तः—साङ्गस्य यागस्य फलं यजमानगाम्येव भवति । अतो ज्योतिष्टोमाङ्गस्य सदोमानस्य यत् फलं वृष्टिरूपं तदपि यजमानगाम्येव । अथ च मिनुयादिति परस्मैपदेनाध्वर्योर्यः सदोमानरूपो व्यापारस्तस्य फलं अध्वर्युभिन्नपुरुषगामीति प्रत्याय्यते । एवं च परस्मैपदश्रुत्या वाक्यस्य समाख्यायाश्च बाधे सति वृष्टिकामना यजमानगामिन्येवेति ।

एतदभिप्रेत्याह स्वामीति । 'सदोमानफलस्य' अध्वर्युणा यत्सदसो मानरूपं कर्म क्रियते तस्य 'फलस्य' वृष्टेः–'शेषी' आधारः–'स्वामी' यजमान एवेति ॥ ६ ॥

## (७) ३।८।१५-१६ तस्यैव चाशंसनमन्त्रपाठः

(१) समाख्यानियामकत्वेऽपवादान्तरम् ।

(२) 'आयुर्दा अग्ने आयुर्मे देहि'–'वर्चोदा अग्ने वर्चो मे देहि' इत्यादिमन्त्राणां पाठ आम्नातः ।

(३) तत्र सन्देहः—अयं मन्त्रपाठो यजमानेन कार्यं उताध्वर्युणेति ।

(४) पूर्वपक्षः—आध्वर्यवकाण्डोपलब्धत्वात्तत्समाख्ययाऽध्वर्युणैव कार्यो मन्त्रपाठ इति ।

(५) सिद्धान्तः—'आयुर्मे देहीति' फलस्य स्वात्मसम्बन्धः प्रतीयते। फलाशंसनं च प्रोत्साहनार्थं क्रियते। तच्च यजमानस्यैव युज्यते नाध्वर्योः। तस्माद् यजमानस्यैवायं मन्त्रपाठ इति ।

एतदभिप्रेत्याह तस्यैवेति । 'आशंसनमन्त्रपाठः'-आशंसनमन्त्राणां आयुर्वर्चआदीनां फलानामाशंसनं येषु उपलभ्यते तेषां मन्त्राणां पाठः 'तस्य' यजमानस्यैव कर्तव्यः-नाध्वर्योरिति शेषः ॥ ७ ॥

## (८) ३।८।१७ द्व्याम्नातमन्त्रा उभयप्रयोज्याः

(१) समाख्यया कर्तृनियमनस्योदाहरणान्तरम् ।

(२) 'वाजस्य मा प्रसवेनेति' मन्त्रो दर्शपूर्णमासप्रकरणे याजमाने आध्वर्यवे च काण्डे आम्नातः ।

(३) तत्र सन्देहः—किमयम्मन्त्रपाठो यजमानस्यैवोताध्वर्योरेवोतोभयोरिति ।

(४) पूर्वपक्षः—समाख्यया यद्यप्युभयोरपि पाठकर्तृत्वं सूच्यते तथाऽप्येकेनैव पाठे कृते मन्त्रस्य चरितार्थत्वादितरेण पाठो व्यर्थः स्यात् । तस्मात् एकोऽध्वर्युरेव मन्त्रं पठेदिति ।

(५) सिद्धान्तः—उभाभ्यामेव पठनीयो मन्त्रः। एककाण्डसमाख्ययैव पाठे एकेन निर्वृत्ते काण्डान्तरपाठो मन्त्रस्य व्यर्थः स्यात्। उभयोश्च पाठेऽभिप्रायभेदो भवति-'अनेन मन्त्रेण प्रकाशितमर्थमनुतिष्ठामीति' अध्वर्योरभिप्रायः-'अत्रार्थे न प्रमदिष्यामीति' यजमानस्येति ।

एतदभिप्रेत्याह—द्व्याम्नातेति । 'द्व्याम्नाताः' 'द्वयोः' काण्डयोः 'आम्नाताः' उक्ता 'मन्त्राः' उभाभ्यां यजमानाध्वर्युभ्यां 'प्रयोज्याः' पठनीया इति ॥ ८ ॥

## (९) ३।८।१८। क्लृप्त्यादयः स्युर्विदुषैव वाच्याः

(१) कर्मविशेषकर्तृविचारोऽनुवर्तते ।

(२) वाजपेये श्रूयते-'क्लृप्तीर्यजमानं वाचयतीति'। 'आयुर्यज्ञेन कल्पता'मित्यादयो मन्त्राः क्लृप्तिनाम्नाऽभिधीयन्ते ।

(३) तत्र सन्देहः—क्लृप्तिमन्त्रवाचनं किं मन्त्रतदर्थाभिज्ञस्यैव यजमानस्य उत तदभिज्ञानभिज्ञयोरुभयोरपीति ।

(४) पूर्वपक्षः—'विद्वांसं वाचयेदिति' विशिष्टविधेरनुपलम्भात् 'यजमानं वाचयतीति' अविशिष्टस्यैव यजमानस्य वचनकर्तृकत्वेनोक्तत्वात्

उभाभ्यां मन्त्रतदर्थाभिज्ञानभिज्ञाभ्यां क्लृप्तिमन्त्रपाठः कार्य इति।

(५) सिद्धान्तः—अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वसम्भवात् मन्त्रतदर्थाभिज्ञ एव यजमानो वाचनीय इति।

एतदभिप्रेत्याह—क्लृप्त्यादय इति। 'क्लृप्त्यादयः' क्लृप्तिनाम्ना उज्जितिनाम्ना च प्रसिद्धा ये मन्त्राः ते—'विदुषैव' मन्त्रतदर्थाभिज्ञेनैव यजमानेन 'वाच्याः स्युः' पठनीया भवेयुरिति ॥ ९ ॥

## (१०) ३।८।१९-२० द्वन्द्वानि न स्युर्यजमानकर्म

(१) अष्टमाधिकरणापवादः।

(२) दर्शपूर्णमासयोर्द्वादश द्वन्द्वाख्यानि कर्माणि याजमाने काण्डे समाम्नातानि—'वत्सं चोपावसृजति—उखां चाधिश्रयति—अव च हन्ति—दृषदुपले च समाहन्ति—अधि च वपते—कपालानि चोपदधाति—पुरोडाशं चाधिश्रयति—आज्यं च—स्तम्बयजुश्च हरति—अभि च गृह्णाति—वेदिं परिगृह्णाति—पत्नीं च सन्नह्यति—प्रोक्षणीश्चासादयति आज्यं च—तानि द्वादश द्वन्द्वानि दर्शपूर्णमासयोः' इति।

(३) तत्र सन्देहः—क इमानि कुर्यात्—यजमानोऽध्वर्युर्वोतोभावपीति।

(४) पूर्वपक्षः—याजमानकाण्डाम्नानात् समाख्याबलेन यजमानेनैवेमानि कार्याणीति।

(५) सिद्धान्तः—यस्मिन् यजुर्वेदकाण्ड इमान्याम्नातानि तद्याजमानमेवावान्तरकाण्डम् आध्वर्यवं तु महाकाण्डं तद्बाधकम्। यजमानस्य च यानि कर्माणि तत्सम्पादनायैवाध्वर्युः परिक्रीयते। तस्मादध्वर्युरेवानुष्ठेत् द्वन्द्वानि कर्माणि। याजमाने च काण्डे तत्कर्मप्रकारो न चोदितः केवलं क्रमसूचनार्थं परिगणनं कृतम्। तस्मादध्वर्युणैव कार्याणीमानीति।

एतदभिप्रेत्याह—द्वन्द्वानीति। 'द्वन्द्वानि' वत्सोपावसर्जनादीनि द्वन्द्वाख्यानि कर्माणि—'यजमानकर्म' यजमानेन कर्तव्यानि—'न स्युः'—अपि तु अध्वर्योरेवेति भावः ॥ १० ॥

## (११) ३।८।२१ अध्वर्युर्मन्त्रः करणो विरोधे

(१) समाख्यया कर्तृत्वनियमेऽपवादान्तरम्।

(२) ज्योतिष्टोमेऽस्ति पशुरग्नीषोमीयः। तस्य यूपस्य परिव्याणे द्वौ मन्त्रौ युगपदेव पठ्येते। एकः 'परिवीरसि' इत्यध्वर्युपठनीयः करणाख्यः—अपरश्च 'युवासुवासाः' इति होतृपठनीयः क्रियमाणानुवादी। ज्योतिष्टोमविकृतौ च कुण्डपायिनामयनेऽपि एतन्मन्त्रद्वयपाठश्चोदकः

प्राप्तः, परन्तु तत्र 'यो होता सोऽध्वर्यु'रित्यनेनर्त्विग्द्वयस्याभावादेको होतैव भवति तत्रर्त्विक् । एकेन च युगपन्मन्त्रद्वयपाठो न सम्भवति ।

(३) तस्मादत्र भवति सन्देहः—कम्मन्त्रं होता पठेत्—परिवीरसीति करणमन्त्रमुत युवासुवासा इति क्रियमाणानुवादिमन्त्रमिति ।

(४) पूर्वपक्षः—क्वचिदेकः पठनीयः क्वचिदपर इत्यनियमः एकतरस्य स्वीकारे मानाभावादिति भाष्यकारीयः पूर्वपक्षः । होता स्वपठनीयं युवासुवासा इति मन्त्रमेव पठेत् स हि तस्य चोदकतः प्राप्तः न च तत्परित्यागे कश्चिद्धेतुरुपलभ्यते इत्यपरः ।

(५) सिद्धान्तः—कुण्डपायिनामयने सकलमाध्वर्यवं कर्म होत्रा कर्तव्यमिति साक्षाच्छ्रुत्या विधीयते 'यो होता सोऽध्वर्यु'रित्यनया । अत आध्वर्यवमन्त्रस्य पाठः होतुः साक्षाच्छ्रुतिप्राप्तः । हौत्रमन्त्रपाठस्तु तस्य 'प्रकृतिवद्विकृतिः कर्तव्येत्य'तिदेशादेव प्राप्तः । एवं च युगपत्प्राप्तस्य मन्त्रद्वयपाठस्यासम्भवे साक्षाच्छ्रुतिप्राप्तस्य करणस्यैव पाठो होत्रा कर्तव्य इतरस्तु त्यक्तव्य इति ।

एतदभिप्रेत्याह—अध्वर्य्विति । 'विरोधे'—आध्वर्यवकरणमन्त्रहौत्रक्रियमाणानुवादिमन्त्रपाठस्यासम्भवे—'अध्वर्युमन्त्रः' अध्वर्युपठनीयमन्त्रः 'करणः' करणाख्यः परिवीरसीत्यादिरेव—'होत्रा पठनीयः कुण्डपायिनामयने' इति शेषः ॥ ११ ॥

## (१२) ३।८।२२ प्रैषे तदर्थे च न कर्तुरैक्यम् ।

(१) अनुष्ठातृविषये विचारोऽनुवर्तते ।

(२) दशपूर्णमासयोः केचन प्रैषाः ( आज्ञापनानि ) श्रुताः—'प्रोक्षणीरासादय—इध्मा बर्हिरुपसादय—अग्नीदग्नीन् विहर' इत्यादयः । उच्चारणीयाश्चैतेऽध्वर्युणा ।

(३) तत्र सन्देहः—य आज्ञापनवाक्यमुच्चारयति किं स एवाज्ञप्तार्थमप्यनुतिष्ठत्युतान्य इति ।

(४) पूर्वपक्षः—यजुर्वेदे उक्ता एते प्रैषाः प्रैषार्थाश्च । तस्मादाध्वर्यवसमाख्याबलादध्वर्युरेव प्रैषमुच्चारयेदनुतिष्ठेच्च तदर्थमिति ।

(५) सिद्धान्तः—लोके समाज्ञापनवाक्यं य उच्चारयति न स एवाज्ञापितार्थमनुतिष्ठत्यपि तु यं प्रति तद्वाक्यमुच्चार्यते स एव । प्रकृते च प्रैषवाक्यानि अग्नीध्रादीन् ऋत्विजः प्रत्युच्चार्यन्तेऽध्वर्युणा । एवं च सति यद्यध्वर्युरेव तत्तत्कार्यं कुर्यात् तर्हि अग्नीध्रादिसम्बोधनं मध्यमपुरुषप्रयोगश्च नोपपद्येत । तस्मात् प्रैषोच्चारकादन्य एव तदर्थानुष्ठातेति ।

एतदभिप्रेत्याह—प्रैष इति। 'प्रैषे' आज्ञापनवाक्ये-'तदर्थे' आज्ञापितार्थे च-'कर्तुः' अनुष्ठातुः प्रैषोच्चारयितुः प्रैषार्थकर्तुश्च-'ऐक्यं न'-नोभयोरेक एव कर्ता। किन्तु प्रैषोच्चारयितैकोऽन्यश्च तदर्थानुष्ठातेत्याशयः ॥ १२ ॥

## (१३) ३।८।२३-२४ अध्वर्युणा प्रेषणमेव कार्यम्।

(१) पूर्वाधिकरणशेषो विचारः।

(२) पूर्वाधिकरणोदाहृतमेवात्र विषयवाक्यम्। प्रैषोच्चारकादन्य एव तदर्थानुष्ठातेति स्थितम्।

(३) तत्र सन्देहः—कः किं कुर्यात्-कः प्रैषमुच्चारयेत् कश्च प्रषार्थमनुतिष्ठेदिति।

(४) पूर्वपक्षः—अनियमेन येन केनापि यस्य कस्याप्यनुष्ठानमित्याद्यः। अध्वर्युरेव प्रैषार्थं कुर्यात् तस्यैव सकलपदार्थानुष्ठापकत्वात्। प्रैषं च तस्मादन्य एवाग्नीध्र उच्चारयेदिति।

(५) सिद्धान्तः—सर्वाणि कार्याण्येकेनाध्वर्युणा कर्तुं न शक्यन्ते। स यत् स्वयं कर्तुं न शक्नोति तत्रान्यान् प्रेरयति। एतत्प्रेरणार्थमेव च प्रैषोच्चारणम् भवति। यतश्च सर्वेषां पदार्थानामाध्वर्यवं इति समाख्या-यद्बलेनाध्वर्युरेव सर्वानुष्ठातेति गम्यते-तस्मादेव प्रैषोच्चारणमध्वर्युणैव कार्यम्। तेन प्रेरितैर्यत् क्रियते तत्तेनैव क्रियते-तत्र तस्य प्रयोजककर्तृत्वादिति नियमः। तस्मात् प्रैषोच्चारणमध्वर्युणा कार्यम्। एवमेवाध्वर्यवसमाख्याऽनुगृहीता भवति। प्रैषार्थानुष्ठानं त्वग्नीध्रेण कर्तव्यम्-इति।

एतदभिप्रेत्याह—अध्वर्युणेति। 'अध्वर्युणा' 'प्रेषणम्' प्रेरणम्-प्रैषमन्त्रोच्चारणद्वारेणेति यावत्-अग्नीध्रादीनाम्प्रैषार्थानुष्ठाने इति शेषः—'एव'-न तु प्रैषार्थानुष्ठानमपीत्याशयः-'कार्यम्' ॥ १३ ॥

## (१४) ३।८।२५-२७ वर्चःपदे स्वामिफलप्रकाशः।

(१) कर्मविशेषस्य कर्तृविशेषेण सम्बन्धो विचार्यते।

(२) दर्शपूर्णमासयोराहवनीयस्यान्वाधाने करणभूतो मन्त्रोऽध्वर्युणा पठ्यते फलाशंसी-ममाग्ने वर्चो विहवेष्वस्तु इति-यज्ञाङ्गहोमानां यत् वर्चसोपलक्षितं फलं तन्ममास्त्विति तस्यार्थः।

(३) तत्र सन्देहः—अत्राशंसितं फलं कस्य-अध्वर्योर्यजमानस्य वेति।

(४) पूर्वपक्षः—मन्त्रे यन्ममपदं तदुच्चारयितुरेव फलसम्बन्धं सूचयति-उच्चारयिता चाध्वर्युः। तस्मादध्वर्योरेव फलमिति-स्वगतफलाशंसनेन च तस्य स्वकर्मानुष्ठानोत्साहो वर्धते-इति।

(५) सिद्धान्तः। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यात्मनेपद-श्रुतेः साङ्गप्रधानफलस्य यजमानगामित्वं प्रतीयते। न च परिक्रीतस्याध्वर्योर्दक्षिणालाभातिरिक्तफलसम्बन्धो न्याय्यः। अतो याजमानमेव फलम्। लिङ्गमप्यत्र भवति-'यां वै काञ्चन ऋत्विज आशिषमाशासते यजमानस्यैव सा' इति। मन्त्रे ममपदं च लक्षणया यजमानपरमेव-'यद्यजमानस्य वर्चस्तन्ममैवेति' लक्षणार्थः इति।

एतदभिप्रेत्याह—वर्चःपदे इति। 'वर्चःपदे'-'ममाग्ने वर्च' इति मन्त्रस्थे-'स्वामिफलस्य' यजमानगामिफलस्यैव तेजोरूपस्य-'प्रकाशः' आशंसनम्-भवति नाध्वर्योरिति शेषः॥ १४॥

## (१५) ३।८।२८ न स्वामिनोऽसन्तपनं फलं स्यात्।

(१) पूर्वाधिकरणापवादः।

(२) दर्शपूर्णमासयोराघारहोमार्थमाज्यपूर्णौ स्रुक्स्रुवौ गृहीत्वा नाभिसमीपे हस्तेन धारयति-तत्र च करणमन्त्रोऽध्वर्युणा पठ्यते-'अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा सन्ताप्तं कृणुतम्' इति। अस्यार्थः-भो स्रुक्स्रुवरूपौ अग्नाविष्णू युवां नाभिदेशे धारयन्नहं 'वामवक्रमिषम्' युवयोरतिक्रमं न कृतवानस्मि-युवां च मत्तो वियुक्तौ मा भवतम्-ततो मां देहधारिणं 'मा सन्ताप्तं' मम देहे सन्तापं ज्वरादिरूपं 'मा कुरुतम्' इति।

(३) तत्र सन्देहः—अत्रोक्तं फलमसन्तापरूपं किं यजमानस्योताध्वर्योरिति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन यजमानस्यैवैतत् फलमिति।

(५) सिद्धान्तः—अध्वर्यावसन्तप्ते सति तेनानुष्ठितं यजमानस्य कर्माविघ्नेन सम्पद्यते ततश्च तस्य मुख्यफलसिद्धिरपि भवति। तस्मादत्रोक्तम्फलमध्वर्योरेव न यजमानस्येति।

एतदभिप्रेत्याह न स्वामिन इति। 'असन्तपनं' सन्तापाभावरूपं 'फलं' यदुक्तं तत्-'स्वामिनः' यजमानस्य-'न स्यात्'-अपि त्वध्वर्योरेवेति भावः॥ १५॥

## (१६) ३।८।२९ द्वयोः फलं भद्रपदाभिधेयम्।

(१) पूर्वाधिकरणशेषो विचारः।

(२) ज्योतिष्टोमे हविर्धानमण्डपे सोमाभिषवाधारयोः फलकयोरधस्ताच्चतसृष्वाग्नेय्यादिविदिक्षु चत्वार उपरवनामका गर्ता अरत्निमात्रखाता अधोभागे परस्परं मिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता

वर्तेते । तेष्वेकस्मिन्नुपरवे यजमानो दक्षिणहस्तं प्रसारयति । तत्रैवाध्वर्युरन्यस्मिन् स्वहस्तं प्रसार्याधस्ताद् यजमानहस्तं गृह्णाति । तदा यजमानः 'किमत्र' इति मन्त्रेण पृच्छति । अध्वर्युः 'भद्रम्' इत्यनेन मन्त्रेणोत्तरं ब्रूते । ततो यजमानः 'तन्नौ सह' इत्यनेन मन्त्रेण प्रत्युत्तरं ददाति ।

( ३ ) तत्र सन्देहः—अत्रोक्तं यद् भद्ररूपं फलं तत्किं यजमानस्योताध्वर्योरुतोभयोरिति ।

( ४ ) पूर्वपक्षः—यतो यजमानः 'तन्नौ सहेति' मन्त्रेण फलं स्वकीयत्वेन गृह्णाति तस्मात्तस्यैव तदिति ।

( ५ ) सिद्धान्तः—'नौ' इति द्विवचनेन 'सह' इत्यनेन चोभयगामित्वैव फलस्य भवतीति ।

एतदभिप्रेत्याह द्वयोरिति । 'भद्रपदाभिधेयं'—अध्वर्यूक्तमन्त्रगतभद्रपदेन यत् अभिधीयते तत्—'फलं'—'द्वयोः' अध्वर्युयजमानयोरुभयोरेव भवतीत्यर्थः ।

[ इदमधिकरणं भाष्यकारेण वार्तिककारेण वा पृथङ् न निरूपितम्—पूर्वाधिकरणान्तर्गतमेव कृतमूनत्रिंशत्तमं सूत्रम् । तन्मतेन च यथा अष्टाविंशसूत्रं पञ्चदशाधिकरणस्यापवादं वक्ति तथैवेदमप्यपवादान्तरमिति न पृथगधिकरणता । वार्तिककारमतेन च षष्ठाधिकरणसदृश एवैतत्सूत्रस्थो विचारः । तत्र तु ब्राह्मणवाक्येनर्त्विग्गामिता फलस्य सूचिताऽत्र तु मन्त्रेणेत्येतावानेव विशेषः ] ॥ १६ ॥

## (१७) ३।८।३० साङ्गप्रयोगाय घृतादिधर्माः

( १ ) समाख्याया श्रुतिलिङ्गादिविरोधे बलाबलचिन्ता पर्यवसिता । तेषु ये सिद्धान्तास्ते किं केवलं प्रधाने कर्मणि प्रयोजका उत तस्याङ्गेषु विकृतिषु चेति विचारः प्रवर्तते ।

अत्राधिकरणस्वरूपं तार्तीयसप्तमपादीयप्रथमाधिकरणवदेव । अत्र चास्योपन्यासो विकृतिगतविचारस्याङ्गत्वेन । अत एव वार्तिककारेण त्रिंशसूत्रं विकृतिगतविचाराधिकरणपूर्वपक्षत्वेन गृहीतम् । भाष्यकारोऽपि संक्षेपतः सप्तमपादीयाधिकरणं प्रदर्श्य उक्तवान्—'यथा व्याख्यातमेव—उत्तरविवक्षया प्राप्तिरेषा क्रियते' इति । न्यायमालाकारस्तु एतदधिकरणं पृथङ्नैवात्र प्रदर्शितवान् ॥ १७ ॥

## (१८) ३।८।३१ यूपाञ्जनाज्ये न भवन्ति धर्माः

( १ ) प्रकृतिधर्माणां विकृत्यङ्गत्वे विचारः ।

( २ ) ज्योतिष्टोमेऽग्नीषोमीयपशुं प्रकृत्य श्रूयते—'आज्येन यूपमनक्ति' इति । ज्योतिष्टोमप्रकरणे चाज्यधर्मा आम्नाताः ।

( ३ ) तत्र सन्देहः—ये चाज्यधर्मा उक्तास्ते किं प्रधानमात्रे ज्योतिष्टोमे निविशन्ते—उत तद्विकृतावग्नीषोमीयपशावपीति ।

( ४ ) पूर्वपक्षः—प्रकृतिवद्विकृतिः कर्तव्येति चोदकबलात्प्रकृतिधर्माणां सर्वेषां निवेशो विकृतावपि सिद्ध्येन्नियामकाभावात् । तस्मादुक्ता धर्मा विकृतावपि निविशन्त इति ।

( ५ ) सिद्धान्तः—कार्यमेवास्ति नियामकमत्र । यूपाञ्जनरूपं कार्यं प्रकृतौ नास्ति-तस्माद् विकृतिगतयूपाञ्जने नास्ति सम्बन्धः प्रकृतिगताज्यधर्माणाम् । तस्मात् येषाम्प्रकृतिगतधर्माणां विकृतौ प्रयोजनमस्ति तेषामेव चोदकेन प्राप्तिर्न सर्वेषाम् । अत एव आज्यधर्माणां न निवेशो यूपाञ्जनाज्ये—इति ।

एतदभिप्रेत्याह—यूपेति । 'यूपाञ्जनाज्ये'—यूपस्याञ्जने यदाज्यं प्रयुज्यते तस्मिन्—'धर्माः' ज्योतिष्टोमसम्बन्धेनाम्नाता आज्यधर्माः—'न भवन्ति' न निविशन्ते—इति सम्बन्धः ॥ १८ ॥

## (१६) ३।८।२२ नोपात्तदर्भौ विधृती पवित्रे

( १ ) शेषशेषिविचारोऽनुवर्तते ।

( २ ) दर्शपूर्णमासयोर्विधृती पवित्रे दर्भमये आम्नाते-'समौ अप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति'—'अरत्निमात्रे विधृती करोति' इति ।

( ३ ) तत्र सन्देहः—किं वेदिसंस्तरणार्थं ये दर्भा उपात्तास्तेभ्य एव दर्भान् गृहीत्वा विधृती पवित्रे च कर्तव्ये-उत अन्येभ्यो दर्भेभ्य इति ।

( ४ ) पूर्वपक्षः—वेदिसंस्तरणार्थमुपात्ताः संस्कृताश्च दर्भास्तत्र वर्तन्ते—सत्सु च तेष्वन्यस्य दर्भस्यासादनस्य नास्त्यावश्यकता । तस्मात् तैरेव दर्भैः पवित्रे विधृती च कार्ये इति ।

( ५ ) सिद्धान्तः—संस्तरणार्थं ये दर्भा उपात्ता संस्कृताश्च ते सर्वे संस्तरणकार्य एवोपक्षीणाः । तस्मादन्यैरसंस्कृतैरेव दर्भैः परिभोजनीयाख्यैः पवित्रे विधृती च कार्ये—इति ।

एतदभिप्रेत्याह—नोपात्तेति । 'उपात्तदर्भौ' वेदिसंस्तरणार्थमुपात्ताः संस्कृताश्च ये दर्भास्तेभ्य परिगृहीतौ द्वौ दर्भौ—'विधृती' 'पवित्रे' वा—'न' भवत इति शेषः । तद्भिन्नाभ्यामेव दर्भाभ्यां ते कर्तव्ये इत्याशयः॥१६॥

## (२०) ३।८।२३ धानाः पयस्या शकलश्च शेषात्

( १ ) पूर्वाधिकरणापवादः ।

( २ ) ज्योतिष्टोमे श्रूयते—'पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति, धानाः आश्विनपात्रे, पयस्यां मैत्रावरुणपात्रे' इति ।

( ३ ) तत्र सन्देहः—पुरोडाशशकलस्य धानायाः पयस्यायाश्च नि-धानमन्त्रोक्तं किं पूर्वोपयुक्तद्रव्याणामेव शेषैः कार्यमुतान्यैर्नूतनैर्द्रव्यैरिति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेनान्यैरेव द्रव्यैरेतन्निधानरूपं कार्यं सम्पादनीयमिति ।

( ५ ) सिद्धान्तः—यानि द्रव्याणि पुरोडाशादीनि पूर्वं संस्कृतानि कर्मान्तरेषूपयुक्तानि च तेषामेव शेषैरिदं निधानं कार्यम् । विद्यत एव तत्र शेषः पूर्वमुपयुक्तस्य संस्कृतस्य पुरोडाशस्य धानायाः पयस्यायाश्च । विद्यमाने च तस्मिन् नास्त्यावश्यकताऽन्येषां सम्पादनस्य । तस्मात् पूर्वो-पयुक्तद्रव्यशेषैरेव निधानकार्यं सम्पादनीयमिति ।

एतदभिप्रेत्याह—धाना इति—'धानाः' 'पयस्या' 'शकलश्च'—'शे-षात्' पूर्वोपयुक्तधानादिद्रव्यशेषादेव—'निधातव्या' इति शेषः । न चा-त्रान्यद्रव्यसमावेशस्यावकाश इत्याशयः ॥ २० ॥

## (२१) ३।८।३४–३५ काम्येष्टिषूपांशु भवेत् प्रधानम् ।

( १ ) शेषशेषिविचारप्रसङ्गेनाङ्गप्रधाननिवेशविचारः ।

( २ ) 'यद्वाथर्वणं वै काम्या इष्टयः ता उपांशु कर्तव्याः' इति काम्ये-ष्टिविषये उपांशुधर्म आम्नातः ।

( ३ ) तत्र सन्देहः—इदमुपांशुत्वं किमङ्गप्रधानोभयार्थमुत प्रधा-नार्थमेवेति ।

( ४ ) पूर्वपक्षः—एतदशाधिकरणन्यायेनाङ्गप्रधानोभयगतत्वमस्य धर्मस्य—नात्र कश्चिद् विशेषोऽस्ति—इति ।

( ५ ) सिद्धान्तः—काम्यत्वमेवात्र धर्मविशेषनियामकम् । न त्वङ्गानां काम्यत्वमस्ति । तस्मात्साक्षात्फलसाधनत्वात् काम्ये प्रधान एवोपांशु-त्वस्य निवेश इति ।

एतदभिप्रेत्याह—काम्येति । 'काम्येष्टिषु 'प्रधानम्' एव 'उपांशु' 'भवेत्'—न त्वङ्गानि—तेषां काम्यत्वाभावादित्याशयः ॥ २१ ॥

## (२२) ३।८।३६–३८ श्येनेऽङ्गधर्मो नवनीतमाज्यम्

( १ ) शेषशेषिविचारेऽङ्गप्रधानगतत्वे विशेषो विचार्यते । पूर्वाधिक-रणापवादः ।

( २ ) श्येने श्रूयते—'दृतिनवनीतमाज्यं भवति' इति ।

( ३ ) तत्र सन्देहः—इदं नवनीतमाज्यं किं प्रधाने श्येने निविशते—उत तदङ्गेष्विति ।

( ४ ) पूर्वपक्षः—प्रधान एव निविशते । प्रधानस्यैव प्रकरणम् ।

तस्मात् वचनप्रामाण्येन नवनीतेनाज्येन प्रधानमेव निर्वर्तयितव्यमिति।

(५) सिद्धान्तः—श्येनस्य सोमयागविकारत्वेन नास्त्याज्यस्यापेक्षा। अङ्गेषु त्वपेक्षयत एवाज्यद्रव्यम्। अतस्तेष्वेव निवेशो नवनीताज्यस्येति।

एतदभिप्रेत्याह—श्येन इति। 'श्येने'श्येनयागप्रकरणे—यत् 'नवनीतमाज्यम्' उक्तं तत्—'अङ्गधर्मः' श्येनाङ्गानामेव धर्मः—तेष्वेव निविशते—न प्रधाने श्येने इत्याशयः॥ २२॥

## (२३) ३।८।३६-४१ सर्वत्र चाङ्गे नवनीतमिष्टम्

(१) पूर्वविचारशेषः।

(२) श्येनेऽङ्गेष्वेव नवनीतमाज्यं निविशत इति स्थितम्।

(३) तत्र सन्देहः—किं सुत्याकालानामेवाङ्गानां धर्मो नवनीतमुत सर्वेषां श्येनाङ्गानामिति।

(४) पूर्वपक्षः—यथा सह पशूनालभेत इति विहितं पशुसाहित्यं सुत्याकालीनेष्वेवाङ्गेषु सवनीयपशुतत्पुरोडाशरूपेषु निविशते तथैव नवनीतमपि तेष्वेव निविशेत—न कालान्तरवर्तिष्वङ्गेषु दीक्षणीयादिष्विति।

(५) सिद्धान्तः—'इतिनवनीतमाज्यम्' इति श्रुत्या नवनीतस्याविशेषेण सर्वाङ्गगतत्वप्राप्तौ नास्त्यवकाशः सङ्कोचस्येति सर्वेष्वेव श्येनाङ्गेषु निवेशो नवनीताज्यस्येति।

एतदभिप्रेत्याह—सर्वत्रेति। 'सर्वत्र अङ्गे'—सर्वेषु श्येनस्याङ्गेषु—'नवनीतम्' 'इष्टम्'—धर्मत्वेनेति शेषः॥ २३॥

## (२४) ३।८।४२-४४ मांसं विधेयं सवनीयकार्ये

(१) पूर्वाधिकरणापवादः।

(२) षट्त्रिंशत्संवत्सरानुष्ठेयं शाक्यायनम्। तत्र श्रूयते—'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति—स तत्र यान् मृगान् हन्ति तेषान्तरसाः सवनीयाः पुरोडाशा भवन्ति' इति। अत्र मांसमयत्वम्पुरोडाशस्योक्तम्।

(३) तत्र सन्देहः—किं सर्वेषां पुरोडाशानां मांसमयत्वमुत सवनीयानामेवेति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सर्वेषां पुरोडाशानां मांसमयत्वमिति।

(५) सिद्धान्तः—उदाहृते वाक्ये पुरोडाशपदस्य तरसशब्देन सम्बन्धो व्यवहितः—अव्यवहितश्च सम्बन्धः सवनीयतरसशब्दयोः। तस्मात् 'ये

सवनीयास्ते तरसाः ( मांसमया )' इत्येव भवति वचनव्यक्तिः—न 'ये पुरोडाशास्ते तरसा' इति। तस्मात् सवनीयानामेव मांसमयता-न सर्वेषामिति।

एतदभिप्रेत्याह—मांसमिति। 'सवनीयकार्ये' सवनीयानामेव पुरोडाशानां 'कार्ये' सम्पादने—'मांसं' विधेयं' प्रयोज्यम्—न सर्वेषां पुरोडाशानामिति शेषः ॥ २३ ॥

न्यायाश्चतुर्विंशतिरत्र पादे
समीरिता भाष्यकृता विचार्य ॥

स्पष्टोऽर्थः। यद्यपि मुद्रितभाष्यपुस्तकेऽधिकरणसङ्ख्या द्वाविंशतिरेव, तथापि मण्डनमिश्रग्रन्थप्रामाण्यात् तत्रत्यं सङ्ख्यानं सम्पादकभ्रान्तिविलसितमेवेति ध्येयम्। अस्ति त्वत्राधिकरणानां निरूपणे कश्चिद् भेदो भाष्यात् वार्तिकाच्चेति तत्र तत्र प्रदर्शितम् ॥

इति तृतीयाध्यायस्याष्टमः पादः।

---

## तृतीयाध्यायः समाप्तः।



# अथ चतुर्थोऽध्यायः ।

## (१) ४।१।१ अथ प्रयोजकाध्यायः ।

( १ ) तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैः शेषविनियोगलक्षणमुक्तम् । अतः परं किं प्रयोज्यं किं प्रयोजकमिति चिन्ता प्रचरति । प्रधानमेवाङ्गस्य प्रयोजकं भवतीत्यतोऽङ्गप्रधानविचारानन्तरं प्रयोज्यप्रयोजकविचारस्य भवत्येवावसरः। कर्मसु कानिचित् साक्षात् पुरुषेप्सितफलसाधनानि कानिचित्तु कर्मान्तरसम्पादनद्वारैव फलसाधनानि । आद्यानां प्रयोजकं पुरुषेप्सितं फलमन्त्यानां तु तत्तत्कर्मान्तरमेव । अत एव आद्यानि साक्षात्पुरुषेप्सितसाधकत्वात् पुरुषार्थानि-अन्त्यानि तु न साक्षात्फलस्य साधनानि अपि तु कर्मान्तरस्यैवेति भवन्ति तानि क्रत्वर्थानि । एवं च प्रधानं कर्म पुरुषार्थमङ्गन्तु क्रत्वर्थमिति भवति तृतीयाध्यायगताङ्गप्रधानविचारस्य चतुर्थाध्यायगतक्रत्वर्थविचारेण सङ्गतिः।

( २ ) क्रत्वर्थपुरुषार्थविवेक एवात्र विषयः ।

( ३ ) तत्र सन्देहः—अयं विवेकः कर्तव्यो न वेति ।

( ४ ) पूर्वपक्षः—अस्य विवेकस्याप्रयोजनत्वात् अयमुपेक्षणीयः इति ।

( ५ ) सिद्धान्तः—अनेनैव विवेकेन कर्मणां प्रयुक्तिः सम्यक् ज्ञातुं शक्यते । तस्मात् साक्षात्परम्परया वा प्रयुक्तिनिर्णयायोपयुक्तोऽयं विचार इति ।

एतदेवाभिप्रेत्य प्रतिज्ञाधिकरणं सूचयति—अथेति । 'अथ' शेषशेषिनिरूपणानन्तरं—'प्रयोजकाध्यायः' किम्प्रयोज्यं किम्प्रयोजकमित्यस्य विषयस्य निरूपणपरोऽध्यायः—अधुना प्रवर्तत इति शेषः ॥ १ ॥

## (२) ४।१।२ पुमर्थपुरुषमियम्

( १ ) क्रत्वर्थपुरुषार्थयोर्विवेकः कर्तव्य इति स्थितम् । अधुना कोसौ पुरुषार्थ इति विचारणीयम्प्राप्नोति ।

( २ ) क्रत्वर्थपुरुषार्थविवेक एवात्र विषयः ।

( ३ ) तत्र सन्देहः—पुरुषार्थस्य लक्षणमभिधातुं शक्यते न वेति ।

( ४ ) पूर्वपक्षः—न सम्भवति पुरुषार्थस्य क्रत्वर्थस्य वा लक्षणम् । यस्मात्तयोरदुष्टं लक्षणं सर्वथा दुर्निरूपमिति ।

( ५ ) सिद्धान्तः—पुरुषस्य प्रीतये यद् विधीयते तत् पुरुषार्थमिति पुरुषार्थलक्षणमदुष्टम् । तथाच यत् केवलं क्रतुस्वरूपपौष्कल्याय विधीयते तत् क्रत्वर्थमिति क्रत्वर्थस्यापि लक्षणं सुवचमिति ।

एतदभिप्रेत्याह—पुमर्थमिति । यत् 'पुरुषप्रियम्' यस्मिन् कृते पुरुषस्य प्रीतिर्भवति तदेव 'पुमर्थम्' पुरुषार्थम् ॥ २ ॥

[ अत्रैव सूत्रे भाष्यकारेण मण्डनेन चान्यदप्यधिकरणद्वयम्पठितम् । तच्च भाष्ये द्वितीयस्यैवाधिकरणस्य द्वितीयतृतीयवर्णकरूपेणोपवर्णितम् । मण्डनेन तु पृथगेव त्रीण्यधिकरणानि निर्दिष्टानि । तस्मादधिकरणसङ्ख्याने भेदो दृश्यते ]

## (३) ४।१।२ गोदोहनं क्रतोर्नाङ्गम्

( १ ) क्रत्वर्थपुरुषार्थयोर्लक्षणे स्थिते कः पदार्थः क्रत्वर्थः कश्च पुरुषार्थ इति पृथक् पदार्थविचारोऽधुना प्रवर्तते ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'चमसेनापः प्रणयेत्' 'गोदोहनेन पशुकामस्य प्रणयेत्' 'वत्सजानुं पशुकामस्य वेदं कुर्यात्' इत्येवमादि ।

( ३ ) तत्र संशयः—यदिदं गोदोहनं तत्क्रत्वर्थं पुरुषार्थं वेति ।

( ४ ) पूर्वपक्षः—क्रत्वर्थमेवेदम् । अपःप्रणयनेन तत्प्रत्यक्षमेवोपकारं क्रतोः करोति—इति ( भाष्यसम्मतः पूर्वपक्षः ) । क्रतुपुरुषोभयार्थमिदम्—पशुफलजननेन पुरुषप्रीतिमुत्पादयति अपां च प्रणयनेन क्रतुपौष्कल्यं करोतीति ( न्यायमालासम्मतः पूर्वपक्षः ) ।

( ५ ) सिद्धान्तः—येन पुरुषप्रीतिर्भवति तत् पुरुषार्थमिति लक्षणं स्थितम् । गोदोहनेन च पशुरूपफलजननरूपपुरुषप्रीतिरुत्पाद्यते । क्रतुपौष्कल्यार्थमपाम्प्रणयनं तु प्रकारान्तरेणापि चमसादिना भवत्येव—गोदोहनविधानं तु केवलपशुरूपफलसम्पादनाय । तस्मात् पुरुषार्थमेवेदमिति ।

एतदभिप्रेत्याह गोदोहनमिति । 'गोदोहनं' 'क्रतोः' यज्ञस्य 'अङ्गं' शेषो 'न' भवति । यो यदर्थस्स तच्छेषः इति शेषलक्षणम् । गोदोहनं च पुरुषेप्सितपशुसम्पादनार्थम्—तस्मात् पुरुषस्यैव शेषो न क्रतोरिति भवत्यस्य पुरुषार्थत्वमित्याशयः ॥ २ ॥

## (४) ४।१।२ नार्जने नियमः क्रतोः

( १ ) क्रत्वर्थपुरुषार्थविशेषविचारोऽनुवर्तते ।

( २ ) द्रव्यार्जनं जातिभेदेन नियमितैरुपायैः श्रुतम्—ब्राह्मणस्य प्रतिग्रहादिना क्षत्रियस्य जयादिना वैश्यस्य कृष्यादिना शूद्रस्य सेवयेति ।

( ३ ) तत्र सन्देहः—इदं द्रव्यार्जनं क्रत्वर्थमुत पुरुषार्थमिति ।

( ४ ) पूर्वपक्षः—क्रत्वर्थमेवेदम्—अर्जनोपायानां नियमनात् । पुरुषप्रीतिस्तु येन केनाप्युपायेनार्जितेन द्रव्येण सिध्येत्—अतस्तत्र नियमोऽनर्थकः स्यात् । क्रत्वर्थत्वे तु नियमादपूर्वविशेषो जन्यते येन परमापूर्वपुष्टिः क्रियते । तस्मादत्र सार्थको नियम इति ।

( ५ ) सिद्धान्तः—यदि द्रव्यार्जनं क्रत्वर्थमेव स्यात् तर्हि क्रत्वनुष्ठानेच्छायाः प्राक् पुरुषस्य जीवनमेव न स्यात्—कुतस्तरां यागानुष्ठानेच्छा । द्रव्यार्जने च विधिर्नापेक्ष्यते । फलं च तस्य क्षुन्निवृत्तिप्राणधारणादिरूपं दृष्टमेव । अतः पुरुषार्थमेव द्रव्यार्जनम् । यथा च तस्य द्रव्ये ऐहिकभोजनादिप्रीतिरुत्पद्यते तथैव क्रत्वनुष्ठानद्वाराऽऽमुष्मिक्यपि तस्य प्रीतिर्जन्यत एव । द्रव्यार्जनोपायनियमनं तूपायान्तरेषु प्रत्यवायो भवतीति ज्ञापनार्थमुपपद्यत एव । तस्माद् द्रव्यार्जनम्पुरुषार्थमेवेति ।

एतदभिप्रेत्याह नार्जन इति । 'अर्जने' यो 'नियमः'—प्रतिग्रहादिनैव द्रव्यार्जनं कर्तव्यमित्येवंरूपः स 'क्रतोः'क्रतुसम्बन्धी क्रत्वर्थो 'न' भवतीति शेषः ।

अत्रापरं चतुर्थमप्यधिकरणं वर्णकान्तररूपेण न्यायमालायां धृतम् । तद्यथा-दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यत्र स्वर्गरूपं फलं विधीयते न वेति संशये-विधीयत एव फलमिति पूर्वपक्षे—अप्रवृत्तप्रवर्तनमेव च विध्यर्थः—तस्मात् फलन्नैव विधेयमिति सिद्धान्तः ॥ ४ ॥

(५) ४।१।३–६ अनीक्षणव्रतम्पुंसः

( १ ) क्रत्वर्थपुरुषार्थविवेकोऽनुवर्तते ।

( २ )—'नेक्षेतोद्यन्तमादित्यन्नास्तं यान्तं कदाचन' इत्यादि प्रजापतिव्रतमाम्नातम् ।

( ३ ) तत्र सन्देहः—इदं व्रतं किं क्रत्वर्थमुत पुरुषार्थमिति ।

( ४ ) पूर्वपक्षः—क्रत्वर्थमेवैतत् । तथासति नास्य फलं कल्पयितव्यम् । पुरुषार्थत्वे तु फलं कल्पयितव्यम् । न च तत्र प्रमाणमुपलभ्यते । तस्मात् क्रत्वर्थमेवैतदिति ।

( ५ ) सिद्धान्तः—नेदं व्रतमभावरूपं—'तस्य व्रतम्' इत्युपक्रम्य यानि व्रतानि अनुष्ठेयत्वेन विहितानि तेष्वेवैकमिदम्—'नेक्षेतोद्यन्तमादित्यम्' इति । तस्मादनुष्ठेयनियमस्वरूपमेवेदं व्रतम् । 'उद्यन्तमस्तं यान्तं चादित्यन्नेक्षिष्ये' इत्येवंरूपः सङ्कल्प एव तस्य व्रतस्य स्वरूपम् । न च फलं कल्पनीयं भवति । उक्तमेव फलमुपलभ्यते—'एतावता हैनसाऽयुक्तो भवति' इति । एवं च पापासंयोगरूपफलसाधकत्वात् क्रतुद्रव्याद्यसाधकत्वाच्चैतद् व्रतम्पुरुषार्थमेवेति ।

एतदभिप्रेत्याह—अनीक्षणेति । 'अनीक्षणव्रतम्'—'उद्यन्तमस्तंयान्तं वादित्यन्नेक्षिष्ये' इति सङ्कल्परूपं व्रतम्–'पुंसः' पुरुषसम्बद्धं पुरुषार्थमेव भवतीति सम्बन्धः ॥ ५ ॥

## (६) ४।१।७–१० होतव्याः स्फ्यादयो न हि

( १ ) क्रत्वर्थार्थानां विषये विचारविशेषः प्रवर्तते ।

( २ ) दर्शपूर्णमासयोराम्नायते—'स्फ्यश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं दृषच्चोपला च—एतानि दश यज्ञायुधानि' इति ।

( ३ ) यज्ञायुधान्येतानि किं होतव्यहविष्ट्वेनात्र विधीयन्ते–उत तत्तत्कर्मसाधनत्वेनान्यत्र विहितान्यत्रानूद्यन्त इति ।

( ४ ) पूर्वपक्षः—विध्यभावे ऽनुवादमात्रमनर्थकमेव स्यात् । यज्ञायुधत्वं च यज्ञसाधनत्वं—तच्च यज्ञे प्रदीयमानानामेव स्यात् । उद्धननादिमात्रार्थत्वे त्वेतेषामुद्धननाद्यायुधत्वं स्यान्न यज्ञायुधत्वम् । तस्मात् यज्ञ होतव्यत्वेनैवैतान्यत्र विधीयन्त इति ।

( ५ ) सिद्धान्तः—'स्फ्येनोद्धन्ति—कपालेषु श्रपयति—अग्निहोत्रहवण्यां निर्वपति–शूर्पेण विविनक्ति—कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति—शम्यायां दृषदुपदधाति—प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति—प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि'—इत्येवंरूपा विधयः स्फ्यादिसाध्यकर्मणामाम्नाताः । एतैरेव कर्मभिः उद्धननादिभिरेतानि यज्ञं साधयन्ति—एतानि कर्माणि विना प्रधानहविषः पुरोडाशस्यैवासम्भवात्—तत एव यज्ञायुधानीति व्यपदिश्यन्ते । 'यज्ञायुधानि सम्भरति' इति च यज्ञायुधसम्भरणविधिः । एतत्सम्भरणविधिस्तुत्यर्थमेवानूद्यन्ते स्फ्यादीनि स्फ्यश्चेत्यादिवाक्ये । तस्मादनुवाद एवायमिति ।

एतदभिप्रेत्याह होतव्या इति । 'स्फ्यादयः' स्फ्यादीनि यज्ञायुधानि–'न होतव्याः'—यज्ञे होतव्यहविष्ट्वेन नोक्ताः—स्फ्यश्चेत्यादिवाक्ये इति शेषः । तस्मादनुवाद एवेदं वाक्यन्न विधिरित्याशयः ॥ ६ ॥

## (७) ४।१।११–१६ पश्वेकत्वविवक्षा स्यात्

( १ ) क्रत्वर्थविशेषे विचारोऽनुवर्तते ।

( २ ) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः—'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इति । तथा 'अनड्वाहौ युनक्ति' इति । तथाऽश्वमेधे 'वसन्ताय कपिञ्जलानालभते' इति ।

( ३ ) अत्र सन्देहः—अत्र यैकत्वादिसङ्ख्योक्ता सा किं यज्ञाङ्गत्वेन

विवक्षितोत नेति ।

( ४ ) पूर्वपक्षः— एकत्वादि न भवति यज्ञाङ्गम् । पशुमित्यत्र साक्षाच्छ्रुत्या सङ्ख्याया पशुसम्बन्धो विधीयते । यज्ञसम्बन्धश्च तस्याः पशुमालभेतेत्यनेन वाक्येनैवावगमितः स्यात् । श्रुतिश्च वाक्याद्बलीयसी । तस्मान्न भवत्येकत्वादि यज्ञाङ्गम् । तस्मादविवक्षितम् ।

( ५ ) सिद्धान्तः—पशुमित्यत्र प्रकृत्या पशुर्निर्दिश्यते प्रत्ययेन च कारकत्वमेकत्वं चेत्युभयम् । अत एकत्वस्य कारकेणैव सम्बन्ध आसन्नतरः । कारकत्वं च क्रियाहेतुत्वम् । एवं च कारकद्वारा क्रिययाऽपि सम्बन्ध एकत्वस्य प्रत्ययेनैव निर्दिष्टो भवति । क्रियाविशेषश्च सन्निहितपदोपात्तो याग एव भवति । तस्मात् सिध्यत्येवैकत्वस्य यजनाङ्गतेति विवक्षितैवैकत्वादिसङ्ख्येति ।

एतदभिप्रेत्याह पशेवेति । 'पश्वेव स्वविवक्षा'- पशुमित्यत्र यत् पशोरेकत्वमुक्तम् तस्य 'विवक्षा' 'स्यात्' यागाङ्गत्वेन तद्‍ विवक्षितमेवेत्यर्थः ॥ ७ ॥

(८) ४।१।१७ पशोर्लिङ्गं विवक्ष्यते ।

( १ ) पूर्वाधिकरणशेष एवायं विचारः ।

( २ ) पशुमालभेतेत्युक्तम् ।

( ३ ) तत्र सन्देहः—पशुमित्यत्र पुल्लिङ्गं यज्ञाङ्गत्वेन विवक्षितमुत नेति ।

( ४ ) पूर्वपक्षः-अलिङ्गेऽपि वृक्षपदार्थे पुल्लिङ्गो वृक्षशब्दः प्रयुज्यते । पुंव्यक्तावपि मक्षिकायां स्त्रीलिङ्ग एव मक्षिकाशब्दः प्रयुज्यते—स्त्रीव्यक्तौ च पुल्लिङ्गो दाराशब्दो नपुंसकलिङ्गश्च कलत्रशब्दः प्रयुज्यते । तस्मात् न लिङ्गस्य शब्दार्थत्वेन भवति सम्बन्धः । कर्मानुष्ठानमपि स्त्रीपुंव्यक्तिभ्यां समानमेव सम्भवति । तस्मादविवक्षितमेव लिङ्गमिति ।

( ५ ) सिद्धान्तः—शब्दानां लिङ्गप्रयोगे नार्थतः साधुत्वमपि त्वभियुक्तप्रयोगादेव । न च स्त्रीपुंव्यक्तिभ्यां समानं कर्मानुष्ठानम् । पुंस्त्वविशिष्टस्य तत्र विशेषेण मन्त्रादिभिः सूचितत्वात् । तथाहि 'मेढ्रं त आप्यायतामिति' मन्त्रो भवति-न च स्त्रीपशोर्मेढ्रसम्भवः । तस्मादेकत्ववत् पुंस्त्वमपि विवक्षितमिति ।

एतदभिप्रेत्याह—पशोरिति । 'पशोः'—पशुमालभेतेत्यत्रोक्तस्य—'लिङ्गम्' पुंस्त्वम्–'विवक्ष्यते'–यज्ञाङ्गत्वेनेति शेषः ॥ ८ ॥

(९)४।१।१८-२० स्विष्टकृत्यप्यपूर्वं स्यात् ।

( १ ) क्रत्वर्थविशेषे विचारः ।

(२) सन्ति कानिचित् यज्ञान्तर्गतानि कर्माणि तदीयद्रव्यदेवताश्रयाणि। तेष्वेकं स्विष्टकृदिति।

(३) तत्र सन्देहः-योऽयं स्विष्टकृद्यागः स किमनुष्ठानमात्रेण द्रव्यमुपकरोत्युत तज्जन्यापूर्वद्वारेति।

(४) पूर्वपक्षः—स्विष्टकृद्याग उपयुक्तद्रव्यसंस्कारक इत्यविवादम्। तत्र संस्कारस्य दृष्टप्रयोजनत्वेनावश्यम्भावित्वे तावतैवोपक्षीणो यागो नापूर्वस्य किञ्चिदुपकरोति। न ह्येकस्मिन् कर्मणि प्रयोजनद्वयं युक्तमिति।

(५) सिद्धान्तः-कर्मण एकत्वेप्यंशभेदेन प्रयोजनभेदो न विरुध्यते। मन्त्रपाठः, द्रव्यप्रक्षेपः, देवतोद्देशेन त्यागश्चेति त्रयोंऽशा भवन्ति यज्ञकर्मणः। तत्र मन्त्रपाठेन द्रव्यप्रक्षेपेण च उपयुक्तद्रव्यसंस्कारो भवति—त्यागेन च परमापूर्वोपयोग्यवान्तरापूर्वमुत्पद्यते—इति न किञ्चिद्विरुध्यते। तस्मात् स्विष्टकृदपूर्वमपि जनयति—इति।

एतदभिप्रेत्याह—'स्विष्टकृति' स्विष्टकृद्यागे—'अपूर्वम् अपि' (अपिरत्र भिन्नक्रमः) न केवलं द्रव्यसंस्करणमपि त्वपूर्वसम्पादनमपि—'स्यात्' इति सम्बन्धः॥ ९॥

## (१०) ४।१।२१ तृतीयविषयो गतः।

(१) (२) एतावत्पर्यन्तं चतुर्थाध्यायविषयप्रयुक्तिविचाराङ्गभूतः-स्तार्तीयशेषशेषिविचार एवानुवृत्त आसीत्। स इदानीं पर्यवसितः। इतः परं किमायातीति भवति प्रतिज्ञापनीयम्।

(३) तत्र सन्देहः—किं वक्ष्यमाणेष्वप्यधिकरणेषु शेष एव विचारणीय उत प्रयुक्तिविषय इति।

(४) पूर्वपक्षः—यथाऽतीतेष्वधिकरणेषु—क्रतुशेषोऽयम् पुरुषशेषोऽयमिति शेषशेषित्वमेव विचारितम्—तद्वदेव वक्ष्यमाणेष्वपि पर्णादीनां तत्तच्छेषत्वविचार एव भासते। अतोऽग्रेपि शेष एव चिन्ताविषय इति।

(५) सिद्धान्तः—यद्यपि शेषत्वविचारोऽग्रिमेष्वधिकरणेष्वपि भासते तथाऽपि शेषत्वस्य यत् प्रयुक्तिरूपं फलं तदेव प्राधान्येनात्र विचार्यते-शेषत्वं तु तदुपयोगित्वेनैवेति प्रयुक्तिरेव विचारविषय—इति।

एतदभिप्रेत्याह तृतीयेति। 'तृतीयस्य' अध्यायस्य 'विषयः' शेषत्वविचाररूपः—'गतः' समाप्तः—इतःपरम्प्रयुक्तिरेव विचारयिष्यत इत्याशयः॥ १०॥

## (११) ४।१।२२-२४ दध्नः प्रयोजिकाऽऽमिक्षा

(१) प्रतिज्ञातः प्रयुक्तिविचारः प्रस्तूयते।

( २ ) चातुर्मास्येषु वैश्वदेवे श्रूयते–'तप्ते पयसि दध्यानयति–सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति । तप्ते दुग्धे दधिप्रक्षेपे दुग्धं विकृतम्भवति । तस्य कश्चिदंशो घनीभूय पृथग्भवति अवशिष्टश्च जलरूपेणावतिष्ठते । तत्र जलरूपेण यदवतिष्ठते तद्ध वाजिनमिति यच्च घनीभूतं तदामिक्षेति । तत्राद्यं वैश्वदेवार्थं विहितमपरं च वाज्यर्थमित्यर्थः । एवं च दधिप्रक्षेपेण द्रव्यद्वयं सम्पद्यते ।

( ३ ) तत्र सन्देहः—द्वयोर्द्रव्ययोरामिक्षावाजिनयोः कतरत् दधिप्रक्षेपस्य प्रयोजकम्—किमामिक्षासम्पादनार्थं दधि प्रक्षिप्यते उत वाजिनसम्पादनार्थमिति ।

( ४ ) पूर्वपक्षः—पयसि दधिप्रक्षेपाद्ध यथा आमिक्षाद्रव्यं सम्पद्यते तथैव वाजिनद्रव्यमपि । उभयश्चात्र हविष्ट्वेनोक्तम् । तस्मादुभयार्थो दधिप्रक्षेपः इति ।

( ५ ) सिद्धान्तः—वाक्येनात्र न द्रव्यान्तरं हविष्ट्वेन विधीयते—अपि तु पय एव दधिसम्मिश्रम् । तच्च द्रव्यमामिक्षैव—तत्रैव दधिपयसो रसस्य सद्भावात्—वाजिने तु नोपलभ्यते दधिपयसो रसः । एवं च दधिमिश्रितपयोद्रव्यसम्पादनार्थं तप्ते पयसि दधिप्रक्षेपः आमिक्षार्थ एव भवति न वाजिनार्थः । अनुनिष्पाद्यमेव हि वाजिनम्—न तु प्रयोजकम् । तस्मादामिक्षैवात्र प्रयोजिकेति ।

एतदभिप्रेत्याह दध्न—इति । 'दध्नः' तप्ते पयसि दधिप्रक्षेपस्य—'प्रयोजिका' 'आमिक्षा'—न तु वाजिनमिति शेषः ॥ ११ ॥

## (१२) ४।१।२५ पदकर्माप्रयोजकम् ।

( १ ) प्रयुक्तिविशेषविचारोऽनुवर्तते ।

( २ ) अस्ति ज्योतिष्टोमे सोमक्रय आम्नातः–'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति । इयं च गौर्यदा सोमक्रयणार्थमानीयते तदाऽध्वर्युस्तस्याः पृष्ठतो गत्वा यत्र तस्याः सप्तमं पदं निधीयते तत्र हिरण्यं निधाय हुत्वा च तत्पदगतं रजो गृह्णाति—इत्यप्याम्नातम्—'सप्तमं पदमञ्जलिना ऽध्वर्युर्गृह्णाति' इति ।

( ३ ) तत्र सन्देहः—गवानयनस्य किम्प्रयोजकम्—सोमक्रयणमुत पदरजोग्रहणमुतोभयमिति ।

( ४ ) पूर्वपक्षः—गोरानयनेनोभयमपि निष्पद्यते—सोमक्रयणं रजोग्रहणं च । तस्मादुभयार्थम्—विशेषस्यानुपलम्भात्—इति ।

( ५ ) सिद्धान्तः—'एकहायन्या क्रीणाति' इति साक्षाच्छ्रुत्या गोः क्रयार्थताऽभिधीयते । गोद्वारा तदानयनमपि क्रयार्थमेवेति क्रम एव

गवानयने प्रयोजकः। न च पदरजोग्रहणार्थता गोस्तदानयनस्य वा क्वचिच्छ्रूयते। तस्मात् सोमक्रयार्थमेव गवानयनमिति।

एतदेवाभिप्रेत्याह—पद्कर्मेति। 'पद्कर्म' पदरजोग्रहणम् 'अप्रयोजकम्' न प्रयोजकम्—गवानयनस्येति शेषः॥ १२॥

## (१३) ४।१।२६ कपालं न तुषाक्षिप्तम्

(१) प्रयुक्तिविशेषविचारोऽनुवर्तते।

(२) दर्शपूर्णमासयोः श्रूयते—'कपालेषु पुरोडाशं श्रपयति' इति—तथा च 'पुरोडाशकपालेन तुषानुपवपति' इति।

(३) तत्र सन्देहः—कपालसम्पादनस्य किम्प्रयोजकम्—पुरोडाशश्रपणमुत तुषोपवाप उतोभयम्।

(४) पूर्वपक्षः—विनिगमनाभावादुभयमपि प्रयोजकम्। उभयोरपि कपालसम्पादनीयत्वं तुल्यमेवोक्तमिति।

(५) सिद्धान्तः—अत्र द्वितीये वाक्ये यत् तुषोपवापसाधनत्वमुक्तं तन्न कपालसामान्यस्य—अपि तु पुरोडाशश्रपणार्थं यत् कपालमासादितं तस्यैव। तदिदं पुरोडाशकपालेनेति नामनिर्देशेन स्पष्टमवगम्यते। तस्मात्प्रथमं श्रपणमेव कपालम् प्रयोजयति—तस्य च तुषोपवापार्थताऽपि प्रसङ्गात् सिध्यति। तस्मात् पुरोडाशश्रपणमेव कपालस्य प्रयोजकम्—इति।

एतदभिप्रेत्याह—कपालमिति। 'कपालम्' कपालासादनम् 'तुषाक्षिप्तं' तुषोपवापप्रयुक्तं 'न' भवति—अपि तु पुरोडाशश्रपणप्रयुक्तमेवेति शेषः॥ १३॥

## (१३) ४।१।२७ नाक्षिप्तः शकृता पशुः

(१) प्रयुक्तिविचारोऽनुवर्तते।

(२) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। तम्प्रकृत्य—'हृदयस्याग्रेऽवद्यति अथ जिह्वाया' इत्यादि पशुशरीराङ्गैर्हवनं श्रूयते। तथा च तत्सम्बन्धेनैव 'शकृत्सम्प्रविध्यति—लोहितं निरस्यति' इत्यादि शकृत्सम्प्रव्याधादिकमपि श्रूयते।

(३) तत्र सन्देहः—अत्र पश्वालम्भस्य किम्प्रयोजकम्—किं हृदयाद्यवदानमुत शकृत्सम्प्रव्याधादिकमुतोभयमिति।

(४) पूर्वपक्षः—हृदयादीनां शकृदादीनां च प्रकरणपाठसाम्यात् पशुसाध्यसाम्याच्च हृदयाद्यवदानमिव शकृत्सम्प्रव्याधादिकमपि पश्वालम्भस्य प्रयोजकमिति।

(५) सिद्धान्तः—पशुयागो हि हविःसाध्यः। अत्तुं योग्यस्यैव ह

हविष्ट्वम्। तत्र योग्यत्वं च हृदयादीनामेव न शकृदादीनाम्। तस्मात् हृदयाद्यवदानमेव प्रयोजकम्। शकृत्सम्प्रक्षेपाद्यादिकं तु शेषप्रतिपत्तिमात्रम् इति।

एतदभिप्रेत्याह—नाक्षिप्त इति। 'पशुः' पश्वालम्भः—'शकृता' 'न' 'आक्षिप्तः' प्रयुक्तः—अपि तु हृदयादिभिरेवेति भावः॥ १४॥

## (१५) ४।१।२८-३२ प्रयोक्ता स्विष्टकृन्नेष्टः

(१) प्रयुक्तिविचारोऽनुवर्तते।

(२) दर्शपूर्णमासयोः श्रूयते—'उत्तरार्धात् स्विष्टकृते समवद्यति' इति। अत्र पुरोडाशस्योत्तरार्धात् स्विष्टकृतेऽवदानं विहितम्।

(३) तत्र सन्देहः-अत्र पुरोडाशस्य प्रयोजकं किम्—किमाग्नेययाग उत स्विष्टकृदवदानमुतोभयमिति।

(४) पूर्वपक्षः—स्विष्टकृदवदानमत्र द्वितीयं पुरोडाशं तस्योत्तरार्धं च प्रयोजयति। तदुभयं विना तदवदानस्यासम्भवात्-इति।

(५) सिद्धान्तः—उत्तरशब्दोऽर्धशब्दश्च भागवाचित्वात् कञ्चित् प्रकृतं भागिनमाकाङ्क्षतः। अग्निदेवतार्थं सम्पादित आग्नेयः पुरोडाशश्चात्र प्रकृतः भागवांश्च। तस्मात्तमेवोपजीव्य तस्यैवोत्तरार्धेन स्विष्टकृद्यागसम्पत्तौ लाघवम्—न च प्रयोजनमपरस्य पुरोडाशस्य। तस्मादाग्नेय एव पुरोडाशस्य प्रयोजको न स्विष्टकृदिति।

एतदभिप्रेत्याह प्रयोक्तेति। 'स्विष्टकृत्' स्विष्टकृद्यागः—'प्रयोक्ता' प्रयोजकः पुरोडाशस्य—'न' 'इष्टः'। किन्तु आग्नेय एव तत्प्रयोजक इति भावः॥ १५॥

## (१६) ४।१।३३-३९ प्रयाजार्थेऽभिघारणम्

(१) प्रयुक्तिविचारविशेषोऽनुवर्तते।

(२) प्रकृतौ ज्योतिष्टोमे श्रूयते—'प्रयाजशेषेण हवींष्यभिघारयति' इति। विकृतौ च वाजपेये श्रूयते—'सप्तदश प्राजापत्यान् पशूनालभते' इति। एवं वाजपेये द्विविधाः पशवः—एके 'आग्नेयं पशुमालभेत' इत्यादिना विहिताः प्रकृतियागतः प्राप्ताः इतरे विकृतिमात्रगताः सप्तदश प्राजापत्याः। सर्वे चैते प्रातःकाल एवोपक्रम्यन्ते। किन्तु आग्नेयादीनां पशूनां प्रातरेवालम्भनात् तदीयानां हविषां प्रातरनुष्ठितप्रयाजशेषेणैवाभिघारणं सिध्यति। प्राजापत्यानां त्वालम्भो मध्याह्ने भवति। अतः प्रयाजानुष्ठानकाले तदीयहविषामभावः।

(३) तत्र सन्देहः—प्राजापत्यपशुहविषामभिघारणसिद्ध्यर्थं किं

प्रातरनुष्ठितप्रयाजशेषो धारयितव्यः तद्धारणार्थं च पात्रान्तरं सम्पादयितव्यम्-तेन च प्राजापत्यानामभिघारणं कर्तव्यम्—उत प्रयाजशेषो न धारयितव्यः, न प्राजापत्यानामभिघारणं कर्तव्यमिति ।

(४) पूर्वपक्षः—मध्याह्नकालीनप्राजापत्याभिघारणसिद्ध्यर्थं प्रातरनुष्ठितप्रयाजशेषो धारयितव्यः । तद्धारणार्थं च पात्रान्तरं सम्पादनीयम्—शेषाधारभूताया जुह्वा मध्याह्ने कार्यान्तरे व्यापृतत्वादिति ।

(५) सिद्धान्तः—शेषाभिघारणं हि प्रतिपत्तिकर्म । तस्य च प्रयोजनं दृष्टमेव पात्रस्य रिक्तीकरणम् । न तद् दृष्टार्थम् । अतः पात्ररिक्तीकरणरूपप्रतिपत्त्यर्थमेव प्रकृतौ शेषाभिघारणम् । तच्च प्रातरनुष्ठितेनैवाभिघारणेन सिद्धम् । तस्मान्नास्ति प्रयोजनम्पुनर्मध्याह्नेऽभिघारणस्य नतरां च तत्सिद्ध्यर्थं शेषधारणस्य तद्धारणार्थं वा पात्रसम्पादनस्येति । तस्मात् प्रातरनुष्ठितप्रयाजशेषमात्रस्याभिघारणम् न पुनर्वारम्मध्याह्ने - इति ।

एतदभिप्रेत्याह—प्रयाजार्थं इति । 'अभिघारणम्' शेषस्य—'प्रयाजे' एव प्रातरनुष्ठिते—न पुनर्मध्याह्ने प्राजापत्यपशुसम्बन्ध इति शेषः । अतो न भवति प्राजापत्यपश्वालम्भनमभिघारणस्य प्रयोजकमित्याशयः ॥१६॥

## (१७) ४।१।४०-४१ समानयः प्रयोक्ता स्यात् ।

(१) प्रयुक्तिविचारोऽनुवर्तते ।

(२) दर्शपूर्णमासयोः श्रूयते—'अतिहायेडो बर्हिः प्रतिसमानयति जुह्वामौपभृतम्' इति । अस्यार्थः 'पञ्चानाम्मध्ये तृतीयः प्रयाजः इट्शब्देन बहुवचनान्तेनाभिधीयते—तं तृतीयं प्रयाजमतिक्रम्य बर्हिर्नामकं चतुर्थं प्रयाजं होतुम् उपभृत्संज्ञकायां स्रुचि स्थितं घृतं जुह्वामानेतव्यम्'—इति ।

(३) तत्र सन्देहः—यदिदमानयनम् तत् उपभृति आज्यग्रहणस्य प्रयोजकं भवति न वेति ।

(४) पूर्वपक्षः—प्रयाजानुयाजार्थस्यैवाज्यस्यैकदेशः समानीयते । तस्मात् पूर्वाधिकरणन्यायेन न भवत्यानयनमाज्यस्य प्रयोजकम् इति ।

(५) सिद्धान्तः—यथाऽनुयाजा औपभृतस्याज्यस्य प्रयोजकास्तथा चतुर्थपञ्चमप्रयाजनिष्पादकमानयनमपि तस्य प्रयोजकमेवेति ।

एतदभिप्रेत्याह—समानय इति । 'समानयः' समानयनम्—'प्रयोक्ता' प्रयोजकं 'स्यात्'—औपभृतस्याज्यस्येति शेषः ॥ १७ ॥

## (१८) ४।१।४२-४५ द्व्यर्थमौपभृतं घृतम्

(१) प्रयुक्तिविचारोऽनुवर्तते ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'चतुर्जुह्वां गृह्णाति—अष्टावुपभृति गृह्णाति' इति । अत्र जौहवम् औपभृतं चाज्यमाम्नातम् प्रयाजानुयाजार्थम् ।

( ३ ) तत्र सन्देहः—किं जौहवमौपभृतं चेत्युभयं प्रयाजानुयाजग्रहणम् उत जौहवम्प्रयाजार्थमौपभृतमनुयाजार्थम्—उत जौहवम्प्रयाजार्थमौपभृतमुभयार्थमिति ।

( ४ ) पूर्वपक्षः—नियामकाभावादुभयमुभयार्थमिति ।

( ५ ) सिद्धान्तः—समुपलभ्यते च नियमवाक्यम्—'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इति । न चानुयाजमात्रेणौपभृताज्यसम्बन्धं सूचयत् वाक्यं क्वचिल्लभ्यते । तस्मात् औपभृतम्प्रयाजानुयाजोभयार्थमिति ।

एतदभिप्रेत्याह—द्व्यर्थमिति । 'औपभृतं' उपभृति गृहीतं—'घृतम्' 'द्व्यर्थम्' प्रयाजानुयाजोभयार्थमिति ॥ १८ ॥

## ( १९ ) ४।१।४६-४८ चतुस्सङ्ख्याद्वयं ग्राह्यम्

( १ ) प्रयुक्तिविचारोऽनुवर्तते ।

( २ ) 'अष्टावुपभृति गृह्णाति' इति श्रूयते ।

( ३ ) तत्र सन्देहः—यदिदमौपभृतमाज्यं तत् किं अष्टसङ्ख्येन ग्रहणेन संस्क्रियते—उत चतुःसङ्ख्या गुणभूता द्वयोर्ग्रहणयोः—अर्थात् किमत्र अष्टसङ्ख्याविशिष्टमेकं ग्रहणम् उत चतुर्गृहीतद्वयम् इति ।

( ४ ) पूर्वपक्षः—अष्टसङ्ख्याविशिष्टमेकं ग्रहणमत्र विहितम् । अष्टसङ्ख्यावयवभूतयोः चतुस्सङ्ख्याद्वयोर्विधाने सति श्रुतिवाक्यस्थाष्टशब्दस्यावयवलक्षणा प्रसज्येत इति ।

( ५ ) सिद्धान्तः—'चतुर्गृहीतं जुहोति' इति वाक्येन होमो विहितः । एवं सति अष्टसङ्ख्याविशिष्टमेकस्यैव ग्रहणे इदं वाक्यं विरुध्येत । तस्मात् उपभृति चतुर्गृहीतद्वयं विधीयते इत्येवोचितम् । तत्रैकं चतुर्गृहीतं हविश्चतुर्थपञ्चमप्रयाजार्थमपरं त्वनुयाजार्थम् इति ।

एतदभिप्रेत्याह—चतुस्सङ्ख्येति । 'चतुस्सङ्ख्याद्वयम्' चतुस्सङ्ख्याविशिष्टं 'ग्राह्यम्'—चतुस्सङ्ख्याविशिष्टं ग्रहणद्वयमेव विधीयते—नत्वष्टसङ्ख्याविशिष्टमेकमित्याशयः ॥ १९ ॥

न्यायास्त्वेकोनविंशतिः ।

स्पष्टार्थम् ।

इति चतुर्थस्य प्रथमः ।

# अथ चतुर्थस्य द्वितीयः ।

( १ ) ४।२।१-६ यूपैकदेशः स्वरुरप्रयोक्ता

( १ ) प्रयुक्तिविचारोऽनुवर्तते ।

( २ ) अस्ति ज्योतिष्टोमेऽग्नीषोमीयः पशुः । तस्य पशोर्यूपे बन्धनमाम्नातम्—'खादिरे बध्नाति—पालाशे बध्नाति' इति । तस्यैव सन्निधौ श्रूयते 'यूपस्य स्वरुं करोति' इति । यूपस्यैवैकोंऽशः स्वरुरिति ।

( ३ ) तत्र सन्देहः—किं यूपात् पृथगेव स्वरुरुत्पादयितव्यः उत क्रियमाणं यूपमनुनिष्पन्न एव ग्रहीतव्यः । अर्थात् शाखाच्छेदनादिव्यापाराणाम्प्रयोजको भवति स्वरुर्न वेति ।

( ४ ) पूर्वपक्षः—'स्वरुं करोति' इति पृथक् स्वरोः करणं विधीयते। करणं च छेदनादिना काष्ठस्य स्वरुत्वसम्पादनम् । तस्मात् स्वरुः यूपात् पृथगेव करणीयत्वेन विहितश्छेदनादीनाम्भवति प्रयोजक इति ।

( ५ ) सिद्धान्तः—विद्यमानस्य यूपस्य यः प्रथमः खण्डः पतति स स्वरुरित्येतावन्मात्रमेवार्थः स्वरुविधेः स्वरुं करोतीत्येतस्य । करोतेश्चात्र आदानमेवार्थः । तस्मात् स्वरर्थन्न छेदनान्तरमपि तु यूपमनुनिष्पन्न एव स ग्रहीतव्यः । तस्मात् न स्वरुश्छेदनादेः प्रयोजक इति ।

एतदभिप्रेत्याह—यूपैकदेश इति । यस्मात् 'स्वरुः' यूपस्यैव 'एकदेशः' खण्डविशेषो भवति—तस्मात् स 'अप्रयोक्ता'—न प्रयोजकः—छेदनादीनामिति शेषः ॥ १ ॥

(२) ४।२।७ प्राचीतिशब्दो वदतीह शाखाम्।

( १ ) प्रयुक्तिविचारोऽनुवर्तते ।

( २ ) दर्शपूर्णमासयोः पलाशशाखया वत्सापाकरणमाम्नातम् । तामेव पलाशशाखाम्प्रकृत्योक्तम् 'प्राचीमाहरति' इति ।

( ३ ) तत्र सन्देहः—अत्र प्राचीशब्दः किं प्राचीं दिशं वक्ति—उत प्राच्यां दिशि स्थितां पलाशशाखामिति । अर्थात्—आहरणस्य प्रयोजिका किम्प्राची दिगुत तस्यान्दिशि स्थिता शाखेति ।

( ४ ) पूर्वपक्षः प्राचीशब्दस्य प्राचीदिगेव मुख्योऽर्थः । मुख्यस्य चार्थस्य परित्यागे प्रमाणाभावात् प्राचीदिगेवात्राहरणीयाऽऽहरणस्य प्रयोजिका भवतीति ।

( ५ ) सिद्धान्तः-दिश आहरणं सर्वथाऽशक्यम । तस्मात्प्राचीशब्दः

प्राचीदिगवस्थितपलाशशाखोपलक्षकत्वेनैव नेयः। तथा सत्येव प्रकृत-कर्मानुग्रहो भवति। तस्मात् प्राचीदिगवस्थितैवात्राहरणीयेति।

एतदभिप्रेत्याह प्राचीतीति। 'प्राचीतिशब्दः' 'शाखाम्' 'वदति' उप-लक्षयतीति यावत्। तस्मात् शाखैवात्राहरणीयाऽऽहरणस्य प्रयोजिका भ-वतीत्याशयः॥ २॥

## (३) ४।२।८-९ छेदप्रयोक्ता न खलूपवेषः

(१) प्रयुक्तिविचारोऽनुवर्तते।

(२) दर्शपूर्णमासयोः श्रूयते—'मूलतः शाखां परिवास्योपवेषं क-रोति' इति। येयं पलाशशाखा वृक्षादाहृतां ताम्पुनश्छित्वा मूलभागेन प्रादेशपरिमितेनोपवेषः कार्य इत्यर्थः। शाखाभागयोश्च द्वयोरग्रमूलयोः कार्ये अपि पृथगाम्नाते—'शाखया वत्सानपाकरोति—उपवेषेण कपा-लान्युपदधाति' इति। तदिदं कार्यद्वयमत्र छिन्नया शाखया सम्पाद्यते।

(३) तत्र सन्देहः—शाखाच्छेदनस्यात्र किम्प्रयोजकम्—शाखोप-वेषश्चेत्युभयमुत शाखैव प्रयोजिका उपवेषस्तदनुनिष्पादी इति।

(४) पूर्वपक्षः—यस्मात् शाखाकार्यं वत्सापाकरणमुपवेषकार्यं च कपालोपधानमित्युभयमपि छिन्नया शाखया सम्पाद्यते तस्मादुभयमपि छेदनस्य प्रयोजकमिति।

(५) सिद्धान्तः—'उपवेषं करोति' इत्युक्ते केन द्रव्येणेत्याकाङ्क्षायां 'मूलत' इति वक्तव्यम्—कस्य मूलमित्याकाङ्क्षायां—'वत्सापाकरणार्थं छिन्नायाः पलाशशाखाया मूलम्' इति तत्पूरणम्। तस्माच्छेदने वत्सा-पाकारिका शाखैव प्रयोजिका उपवेषस्त्वनुनिष्पादी इति।

एतदभिप्रेत्याह-'उपवेषः''छेदस्य' शाखाच्छेदनस्य-'प्रयोक्ता' प्रयो-जकः-'न खलु'-किन्तु वत्सापाकरणार्थशाखैव तत्प्रयोजिकेत्याशयः॥ ३॥

## (४) ४।२।१०-१३ शाखाप्रहारः प्रतिपत्तिकर्म।

(१) प्रयुक्तिविचारोऽनुवर्तते।

(२) दर्शपूर्णमासयोः श्रूयते-'सह शाखया प्रस्तरं प्रहरति' इति।

(३) तत्र सन्देहः—अत्रोक्तं शाखाप्रहरणं किमर्थकर्म उत प्रतिप-त्तिकर्म, अर्थात् प्रस्तरप्रहरणमिव शाखाप्रहरणमपि होमम्प्रयोजयति न वेति।

(४) पूर्वपक्षः—प्रहरतिशब्देनात्र यागो विधीयते। प्रस्तरप्रहरणं च यागः। तस्मात् तत्साहचर्याच्छाखाप्रहरणस्यापि यागत्वम् ततश्चार्थ-कर्मत्वमपि—इति।

( ५ ) सिद्धान्तः—शाखाप्रहरणन्न भवति तुल्यम्प्रस्तरप्रहरणेन । प्रस्तरप्रहरणविषये 'सूक्तवाकेन प्रस्तरं प्रहरति' इति वाक्यान्तरे मान्त्रवर्णिकदेवतासम्बन्धेऽवक्लृप्ते तन्मूलको यागः कल्पितः । शाखाप्रहरणे तु नास्ति काचिद्देवता । ततोऽत्र यागः कल्पयितुं न शक्यते । तस्मात् प्रहरतिशब्देनात्र त्यागमात्रमुच्यते । वत्सापाकरणे पलाशशाखोपयुक्ता । तस्या अयं त्यागः प्रतिपत्तिकर्मैव भवति—इति ।

एतदभिप्रेत्याह—शाखेति । 'शाखायाः' वत्सापाकरणोपयुक्तायाः पलाशशाखायाः 'प्रहारः' प्रहरणं 'प्रहरति'शब्दोपात्तं—'प्रतिपत्तिकर्म' उपयुक्तद्रव्यपरित्यागरूपमेव—न तु 'अर्थाय' क्रतुसाफल्यप्रयोजनाय क्रियमाणम् 'अर्थकर्म' इत्याशयः ॥ ४ ॥

## (५) ४।२।१४-१५ अपान्निनीतिः प्रतिपत्तिरेव

( १ )—प्रयुक्तिविचारोऽनुवर्तते ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'अपः प्रणयति' इति । प्रणीतानां चापाम्प्रयोजनमाम्नातम्—'प्रणीताभिर्हवींषि संयौति—अन्तर्वेदि प्रणीता निनयति' इति ।

( ३ ) तत्र सन्देहः—अपां निनयनमत्रार्थकर्मोत प्रतिपत्तिकर्म । अर्थात् अपाम्प्रणयनस्य किम्प्रयोजनम्—किं हविस्संयवनं निनयनं चेत्युभयमुत हविस्संयवनमात्रमिति ।

( ४ ) पूर्वपक्षः—उभयमप्यत्र प्रयोजकम् । अपःप्रणयनेनोभयोरपि तुल्य एव सम्बन्ध उक्तः । न च कश्चिद्विशेष उपलभ्यते येनैकेनैव सम्बन्धः स्यात् । तस्मान्निनयनमपि संयवनमिवापःप्रणयनस्य प्रयोजकमर्थकर्मैवेति ।

( ५ ) सिद्धान्तः—संयवनविनियोगवाक्ये प्रणीताभिरिति तृतीयाश्रुत्या अपां संयवनसाधनत्वमवगम्यते । निनयनवाक्ये तु प्रणीता इति द्वितीयाश्रुत्या संस्कार्यत्वमात्रमवगम्यते । अतः संयवनमेवात्र प्रयोजकम्—निनयनं तु न प्रयोजकमपि तु प्रतिपत्तिरूपः संस्कार एवेति ।

एतदभिप्रेत्याह—अपामिति । 'अपां' 'निनीतिः' निनयनम्—'प्रतिपत्तिरेव'—प्रतिपत्तिरूपः संस्कार एव—नापाम्प्रणयनस्य प्रयोजकमित्याशयः ॥ ५ ॥

## (६) ४।२।१६-१८ दण्डप्रदानम्पुनरर्थकर्म ।

( १ ) प्रयुक्तिविचारोऽनुवर्तते ।

( २ ) ज्योतिष्टोमे श्रूयते—'क्रीते सोमे मैत्रावरुणाय दण्डम्प्रयच्छ-

ति' इति । दीक्षितेन धृतस्य दण्डस्य मैत्रावरुणाय समर्पणमाम्नायते।

( ३ ) तत्र सन्देहः—एतद्दण्डदानमर्थकर्मोत प्रतिपत्तिकर्म । अर्थात् दण्डस्य प्रयोजकं किं दीक्षितेन धारणमुत धारणम्मैत्रावरुणाय प्रदानं चेत्युभयमिति ।

( ४ ) पूर्वपक्षः—दण्डस्य यजमानसंस्कारसाधनभूतस्य यजमानधारणेनैव कृतकृत्यत्वात् कृतोपयोगस्य दण्डस्यान्यस्मै प्रदानं प्रतिपत्तिमात्रं भवितुमर्हति इति ।

( ५ ) सिद्धान्तः—यजमानधारणेनैवदण्डस्य सर्वे उपयोगा न पूर्णाः । अनन्तरमपि तस्योपयोगो वर्तते । तथाहि यदा मैत्रावरुणः प्रैषमनुवदति तदानीमवलम्बनाय दण्डोऽपेक्षित इत्याम्नातम्—'दण्डी प्रैषानन्वाह' इति । तस्मात् यथा यजमानसंस्काराय दण्डोऽपेक्षितस्तथैव मैत्रावरुणसंस्कारायापीति । यथा यजमानाय दण्डसमर्पणमर्थकर्म तथैव मैत्रावरुणाय समर्पणमपीत्यर्थकर्मैव मैत्रावरुणाय दण्डप्रदानमिति ।

एतदभिप्रेत्याह—दण्डेति । 'दण्डस्य' संस्कारकत्वेन यजमानधृतस्य 'प्रदानं' मैत्रावरुणाय समर्पणम्—'अर्थकर्म' यागाङ्गसम्पादनोपयोगि न प्रतिपत्तिरूपम्—'पुनः' इति पूर्वाधिकरणसिद्धान्तमस्माद्यावर्तयति ॥ ६ ॥

## (७) ४।२।१६ प्रासो विषाणाप्रतिपत्तिकर्म

( १ ) प्रयुक्तिविचारोऽनुवर्तते ।

( २ ) ज्योतिष्टोमे श्रूयते—'कृष्णविषाणया कण्डूयते—प्रत्तासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति । अत्र कृष्णविषाणेन कण्डूयनं तत्प्रासनं चाम्नातम् ।

( ३ ) तत्र सन्देहः—कृष्णविषाणप्रासनमप्यर्थकर्मोत प्रतिपत्तिकर्म । अर्थात् कण्डूयनं प्रासनं चेत्युभयमपि विषाणस्य प्रयोजकमुत कण्डूयनमात्रमिति ।

( ४ ) पूर्वपक्षः—प्रासनमप्यपूर्वविशेषजनकत्वे। सप्रयोजनम् । तस्मादर्थकर्मैवैतदिति ।

( ५ )सिद्धान्तः—'कृष्णविषाणया कण्डूयते' इति तृतीयाश्रुत्या यजमानशिरःकण्डूयनोपयुक्तस्य विषाणस्य नास्त्युपयोगान्तरम् । तस्मात् कृतोपयोगस्य तस्य प्रासनं प्रतिपत्तिरेव भवितुमर्हति । अपूर्वं च चात्वाले एव प्रासनमिति प्रतिपत्त्याधारनियमनेन सम्पद्यते । तस्मात् विषाणस्य प्रासनं प्रतिपत्तिकर्मेति ।

एतदभिप्रेत्याह—प्रास इति । 'प्रासः' चात्वाले प्रासनं यदाम्नातं तत्—विषाणाप्रतिपत्तिकर्म 'विषाणायाः' कृतोपयोगायाः 'प्रतिपत्तिः' परित्यागरूपः यः संस्कारः तद्रूपमेव कर्म—न तु अर्थकर्मेति ॥ ७॥

## (८) ४।२।२०–२२ न सोमलिप्तैरुदकेष्टिरिष्टा ।

( १ ) प्रयुक्तिविचारोऽनुवर्तते ।

( २ ) अस्ति ज्योतिष्टोमेऽवभृथस्नानम् । तत्प्रकृत्य श्रूयते—'यत् किञ्चित् सोमलिप्तं द्रव्यं तेनावभृथं यन्ति' इति ।

( ३ ) तत्र संशयः—अत्र यत् सोमलिप्तानां द्रव्याणामवभृथगमनमुक्तं तत् किम्प्रतिपत्तिकर्मोतार्थकर्म । अर्थात् अवभृथं किं द्रव्याणाम्प्रयोजकमुत नेति ।

( ४ )पूर्वपक्षः—सोमलिप्तानां द्रव्याणामवभृथसाधनत्वमभ्युपेयम्-'तेनावभृथं यन्ति' इति तृतीयाश्रुत्या अवभृथसाधनत्वावगमात् । तस्मात् सोमलिप्तं द्रव्यमवभृथे हविष्ट्वेन नेयम् । तथा च भवत्यवभृथं द्रव्यस्य प्रयोजकमिति ।

( ५ ) सिद्धान्तः—'वारुणेनैककपालेनावभृथमवयन्ति' इत्यनेन वाक्येनावभृथे पुरोडाशस्यैव हविष्ट्वमाम्नातम् । एवं च पुरोडाशेनावरुद्धेऽवभृथकर्मणि अन्यस्य हविषो न भवति सम्बन्धः । तथाच सति प्रवृत्ते वाक्येऽवभृथशब्देन अवभृथदेशो लक्ष्यते । तस्मिंश्च देशे सोमलिप्तद्रव्यस्य नयनं विधीयते । तच्च नयनं प्रतिपत्तिरूपमेव भवति सोमलिप्तानां द्रव्याणां पूर्वमुपयुक्तत्वात् । तस्मात्प्रतिपत्तिकर्मैव सोमलिप्तद्रव्याणामवभृथगमनमिति ।

एतदेवाभिप्रेत्याह नेति । 'सोमलिप्तैः द्रव्यैः' 'उदकेष्टिः' 'न इष्टा' । 'सोमलिप्तद्रव्यरूपैर्हविर्भिरवभृथाख्ययागोऽनुष्ठातव्य' इति मतं न सम्यक्-अपि तु उक्तद्रव्याणामवभृथगमनं तेषां प्रतिपत्तिरूपमेव भवतीत्याशयः ॥ ८॥

## (९) ४।२।२३–२४ देशादिवाक्ये नियमो विधेयः

( १ )—प्रयुक्तिविचार एवानुवर्तते ।

( २ ) 'समे दर्शपूर्णमासाभ्यां यजेत, प्राचीनप्रवणे वैश्वदेवेन यजेत, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत, अग्निहोत्रस्यैक ऋत्विक्, सोमेन यजेत' इत्यादि समुपलभ्यते देशकालकर्तृद्रव्यसमाम्नानम् ।

( ३ ) तत्र सन्देहः—देशकालादयोऽत्र विधीयन्ते—उतानूद्यन्ते । अर्थात् देशकालादयो भवन्ति तत्तत्कर्मणः प्रयोजका न वेति ।

( ४ ) पूर्वपक्षः—देश—काल—कर्तृ—द्रव्याणि विना कर्मणामसम्भवात् अर्थापत्त्यैवैते प्राप्ताः। तथाच प्राप्तानामुपवर्णनमनुवाद एव न विधिरिति ।

( ५ ) सिद्धान्तः—देशः काल कर्ता द्रव्यमेतत् सर्वंय दर्थापत्त्याप्राप्तं तत्सामान्यत एव । यः कश्चिद्देशः यः कश्चित् कालः यक श्चित् कर्ता यत् किञ्चिद्द्रव्यम्—अनियमेन पर्याप्तं तत्तत्कर्मसम्पादनाय । प्रकृतेषु तु वाक्येषु नियमा उपलभ्यन्ते—सम एव देशे दर्शपूर्णमासाभ्यां यष्टव्यम्—पौर्णमास्यामेव पौर्णमासयागः कर्तव्यः—अग्निहोत्रे एक एवानुष्ठाता—यागविशेषे सोम एवैकं द्रव्यम्—इत्येवंरूपाः । न चैते नियमाः कुतश्चिदपि प्राप्ताः । तस्मात् समदेशादिनियमा अत्र विधीयन्त इति ।

एतदेवाभिप्रेत्याह—देशेति । देशादिवाक्ये यस्मिन् वाक्ये समो देशः पौर्णमासीकाल इत्यादि वर्ण्यते तस्मिन्—'नियमः' सम एव देशः पौर्णमास्येव काल इत्येवंरूपः—'विधेयः' विधिविषयो भवति—नानुवादमात्रमित्यर्थः ॥ ९॥

(१०) ४।२।२५ द्रव्यं गुणानां नियमस्तथैव।

( १ )—पूर्वाधिकरणसदृश एवायं विचारः ।

( २ ) 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र श्वेतपशोर्वायुदेवतोद्देशेनालम्भनमुक्तम् ।

( ३ ) तत्र सन्देहः—कि श्वेतवर्णोऽत्र विधीयते—उतानूद्यते—इति। अर्थात् श्वैत्यगुणः प्रधानेन कर्मणा प्रयोज्यते न वेति ।

( ४ ) पूर्वपक्षः—श्वैत्यगुणस्य द्रव्यं पशुं विना न भवति क्रिययाऽन्वयः। पशुसहितस्य च तस्य क्रियान्वयः पशुविधिनैव प्राप्तः । तत एव प्राप्तस्य चात्र वचनमनुवाद एवेति ।

( ५ ) सिद्धान्तः—सामान्यतः पशुद्रव्यस्यान्यतः प्राप्तत्वेऽपि श्वेतवर्ण एव पशुरालम्भनीय इति नियमस्य कुतश्चिदपि न प्राप्तिः । तस्मात् नियमांशे भवत्येव विधेः प्रयोजनम् । तस्मात् श्वैत्यगुणोऽत्र विधीयत इति ।

एतदभिप्रेत्याह—द्रव्य इति ।'द्रव्ये' पश्वादौ–'गुणानां' श्वैत्यादीनां—'नियमः' श्वेतमेव पशुमालभेतेत्यादिरूपः—'तथैव' पूर्वाधिकरणवद् विधेय एव—न तु गुणस्य वचनमनुवादमात्रमित्याशयः ॥ १० ॥

(११) ४।२।२६ तथाऽवघातादिविधिर्नियन्ता

( १ ) नवमाधिकरणसदृश एव विचारः। नवमे देशकालकर्तृदेश-

नियमानां विधेयत्वं—दशमे गुणनियमस्य विधेयत्वं स्थापितम् । संस्कारनियम इदानीं चिन्त्यते ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'व्रीहीनवहन्ति' इति । अत्र चरुसम्पादनार्थं तण्डुलकरणाय व्रीहीणां वितुषीभावायावहननमाम्नातम् ।

( ३ ) तत्र सन्देहः—किमत्रावहननस्य विधिरुत चरुविधिप्राप्तस्यानुवाद इति । अर्थात् अवहननम्प्रधानकर्मणा प्रयोज्यते न वेति ।

( ४ ) पूर्वपक्षः—तण्डुलनिष्पत्त्यर्थमवहननं लोकव्यवहारतः प्राप्तमेवात्रानूद्यत इति ।

( ५ ) सिद्धान्तः—यद्यप्यवघातस्तण्डुलनिष्पत्त्यर्थं लोकव्यवहारतः प्राप्तस्तथाऽपि नखविदलनादीनां वितुषीकरणोपायान्तराणां निवृत्त्यर्थं तस्य नियमोऽपेक्ष्यते । स एव नियमोऽत्र विधीयते—इति ।

एतदभिप्रेत्याह—तथेति । 'तथा' द्रव्यगुणविधानवत्—'अवघातादिविधिः' द्रव्यसंस्काराणामवघातादीनां विधिः—'नियन्ता' नियमविधायकः भवति—न तु संस्कारवचनमनुवादमात्रमित्याशयः ॥ ११ ॥

## (१२) ४।३।२७-२८ त्यागः श्रुतोद्देशयुतो यजिः स्यात् ।

( १ ) प्रधानेनाङ्गानि विनियुज्यन्त इति स्थितम् । किं चास्य प्रधानस्याङ्गिनः ( शेषिणः ) स्वरूपमितीदानीं विचार्यते ।

( २ ) 'सोमेन यजेत'—'अग्निहोत्रं जुहोति'—'हिरण्यमात्रेयाय ददाति' इति वाक्येषु यागहोमदानरूपाणि कर्माण्याम्नातानि ।

( ३ ) तत्र सन्देहः—किमेतेषां त्रिविधानां कर्मणां प्रातिस्विकस्वरूपं निरूपयितुम् शक्यते न वेति ।

( ४ ) पूर्वपक्षः—त्रयाणामपि यागहोमदानानां त्यागरूपसाम्याद्भेदो दुर्निरूपः । तस्मात् सर्वाण्यप्येतानि त्यागरूपाण्येवेत्यवसेयम्-इति ।

( ५ ) सिद्धान्तः—त्रयाणामपि प्रातिस्विकं स्वरूपं सुनिरूपम् । तथा हि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विहिते यागे तत्र पुनर्विशेषेण होमो विहितः—'चतुरवत्तं जुहोति' इति । अत्र च यागहोमयोः पार्थक्यं स्पष्टं प्रतिभाति—देवतोद्देशेन द्रव्यस्य त्यागमात्रं यागः—त्यागपूर्वकः प्रक्षेपस्तु होम इति ।

एतदभिप्रेत्याह—त्याग इति । 'श्रुतोद्देशयुतः' 'श्रुतो'य 'उद्देशो' देवतारूपः तेन 'युतः' तत्सम्बद्धत्वेनोक्तः—'त्यागः' द्रव्यस्य—'यजिः' यागाभिधेयं कर्म—'स्यात्' । तथा च विहितदेवतोद्देशेन द्रव्यस्य त्यागो याग इति यागस्वरूपमवधेयमित्याशयः ।

[ भाष्ये यागलक्षणपरं द्वादशमधिकरणं होमलक्षणपरं च त्रयोद-

शाधिकरणं—तदन्तर्गतमेव च दानलक्षणमिति। न्यायमालायां त्वेक-स्मिन्नेवाधिकरणे त्रयाणामपि समावेशः कृतो वर्तत इत्यवधेयम्]॥१२॥

(१३) ४।२।२८ प्रक्षेपयुक्तो यजिरेव होमः

(१-२-३-४) पूर्वाधिकरणानुरूपम्।

(५) सिद्धान्तः—देवतोद्देशेन त्यागपूर्वको द्रव्यस्य प्रक्षेपो होमः। प्रक्षेपांशोऽत्राधिक इति।

एतदभिप्रेत्याह—प्रक्षेपेति। 'प्रक्षेपेण' द्रव्यस्य कस्मिंश्चिदाधारे आ-सेचनेन 'युक्तः' सहितो यदा 'यजिः' त्यागमात्ररूपो यागो भवति—तदा स एव यागः—'होमः' होमपदवाच्यो भवति॥ १३॥

(१४) ४।२।२८ त्यागः परस्वीकरणं च दानम्।

(१-२-३-४) द्वादशाधिकरणेऽनुसन्धेयम्।

(५) सिद्धान्तः—यत्र त्यागरूपे कर्मणि दात्रोत्सृष्टे द्रव्ये स्वस्व-त्वं निवर्त्य परपुरुषस्वत्वमुत्पाद्यते तद् भवति दानमिति।

एतदभिप्रेत्याह—त्याग इति। यस्मिन् कर्मणि द्रव्यस्य 'त्यागो' भ-वति अथ च 'परस्वीकरणम्'—'परस्य' पुरुषान्तरस्य 'स्वीकरणम्' ग्रह-णम् भवति—तदा तद् भवति 'दानम्' इति। एवं च त्रिष्वपि यागहोम-दानेषु द्रव्यस्योत्सर्गः समानः—किन्तु देवतामुद्दिश्योत्सर्गमात्रं 'यागः' आसेचनसहित उत्सर्गो 'होमः' उत्सर्गपूर्वकं परस्वत्वोत्पादनं 'दानम्'इति विवेकः॥ १४॥

(१५) ४।२।२९।३० समानमिष्टित्रितयेऽपि बर्हिः

(१) प्रसक्तानुप्रसक्तविचारानन्तरं प्रयुक्तिविचारः पुनरनुवर्तते।

(२) ज्योतिष्टोमे श्रूयते—'यदातिथ्यायां बर्हिः तदुपसदां तदग्नीषो-मीयस्य चे'ति। क्रीतं सोमं शकटेऽवस्थाप्य प्राचीनवंशं प्रति आनयने या इष्टिर्निरूप्यते सा 'आतिथ्या'—तत ऊर्ध्वं त्रिषु दिनेष्वनुष्ठीयमाना 'उप-सदः'—औपवसथ्येऽह्नि अनुष्ठेयो'ऽग्नीषोमीयः'।

(३) अत्र सन्देहः—किमत्रातिथ्येष्टिबर्हिष उपसदादावतिदेशः उत बर्हिस्साधारणविधिरिति। अर्थात् उपसदादयो बर्हिषस्तद्धर्माणां वा भवन्ति प्रयोजका न वेति।

(४) पूर्वपक्षः—आतिथ्येष्टौ विहितं बर्हिर्यद्युपसत्सु आच्छिद्य विधीयेत तर्हि तस्यातिथ्यायां विधानमनर्थकं स्यात्। यदि चातिथ्या-यामुपयुक्तं यद्बर्हिस्तदेवोपसत्सु विधीयते तदा विनियुक्तविनियोगरूपो विरोधः स्यात्। तस्मात् आतिथ्याबर्हिषो ये धर्मास्त एवोपसत्स्वतिदि-

इष्यन्ते इत्यतिदेशपरमेवात्र वाक्यमिति ।

( ५ ) सिद्धान्तः—साक्षाच्छ्रुत्या बर्हिष आतिथ्योपसदग्नीषोमीयेष्वेकत्वं प्रतीयते । न तु तस्याः प्रतीतेस्त्यागे मानम्पश्यामः । तस्माद् बर्हिषः साधारण्यमत्र विधेयम् । आतिथ्यार्थं यद् बर्हिरासादितं तत्सर्वं नातिथ्यामात्रार्थमपि तूपसदग्नीषोमीयार्थं चोपादेयमिति विधिवाक्यार्थः। तस्मात् आतिथ्येष्टिवत् उपसदग्नीषोमीया अपि बर्हिषः प्रयोजका इति ।

एतदभिप्रेत्याह—समानमिति । 'इष्टित्रितयेऽपि'—आतिथ्यायाम् उपसत्सु अग्नीषोमीये च—'बर्हिः' 'समानम्' साधारणम् इति सम्बन्धः१५॥

न्यायास्तु पादे दश पञ्च चात्र ।

स्पष्टम् । न्यायामालानुसारेणाधिकरणसङ्ख्याऽत्र त्रयोदशैवेति ध्येयम्॥

इति चतुर्थस्य द्वितीयः पादः ।

---

# अथ चतुर्थस्य तृतीयः ।

[ फलविचारात्मकः ]

## (१) ४।३।१-३ द्रव्यादिफलवाक् स्तुत्यै

( १ ) प्रयुक्तिप्रसङ्गेनैव क्रत्वर्थपुरुषार्थविवेकः प्रथमात्पादादनुवर्तते ।

( २ ) 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति पर्णद्रव्यविशेषसम्बन्धेन फलश्रवणम्—'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति अञ्जनरूपसंस्कारसम्बन्धेन फलश्रवणम्—'यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतद् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इति कर्मविशेषसम्बन्धेन फलश्रवणम् ।

( ३ ) तत्र सन्देहः—किमेतानि द्रव्यसंस्कारकर्माणि पुरुषार्थानि फलोक्तयश्च फलविधयः—उतैतानि क्रत्वर्थानि फलोक्तयश्चार्थवादा एवेति ।

( ४ ) पूर्वपक्षः—अत्र यत् पर्णद्रव्यम्, यश्चाञ्जनेन चक्षुःसंस्कारः, यच्च प्रयाजानुयाजरूपं कर्म—तत् त्रितयमेव पुरुषार्थत्वेन विधीयते—पापश्लोकश्रवणराहित्यम् भ्रातृव्यचक्षुर्वृञ्जनम् भ्रातृव्याभिभवनं चेति फलत्रितयस्य पुरुषगामित्वेन स्पष्टं प्रतिभासात् इति ।

( ५ ) सिद्धान्तः—एतेषु वाक्येषु फलं साध्यत्वेन न प्रतीयते—शृणोतीत्यादिवर्तमानत्वनिर्देशात् । तस्मात् यदत्र फलश्रवणं तत् तत्तत्कर्मणि प्रवर्तकः क्रत्वर्थोऽर्थवाद एवेति ।

एतदभिप्रेत्याह—द्रव्यादीति । 'द्रव्यादिफलवाक्'—'द्रव्यादीनां' द्रव्यसंस्कारकर्मणां सम्बन्धेन या 'फलानां' पापश्लोकश्रवणराहित्यादिफलानां 'वाक्' उक्तिः सा—'स्तुत्यै' अर्थवाद एव, न तु विधिरिति भावः॥१॥

(२) ४।३।४ नित्ये गोदोहनं न हि ।

(१) प्रयुक्तिविचारोऽनुवर्तते ।

(२) दर्शपूर्णमासयोरपःप्रणयनमाम्नातम् । तत्र विशिष्य श्रूयते 'गोदोहनेन पशुकामस्य प्रणयेत्' इति ।

(३) तत्र सन्देहः—अपःप्रणयनार्थं यद् गोदोहनपात्रमुक्तं तत्किं काम्यमात्रार्थमुत नित्यकाम्योभयार्थमिति । अर्थात् किं नित्यकाम्योभयं प्रणयनं गोदोहनस्य प्रयोजकमुत काम्यमेव प्रणयनमिति ।

(४) पूर्वपक्षः—नित्यकाम्योभयार्थमिदम्पात्रम् । नित्यप्रणयने पात्रान्तरस्यानाम्नानात् पात्रस्य च तत्राप्यपेक्षितत्वात् श्रौते च कर्मण्यश्रुतपात्रस्य प्रवेशानौचित्यादिति ।

(५) सिद्धान्तः—कामविशेषसिद्ध्यर्थं च पात्रविशेषस्य विधानम् । तच्च कामे सत्येव योग्यम् नान्यथा । नित्ये प्रणयनं च 'चमसेनापः प्रणयति' इति सामान्यतो विहितेन येन केनापि वा पात्रेण सम्भवति । काम्यं पात्रं नित्ये नान्वेति इति ।

एतदभिप्रेत्याह नित्य इति । 'नित्ये' अपःप्रणयने—'गोदोहनं' पात्रं—'न हि' नान्वेतीत्यर्थः ॥ २ ॥

(३) ४।३।५–७ नित्ये काम्ये च दध्यादि

(१) पूर्वाधिकरणापवादः । एष एव संयोगपृथक्त्वन्याय इति प्रसिद्धः ।

(२) अग्निहोत्रे श्रूयते 'दध्ना जुहोति' इति- पुनश्च 'दध्नेन्द्रियकामस्य जुहुयात्' इति ।

(३) तत्र सन्देहः—द्वितीयवाक्ये यद् दधिद्रव्यमुक्तं तत् किं काम्य एवान्वेति उत नित्यकाम्योभयोरिति ।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन काम्य एव होमे दध्नोऽन्वय इति ।

(५) सिद्धान्तः—'दध्ना जुहोती'त्यत्र कामनिरपेक्षमेव दधिद्रव्यस्य विधानम् 'दध्नेन्द्रियकामस्य जुहुया'दित्यत्र च कामसापेक्षं विधानम् । एवं च वाक्यद्वयानुसारेण दधिद्रव्यस्य नित्येन काम्येन चान्वयोऽविरुद्धः । तस्मादुभयोरप्यन्वयो दधिद्रव्यस्येति ॥

एष एव न्यायः—'खादिरे बध्नाति'—'खादिरं वीर्यकामस्य यूपं कुर्वीत' इत्यत्रापि ।

एतदभिप्रेत्याह नित्य इति । 'दध्यादि' दधि खादिरं च द्रव्यम्—'नित्ये काम्ये च'—अन्वेतीति शेषः ॥ ३ ॥

(४) ४।३।८-६ क्रत्वर्थं स्यात् पयोव्रतम् ।

( १ ) क्रत्वर्थपुरुषार्थविवेकोऽनुवर्तते ।

( २ ) ज्योतिष्टोमे दीक्षितस्यान्नभोजनाभावे व्रतमाम्नायते—'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति ।

( ३ ) तत्र सन्देहः—एतद् व्रतं पुरुषार्थमुत क्रत्वर्थमिति ।

( ४ ) पूर्वपक्षः—प्रकरणेन क्रत्वर्थता वाक्येन तु ब्राह्मणादिपुरुषार्थता । तस्मात् प्रकरणं बाधित्वा वाक्येन पुरुषार्थत्वमेवेति ।

( ५ ) सिद्धान्तः—ब्राह्मणादिपुरुषसम्बन्धो व्रतसम्बन्धिद्रव्यविशेषस्य तत्तज्जातिगतत्वेन व्यवस्थापनार्थमेवोक्तः । अतः प्रकरणबलेन क्रतुशेषत्वमेव व्रतस्य स्वीकार्यमिति ।

एतदेवाभिप्रेत्याह क्रत्वर्थमिति । 'पयोव्रतम्' 'क्रत्वर्थम्' 'स्यात्'—न तु पुरुषार्थम् । पुरुषार्थत्वे फलकल्पनमावश्यकं स्यादिति भावः ॥४॥

(५) ४।३।१०-१२ विश्वजित् सफलो यागः

( १ ) पुरुषार्थत्वे फलवचनस्य नियामकत्वं सूचितम् । कदाचित् यत्र फलवचनं नास्ति तत्र किं सर्वथा फलाभाव एवेति विचार्यते ।

( २ ) 'विश्वजिता यजेत' इति विश्वजिद्याग आम्नातः ।

( ३ ) तत्र सन्देहः—किमयमफल एव याग उत सफल इति ।

( ४ ) पूर्वपक्षः—फलस्याश्रुतत्वान्नास्ति विश्वजिति फलमिति ।

( ५ ) सिद्धान्तः-विश्वजिता यजेतेति वाक्यस्य विश्वजिता यागेन भावयेदित्यर्थोऽवगम्यते तत्र किम्भावयेदित्याकाङ्क्षा उत्तिष्ठति । तदाकाङ्क्षानिवृत्तये यागसम्पादनीयस्य फलस्यावश्यकता । कल्पिते चैवं फले तत्सिद्ध्यर्थं यागे प्रवृत्तिः पुरुषस्य सिध्यति । अन्यथाऽनर्थकः स्याद् विधिरिति ॥

एतदभिप्रेत्याह विश्वजिदिति । 'विश्वजिद् यागः' 'सफलः' कल्पितफलत्वात् न फलशून्य इति भावः ॥

पञ्चमषष्ठसप्तमाधिकरणानि समष्ट्या 'विश्वजिन्न्याय' इति नाम्ना प्रसिद्धानि ॥ ५ ॥

(६) ४।३।१३-१४ एकमेव फलं ततः ।

( १ ) विश्वजित्फलविचार एवानुवर्तते ।

( २ ) विश्वजिद्याग एवात्र विषयः ।

( ३ ) तत्र सन्देहः विश्वजिद्यागे किमेकमेव फलं कल्पनीयमुत सर्वाणि फलानीति ।

( ४ ) पूर्वपक्षः—एतदेवास्य फलमेकमिति नियामकस्याभावात् पशुपुत्रादिकं सर्वमेवास्य फलं कल्पनीयमिति ।

( ५ ) सिद्धान्तः—एकस्यैव फलस्य कल्पनेन पुरुषप्रवृत्तेः सिद्धत्वात् फलान्तरकल्पना न न्याय्या । अत एकफलक एव विश्वजिद्याग इति ।

एतदेवाभिप्रेत्याह—एकमेवेति । 'ततः' विश्वजिद्यागात् 'एकमेव फलं'—सिध्यति इति शेषः ॥ ६ ॥

(७) ४।३।१५-१६ स स्वर्गस्त्वविशिष्टत्वात्

( १ ) विश्वजिद्विचार एवानुवर्तते ।

( २ ) विश्वजिद्वाक्यमेवात्र विषयः ।

( ३ ) सन्देहश्चात्र—किं यत् किञ्चिदेकं फलं कल्पनीयमुत नियमेनैकमेव किञ्चिदिति ।

( ४ ) पूर्वपक्षः—नियामकाभावाद् यत्किञ्चित् कल्पनीयमिति ।

( ५ ) सिद्धान्तः—स्वर्ग एवात्र फलत्वेन कल्पनीयः । पश्वादिफलवत् स्वर्गो दुःखसम्मिश्रितो न भवति–सुखमयश्चायं पुरुषमात्रस्येष्टतमो भवति । अतः कल्पयितव्ये एकस्मिन् फले स्वर्ग एव कल्पनीय इति ।

एतदेवाभिप्रेत्याह—स स्वर्ग इति । 'स्वर्गः' एव 'स' विश्वजित्फलत्वेन कल्प्यः । कुत इत्याह अविशिष्टत्वादिति । सर्वैः पुरुषैरीप्सिततमत्वादित्यर्थः ॥ ७ ॥

(८) ४।३।१७-१९ रात्रिसत्रे फलं स्तुतौ ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) द्वादशाहादूर्ध्वं भावि त्रयोदशरात्रचतुर्दशरात्रादयः सत्रविशेषाः । एत एव समुदायरूपेण रात्रिसत्रनाम्ना प्रसिद्धाः ।

( ३ ) तत्र सन्देहः—अत्रापि फलस्यानुक्तत्वात् किं स्वर्ग एव फलं कल्प्यमुतान्यः कल्पः कोऽप्यस्तीति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन स्वर्ग एवात्रापि फलं कल्पनीयमिति ।

( ५ ) सिद्धान्तः—सत्रकाण्डं एवार्थवादवाक्यमुपलभ्यते 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति' इति । एवं च रात्रिसत्रविधेः

स्तावकेऽर्थवादे प्रतिष्ठा श्रुतोपलभ्यते । सा चान्यत्राश्रुतस्वर्गफलापेक्षया प्रत्यासन्नतरा । तस्मात् अर्थवादवाक्योक्ता प्रतिष्ठैव रात्रिसत्रे फलत्वेन कल्पनीयेति ।

एतदेवाभिप्रेत्याह—रात्रिसत्र इति । 'रात्रिसत्रे' यत् 'फलं' कल्पनीयं तत् 'स्तुतौ' अर्थवादवाक्ये एवोक्तम्—अतो नान्यतः कल्पनीयमिति भावः ॥ ८ ॥

## (९) ४।३।२०-२४ तत्तच्छ्रुतं फलं काम्ये

(१) यः सफलः सपुरुषार्थ इत्यतो यागफलविचार एवानुवर्तते विश्वजिन्न्यायापवादरूपः ।

पूर्वस्मिन्नधिकरणेऽर्थवादवाक्ये फलस्योक्तिरत्र तु विधिवाक्य एव तस्योक्तिरिति विशेषः ।

(२) 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्येवंरूपाणि काम्यानि कर्माण्याम्नातानि ।

(३) तत्र सन्देहः—एवंविधस्य कर्मणः किं यथोक्तमेव फलमुत तत् स्वर्गश्चेत्युभयमिति ।

(४) पूर्वपक्षः—उभयमपि फलमभ्युपेयम् । एकस्य विधावेव प्रतिपदमुक्तत्वात् स्वर्गस्य च सर्वैरेवाविशिष्टमभीप्सितत्वादिति ।

(५) सिद्धान्तः—साक्षाच्छ्रुतेनैव फलेन निराकाङ्क्षे विधिवाक्ये विश्वजिन्न्यायेन फलान्तरकल्पनमनावश्यकम् । तस्मात् यथाश्रुतमेव फलमिति ।

एतदेवाभिप्रेत्याह तत्तदिति । 'काम्ये' फलविशेषमुद्दिश्य विहिते कर्मणि 'तत् तत्' प्रातिस्विकरूपेण 'श्रुतं' विधिवाक्योपात्तम् एव 'फलम्' ग्राह्यम्, नान्यत् कल्पनीयमिति शेषः ॥ ९ ॥

## (१०) ४।३।२५-२६ सर्वकामविधिर्भवेत् ।

(१) फलविचारोऽनुवर्तते ।

(२) इदमाम्नायते-'एकस्मै वा अन्या इष्टयः कामायाह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ' इति-तथा 'एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः' इति च ॥

(३) तत्र सन्देहः-'सर्वेभ्यो दर्शपूर्णमासौ, सर्वेभ्यो ज्योतिष्टोमः' इत्युभयत्र सर्वपदेन किं दर्शपूर्णमासज्योतिष्टोमयोरङ्गोपाङ्गसाध्यानि फलान्यनूद्यन्ते उत सर्वाण्येव फलानि दर्शपूर्णमासज्योतिष्टोमयोः साध्यत्वेन विधीयन्ते-इति ।

(४) पूर्वपक्षः—सर्वेभ्य इत्यनुवाद एवाङ्गोपाङ्गसाध्यफलानाम् । तद्यथा सामिधेन्यनुवचनं दर्शपूर्णमासाङ्गम्—तस्य फलं प्रतिष्ठा ब्रह्मवर्चसं च । एवमन्यान्यपि । 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यत्र विधिर्न श्रूयते न च भावना, तस्मादयन्न विधिः सर्वकामानामिति ।

(५) सिद्धान्तः—दर्शपूर्णमासाभ्यां यजेत इत्युत्पत्तिवाक्योपात्त एव विधिर्भावना चात्राप्यन्वेति । 'सर्वेभ्य' इत्यत्र च तादर्थ्यवाचिन्या चतुर्थ्या फलसंयोगो बोध्यते । तस्मादेष फलविधिरेव नानुवादमात्रमिति ।

एतदेवाभिप्रेत्याह—सर्वेति । 'सर्वकामविधिः' सर्वेषां 'कामानां' फलानां विधिः एव—'भवेत्' 'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोम' इति वाक्यद्वयमिति शेषः—न त्वनुवादमात्रमिति भावः ॥ १० ॥
इदमधिकरणमग्रिमेण सह 'दर्शपूर्णमासन्याय' इति नाम्ना प्रसिद्धम् ।

### (११) ४।३।२७-२८ सर्वे कामाः सकृन्न स्युः

(१) पूर्वाधिकरणशेषभूतो विचारः । अयमेव योगसिद्धन्याय इति प्रसिद्धः ।

(२) दर्शपूर्णमासयोः सर्वकामैः सम्बन्धो विहित इति सिद्धान्तितम् ।

(३) तत्र सन्देहः—किमेकेनैव दर्शपूर्णमासप्रयोगेण युगपदेव सर्वाणि फलानि सिध्यन्ति उत प्रतिफलं पृथक् प्रयोगः ।

(४) पूर्वपक्षः—दर्शपूर्णमासाख्यं कर्म सर्वाणि फलानि साधयतीति कार्यकारणभावे सिद्धे सकृदनुष्ठानेनैव सर्वाणि निष्पद्येरन् । तस्मान्नैव प्रयोजनं प्रतिफलमावर्तनस्येति ।

(५) सिद्धान्तः—'सर्वेभ्यो दर्शपूर्णमासौ' इत्यनेन कार्यकारणभाव उच्यते—न तु फलानां साहित्यम् । तस्मादेकैकस्य फलस्य साधनत्वेनैव दर्शपूर्णमासाख्यं कर्म विधीयते । साहित्ये विवक्षिते सर्वाण्येकीकृत्यैकमेव फलमुक्तं स्यात् । भवत्येव फलभेदे प्रयोगभेदः । तस्मात् प्रतिफलं पृथक्प्रयोगो दर्शपूर्णमासयोर्ज्योतिष्टोमस्य चेति ।

एतदेवाभिप्रेत्याह—सर्व इति । 'सर्वे' सर्वेभ्य इति पदेनोक्ताः—'कामाः' फलानि—'सकृत्' कर्मणः सकृदनुष्ठानेन—'न स्युः' न निष्पद्येरन्—अपि तु प्रतिफलं पृथगेव प्रयोगोऽपेक्षित इति भावः ॥ ११ ॥

### (१२) ४।३।२७-२८ अत्र वाऽमुत्र वा फलम् ।

(१) फलविषयकमेव विचारान्तरं पूर्वोक्ताभ्यामेव सूत्राभ्यां वर्णकान्तरेण क्रियते ।

( २ ) काम्यानि कर्माणि विहितानि—'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः'—'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः'—'चित्रया यजेत पशुकामः'—इत्यादीनि ।

( ३ ) तत्र सन्देहः—एतानि फलानि किमिहैव लोके प्राप्यन्ते—उत लोकान्तरे इति ।

( ४ ) पूर्वपक्षः—यथा स्वर्गस्य लोकान्तरीयकत्वं नियतम् , एवमेव पश्वादिफलस्यापीति ।

( ५ ) सिद्धान्तः—स्वर्गस्यास्मिन् लोके प्राप्तुमशक्यत्वात्तस्यामुष्मिकत्वमगत्या कल्प्यते । पश्वादिफलन्त्वस्मिन् लोकेऽपि प्राप्तुं शक्यते । अतस्तेषामामुष्मिकत्वकल्पनायां प्रमाणं नास्ति । तस्मादसति प्रतिबन्धे फलमैहिकम् , सति तु प्रतिबन्धे आमुष्मिकमिति ।

एतदेवाभिप्रेत्याह—अत्रेति । 'फलम्' स्वर्गपश्वादि—'अत्र' अस्मिन् लोके-'वा' 'अमुत्र' लोकान्तरे—स्यादिति शेषः । सति सम्भवे ऐहिकमेव फलम्—असम्भवे एव केवलं तत्पारलौकिकमित्याशयः ॥ १२ ॥

## (१३) ४।३।२९-३१ सौत्रामणी चितेरङ्गम्

( १ ) क्रत्वर्थपुरुषार्थविवेके यत् प्रधानं तत् पुरुषार्थं यदङ्गन्तत् क्रत्वर्थमिति सङ्गत्या अङ्गप्रधानविचारविशेषः प्रस्तूयते ।

( २ ) 'अग्निं चित्वा सौत्रामण्या यजेत्' इति चयनप्रकरणे श्रूयते ।

( ३ ) तत्र सन्देहः—इदं वाक्यं किं सौत्रामण्याश्चयनाङ्गत्वं बोधयत्युत तस्य चयनोत्तरकालतामात्रमिति ।

( ४ ) पूर्वपक्षः—चित्वेत्यत्र क्त्वाप्रत्ययश्चयनस्य पूर्वकालीनतां बोधयति । तस्माद् वाक्यमिदं सौत्रामण्याश्चयनोत्तरकालतां ब्रूते—इति ।

( ५ ) सिद्धान्तः—क्रियाद्वयस्यैककर्तृकत्वमेव सूचयितुं क्त्वाप्रत्ययः प्रयुज्यते । प्रकरणेन चाङ्गत्वमेव बोध्यते । तस्माद् वाक्यमिदं सौत्रामण्याश्चयनाङ्गत्वमेव ज्ञापयतीति ।

एतदेवाभिप्रेत्याह—सौत्रामणीति । 'सौत्रामणी' तन्नामकं कर्म—'चितेः' चयनाख्यस्य कर्मणः—'अङ्गम्'—न तु तयोः पौर्वापर्यं वाक्येन बोध्यत इति भावः ॥ १३ ॥

## (१४) ४।३।३२-३५ पौर्णमासस्य वैमृधः ।

( १ ) क्रत्वर्थतायामेव विचारविशेषोऽनुवर्तते ।

( २ ) दर्शपूर्णमासप्रकरणे श्रूयते—'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति ।

( ३ ) तत्र सन्देहः—अन्नोक्तो वैमृधः किं दर्शस्य पौर्णमासस्य चे-त्युभयोरप्यङ्गमुत पौर्णमासीमात्रस्येति ।

( ४ ) पूर्वपक्षः—प्रकरणबलात् प्रयाजादिवदुभयोरपि दर्शपौर्णमासयोरङ्गं वैमृध इति ।

( ५ ) सिद्धान्तः—यद्यपि प्रकरणेनोभयाङ्गता वैमृधस्य तथापि सवाक्येनैकस्यैव पौर्णमासीमात्रस्याङ्गम् । वाक्यं च प्रकरणाद्बलवत् । तस्मात् उत्पत्तिवाक्यबलात् पौर्णमासीमात्रस्याङ्गं वैमृध इति ।

एतदेवाभिप्रेत्याह—पौर्णमासस्येति । 'वैमृधः' तन्नामकेष्टिः-'पौर्णमासस्य' तन्मात्रस्य-अङ्गमिति शेषः-न तु दर्शस्यापीति भावः ॥ १४ ॥

## (१५) ४।३।२६ परिध्युक्तिः स्वकालार्था

( १ ) क्रत्वर्थतायां विचारविशेषः—पूर्वाधिकरणयोरपवादः ।

( २ ) 'प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति श्रूयते ।

( ३ ) तत्र सन्देहः—वाक्यमिदं किमङ्गत्वं बोधयत्युत कालमिति ।

( ४ ) पूर्वपक्षः—परिधिहारियोजनयोरङ्गाङ्गिभावोऽत्र साक्षाच्छब्दाल्लभ्यते । कालविधिस्तु साक्षाच्छब्दान्न बोध्यते—केवलं लक्षणया बोध्यते । तस्मादङ्गमेव हारियोजनं परिधेः पूर्वाधिकरणद्वयन्यायेनेति ।

( ५ ) सिद्धान्तः—परिधयः पशुयागाङ्गमित्यन्यतोऽवगतम्—हारियोजनं स्वतन्त्रमन्यदेव प्रधानं कर्म । तथा चानयोर्न कश्चित् परस्परोपकारः सम्भवति । आनन्तर्यं त्वनयोर्नान्यतः कुतश्चिदप्यवगतम् । तस्मादानन्तर्यबोधनमेवास्य वाक्यस्यार्थः । तस्मात् कालविधिरेवायमिति ।

एतदेवाभिप्रेत्याह—परिधीति । 'परिध्युक्तिः' परिधिं प्रहृत्येति वचनम्—'स्वकालार्था' 'स्वस्य' कर्मणः 'कालः' अनुष्ठानकालबोधनम् 'अर्थः' प्रयोजनं यस्याः सा । परिधिवचनं कालविधायकत्वान्नाङ्गत्वबोधकमिति भावः ॥ १५ ॥

## (१६) ४।३।२७ कृतेष्टिः सोमकालवान् ।

( १ ) त्रयोदशस्याधिकरणस्यापवादान्तरम् ।

( २ ) 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति श्रूयते ।

( ३ ) तत्र सन्देहः—किमेतदङ्गत्वस्य विधायकमुत कालस्येति ।

( ४ ) पूर्वपक्षः—अङ्गत्वमेव साक्षाच्छ्रुत्या बोध्यते इति ।

( ५ ) सिद्धान्तः—स्वतन्त्रफलवान् सोमयागः । अतो न तस्याङ्गत्वं सम्भवति । वाक्यं चेदं कालप्रधानम्, न यागविधानपरम्, यागविधानस्यान्यत एव प्राप्तत्वात् । तस्मात् कालविधिरेवायम् । सोम-

स्य च दर्शपूर्णमासोत्तरकालतायां लिङ्गमपि वर्तते-'एष वै देवरथो यद्दर्शपूर्णमासौ यद्दर्शपूर्णमासाविष्ट्वा सोमेन यजेत' । अस्यार्थः-यथा प्रदर्शिते मार्गे रथेन यातुं सुखं भवति एवं दर्शपूर्णमासाविष्ट्वा सोमेन यष्टुं सुखं भवतीति ।

एतदेवाभिप्रेत्याह-कृतेष्टिरिति । 'कृतेष्टिः' कृता अनुष्ठिता इष्टिः दर्शपूर्णमासयागो येन स एव पुरुषः-'सोमकालवान्' भवति । तादृशस्यैव पुरुषस्य सोमयागमनुष्ठातुं 'कालः' अवसरो भवतीत्यर्थः ॥ १६ ॥

( १७ ) ४।३।३८-३९ पुत्रे फलं स्याज्जातेष्टेः

( १ ) क्रत्वर्थताविचारविशेषोऽनुवर्तते ।

( २ ) काम्येष्टिकाण्डे श्रूयते-'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति ।

( ३ ) तत्र सन्देहः-एतदिष्टिफलं किम्पुत्रगतमुत पितृगतमिति ।

( ४ ) पूर्वपक्षः—पितुरेवानुष्ठातुः फलम् तस्य प्रबुद्धत्वात् पुत्रस्य च मुग्धत्वादिति ।

( ५ ) सिद्धान्तः—उक्तविधिवाक्यानन्तरमेव श्रूयते-'यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति । अनेन च वाक्येन पूतत्वादिफलस्य पुत्रगतत्वं स्पष्टमुच्यते । स्वतनयगतपूतत्वादेश्च पितुरीप्सितत्वात्तस्य तत्र कर्मणि प्रवृत्तिः । तस्मात् पुत्रगतमेव फलमिति ।

एतदधिकरणमग्रिमेणाधिकरणद्वयेन सहजातेष्टिन्यायनाम्ना प्रसिद्धम् ।

एतदेवाभिप्रेत्याह पुत्र इति । 'जातेष्टेः' पुत्रे जाते या वैश्वानरी इष्टिः क्रियते तस्याः-'फलं' पूतत्वादिकम्-'पुत्रे' पुत्रगाम्येव-भवतीति शेषः ॥ १७ ॥

( १८ ) ४।३।३९ नैषा प्राग् जातकर्मणः ।

( १ )—जातेष्टिविषये विचारान्तरम् ।

( २ ) जातेष्टिवाक्यमेवात्रापि विषयः ।

( ३ ) तत्र सन्देहः—इयं जातेष्टिः किं पुत्रजन्मानन्तरमव्यवहितमेव कर्त्तव्या उत जातकर्मसंस्कारानन्तरमिति ।

( ४ ) पूर्वपक्षः—पुत्रे जाते इष्टिं निर्वपेदिति वाक्येऽव्यवहितोत्तरकालतैवोच्यते । तस्मात् पुत्रजन्मसमानन्तरं जातकर्मादेः प्रागेव जातेष्टिः कर्तव्येति ।

( ५ ) सिद्धान्तः—जातस्य बालस्य स्तन्यपानं जातकर्मानन्तरं विहितम । एवं यदि जन्मानन्तरं जातेष्टिर्निरूप्येत ततो जातकर्मानुष्ठानं

ततः स्तन्यपानं तर्हि स्तन्यपाने विलम्बाद् बालो विपद्येत । तथाच सति कस्य स्यात् पूतत्वादिफलम् । तस्मात् जन्मानन्तरं जातकर्म तदनन्तरमेव जातेष्टिरिति ॥

एतदेवाभिप्रेत्याह नैषेति । 'एषा' जातेष्टिः-'जातकर्मणः' जातकर्म-संस्कारानुष्ठानात्-'प्राक्''न'-कर्तव्या-अपि तु तदनन्तरमेव कर्तव्ये-त्यर्थः ॥ १८ ॥

## ( १९ ) ४।३।३९ शुद्धे पर्वणि सा कार्या

( १ ) जातेष्टेरेवानुष्ठानकालस्य विचारविशेषः ।

( २ ) प्रागुक्तमेवात्र वाक्यम् ।

( ३ ) तत्र सन्देहः-किं जातकर्मसमनन्तरं सद्य एव जातेष्टिः कर्तव्योताशौचदिनेभ्यः ऊर्ध्वमिति ।

( ४ ) पूर्वपक्षः-जन्मानन्तरं जातकर्म तदनन्तरमेव जातेष्टिरिति सिद्धान्तितम् । इतोऽधिकविलम्बकरणे किमपि कारणं नास्ति । तस्माद्व्यतीतेऽप्याशौचे जातकर्मानन्तरमेव जातेष्टिः कर्तव्येति ।

( ५ ) सिद्धान्तः—यथाविहितमनुष्ठितमपि कर्माशुचिना पित्रा कृत-मङ्गविकलं विफलं च भवेत् । जातकर्मानुष्ठानमात्रे तु तात्कालिकी शुद्धिः शास्त्रेण दर्शिता । तस्मादशुद्धिवारणायाशौचापगमोऽपेक्षणीयः । एवं चाशौचावसान एव जातेष्टिः कर्तव्येति ।

एतदेवाभिप्रेत्याह-शुद्ध इति । 'सा' जातेष्टिः-'शुद्धे' आशौचादि-रहिते-'पर्वणि' काले-'कार्या'-न त्वाशौचाभ्यन्तर एवेत्याशयः ॥ १९ ॥

## ( २० ) ४।३।४०-४१ काले सौत्रामणी स्वके

( १ ) अनुष्ठानकालविषय एव विचारः-त्रयोदशाधिकरणविचा-रशेषः ।

( २ ) 'अग्निं चित्वा सौत्रामण्या यजेत' इति श्रूयते । तत्र च सौत्रा-मण्याश्चयनाङ्गत्वमुच्यत इति स्थितं त्रयोदशेऽधिकरणे ।

( ३ ) तत्र सन्देहः-किं चयनेन सहैव सौत्रामणी कर्तव्योत स्वस-म्बन्धेन विहिते काले इति ।

( ४ ) पूर्वपक्षः-सौत्रामणी चयनस्य अङ्गम् । अङ्गं च अङ्गिना सहैव प्रयोक्तव्यम् । तस्मात् चयनेन सहैव सौत्रामण्यनुष्ठेयेति ।

( ५ ) सिद्धान्तः-सौत्रामणी इष्टिप्रकृतिका । तस्मात् तस्याः पर्व-कालश्चोदकप्राप्तः-'प्रकृतिवद्विकृतिः कर्तव्ये'ति न्यायेन । 'अग्निं चित्वे'त्यत्र च क्त्वाप्रत्ययेन चयनसौत्रामण्योः पूर्वोत्तरकालतोच्यते । एवं सति

यदि तयोः सहप्रयोगः स्यात् तर्हि पूर्वोत्तरकालतेयं बाध्येत। तथाच पौर्वापर्यधिया सौत्रामण्याः पृथक्प्रयोगेऽवश्यम्भाविनि तस्याश्चोदकप्राप्तकालपरित्यागो नोचितः। तस्मात् स्वविहितकाल एव सौत्रामण्यनुष्ठानमिति।

एतदेवाभिप्रेत्याह—काल इति। 'सौत्रामणी' इति-'स्वके' स्वीये चोदकप्राप्ते-'काले'-पर्वणि-अनुष्ठेयेति शेषः-न त्वङ्गिना चयनेन सहैवेत्याशयः॥ २०॥

पादेऽस्मिन् विंशतिर्न्याया
भाष्यकारेण वर्णिताः।

स्पष्टम्।

इति चतुर्थस्य तृतीयः।

# अथ चतुर्थस्य चतुर्थः।

( राजसूययज्ञस्याङ्गविचारात्मकः )

## ( १ ) ४।४।१-२ राजमखस्य यजीतरदङ्गम्

( १ ) क्रत्वर्थताविचारप्रसङ्गेनाङ्गत्वविशेषविचारः प्रस्तूयते।

( २ ) राजसूयप्रकरणे 'राजसूयेन स्वाराज्यकामो यजेत' इति राजसूयमुक्त्वा तत्सन्निधाने यागरूपा अनुमत्यादय उक्ता अयागरूपा द्यूतादयोऽपि।

( ३ ) तत्र सन्देहः—किं एतानि कर्माणि यागरूपाण्ययागरूपाणि च सर्वाण्येव मुख्यान्येवोत कानिचिदेव मुख्यानि कानिचिदङ्गानीति।

( ४ ) पूर्वपक्षः—प्रकरणपाठस्य सर्वत्र समानत्वात् सर्वाण्येव मुख्यानीति।

( ५ ) सिद्धान्तः—'स्वाराज्यकामो राजसूयेन यजेत' इत्यत्र स्वाराज्यरूपफलस्य साधनत्वेन याग एव श्रुतः। अतो यागरूपाणामनुमत्यादीनामेव फलसाधकतया मुख्यत्वमितरेषां त्वयागरूपाणामफलानां द्यूतादीनामङ्गत्वमेवेति।

एतदेवाभिप्रेत्याह राजमखस्येति। 'राजमखस्य' राजसूययागस्य—'यजीतरत्' यागरूपेभ्यः कर्मभ्योऽन्यत् यदुक्तं द्यूतादिकं तत्—'अङ्गम्' एवेति॥ १॥

## ( २ ) ४।४।३-४ देवनमस्य गुणः सकलस्य ।

( १ ) पूर्वविचारशेषो विचारः ।

( २ ) द्यूतादिकं राजसूयस्याङ्गमिति स्थितम् ।

( ३ ) तत्र सन्देहः—राजसूयमध्येऽभिषेचनीयाख्यः सोमयागो यो विहितः—किं तन्मात्रस्याङ्गं द्यूतादि—उत सकलस्य राजसूयस्येति ।

( ४ ) पूर्वपक्षः—अभिषेचनीयानन्तरं द्यूतादेः पाठात् तस्यैवाङ्गमिदमिति ।

( ५ ) सिद्धान्तः—अवान्तरप्रकरणान्महाप्रकरणं बलवत्तरम् । महाप्रकरणं चात्र राजसूयस्य । राजसूयशब्दश्चानुमत्यादिसकलयागजातमभिधत्ते । तस्मात् कृत्स्नस्यच राजसूयस्याङ्गं द्यूतादि—इति ।

एतदेवाभिप्रेत्याह देवनमिति । 'देवनम्' द्यूतम्—'सकलस्य' कृत्स्नस्य—'अस्य' राजसूयस्य—'अङ्गम्'—न त्वभिषेचनीयमात्रस्यैकस्येत्याशयः ॥ २ ॥

## ( ३ ) ४।४।५-६ नोपसदङ्गमगादि हि सौम्यम्

( १ ) राजसूयगतमेव विचारान्तरम् ।

( २ ) राजसूये संसृच्छब्दवाच्यानि आग्नेयाष्टाकपालादीनि दश हवींष्याम्नातानि । तेष्वष्टमनवमदशमानि सौम्य—त्वाष्ट्र—वैष्णवानि । तद्विषये श्रूयते—'पुरस्तादुपसदां सौम्येन चरन्ति—अन्तरा त्वाष्ट्रेण—उपरिष्टाद् वैष्णवेन' इति ।

( ३ ) तत्र सन्देहः—सौम्यादयः किमुपसदामङ्गान्युत केवलमुपसत्काले ऽनुष्ठेयानीति ।

( ४ ) पूर्वपक्षः—योऽयं राजसूये सोमयागस्तस्मिन्नतिदिष्टानामुपसदामादिमध्यावसानेषु सौम्यादीनां त्रयाणामनुष्ठानमनेन वाक्येन चोद्यते । ततो वाक्यप्रमाणेन सौम्यादीनि उपसदामङ्गानीति ।

( ५ ) सिद्धान्तः—'उपसदा'मित्यत्र षष्ठ्याः 'पुरस्तात्' इति कालवाचिना शब्देनान्वयः । अतः सौम्यादीनां कालविशेषबोधनपरमिदं वाक्यं न त्वङ्गत्वाभिधानपरम् । तस्मात् सौम्यादिकं न कस्याप्यङ्गमपि त्वनुमत्यादिवत् प्रधानमेवेति ।

एतदेवाभिप्रेत्याह—नोपसदङ्गमिति । 'सौम्यम्'—'उपसदङ्गम्' उपसदामङ्गत्वेन 'न' 'अगादि' उक्तम् इति सम्बन्धः ॥ ३ ॥

## ( ४ ) ४।४.७ साङ्ग्रहणीगुण आमनहोमः ।

( १ ) क्रत्वर्थताप्रसङ्गेनाङ्गत्वविचारोऽनुवर्तते ।

(२) काम्येष्टिकाण्डे—'वैश्वदेवीं साङ्ग्रहणीं निर्वपेद् ग्रामकामः'
इति साङ्ग्रहण्येष्टिः श्रूयते । तत्रैव 'आमनस्यामनस्य देवा इति तिस्र आ-
हुतीर्जुहोति' इत्यामनहोम आम्नायते ।

(३) तत्र सन्देहः—किमामनहोमः साङ्ग्रहण्या सह तुल्यप्रधान-
भाव उत तस्या अङ्गमिति ।

(४) पूर्वपक्षः—समप्रधानभाव एवामनहोमः साङ्ग्रहण्या । य एव
साङ्ग्रहण्याः प्रधानभावे हेतुः स एवामनहोमस्यापि अत्रापि ग्रामावा-
प्तिफलस्यानुषङ्गादिति ।

(५) सिद्धान्तः-'साङ्ग्रहणीं निर्वपेद् ग्रामकाम' इति वाक्यं ग्रामावा-
प्तिफलस्य साङ्ग्रहणीमात्रेण सम्बन्धं वक्ति, नामनहोमेन । तस्मात् फल-
वत्याः साङ्ग्रहण्या सन्निधावाम्नातोऽफल आमनहोमस्तस्या अङ्गमिति ।

एतदेवाभिप्रेत्याह साङ्ग्रहणीति । 'आमनहोमः' 'साङ्ग्रहण्या' इष्टेः
'गुणः' अङ्गम्—न तु तया सह समप्रधानभाव इति भावः ॥ ४ ॥

## (५) ४।४।८-११ नित्यमियेष दधिग्रहहोमम्

(१) कर्मणामङ्गप्रधानभावप्रसङ्गेन नित्यनैमित्तिकविवेकः प्रस्तूयते ।

(२) ज्योतिष्टोमे श्रूयते-'यां वै काञ्चिद्ध्वर्युर्यजमानश्च देवतामन्त-
रीतः तस्या आवृश्च्येत यत् प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवै-
नाम्' इति ।

(३) तत्र सन्देहः—योऽयं दधिग्रहहोमोऽत्र विहितः स किन्नि-
त्य उत नैमित्तिक इति ।

(४) पूर्वपक्षः—यदि देवताया अन्तरायस्तदा दधिग्रहहोम इति
वाक्यस्य स्पष्टोऽर्थः । एवं च देवतान्तरायरूपे निमित्ते सत्येव तस्य
प्राप्तिः । तथा च नैमित्तिकोऽयं होम इति । अथवा नित्यो नैमित्तिकश्चो-
भयात्मकोऽयं होमः । उक्तहेतोर्नैमित्तिकः । अथवा 'ज्येष्ठो वा एष
ग्रहाणाम्' इति ज्यैष्ठ्योक्तेर्नित्यत्वं च । नित्यत्व एव ज्येष्ठत्वोक्तिरूपा
प्रशस्तिः सङ्गच्छते न नैमित्तिकत्व इति उभयात्मक एव दधिग्रह-
होम इति ।

(५) सिद्धान्तः—देवतान्तरायस्य ग्रहहोमनिमित्तत्वं वाक्येन नै-
वोच्यते । वाक्यार्थस्त्वेवं—"यदि देवताया अन्तरायस्तदा कर्मणि
'आवृक्तिः' हानिर्भवति—किन्त्वस्या आवृक्तेः शान्तिर्भवति यदा दधि-
ग्रहोमः क्रियते" इति—न तु 'देवतान्तराये सत्येव होमो नान्यथेति' ।
तस्मात् नैमित्तिकत्वे प्रमाणाभावात् ज्यैष्ठ्योक्तिरूपप्रशस्तिबलान्नित्य-
तैव स्वीकार्या—इति ।

एतदेवाभिप्रेत्याह—नित्यमिति । 'दधिग्रहहोमम्' 'नित्यम्' 'इयेष' इष्टवान्-सूत्रकार इति शेषः ॥ ५ ॥

(६) ४।४।१२ १३ वत्सरमुख्यमाविभ्रत इष्टिः ।

( १ ) नित्यनैमित्तिकविवेकोऽनुवर्तते ।

( २ ) अग्निचयने श्रूयते—'यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते—यथा सामिगर्भो विपद्यते तादृगेव तदार्त्तिमार्छेत्-वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेदिति' ।

( ३ ) तत्र सन्देहः--अत्रोक्तो वैश्वानरयागः किन्नित्य उत नैमित्तिक इति ।

( ४ ) पूर्वपक्षः—अस्य वाक्यस्यैवमर्थः । 'उखा' पिठरः—तामुखां सम्पाद्य तस्यामग्निं निधाय स्वकण्ठे बध्नीयात्—तं चोख्यमग्निं संवत्सरं भृत्वा पश्चादिष्टकाभिरग्निश्चेतव्य इति विधौ—यदि कोऽपि सम्वत्सरं उख्यमग्निमभृत्वैव चिनुते तर्हि अपूर्णगर्भपात इव सोऽग्निर्नश्येत्—अस्य च विघ्नस्य शान्तिस्तदा भवति यदा वैश्वानरेष्टिरुप्यते' इति । एवं च सति पूर्वाधिकरणन्यायेन नित्यतैव वैश्वानरेष्टेरिति ।

( ५ ) सिद्धान्तः—'यः पुमान् उख्यमग्निमभृत्वा चिनुयात् स वैश्वानरेष्टिं निर्वपेत्' इत्येवार्थो वाक्यस्य यच्छब्दबलाल्लभ्यते । तथाच सति उख्याग्निभरणाकरणनिमित्तक एवायं होमः । ततोऽस्या इष्टेनैमित्तिकत्वमेवेति ।

एतदेवाभिप्रेत्याह--वत्सरमिति । 'उख्यम्' उखायां निहितमग्निम्--'वत्सरम्' एकवत्सरपर्यन्तम्—'अविभ्रतः' भरणमकुर्वतः एव-'इष्टिः' वैश्वानरेष्टिः । उक्ताग्नेरभरणे सत्येवेष्टिः कार्या नान्यथा--तथाच नैमित्तिकत्वमेवास्या इष्टेरित्याशयः ॥ ६ ॥

(७) ४।४।१४-१८ षड्चितिकोऽग्निरयं न हि नित्यः

( १ ) नित्यनैमित्तिकविवेक एव वर्तते ।

( २ ) अग्निचयने श्रूयते—'संवत्सरो वैनं प्रतिष्ठायै नुदते । योग्निं चित्वा न प्रतितिष्ठति—पञ्च पूर्वाश्चितयो भवन्ति—अथ षष्ठीं चितिं चिनुते' इति ।

( ३ ) अत्र सन्देहः—येयं षष्ठी चितिः सा किं नित्योत नैमित्तिकी-तथाच किं पञ्चचितिकाग्निवत् षट्चितिकोऽप्यग्निर्नित्य एवोत नैमित्तिक इति ।

( ४ ) पूर्वपक्षः—उक्तवाक्यानुसारेण—पञ्च चितयः पूर्वाः क्रियन्ते तदनन्तरं षष्ठी चितिः । पञ्चानाम्पूरणी च षष्ठी भवति । तस्मात् यथा पञ्च

चितयो नित्यास्तथैव प्रकृत्यपीति षट्चितोऽग्निर्नित्य एवेति ।

(५) सिद्धान्तः—वाक्यार्थो ह्येवम्—पूर्वाभिरेव पञ्चभिरग्निचयनं सम्पद्यत इत्यग्निं चित्वेत्यनेन स्पष्टम्—एवं च चयने पञ्चभिश्चितिभिः सम्पन्ने 'यो न प्रतितिष्ठति' स एव षष्ठीं चिनुयादिति । तथा च पञ्चचितिकोऽग्निर्नित्यः-तदनन्तरं यदा प्रतिष्ठाराहित्यनिमित्तकषष्ठीचितिकस्तु क्रियते तदा यः षट्चितिकोऽग्निः सम्पद्यते स नैमित्तिक एवेति ।

एतदेवाभिप्रेत्याह षट्चितिक इति । 'अयं षट्चितिकः' षष्ठचित्यनन्तरं सम्पन्नोऽग्निः—'न हि नित्यः' अपि तु नैमित्तिक एवेत्याशयः ॥ ७ ॥

## (८) ४।४।१९-२१ दर्शयजेर्न गुणः पितृयज्ञः ।

(१) अङ्गप्रधानविवेकोऽनुवर्तते ।

(२) इदमाम्नायते—'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति ।

(३) तत्र सन्देहः—अयं पिण्डपितृयज्ञः किममावास्यानामकयागस्याङ्गमुत प्रधानमेवेति ।

(४) पूर्वपक्षः—उक्तवाक्ये अमावास्याशब्दवाच्ये दर्शयागे विधीयमानत्वादयं पिण्डपितृयज्ञः तद्यागस्याङ्गमेवेति ।

(५) सिद्धान्तः—अमावास्याशब्दः कालमात्रवाची । दर्शयागे तु लाक्षणिक एवास्य प्रयोगः । वाक्यं चानारभ्याधीतम् । तस्मात् अमावास्याकाले पिण्डपितृयज्ञः कर्तव्य इत्येव वाक्यार्थः । न च दर्शयागाङ्गतायामस्य प्रमाणमुपलभ्यते । तस्मात् स्वयम्प्रधानभूतः पिण्डपितृयज्ञः पुरुषार्थ एवेति ॥

एतदेवाभिप्रेत्याह दर्शयजेरिति । 'पितृयज्ञः' 'दर्शयजेः' दर्शयागस्य—'गुणः' अङ्गम्—'न' भवति—अपि तु प्रधानः स्वयमेव पुरुषार्थ इत्याशयः ॥ ८ ॥

## (९) ४।४।२२-२४ यूपगुणो रशना त्रिवृदिष्टा

(१) क्रत्वर्थतानियामकाङ्गत्वविचारोऽनुवर्तते ।

(२) ज्योतिष्टोमे श्रूयते—'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति ।

(३) तत्र सन्देहः—अत्र या त्रिवृद्रशनोक्ता सा किं पशोरङ्गमुत यूपस्येति ।

(४) पूर्वपक्षः—अत्र वाक्ये यूपपरिव्याणं कालोपलक्षणार्थमनूद्य परिव्याणोत्तरकाले त्रिवृद्रशनोपलक्षितपशोरुपाकरणं विधीयते । एवं

च रशनायाः पशुनैवान्वयात् रशनया पशुबन्धनेन च तस्यैतस्ततोऽप-
क्रमणनिवारणरूपदृष्टार्थलाभाच्च पश्वर्थतैव रशनाया—इति।

(५) सिद्धान्तः--'त्रिवृता' इति तृतीयया 'यूपम्' इति द्वितीयया च त्रिवृद्रशनाया यूपस्य च अङ्गाङ्गिभावोऽवगम्यते। अव्यवहितान्वयश्च त्रिवृद्रशनाया यूपेनैव दृश्यते। तस्माद् यूपार्था रशना। कालस्तु 'आश्विनं ग्रहं गृहीत्वा' इत्यनेनैवोपलक्षितः-इति।

एतदभिप्रेत्याह यूपगुण इति। 'त्रिवृद् रशना'--'यूपस्य' एव 'गुणः' अङ्गम्--'इष्टा' प्रमाणसिद्धा--न तु पशोरित्याशयः॥ ९॥

## (१०) ४।४।२५-२८ यूपगुणं स्वरुमाह न षष्ठी।

(१) अङ्गत्वविचार एव वर्तते।

(२) अग्नीषोमीयपशौ श्रूयते--'यूपस्य स्वरुं करोति--स्वरुणा यूपमनक्ति' इति।

(३) तत्र सन्देहः-अत्रोक्तः स्वरुः किं यूपाङ्गमुत पश्वङ्गमिति।

(४) पूर्वपक्षः--'यूपस्य स्वरुं करोति' इत्यत्र स्वरोर्यूपसम्बन्धाभिधानात् यूपस्यैवाङ्गं स्वरुरिति।

(५) सिद्धान्तः--'स्वरुणा पशुम्' इत्यत्र तृतीयाद्वितीयाभ्यां स्वरुपश्वोरङ्गाङ्गिभावो बोध्यते। यूपस्येत्यत्र षष्ठी तु सम्बन्धसामान्यवाचिनी। तस्मात् पशोरेवाङ्गं स्वरुरिति।

एतदभिप्रेत्याह--यूपगुणमिति। 'षष्ठी' यूपस्य स्वरुमित्यत्र--'स्वरुं' 'यूपगुणं' 'न' 'आह' वक्ति--तस्मात् स्वरुणा पशुमनक्तीत्यनेन पश्वङ्गतैव स्वरोरित्याशयः॥ १०॥

## (११) ४।४।२९-३८ केचिदिहेष्टिगुणाः खलु यागाः

(१) क्रत्वर्थत्वनियामकाङ्गत्वविचारो वर्तते।

(२) दर्शपूर्णमासयोः श्रूयन्ते—आग्नेयाग्नीषोमीयोपांशुयाजैन्द्राग्नसान्नाय्ययागाः—तथा आघाराज्यभागौ प्रयाजानुयाजाः पत्नीसंयाजाः समिष्टयजुः स्विष्टकृत् इति।

(३) तत्र सन्देहः--किं सर्वे एते यागाः प्रधानभूता उत केचिद् गुणभूता इति।

(४) पूर्वपक्षः--प्रकरणपाठसाम्यात् यथा आग्नेयादयः प्रधानभूतास्तथैवाघारादयोऽपीति सर्वे प्रधानभूता इति।

(५) सिद्धान्तः--कालवाचिनौ दर्शपूर्णमासशब्दौ कालसंयोगेन विहितानामाग्नेयादिसाङ्काङ्क्ष्याणामेव नामधेयताम्प्रतिपद्येते। ततश्च

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति फलसम्बन्धस्तेषामेव भवति न त्वाघारादीनाम् । तस्मान्निष्फला आघारादयः फलवतामाग्नेयादीनां सन्निधौ पठितास्तेषामङ्गभूता इति न तेषाम्प्रधानतेति ।

एतदभिप्रेत्याह केचिदिति । 'केचित्' एव 'यागाः' आघारादयः 'इष्टीनाम्' आग्नेयादीनाम्--'गुणाः' अङ्गानि--न तु प्रधानानीत्यर्थः ११॥

## (१२) ४।४।३९-४१ सोमयजेरितरे गुणयागाः ।

( १ ) अङ्गत्वविचारोऽनुवर्तते ।

( २ ) 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र ज्योतिष्टोमे सोमयागाः दीक्षणीयादीष्टयश्चाम्नाताः ।

( ३ ) तत्र सन्देहः--किमत्र सर्वे यागाः प्रधानभूता उत सोमयागा एवेति ।

( ४ ) पूर्वपक्षः--सर्व एव तुल्यप्रधानभावाः । सर्वेषां तुल्यमेव फलवत्त्वम् । फलवत्त्वमेव च प्रधानतायां कारणमिति ।

( ५ ) सिद्धान्तः--ज्योतींषि स्तोमा यस्य यज्ञस्य सोऽयं ज्योतिष्टोम इति तन्नामव्युत्पत्तिः । स्तोमसम्बन्धश्च सोमयागानामेव न दीक्षणीयादीनाम् । तस्मात् 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र ज्योतिष्टोमनाम्ना विहितं फलं सोमयागैरेव सम्बध्यते--ततश्च सोमयागानामेव सफलत्वमितरेषां तु निष्फलत्वम् । तस्मादितरेषामङ्गत्वमेवेति ॥

एतदभिप्रेत्याह सोमयजेरिति । 'इतरे' सोमयागेभ्योऽन्ये दीक्षणीयादयः—'सोमयजेः' सोमयागानाम् 'गुणयागाः' अङ्गभूता यागा इति सम्बन्धः ॥ १२ ॥

द्वादश पाद इहाह सुनीती
वीक्ष्य मुनिः किल तत्त्वविदत्र ।

'सुनीती' न्यायज्ञः--'तत्त्ववित्' मीमांसाशास्त्रसिद्धान्तवेत्ता—'मुनिः' भाष्यकारः—'वीक्ष्य' परीक्ष्य—'इह' अस्मिन्—'पादे 'द्वादश' अधिकरणानीति शेषः—'आह' उक्तवान् इति सम्बन्धः ॥

इति चतुर्थस्य चतुर्थः ।

इति चतुर्थाध्यायः ।

# अथ पञ्चमोऽध्यायः ।

## प्रथम पादः ।

[ श्रुत्यादिभिः क्रमनियमनविचारात्मकः ]

(१) ५।१।१। श्रुत्या क्रमः स्याद्ध

(१) द्वितीयतृतीयचतुर्थाध्यायैरनुष्ठेयकर्मस्वरूपं निरूपितम्। इदानीम्पञ्चमेऽनुष्ठानस्य क्रमो निरूप्यते। श्रुत्या अर्थेन पाठेन प्रवृत्त्या काण्डेन च क्रमो नियम्यते। एतेषु पञ्चसु क्रमप्रमाणेषु यथापूर्वं बलीयस्त्वम्। श्रुत्या क्रमनियमोऽत्राधिकरणे विचार्यते।

(२) प्रत्येकं कर्मणि दर्शमासादौ बहवो भवन्त्यनुष्ठेयाः पदार्थाः।

(३) तत्र सन्देहः—एतेषामनुष्ठाने कोऽपि क्रमनियमोऽस्त्युत अनियमेन यथारुच्येव कर्तव्यानीति।

(४) पूर्वपक्षः—क्रमनियमे प्रमाणाभावात् अनियम एवेति।

(५) सिद्धान्तः—यथाऽनुष्ठेये वेदः प्रमाणम् तथाऽनुष्ठानक्रमेऽपि—इति।

एतदभिप्रेत्याह श्रुत्येति। 'क्रमः' अनुष्ठानक्रमः—'श्रुत्या' प्रमाणेन—'स्यात्'—नियमित इति शेषः। अतो नानियम इति भावः ॥ १ ॥

(२) ५।१।२ वर्णकान्तरेण ]

### दीक्षासु

क्रमः श्रुत्या विधीयते।

(१) सामान्यतः क्रमस्य प्रामाणिकत्वं निर्धार्य क्रमविशेषस्योदाहरणं चिन्त्यते। श्रुतिक्रमन्यायोऽथम्।

(२) सत्रे द्वादशाहे श्रूयते—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारम्' इति।

(३) तत्र सन्देहः—अत्र वाक्ये किं गृहपत्यादीनां दीक्षाकर्ममात्रं विधीयते उत तेषां दीक्षायाः क्रमोऽपीति।

(४) पूर्वपक्षः—गृहपत्यादिदीक्षामात्रं विधीयते—'दीक्षयेत्' इति श्रुत्या तस्यैव विधेयत्वावगमात्—इति।

(५) सिद्धान्तः—सत्र 'ये ऋत्विजस्ते यजमाना' इत्युक्तम्। तथाच येन विधिवाक्येन यजमानस्य दीक्षा विहिता तेनैवर्त्विजामपि सा

प्राप्तैव। अतो दीक्षामात्रस्य वाक्यान्तरेण विधानन्न सम्भवति। तस्मात् 'दीक्षयेत्' इत्यनेन दीक्षामनूद्य तत्क्रम एवात्र विधीयते इति।

एतदभिप्रेत्याह दीक्षास्विति। 'दीक्षासु' गृहपत्यादीनां कर्तव्यासु—'क्रमः' पौर्वापर्यं—'श्रुत्या'—'विधीयते' एवेति सम्बन्धः ॥ २ ॥

## (३) ५।१।३ पाकाग्निहोत्रयोः सोऽर्थात्

(१) क्रमस्य नियामकान्तरं चिन्त्यते पूर्वाधिकरणापवादरूपेण। अर्थक्रमन्यायोऽयम्।

(२) 'अग्निहोत्रं जुहोति—यवागूं पचति' इत्यग्निहोत्रहवनयवागूपाकरूपं कर्मद्वयमुक्तम्।

(३) तत्र सन्देहः—किमत्रापि विधिवाक्यद्वयक्रमानुसार्येव क्रम उतान्य इति।

(४) पूर्वपक्षः—श्रुतिप्रमाणबलेन यथाश्रुत एव क्रमो होमपाकयोरनुष्ठेयस्तथा च प्रथमं होमस्ततो यवागूपाक इति।

(५) सिद्धान्तः—होमीयद्रव्यमन्तरेण न सम्भवति होमः। द्रव्यं यवागूव्यतिरिक्तं नास्ति। यवागू च पाकं विना न निष्पद्यते। अतो होमीयद्रव्यसम्पादनार्थं होमात् प्रागेव पाकः कर्तव्यः। पाकानन्तरमेव च पाकनिष्पन्नेन द्रव्येण होम इत्यर्थतः प्राप्तः क्रमोऽत्राभ्युपगन्तव्यः इति।

एतदभिप्रेत्याह पाकेति। 'पाकाग्निहोत्रयोः'-'सः' क्रमः—'अर्थात्' प्रयोजनानुसारेण—अभ्युपगन्तव्य इति शेषः ॥ ३ ॥

## (४) ५।१।३ अन्यत्रानियमो भवेत्।

(१) क्रमविचार एव वर्तते।

(२) दर्शपूर्णमासयोर्याजमाने काण्डे प्रयाजानुमन्त्रणमन्त्रा आम्नाताः—'वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामि' इत्यादयः।

(३) तत्र सन्देहः—एतेषां मन्त्राणाम्प्रयोगे किं कोऽपि क्रमोऽभ्युपेय उत नास्ति क्रमनियम इति।

(४) पूर्वपक्षः—वसन्तग्रीष्मवर्षाशरद्धेमन्तमन्त्राणामनेनैव क्रमेणोपलम्भात् द्वितीयाधिकरणन्यायेनात्रापि स एव क्रमोऽभ्युपेय इति।

(५) सिद्धान्तः—यद्यपि ऋतूनां ऋतुमन्त्राणां चोक्तः क्रमो लभ्यते कुत्रचित् शाखायाम् तथाऽप्यन्यत्र क्रमान्तरमप्युपलभ्यते। तस्मादुक्तः पाठक्रमो न नियामकत्वेन ग्राह्यः। नाप्यत्र पाकहोमवत् अर्थो नियामकः वसन्तमन्त्रेण यस्य कस्यापि प्रयाजस्यानुमन्त्रणेऽनुपपत्त्यभावात्। तस्मान्नास्ति क्रमनियमोऽत्रेति।

एतदभिप्रेत्याह अन्यत्रेति। 'अन्यत्र' यत्र श्रुतिरर्थो वा नियामकत्वेन नैव लभ्यते तत्र—'अनियमः' एव क्रमस्य—'भवेत्' इति सम्बन्धः ॥४॥

(५) ५।१।४-७ समिदादौ क्रमः पाठात्

(१) क्रमविचारो वर्तते। पाठक्रमन्यायोऽयम्।

(२) दर्शपूर्णमासयोः प्रयाजा आम्नाताः—'समिधो यजति—तनूनपातं यजति—इडो यजति—बर्हिर्यजति—स्वाहाकारं यजति' इति।

(३) तत्र सन्देहः—किमत्र यागेषु नियम उतानियमः इति।

(४) पूर्वपक्षः—अत्र नोपलभ्यते काचित् क्रमनियामिका क्त्वाप्रत्ययादिवती श्रुतिः। न च पाकहोमयोरिवात्र कश्चिदर्थः क्रमनियामकः। तस्मात् क्रमनियामकप्रमाणाभावात् पूर्वाधिकरणन्यायेन नात्र क्रमोऽभ्युपेयः इति।

(५) सिद्धान्तः—समिदादियागविधायकानि वाक्यानि क्रमेण पठितान्युपलभ्यन्ते। अनेन च पाठेन सूचितस्य क्रमस्यानुष्ठाने कश्चिदपि बाधको नास्ति। तस्मात् पाठानुरोधेनैवात्र यागेषु क्रमोऽभ्युपगन्तव्यः। तथा चादौ समिद्यागस्ततस्तनूनपातयाग इत्येवं क्रमेणानुष्ठानमिति।

एतदभिप्रेत्याह—समिदिति। 'समिदादौ' समिदादिप्रयाजानां विषये—'पाठात्' विधायकवाक्यानां क्रमेणोपलम्भात्—'क्रमः' अभ्युपगन्तव्य इति शेषः ॥ ५ ॥

(६) ५।१।८-१२ प्रवृत्त्या पशुषु क्रमः।

(१) क्रमविचार एव वर्तते। प्रवृत्तिक्रमन्यायोऽयम्।

(२) वाजपेये—'सप्तदश प्राजापत्यानालभेत' इति सप्तदश पशवो विहिताः। एतेषु पशुषु उपाकरणनियोजनादयः संस्काराः कर्तव्याः।

(३) तत्र संस्कारेषु संशयः—किं यं पशुमारभ्योपाकरणसंस्कारः कृतस्तमेव पशुमारभ्य नियोजनादिसंस्कारान्तरमपि कर्तव्यमुत क्रमनियमं विनैव येन केनापि प्रकारेण सर्वे संस्काराः कर्तव्या इति।

(४) पूर्वपक्षः—'अस्मिन् पशौ संस्काराणामारम्भः अस्मिन् समाप्तिः' इत्येवंरूपस्य क्रमस्य नियामकं श्रुत्यर्थपाठरूपं किमपि प्रमाणं नास्ति। तस्मान्नात्र क्रमनियमः। येन केनापि क्रमेण संस्काराः कर्तव्या—इति।

(५) सिद्धान्तः—प्रथमसंस्कार उपाकरणरूपो येन क्रमेण पशुषु कृतस्तेनैव क्रमेण संस्कारान्तराण्यपि कर्तव्यानि। श्रुत्यर्थपाठा इव प्रथ-

मप्रवृत्तिरपि क्रमस्य नियामिका भवति । प्रथमप्रवृत्त्या यः क्रमो बुद्धौ स्थितस्तस्य परित्यागे नास्ति प्रमाणम् । तस्मादत्र प्रवृत्त्या क्रमो नियम्यत इति ।

एतदभिप्रेत्याह—प्रवृत्त्येति । 'पशुषु' सप्तदशसु संस्क्रियमाणेषु—'क्रमः' येन क्रमेण संस्काराः तेषु कर्तव्याः स—'प्रवृत्त्या' प्रथमप्रवृत्त्या-येन क्रमेण प्रथमः संस्कारोऽनुष्ठितस्तदनुष्ठानेन-'नियम्यते' इति शेषः ॥६॥

## (७) ५।१।१३ ऋगागमे क्रमः स्थानात्

( १ ) क्रमोऽनुवर्तते ।

( २ ) 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्—त्रिणवेनौजस्कामम्—त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति भिन्नसङ्ख्यकानामृचाम्प्रयोगो विहितः । संख्यापूरणं चागन्तुकानामृचाम्प्रवेशेन भवति ।

( ३ ) अत्रागन्तुकानामृचाम्प्रवेशे संशयः—किमनियतक्रमा एव ऋच आगमयितव्या उत काण्डक्रमानुसारेणेति ।

( ४ ) पूर्वपक्षः—अनियमेनैवागम ऋचाम्—क्रमनियामकस्य पाठक्रमस्यात्राभावात् इति ।

( ५ ) सिद्धान्तः—ऋचो वेदे नियतस्थानेष्वाम्नाताः । आम्नाये च यत्रासां स्थानं तेनैव स्थानेन नियमनमासां भवति यदा एता आगमयिता भवन्ति । तथाच याः पूर्वं समाम्नातास्ताः पूर्वं प्रयोक्तव्याः इति ।

एतदभिप्रेत्याह—ऋगिति । 'ऋगागमे' 'ऋचा'मागन्तुकानां संख्यापूरकाणाम् 'आगमे' आगमयितव्ये—'स्थानात्' आम्नानस्थानेनैव—'क्रमः'—नियम्यत इति शेषः ॥ ७ ॥

## (८) ५।१।१३ वर्णकान्तरेण ]

## साद्यस्के तु पशुक्रमः ।

( १ ) सप्तमाधिकरणं पाठक्रमाधिकरणेन पुनरुक्तमिव मन्यमानो वर्णकान्तरेणाधिकरणमिदं वर्णयामास स्थानक्रमस्योदाहरणान्तरं प्रदर्श्य ।

( २ ) साद्यस्के सोमयागविशेषे श्रूयते—'सह पशूनालभेत' इति । साद्यस्कस्य प्रकृतौ ज्योतिष्टोमे पश्वालम्भनेऽयं क्रमो भवति-अग्नीषोमीयः पशुरौपवसथ्ये पूर्वदिन आलभ्यते, सवनीयः पशुः सुत्यादिने प्रातःसवने आश्विनग्रहादूर्ध्वमालभ्यते, अनुबन्ध्यः पशुः अवभृथादूर्ध्वमालभ्यते । साद्यस्के तु सर्वेषां सहैवालम्भनं विहितम् । तच्च सहालम्भनं सुत्यादिने आश्विनग्रहादूर्ध्वं सवनीयस्य स्थाने भवति ।

( ३ ) तत्र सन्देहः—एवम्प्राप्ते सुत्यादिने सहालम्भे केन क्रमेणा-

लम्भः कार्यः—किम्पूर्वमग्नीषोमीयस्य ततः सवनीयस्योतादौ सवनीयस्य ततोऽग्नीषोमीयस्येति ।

(४) पूर्वपक्षः—प्रकृतौ यः क्रमः स एव विकृतावप्यनुसर्तव्यः । तथा चादौ अग्नीषोमीयस्यैवालंभ इति ।

(५) सिद्धान्तः—सुत्यादिने सवनीयस्य स्थानम् । तथा सति तस्मिन् दिने आश्विने गृहीते सवनीय एव बुद्धिस्थो भवति । एवं च सुत्यादिने सवनीयस्य प्राथम्यं स्थानान्निश्चितम् । तस्य च परित्यागे नास्ति प्रमाणम् । तस्मात् सवनीयालम्भनानन्तरमेव स्वस्थानभ्रष्टयोरग्नीषोमीयानुबन्ध्ययोः प्राप्तिरिति ।

एतदभिप्रेत्याह साद्यस्क इति । 'साद्यस्के' तन्नामके सोमयागविशेषे—'पशुक्रमः' आलब्धव्यानां पशूनां 'क्रमः'—'स्थानात्' भवतीति पूर्वेण सम्बन्धः ॥ ८ ॥

## (९) ५।१।१४ मुख्यक्रमात् क्रमोऽङ्गेषु

(१) क्रमविचारः ।

(२) चित्रायागे सप्तानां हविषाम्मध्ये चतुर्थपञ्चमे इत्थमाम्नायेते- 'सारस्वतौ भवतः—एतद्वै दैव्यं मिथुनम्' इति । सरस्वती च सरस्वांश्चेति विगृह्य समासे कृते पुमान् स्त्रियेत्येकशेषात् 'सरस्वन्तौ' इति भवति । सरस्वन्तौ देवते ययोस्तौ सारस्वतौ यागौ । तत्र प्रकृतियागतः प्राप्ताः निर्वापादयः ।

(३) तत्र सन्देहः—किं निर्वापादयः पूर्वं स्त्रीयागस्य वा पुंयागस्य वा यथारुचि कार्या अनियमेनोत अस्ति कश्चित् क्रमनियम इति ।

(४) पूर्वपक्षः—नियमकारिणः शास्त्रस्याभावादनियम इति ।

(५) सिद्धान्तः—हौत्रकाण्डे स्त्रीदेवताया एव पूर्वं याज्यानुवाक्ये समाम्नाते पश्चात् पुंदेवतायाः । अनेन च याज्यानुवाक्याक्रमेण मुख्ययोर्यागयोर्मध्ये स्त्रीयागस्यैव प्राथम्यमवगम्यते । धर्माणां च मुख्ययागार्थत्वात् मुख्यक्रमेणैव क्रमो नियतो भवति । तस्मात् स्त्रीयागस्यैव धर्माः पूर्वं कार्या इत्येव क्रमो ग्राह्य इति ।

एतदभिप्रेत्याह मुख्येति । 'अङ्गेषु' यागेषु—'क्रमः'—'मुख्यक्रमात्' मुख्यभूतयागे यः क्रमस्तस्मादेव—तेनैव प्रमाणेन नियतो भवतीति भावः ॥ ९ ॥

## (१०) मुख्यात् पाठक्रमो बली ।

(१) क्रमे विचारविशेषो वर्तते क्रमनियामकबलाबलविवेकरूपः ।

( २ ) दर्शपूर्णमासयोरुपांशुयाजोऽग्नीषोमीयश्च भवतः । उपांशुयाजे आज्यं द्रव्यम्–अग्नीषोमीये च पुरोडाशो द्रव्यम् । पुरोडाशधर्माः निर्वापावघातादयः पूर्वमाम्नाताः पश्चादाज्यधर्मा उत्पवनादयः ।

( ३ ) तत्र सन्देहः—अत्र धर्माणामनुष्ठाने कः क्रमः—आज्यधर्माणाम्पूर्वमनुष्ठानमुताग्नीषोमीयधर्माणामिति ।

( ४ ) पूर्वपक्षः—धर्मक्रमस्य मुख्यक्रमाधीनत्वम्पूर्वाधिकरणे सिद्धम् । मुख्यौ चात्रोपांशुयाजाग्नीषोमीयौ । तयोः क्रमानुसारेण चाज्यधर्मा एव पूर्वमनुष्ठेयाः पश्चादग्नीषोमीयधर्मा इति ।

( ५ ) सिद्धान्तः—पुरोडाशधर्माः पूर्वं पठितास्तत आज्यधर्माः । पाठक्रमो हि वैदिकैः शब्दैः साक्षात् प्रतीयते । तस्मात् मुख्यक्रमात् पाठक्रम एव बलीयान् । तथाच मुख्यक्रमप्रयुक्तमाज्यधर्माणाम्प्राथम्यं बाधित्वा पाठक्रमानुरोधेनाग्नीषोमीयधर्मा एव पूर्वमनुष्ठेया इति ।

एतदभिप्रेत्याह मुख्यादिति । 'मुख्यात्' मुख्यक्रमापेक्षया—'पाठक्रम' एव 'बली' बलीयान् प्रामाणिकतर इति भावः ॥ १० ॥

## (११) ५।१।१६ मन्त्रक्रमो बली तत्र

( १ ) क्रमप्रमाणबलाबलविचारो वर्तते ।

( २ ) अग्नीषोमीययागः तैत्तिरीयब्राह्मणस्य पञ्चमप्रपाठके आम्नातः-आग्नेययागस्तु षष्ठे प्रपाठके । मन्त्रकाण्डे तु पूर्वमाग्नेयमन्त्राः पठिताः पश्चादग्नीषोमीयमन्त्राः ।

( ३ ) तत्र सन्देहः—किमत्र ब्राह्मणपाठानुसारेण पूर्वमग्नीषोमीयानुष्ठानमुत मन्त्रपाठानुसारेणाग्नेयस्येति ।

( ४ ) पूर्वपक्षः—अनुष्ठानस्य ब्राह्मणोक्तविध्यधीनत्वात् ब्राह्मणपाठक्रम एव ग्राह्यः । तस्मादग्नीषोमीयस्य प्रथममनुष्ठानमिति ।

( ५ ) सिद्धान्तः—ब्राह्मणवाक्यं कर्मविधानेन चरितार्थं क्रमस्य बोधनाय न तथा समर्थं यथा मन्त्रपाठः । मन्त्रैः स्मृत्वैवानुष्ठानम्भवति । तस्माद् ब्राह्मणपाठक्रमापेक्षया मन्त्रपाठक्रम एव बलीयान् । तस्मादाग्नेयस्यैव प्रथममनुष्ठानम् इति ।

एतदभिप्रेत्याह मन्त्रेति । 'तत्र' मन्त्रब्राह्मणपाठविरोधे–'मन्त्रक्रमः' मन्त्रपाठक्रमसूचितः क्रमः–'बली' बलीयान्–ब्राह्मणपाठक्रमापेक्षयेति शेषः ॥ ११ ॥

## (१२) ५।१।१७–१८ बलवांश्चोदकक्रमः ।

( १ ) क्रमबलाबलविचारो वर्तते ।

( २ ) अस्त्यध्वरकल्पा नामेष्टिः। तत्र हविस्त्रयं श्रूयते—'आग्नावैष्णवमेकादशकपालं निर्वपेत्—सरस्वत्याज्यभागा स्यात्—बार्हस्पत्यश्चरुः' इति।

( ३ ) तत्र सन्देहः—सारस्वतबार्हस्पत्ययागयोः कः क्रमः। किं सारस्वतस्य धर्माः पूर्वमनुष्ठेया उत बार्हस्पत्यस्येति।

( ४ ) पूर्वपक्षः—प्रयोगवाक्ये बार्हस्पत्ययागात् पूर्वं सारस्वतयाग उपदिष्टः। अतः प्रयोगवचनानुसारेण यागरूपमुख्यक्रमेण धर्माणां क्रमोऽनुष्ठेयः नवमाधिकरणन्यायेन। तस्मात् सारस्वतधर्माणामेव पूर्वमनुष्ठानमिति।

( ५ ) सिद्धान्तः—अनयोर्यागयोर्धर्माः पृथङ्नोपदिष्टाः। प्रकृतियागोक्ता एव ते चोदकबलात् प्राप्नुवन्ति। चोदकश्च सक्रमानेव पदार्थानतिदिशति। प्रकृतौ चौषधधर्माणामेव पूर्वमनुष्ठानम् दशमाधिकरणन्यायेन। इह बार्हस्पत्ययाग एव चरुरूपमौषधद्रव्यम्। तस्माद् बार्हस्पत्यधर्माणामेव प्रथममनुष्ठानम्। किंच प्रथमभाविन आग्नेयस्य विकृतिर्बार्हस्पत्यश्चरुः, पश्चाद्भाविन उपांशुयागस्य विकृतिः सारस्वतमाज्यम्। इतोऽपि बार्हस्पत्यधर्माणामेव प्रथममनुष्ठानमिति॥

एतदभिप्रेत्याह बलवानिति। 'चोदकक्रमः' प्रकृतिवद्विकृतिः कर्तव्येति चोदकप्राप्तः क्रमः—'च' 'बलवान्' बलीयान्—प्रयोगवाक्यसूचितक्रमापेक्षयेति शेषः॥ १२॥

## (१३) ५।१।१९–२२ प्रातरादियजिः सद्यः

( १ ) क्रमप्रसङ्गेन तच्छेषभूतो विचारः प्रवर्तते। साकमेधीयन्यायः।

( २ ) चातुर्मास्येषु साकमेधनामके तृतीये पर्वणि तिस्र इष्टयः श्रूयन्ते—'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत्–मरुद्भ्यः सान्तपनेभ्यो माध्यन्दिने चरुम्–मरुद्भ्यो गृहमेधिभ्यः–सर्वासां दुग्धे सायमोदनम्' इति। एतासाञ्च प्रकृतिभूतो यागो दिनद्वयेन सम्पद्यते–पर्वणि दिनेऽन्यन्वाधानादिकम्–प्रतिपदि दिने च इष्टिः।

( ३ ) तत्रेष्टित्रयविषये सन्देहः—किमेता अपि प्रकृतिवद्दिनद्वयव्यापिन्य उतैकेनैव दिनेन सम्पादनीया इति।

( ४ ) पूर्वपक्षः—प्रकृतिवद्विकृतिरिति न्यायेन दिनद्वयव्यापित्वमेव। तथाच पूर्वेद्युः प्रातरादिकालेषु तेषामुपक्रमः उत्तरेद्युस्तेष्वेव कालेषु यथाक्रमन्तेषां समापनमिति।

( ५ ) सिद्धान्तः—'अग्नयेऽनीकवतेऽष्टाकपालं निर्वपेदि'त्यत्र साङ्गा इष्टिः प्रातःकालीनतया विधीयते। प्रातःशब्दश्च एकमेव प्रातःकाल-

मुद्दिश्य प्रयुज्यते। तस्मात् साङ्गाया एवेष्टेरेकस्मिन्नेव प्रातःकाले विधानात् सद्यस्कालीनत्वमेव श्रौतम्। दिनद्वयव्यापित्वं च चोदकवाक्यबलात् कल्प्यम्। श्रौतं च चोदकाद् बलीयः। तस्मादेकाहकालीना एव तिस्र इष्टय इति।

एतदभिप्रेत्याह प्रातरिति। 'प्रातरादियजिः'—'प्रातः' प्रातःकालीना इष्टिरादिर्यस्य स एवम्भूतो 'यजिः' यागः इष्टित्रयरूपः—'सद्यः' सद्यस्कालः एकमात्रप्रातर्मध्यन्दिनसायंव्यापी—न द्विनद्वयव्यापीति भावः॥ १३॥

## (१४) ५।१।२३–२४ तदाद्युत्कर्ष इष्यते

(१) क्रमे विचारविशेषः। तदादितदन्तन्यायः।

(२) अग्नीषोमीयपशुसम्बन्धे श्रूयते 'तिष्ठन्तं पशुं प्रयजन्ति' इति। अस्य प्रकृतौ तु हविष्यासादिते पश्चात् प्रयाजा अनुष्ठीयन्ते। तदनुसारेण चाग्नीषोमीयेऽपि पशुसंज्ञपनानन्तरमेव प्रयाजाः प्राप्ताः। 'तिष्ठन्तं पशुं प्रयजन्ति' इत्युदाहृतवाक्ये तु जीवत्येव पशौ प्रयाजस्य कर्तव्यतोक्ता। अयमेव च प्रयाजानां चोदकप्राप्तसमयात्प्रागेवानुष्ठानमिति तेषामपकर्ष इति कथ्यते॥—एवमेव सवनीयपशुसम्बन्धे श्रूयते 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति। तत्र चानुयाजानां चोदकप्राप्तसमयादनन्तरमनुष्ठानमिति तेषामुत्कर्ष इति कथ्यते॥ एवं चात्र वाक्ययोः प्रयाजमात्रस्यापकर्षोऽनुयाजमात्रस्य चोत्कर्षः श्रुतः॥

(३) तत्र सन्देहः—किमपकर्षे प्रयाजमात्रमपकृष्यते उत प्रयाजान्तः सकलोऽङ्गसमूहः-तथा च किमुत्कर्षेऽनुयाजमात्रमुत्कृष्यते उत अनुयाजादिः सकलोऽङ्गसमूह इति।

(४) पूर्वपक्षः—यथाश्रुतावेवोत्कर्षापकर्षावङ्गीकर्तव्यौ। सकलाङ्गकलापस्यापकर्षे उत्कर्षे वा महद् व्यवधानं मुख्यकालव्यत्ययश्च स्यात्। तस्मात् प्रधानमात्रस्यापकर्षोऽनुयाजमात्रस्य चोत्कर्ष इति।

(५) सिद्धान्तः—प्रकृतौ पदार्थानुष्ठानक्रमः क्लृप्तः। सक्रमाणामेव च पादार्थानां विकृतावतिदेशः। तथा सति एकमङ्गमपकृष्टमुत्कृष्टं वा सकलमेवाङ्गकलापमपकृष्येदुत्कृष्येच्च। तस्मात् प्रयाजान्तस्य सकलस्याङ्गकलापस्यापकर्षः अनुयाजादेश्च सकलस्याङ्गकलापस्योत्कर्ष इति।

एतदभिप्रेत्याह—तदादीति। 'तदादेः' अनुयाजादेः सकलस्याङ्गकलापस्य—'उत्कर्षः'—नानुयाजमात्रस्येति। एवमेव प्रयाजान्तस्याङ्गकलापस्यापकर्ष इत्यपि बोध्यम्॥ १४॥

## (१५) ५।१।२५-२६ सौमिकोऽलङ्कृतेः पश्चात् ।

( १ ) प्रवृत्त्या क्रमनियमस्योदाहरणम् ।

( २ ) ज्योतिष्टोमेऽयं पाठक्रमः—प्रातरनुष्टेयोऽनुवाकः पठितः-तदनन्तरं प्रचरणीहोमादयः पठिताः—ततः सवनीयादयश्चोदकगतनिर्वापादियुक्ताः-ततो बहिष्पवमानस्तोत्रं पठितम् ॥ किन्तु अध्वर्युर्होत्रे प्रातरनुवाकप्रैषं दत्वा तदानीमेव प्रतिप्रस्थातारं प्रेष्यति 'सवनीयान् निर्वपस्व' इति । एवं च पाठक्रमानुसारेण प्रचरणीहोमानन्तरं प्राप्तोऽपि सवनीयपुरोडाशनिर्वापः प्रैषवशात्प्रातरनुवाककाले एवापकृष्यते । पुनश्च सवनीयपुरोडाशालङ्करणप्रषश्चैवं दृश्यते-'बहिष्पवमाने स्तुते आह पुरोडाशानलङ्कुरु' इति । एवं च पाठक्रमेण बहिष्पवमानस्तुतेः प्रागेव प्राप्तः सवनीयपुरोडाशनिर्वापः सवनीयपुरोडाशालङ्करणप्रैषवशात् बहिष्पवमानस्तुतेरनन्तरमुत्कृष्यते ।

( ३ ) तत्र सन्देहः—मध्यवर्तिनां सौमिकधर्माणां प्रचरणीहोमादीनां व्रीहिप्रोक्षणादीनामलङ्करणान्तानाम्पुरोडाशधर्माणां च क्रमे नियमोऽस्त्युतानियम इति ।

(४) पूर्वपक्षः—क्रमनियामकप्रमाणानामभावे नास्ति क्रमनियम इति ।

(५) सिद्धान्तः—इष्टिप्रकृतौ दर्शपूर्णमासे ज्ञातकाला निर्वापानन्तरं कर्तव्याः पुरोडाशधर्माः । ततः प्रवृत्त्यनुसारेण च निर्वापानन्तरमेव प्रोक्षणमारभ्यालङ्करणान्तास्सर्व एव पुरोडाशधर्मा अनुष्टेयाः, ततः सौमिकाः प्रचरणीहोमादय इति।

एतदभिप्रेत्याह सौमिक इति । 'सौमिकः' प्रचरणीहोमादिसौमिकधर्मसमूहः---'अलङ्कृतेः' अलङ्करणान्तपुरोडाशधर्मसमूहस्य—'पश्चात्' अनन्तरं कर्तव्य इत्येव क्रम इति भावः ॥ १५ ॥

## (१६) ५।१।२७ यूप एवापकृष्यते

( १ ) क्रमप्रसङ्गेनापकर्षविचारः । यूपकर्मन्यायः चतुर्दशाधिकरणापवादः ।

( २ ) ज्योतिष्टोमे वैसर्जनहोमादनन्तरं वह्निः प्रणेतव्यः—सोमश्च हविर्धाने प्रणेतव्यः—उभयप्रणयनानन्तरं यूपच्छेद आम्नातः । तदेतत् सर्वमौपवसथ्ये दिने प्राप्तम् । किन्तु 'दीक्षासु यूपं छिनत्ति' इत्यनेन यूपच्छेदनं औपवसथ्यात्प्रागेव दीक्षादिनेऽपकृष्यते ।

( ३ ) तत्र सन्देहः---किमत्र यूपमात्रस्यापकर्ष उत यूपच्छेदनान्तस्य सकलाङ्गकलापस्य अग्निसोमादिप्रणयनस्यापीति ।

(४) पूर्वपक्षः—चतुर्दशाधिकरणीय-प्रयाजन्यायेन यूपच्छेदना-न्तस्य सकलाङ्गकलापस्योत्कर्ष इति ।

(५) सिद्धान्तः—प्रयाजाघारादीनामेकमेव प्रधानम्प्रति अङ्गत्वेन एकप्रयोगान्तःपातित्वादवश्यम्भावी परस्परक्रमनियमः । ततश्चैकस्य प्रयाजस्यापकर्षे तदन्तस्य सर्वस्यापकर्षो युक्तः । इह तु प्रणयनं सोमयागस्याङ्गम् यूपच्छेदनन्तु अग्नीषोमीयपशोरङ्गमिति प्रणयनच्छेदनयोर्नास्त्यन्योन्यं कोऽपि क्रमः । एवं च एकस्यापकर्षेऽन्यस्याप्यपकर्षो नावश्यम्भावी । तस्माद् यथाश्रुतो यूपच्छेदनमात्रस्यापकर्ष इति ।

एतदभिप्रेत्याह यूप इति । 'यूपः' 'एव' यूपच्छेदनमात्रम्—'अपकृष्यते'—न तु अन्यदङ्गजातं प्रणयनादिकमिति शेषः ॥ १६ ॥

## (१७) ५।१।२८ नोत्कृष्यते पिष्टलेपि

(१) क्रमप्रसङ्गेनैवोत्कर्षविचारः ।

(२) सवनीयपुरोडाशे पिष्टलेपहोमश्चोदकेन प्राप्तः । दृषदुपलकपालादिष्वाश्लिष्टो यः पिष्टलेपः तमुद्धृत्य जुह्वा चतुर्गृहीते आज्ये प्रक्षिप्य दक्षिणाग्नौ जुहोति-स एव पिष्टलोपहोमः ॥

(३) तत्र सन्देहः किमस्योत्कर्षो भवति न वेति ।

(४) पूर्वपक्षः—प्रकृतावयं होमोऽनुयाजोत्तरकालीनः—अनुयाजाश्चाग्निमारुतादूर्ध्वमुत्कृष्टा भवन्ति चतुर्दशाधिकरणन्यायेन । तस्मात्पिष्टलेपहोमस्याप्युत्कर्ष इति ।

(५) सिद्धान्तः—उत्कृष्यमाणा अनुयाजाः पश्वर्थाः, न पुरोडाशार्थाः । पिष्टलेपहोमश्च पुरोडाशार्थः—पशौ पिष्टाभावेन तद्धोमासम्भवात् । एवं च प्रयोगभेदान्नास्य होमस्यानुयाजैः सहोत्कर्ष इति ।

एतदभिप्रेत्याह नेति । 'पिष्टलेपि' यस्मिन् होमरूपे कर्मणि पिष्टलेपो हूयते तत् कर्म—'न उत्कृष्यते' इति सम्बन्धः ॥ १७ ॥

## (१८) ५।१।२९ वेदिरेवापकृष्यते

(१) अपकर्षविचारः ।

(२) दर्शपूर्णमासयोर्हविरभिवासनोत्तरकाले वेदिराम्नाता । दर्शे तु तस्या अपकर्ष आम्नातः—'पूर्वेद्युरमावास्यायां वेदिं करोति' इति ।

(३) तत्र सन्देहः—अपकृष्यमाणा वेदिः किं ततोऽर्वाचीनान् सर्वान् अभिवासनान्तान् पदार्थानप्यपकर्षति उत नेति ।

(४) पूर्वपक्षः—वेदिना सम्बद्धत्वात् तेषामप्यपकर्ष इति ।

(५) सिद्धान्तः—अप्रकृतिपूर्विकायाममावास्यायां पूर्वेद्युर्वेदिकरण-

मांम्नातम् । उभयोरपि दर्शयागपौर्णमासीयागयोः श्वोभूते हविरभिवास-नमाम्नातम् । किन्तु 'अमावास्यायामभिवासनानन्तरं वेदिः कर्तव्या' इ-त्यस्मिन् क्रमे श्रुत्यादि किमपि प्रमाणन्नास्ति । तस्मादभिवासनान्तानां पदार्थानां नास्त्यपकर्ष इति ।

एतदभिप्रेत्याह—वेदिरिति । दर्शयागे 'वेदिरेव' वेदिमात्रं वचनब-लात्—'अपकृष्यते'—न तु तदर्वाचीना अभिवासनान्ताः पदार्था अपी-ति शेषः ॥ १८ ॥

## (१९) ५।१।३०–३४ उत्कर्षो नाग्निहोत्रस्य

( १ ) उत्कर्षविचारः ।

( २ ) चातुर्मास्येषु साकमेधनामके पर्वणि सान्तपनीष्टिः श्रूयते—'मरुद्भ्यः सान्तपनेभ्यो माध्यन्दिने चरुम्' इति । तां चेष्टिं समाप्य सा-यङ्कालेऽग्निहोत्रं हूयते ।

( ३ ) तत्र सन्देहः—यदि कदाचिद्दैविकान्मानुषाद्वा प्रतिबन्धात् सान्तपनी इष्टिः सायंसमयात् प्राक् न सम्पन्ना सायं तदनन्तरे वा काले-ऽपकृष्येत तदा किमग्निहोत्रस्यापि सायंकालादुत्कर्षो भवति न वेति ।

( ४ ) पूर्वपक्षः-सान्तपनीष्ट्यग्निहोत्रयोः पौर्वापर्ये सिद्धे भवत्येव चाग्निहोत्रस्यापकर्षो यदि सायम्पर्यन्तमिष्टिर्न कृतेति ।

( ५ ) सिद्धान्तः—इष्ट्यग्निहोत्रयोः प्रयोगभेदान्नास्ति कोऽपि शा-स्त्रीयः पौर्वापर्यभावः । इष्टिर्यदि स्वकालाद् भ्रष्टा तदा तस्याः काला-न्तरेऽनुष्ठानं भवतु । तावता अग्निहोत्रस्य तु स्वकालाद् भ्रंशो न भविष्यति । तस्मादग्निहोत्रस्य नापकर्ष इति ।

एतदभिप्रेत्याह—उत्कर्ष इति । 'अग्निहोत्रस्य' 'उत्कर्षः' स्वकाला-दपनयनं 'न' भवतीति शेषः ॥ १९ ॥

## (२०) ५।१।३५ षोडश्युत्कर्ष इष्यते

( १ ) उत्कर्षविचारः ।

( २ ) ज्योतिष्टोमेऽस्ति षोडशिग्रहणम् । तस्य कालः सूर्यास्तसमय उक्तः—'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति । अन्व-ग्योक्थ्येभ्यः परस्तात् षोडशिग्रहणं भवतीत्येतदप्याम्नातम्—'तत्पराञ्च-मुक्थ्येभ्यो निगृह्णाति' इति ।

( ३ ) तत्र सन्देहः—यदि कारणवशात् सायंसमयात्पूर्वमुक्थ्यग्रहो न सम्पन्नः तदनन्तरकाले उत्कृष्येत—तर्हि किं तत्परस्ताद्भाविनः षोड-शिनोऽप्युत्कर्षो भवति न वेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन नोत्कर्षः षोडशिनः । तस्यापि स्वकालाद्भ्रंशने नास्ति प्रमाणमिति ।

( ५ ) सिद्धान्तः—पराञ्चमिति शब्देन स्पष्टमुक्थ्येभ्य उत्तरकालः षोडशिग्रहाङ्गत्वेन विधीयते । ततश्च यदोक्थ्यग्रहः सम्पन्नो भविष्यति तदैव षोडशिग्रहस्य कालः । तस्माद् भवत्येवास्योत्कर्ष इति ।

एतदभिप्रेत्याह—षोडशीति । 'षोडशिनः' षोडशिग्रहस्य 'उत्कर्षः' स्वकालानन्तरमनुष्ठानम्—'इष्यते' इष्टतया स्वीक्रियते इत्यर्थः ॥२०॥

पादेऽस्मिन् विंशतिर्न्याया
भाष्यकारेण वर्णिताः ॥

स्पष्टम् ।

इति पञ्चमस्य प्रथमः ।

# अथ पञ्चमस्य द्वितीयः पादः ।

[ क्रमविशेषविचारात्मकः ]

## (१) ५।२।१-३ क्रमः पदार्थेषु गुणे पशूनाम्

( १ ) क्रमे विचारविशेषः । पदार्थानुसमयन्यायः ।

( २ ) वाजपेये सप्तदशसु प्राजापत्येषु पशुषु एकैकस्मिन् पशौ उपाकरणादिसंस्काराः प्रकृतियागात् प्रकृतिवद्विकृतिः कर्तव्येति चोदकप्राप्ताः ।

( ३ ) तत्र सन्देहः—पशूनां संस्कारानुष्ठाने कः क्रमः—किं प्रत्येकं सर्वान् संस्कारान् समाप्य द्वितीये तेऽनुष्ठेया उत आदावुपकरणसंस्कारं सर्वेषां कृत्वा ततो द्वितीयो नियोजनसंस्कारः सर्वेषु कर्तव्य इति ।

( ४ ) पूर्वपक्षः—साङ्गप्रधानं कर्तव्यमिति स्थितम् । प्रयोगवचनेन सधर्माणां साहित्यमवगतम् । एवं चैकस्य पशोः सर्वे संस्काराः सहैवानुष्ठेयाः । एवं द्वितीयादेरपि इति ।

( ५ ) सिद्धान्तः—साक्षाच्छ्रुत्या साहित्यं पशूनामेव न तत्संस्काराणाम् । एवं च पशूनां साहित्यार्थं सर्वेषु एकैकः उपाकरणादिसंस्कारः कर्तव्यः । तस्मात् सर्वेषां पशूनामुपाकरणं ततः सर्वेषां नियोजनम्—एवमेव सर्वे संस्काराः कर्तव्याः । अयमेवैकजातीयानुसमयः पदार्थानुसमयश्च कथ्यते । इति ।

एतदभिप्रेत्याह क्रम इति । 'पशूनां' 'गुणे' धर्मे 'पदार्थेषु' संस्कारेषु एव 'क्रमः' अनुष्ठेय इति शेषः—न पशुष्विति भावः । प्रथममेकस्मिन् पशौ सर्वे संस्कारास्ततो द्वितीये इति पशुषु नानुष्ठेयः क्रमः, अपि तु एकः संस्कारः सर्वेषु पशुषु ततो द्वितीयः संस्कारः सर्वेषु पशुष्वित्येवं संस्कारेष्वेव क्रम आस्थेय इत्याशयः ॥ १ ॥

## (२) ५।२।३ काण्डम्पुरोडाशगुणे क्रमेण ।

( १ ) क्रमविचारः । काण्डानुसमयन्यायः ।

( २ ) 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति । एवं च यदा बहवोऽश्वाः प्रतिगृहीतास्तदा अश्वसमसंख्यकाश्चतुष्कपाला निरुप्यन्ते । पुरोडाशे च भवन्त्यधिश्रयणादयो धर्माः ।

( ३ ) तत्र सन्देहः—बहुषु पुरोडाशेषु अधिश्रयणादिधर्मेष्वनुष्ठेयेषु किं सर्वे धर्मा एकैकस्मिन् समापनीया उत प्रथमो धर्मः सर्वेषु ततो द्वितीयो धर्मः सर्वेष्विति क्रमः ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन प्रथमो धर्मः सर्वेषु ततो द्वितीयः सर्वेष्विति पदार्थानुसमय एवानुष्ठेय—इति ।

( ५ ) सिद्धान्तः—तप्तेषु कपालेषु क्रमेण पुरोडाशानधिश्रित्य यावता कालेन प्रथमपुरोडाशे द्वितीयसंस्कारं कर्तुमागच्छति तावताऽसौ शुष्को भस्मीभविष्यति । तस्मात् एकैकस्मिन् सर्वे धर्माः समापनीया इति काण्डानुसमय एवाभ्युपेय इति ।

एतदभिप्रेत्याह—काण्डमिति । 'पुरोडाशानाम्' 'गुणे' धर्मविषये 'क्रमेण' 'काण्डम्' कृत्स्नो धर्मकलापः सहैवानुष्ठेयः इति भावः ॥ २ ॥

## (३) ५।२।४–५ मुष्ट्यादयः स्युर्गणशः क्रमेण

( १ ) क्रमोऽनुवर्तते । समुदायानुसमयन्यायः ।

( २ ) दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः श्रूयते—'चतुरो मुष्टीन् निर्वपति' इति ।

( ३ ) तत्र सन्देहः—किं प्रत्येकं द्वयोर्निर्वापयोरेको मुष्टिर्निरुप्य ततो द्वयोर्द्वितीयो मुष्टिरित्येवं क्रम उत प्रथमे चत्वारो मुष्टयस्ततो द्वितीये चत्वारो मुष्टय इति ।

( ४ ) पूर्वपक्षः—एकैको मुष्टिः पृथक् पदार्थः । अत एकैकस्यैव मुष्टेर्निर्वापः । एवं च द्वयोर्निर्वापयोः क्रमेण एकं मुष्टिं निरुप्य ततो द्वितीयमुष्टिरित्येव पदार्थानुसमयः कर्तव्य इति ।

( ५ ) सिद्धान्तः—यदीह पदार्थत्वं लौकिकं स्यात्तर्ह्येवं स्यात् ।

अत्र त्वेकविधिगम्य एकः पदार्थः । विधिश्च चतुस्सङ्ख्याविशिष्टानेव मुष्टीन् विदधाति । तस्मान्मुष्टिचतुष्टयमेकः पदार्थः । एवं च प्रथमे निर्वापे चत्वारो निरूप्यास्ततो द्वितीये इति ।

एतदभिप्रेत्याह—मुष्टीति । 'मुष्ट्यादयः' चत्वारो मुष्टयः [ आदिपदेन पुरोडाशस्याष्टकपालोपधानम् ] 'क्रमेण' आदौ प्रथमे ततो द्वितीये निर्वापे—'गणशः' चतुष्टयरूपेण, न त्वेकैकम्—'स्युः' निरुप्या भवेयुरिति सम्बन्धः ॥ ३ ॥

## (४) ५।२।६ क्रमोऽवदानेऽधिगतः प्रदाने ।

( १ ) क्रमोऽनुवर्तते ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'द्विर्हविषोऽवद्यति' इति ।

( ३ ) तत्र सन्देहः—किमत्र द्विरवदानमेकः पदार्थस्तथा च एकस्याग्नेयस्य हविषोऽवदानद्वयं कृत्वा तद्धोमात्प्रागेवाग्नीषोमीयस्य द्विरवदानमुताग्नेयस्य द्विरवदानं ततोऽस्य होमस्तदनन्तरमाग्नीषोमीयस्य द्विरवदानं ततोऽस्य होम इति ।

( ४ ) पूर्वपक्षः—उक्तेन विधिना विहितत्वाद् द्वित्वसङ्ख्याविशिष्टमवदानमेकः पदार्थः । तथा च एकैकस्मिन् हविषि तत्सम्पादनीयम्—तदनन्तरमुभयोर्होम इति ।

( ५ ) सिद्धान्तः—होमपर्यन्तमवदानमेकः पदार्थः—होमार्थत्वादेवावदानस्य । अत एव 'चतुरवत्तं जुहोति' इतिविधिना सावदानक एको होमो विहितः । एवञ्च होमान्तस्यावदानस्यैकपदार्थत्वात् आग्नेयमवदाय हुत्वा च तत आग्नीषोमीयावदानमित्येव क्रमोऽभ्युपेय इति ।

एतदभिप्रेत्याह—'अवदाने' यः 'क्रमः' 'अधिगतः' अभ्युपगन्तव्यत्वेन स 'प्रदाने' होमे समाप्ते सत्येव—सम्पन्नो भवतीत्यर्थः ॥ ४ ॥

## (५) ५।२।७–६ क्रमः परिव्याणयुतेऽञ्जनादौ

( १ ) क्रमविचारः ।

( २ ) ज्योतिष्टोमेऽग्नीषोमीयपशौ यूपस्य-घृतेनाञ्जनम् उच्छ्रयणम् अवटस्य समूहनम् यूपमूलस्य परिबृंहणम् मध्ये रशनया परिव्याणम्-इत्येते पदार्था आम्नाताः ।

( ३ ) तत्र सन्देहः—यत्र बहवो यूपास्तत्र किं अञ्जनादि प्रत्येकम् एकैकस्मिन् यूपे कर्तव्यमुत सर्वे एकस्मिन् यूपे समापनीयास्ततो द्वितीये इत्येवं क्रम-इति ।

( ४ ) पूर्वपक्षः-प्रथमाधिकरणन्यायेन प्रत्येकमञ्जनाद्येकैकस्मिन् यूपे कर्तव्यम् । तथाच प्रथमस्य यूपस्याञ्जनम्, ततो द्वितीययूपस्याञ्जनम्,

ततस्तृतीयस्य यूपस्य—ततः प्रथमयूपस्योच्छ्रयणम्, ततो द्वितीयस्योच्छ्रयणम्, ततस्तृतीयस्येत्येवं क्रमोऽनुष्ठेय इति ।

(५) सिद्धान्तः—'अञ्जनादि परिव्याणान्तं यजमानो यूपं नावसृजेत्' इति वचनेन यूपत्यागनिषेधस्तदैवोपपद्यते यदि अञ्जनमारभ्य परिव्याणान्ताः सकलाः पदार्थास्तत्रैकस्मिन् यूपे सहैवानुष्ठिता भवन्ति। अन्यथा यद्येकस्य यूपस्याञ्जनानन्तरं द्वितीयस्याञ्जनं कृतं स्यात्तर्हि प्रथमयूपस्योच्छ्रयणादेः प्रागेव त्यागो भवेत्। तच्च वचनेन निषिद्धम्। तस्मात् काण्डानुसमय एवात्र भवति—इति ।

एतदभिप्रेत्याह—क्रम इति। 'परिव्याणेन' 'युते' सहिते एव-'अञ्जनादौ' 'क्रमः' स्यात्। अञ्जनमारभ्य परिव्याणपर्यन्तं सर्वे मिलित्वैव प्रथमेऽनुष्ठेयास्ततो द्वितीय इति भावः ॥ ५॥

(६) ५।२।१०-१२ हव्यावदानं युगपत्पशूनाम् ।

(१) क्रमविचारः ।

(२) अग्नीषोमीयपशौ श्रूयते—'दैवतान्यवदाय न तावत्येव होतव्यम्,सौविष्टकृतान्यवदाय न तावत्येव होतव्यम्, ऐडान्यवद्यति' इति । अत्र प्रधानदेवतार्थानि स्विष्टकृदर्थानि इडाभक्षणार्थानीति त्रिविधान्यवदानानि ।

(३) तत्र सन्देहः—अत्र दैवताद्यवदानेषु किं काण्डानुसमय उत पदार्थानुसमयः—किं त्रीण्यप्यवदानानि सहैवैकैकस्मिन् पशौ समापनीयान्युत प्रथममवदानमेकस्मिन् ततो द्वितीये पुनर्द्वितीयमवदानम्प्रथमे पशौ ततो द्वितीये-इति ।

(४) पूर्वपक्षः—त्रिविधानामप्यवदानानां समूहः (काण्डः) एकैकस्मिन् पशौ समापनीयः—काण्डानुसमयन्यायेनेति ।

(५) सिद्धान्तः—पदार्थानुसमय एवात्र युक्तः। दैवावदानरूपमेकं पदार्थं सर्वेषु पशुषु समाप्य पश्चात्सर्वेषु सौविष्टकृतावदानम्—तच्च सर्वेषु कृत्वा पश्चात् सर्वेष्वैडावदानमिति ।

एतदभिप्रेत्याह-हव्यावदानमिति। 'हव्यस्य' हविषः 'अवदानम्' दैवतादिकम् 'पशूनां' सर्वेषु पशुषु-'युगपत्' मिलितमेव-'अनुष्ठेयम्' इति शेषः॥६॥

(७) ५।२।१३-१५ उलूखलैक्यं बहुबीजयागे

(१) क्रमे विचारविशेषः ।

(२) राजसूये नानाबीजेष्टिराम्नाता—'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्—सोमाय वनस्पतये श्यामाकं चरुम्' इत्यादि। तत्रैषां बीजानामवघाताय—कृष्णाजिनास्तरणम्, उप-

र्युलूखलस्थापनम्, तत्र बीजावापः, अवघातः, सूर्पेण परावपणं, कणेभ्य-स्तण्डुलानां विवेचनम्—इत्यादि पदार्था अतिदिष्टाः।

(३) तत्र सन्देहः—कृष्णाजिनास्तरणादयः पदार्थाः किं सर्वेषु बीजेषु कर्तव्या उतैकस्मिन्नेवेति।

(४) पूर्वपक्षः—कृष्णाजिनास्तरणादयः पृथग्विधिभिर्विहितत्वाद् भिन्ना एव पदार्थाः। ततो नानाबीजेषु सर्वमेव कृष्णाजिनास्तरणादि-कमनुसमेतव्यम्। तथासति यावत्यो बीजजातयस्तावन्ति कृष्णाजिनानि तावन्ति चोलूखलानीति।

(५) सिद्धान्तः—'व्रीहिनवहन्तीति' विधिनाऽवघातरूप एक एव पदार्थः। स च कृष्णाजिनास्तरणादिस्तण्डुलनिष्पत्त्यवसानः। स च पदार्थः कृष्णव्रीहिष्वनुष्ठाय पुनः श्यामाकेष्वनुष्ठेयः। तथा चानुक्रमेणैक-मेव कृष्णाजिनमेकमेव चोलूखलं सर्वेषु बीजेषूपयुज्यते। एवमुलूखल-कृष्णाजिनादीनां नास्त्यनेकत्वमिति।

एतदभिप्रेत्याह—उलूखलेति। 'बहुबीजयागे' 'उलूखलस्य' 'ऐक्यम' एकत्वमेव, न नानात्वमित्याशयः॥ ७॥

## (८) ५।२।१६ भिन्नं पशौ स्यात् पृथगाज्यपात्रम्।

(१) पूर्वाधिकरणापवादः।

(२) अग्नीषोमीयपशौ श्रूयते—'पृषदाज्येनानुयाजान् यजति' इति।

(३) तत्र सन्देहः—किं प्रयाजानामनुयाजानां द्रव्याणि धारयितुमे-कमेव पात्रमुतानेकमिति।

(४) पूर्वपक्षः—प्रकृतौ उभयार्थस्याज्यस्यैकयैवोपभृता धृतत्वेन विकृतावपि तदतिदेशात् एकमेव पात्रमिति।

(५) सिद्धान्तः—प्रकृतिवत् केवलं प्रयाजा आज्येन क्रियन्ते। अनुयाजास्तु पृषदाज्येन यष्टव्याः—'पृषदाज्येनानुयाजान् यजति' इति विधानात्। पृषदाज्यं च दधिमिश्रमाज्यम्। न च शुद्धमिश्रयोरेकेन पात्रेण धारणं सम्भवति। तस्मात् पृषदाज्यपात्रमाज्यपात्रात् पृथगेवेति।

एतदभिप्रेत्याह भिन्नमिति। 'पशौ' अग्नीषोमीयपशौ—'पृषदाज्य-पात्रम्' अनुयाजे पृषदाज्यधारणपात्रम्—'भिन्नम्' आज्यपात्रात् पृथक् स्यादिति शेषः॥ ८॥

## (९) ५।२।१७-२० अन्ते भवेद्दैक्षतमङ्गजातम्

(१) क्रमविचारविशेषः-नारिष्टन्यायः।

(२) अग्न्यादिदेवतायुक्तानां कृत्तिकादिनक्षत्राणां काम्या इष्टम

आम्नाताः—'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालम्' इत्यादयः । तत्र प्रधानहोमाः 'अग्निर्नः पातु कृत्तिकाः' इत्यादि याज्यानुवाक्यापुरस्सरं हूयन्ते । उपहोमाश्चात्रैवमाम्नाताः—'सोऽत्र जुहोति अग्नये स्वाहा—कृत्तिकाभ्यः स्वाहा—अम्बायै स्वाहा—दुलायै स्वाहा' इति । अत्रैव च 'दश ते तनवो यज्ञयज्ञियाः' इत्यादिभिर्मन्त्रैराज्याहुत्यात्मका नारिष्टहोमाश्च प्रकृतितश्चोदकप्राप्ताः ।

( ३ ) तत्र सन्देहः—किं प्राकृता नारिष्टहोमाः पूर्वमनुष्ठेया उत वैकृता उपहोमा-इति ।

( ४ ) पूर्वपक्षः—'अष्टाकपालं निर्वपेत्' इति मुख्यं कर्म—तत्सम्बद्धतया प्रथममुपहोमा उक्ताः । 'सोऽत्र जुहोतीति' प्रत्यक्षपाठेन मुख्यकर्मसमनन्तरमुपहोमा एव प्राप्ताः । यदि तस्मात् प्राक् नारिष्टहोमाः क्रियेरन् तर्हि तद्व्यवधानेनोक्तः पाठक्रमो बाध्येत । तस्मात् पूर्वमुपहोमाः कर्तव्यास्ततो नारिष्टहोमा-इति ।

( ५ ) सिद्धान्तः—नक्षत्रेष्टिरूपा विकृतिर्विधीयमाना स्वोपकारकमङ्गजातमपेक्षते—तदा प्राकृतमङ्गजातं नारिष्टहोमादिकं चोदकेन प्राप्नोति—प्रत्यक्षवाक्येन चोपहोमादिकं वैकृतम् । अनयोरङ्गयोर्नारिष्टहोमादिकं क्लृप्तोपकारं प्रथमं बुद्धावारोहति पश्चादुपहोमादिकं तु कल्प्योपकारम् । तस्मात् प्रधानप्रत्यासत्त्या नारिष्टहोमाः पूर्वमनुष्ठेयाः पश्चाच्चोपहोमा इति

एतदभिप्रेत्याह—अन्त इति । 'वैकृतम्' नक्षत्रेष्टिरूपविकृतिमात्रसम्बन्धि-'अङ्गजातम्' उपहोमादिकम्—'अन्ते' प्राकृतानां नारिष्टहोमानाम्पश्चात्—'भवेत्' अनुष्ठीयेत इति सम्बन्धः ॥ ९ ॥

## (१०) ५।२।२१ विदेवनादेर्विहितोऽपकर्षः

( १ ) क्रमविचारः । पूर्वाधिकरणापवादः ।

( २ ) राजसूये श्रूयते—'अक्षैर्दीव्यति—शौनःशेफमाख्यापयति—अभिषिच्यते' इति । अभिषेचनीयमत्र विकृतियागः, तस्याङ्गं विदेवनादिकम्—अभिषेकस्तु प्रकृतिभूतराजसूयादागतः प्राकृतमङ्गम् ।

(३) तत्र सन्देहः-विदेवनादयः किमभिषेकात् प्राक् उत पश्चादिति ।

(४) पूर्वपक्षः—विदेवनादीनां वैकृतत्वात् पूर्वाधिकरणन्यायेनान्तेऽनुष्ठेयता । तस्मादभिषेक एव प्रथममनुष्ठेयः पश्चाद्विदेवनादय-इति ।

( ५ ) सिद्धान्तः—'माहेन्द्रस्तोत्रं प्रत्यभिषिच्यते' इति वाक्येन सोमयागस्य मध्येऽभिषेकोऽपकृष्टः । अभिषेकात्पूर्वभावित्वं तु विदेवना-

दीनां प्रत्यक्षपाठादेवावगतम् । तस्मात् माहेन्द्रस्तोत्रादपि पूर्वं विदेवनादीनामनुष्ठेयता । अतस्तेषामपकर्ष इति ।

एतदभिप्रेत्याह—विदेवनादेरिति । 'विदेवनादेः' विदेवनशौनःशेपाख्यानरूपाङ्गजातस्य—'अपकर्षः' अभिषेकात्पूर्वभावित्वं-'विहितः' प्रत्यक्षपाठादवगतः । तस्मात्प्रथमं विदेवनादिकं ततो माहेन्द्रस्तोत्रं ततोऽभिषेक इत्येव क्रमोऽभ्युपगन्तव्य इत्यर्थः ॥ १० ॥

## (११) ५।२।२२ पश्चादुखासम्भरणाच्च दीक्षा

( १ ) क्रमविचारः । अयमपि नवमाधिकरणस्यापरोऽपवादः ।

( २ ) अग्निचयने सावित्रहोमः उखासम्भरणम् इष्टकाः पशुश्चेत्यादि आम्नातम्—तत्पश्चात्—'अग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण' इति दीक्षा विहिता ।

( ३ ) तत्र सन्देहः—सावित्रहोमादिकम्पूर्वमनुष्ठेयमुत दीक्षणीयादिकम् ।

( ४ ) पूर्वपक्षः—नवमाधिकरणन्यायेन प्रकृतौ क्लृप्तोपकारकं दीक्षणीयादिकं शीघ्रं बुद्धावारूढमतः सावित्रहोमादिभ्यः पूर्वमेव दीक्षणीयेति ।

( ५ ) सिद्धान्तः—प्रत्यक्षपाठेन हि क्रमोऽवगम्यते । तस्मात् यद्यपि दीक्षणीयादिकं प्राकृतं तथाऽप्यग्निचयनकाण्डे सावित्रहोमादिभ्यः पश्चात् पठितम् । तस्मात्सावित्रहोमादिकं प्रथमं कृत्वा ततो दीक्षणीयादिकमनुष्ठेयमिति ।

एतदभिप्रेत्याह—पश्चादिति । 'उखासम्भरणात्' सावित्रहोमोखासम्भरणादिकात्—'पश्चात्'—'दीक्षा' दीक्षणीयादिकमङ्गजातमनुष्ठेयमित्यर्थः ॥ ११ ॥

## (१२) ५।२।२३ रुक्मं परं दीक्षितसंस्कृतः स्यात् ।

( १ ) क्रमविचारः—पूर्वाधिकरणापवादः ।

( २ ) अग्निचयने दीक्षणीयादेरूर्ध्वं रुक्मधारणमाम्नातम् । उखास्थितोऽग्निः शिक्येऽवस्थापितः कण्ठे धार्यमाण उरःप्रदेशं यथा न दहति तथा व्यवधायकत्वेन कण्ठे धृतस्य उरसि लम्बमानस्य सौवर्णस्याभरणविशेषस्य रुक्मसंज्ञकस्य धारणं विहितम् । यजमानसंस्काराश्च वपनादयः प्रकृतौ दीक्षणीयानन्तरभाविन इह चोदकेन प्राप्ताः ।

( ३ ) तत्र सन्देहः—रुक्मधारणं किं यजमानसंस्कारेभ्यः प्रागुत पश्चादिति ।

(४) पूर्वपक्षः—यजमानसंस्कारेभ्यः प्रागेव रुक्मधारणम् । आदौ दीक्षणीया ततो रुक्मधारणम् इति प्रत्यक्षपाठात् क्रमः । दीक्षणीयानन्तर्यं च संस्काराणां चोदकात् प्राप्तम् । तस्मादादौ दीक्षा—ततो रुक्मधारणम्—ततः संस्कारा इत्येव क्रमः पूर्वाधिकरणन्यायेन सङ्गच्छते इति ।

(५) सिद्धान्तः—यजमानसंस्काराणां दीक्षानन्तर्यं प्रकृतौ क्लृप्तोपकारम्—रुक्मधारणस्य तूपकारः पाठात् कल्पनीयः । तस्मात् संस्कारा एव पूर्वमनुष्ठीयेरन् रुक्मधारणं च पश्चात् कर्तव्यमिति ।

एतदभिप्रेत्याह—रुक्ममिति । 'दीक्षितस्य' यजमानस्य 'संस्कृतेः' संस्कारात्—'परम्' अनन्तरमेव—'रुक्मम्' रुक्मनामकसौवर्णाभरणधारणम्'—'स्यात्' अनुष्ठीयेतेत्यर्थः ॥ १२ ॥

पादे द्वितीये खलु पञ्चमस्य
भाष्योदिता द्वादश नीतयः स्युः ॥

पञ्चमस्य द्वितीये पादे 'भाष्येण' 'उदिता' उक्ताः 'द्वादश' 'नीतयः' न्यायाः अधिकरणानि ॥

इति पञ्चमस्य द्वितीयः ।

## अथ पञ्चमस्य तृतीयः पादः ।

( कर्मणां वृद्ध्यवृद्धिविचारात्मकः )

### (१) ५।३।१–२ सङ्ख्या प्रयाजवृन्दस्य

(१) क्रमविचारप्रसङ्गेन कर्मणामावृत्त्यनावृत्ती चिन्त्येते ।

(२) अग्नीषोमीयपशौ श्रूयते—'एकादश प्रयाजान् यजति' इति । चोदकप्राप्ताश्च पञ्चैव प्रयाजाः ।

(३) तत्र सन्देहः—किं पञ्चसु प्रयाजेषु प्रतिप्रयाजमेकादशत्वसङ्ख्या उत सर्वसम्पाद्येति ।

(४) पूर्वपक्षः—प्रत्येकमेकादशत्वसङ्ख्यासम्बन्धः । प्रयाजानुद्दिश्य सङ्ख्यागुणे विहिते सति प्रतिप्रधानं गुणस्य सम्बन्धोऽभ्युपेय एवेति ।

(५) सिद्धान्तः—न ह्येकैकस्य प्रयाजस्य स्वरूपे एकादशत्वसङ्ख्या सम्पादयितुं शक्या । नापि पञ्चप्रयाजसमुदायस्य स्वरूपे सा सम्भवति । तस्मात् विहिता एकादशत्वसङ्ख्या प्रयोगद्वारेणैव सम्पादनीया । प्रयोगस्यावर्तयितुं शक्यत्वात् । पञ्च प्रयाजान् द्विरावर्त्य दश भवन्ति चरमस्य च प्रयाजस्य पुनरावृत्त्या एकादशत्वसङ्ख्या सम्पद्यते । त-

स्मात् सर्वं प्रयाजसम्बद्धा एकादशत्वसङ्ख्येति।

एतदभिप्रेत्याह सङ्ख्येति। 'सङ्ख्या' एकादशत्वरूपा—'प्रयाजानाम्' पञ्चानाम्,—'वृन्दस्य' समूहस्य—सम्बद्धा भवति—आवृत्त्येति भावः ॥ १ ॥

(२) ५।३।२ स्वस्थानेषूपसत्ततिः।

(१) पूर्वाधिकरणापवादः।

(२) अग्नौ श्रूयते—'षडुपसदः' इति। चोदकप्राप्तास्तु तिस्र एवोपसदः।

(३) तत्र सन्देहः—तिसृणामुपसदां षट्सङ्ख्यापूरणं किं तासां सङ्कलितानामावृत्त्या भवति उत प्रत्येकमावृत्त्येति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन तिसृणां समूहस्यैवावृत्त्या षट्सङ्ख्या सम्पादनीयेति।

(५) सिद्धान्तः—एवं सति प्राकृतक्रमो बाध्येत। प्रकृतौ हि दीक्षानन्तरभाविनि दिने प्रथमोपसत्—ततोऽपरस्मिन् दिने द्वितीया—ततोऽप्यपरस्मिन् दिने तृतीया। एतासां समुदायस्यावृत्तिपक्षे उक्तदिनत्रयानन्तरमेव सा आवृत्तिः स्यात्। तथा च सति प्रथमायाश्चतुर्थीत्वं द्वितीयायाः पञ्चमत्वं तृतीयायाश्च षष्ठत्वमापतति। तस्मात् प्राकृतक्रमरक्षायै यस्मिन् दिने प्रथमा क्रियते तस्मिन्नेव दिने सा आवर्तनीया। एवमेव द्वितीयाऽपि स्वकीय एव दिने आवर्तनीया—तृतीया च तृतीये दिने। इत्येवं प्रत्येकं स्वस्थाने एव तासामावृत्तिः कार्येति।

एतदभिप्रेत्याह स्वेति। 'उपसदां'—'ततिः' वृद्धिरावृत्त्येति भावः—'स्वस्थानेषु' प्रत्येकं स्वस्वस्थाने-न तु समुदायरूपेण सर्वासामन्ते—कार्येति शेषः ॥ २ ॥

(३) ५।३।४–६ धाय्याशब्दोदिता मध्ये

(१) आवृत्त्या सङ्ख्यापूरणं विविच्य अनावृत्त्या सङ्ख्यापूरणं विविच्यते।

(२) दर्शपूर्णमासयोः सामिधेनीषु श्रूयते—'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति। पठितास्तु सामिधेन्य ऋच एकादशैव। तासां सङ्ख्याविवृद्धौ पञ्चदशत्वपूरणायाम्नातम् 'त्रिःप्रथमामन्वाह त्रिरुत्तमाम्' इति। एकविंशतित्वपूरणं च दशतयीपठितानां षण्णामृचामागमेन भवति।

(३) तत्र सन्देहः—आगन्तूनामेतासामृचां समावेशः कुत्र भवति किमेकादशानाम्मध्ये—उतान्ते इति।

( ४ ) पूर्वपक्षः—नारिष्टहोमन्यायेनागन्तूनामन्त एव निवेश उचित इति ।

( ५ ) सिद्धान्तः—धाय्यानाम्ना प्रसिद्धिरागन्तूनां सामिधेनीनाम् । धाय्यानां चान्तराले एव विधानम्—'इयं वै समिध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्या' इति । तस्मान्मध्य एव निवेश आगन्तूनामिति ।

एतदभिप्रेत्याह धाय्येति—'धाय्या' इति 'शब्देन' नाम्ना 'उदिताः' प्रसिद्धाः मन्त्राः—'मध्ये' एव पठनीयाः—नान्त इत्याशयः ॥

मूलानुसारेणेत्थमेवाधिकरणस्वरूपम् । भाष्यकारेण न्यायमालाकारेण च प्रकारान्तरेणापि व्याख्यातम् । तत्र च पूर्वपक्षः–'धाय्याशब्देन ख्यातानामागन्तुकमन्त्राणां मध्ये निवेशस्य विधानात् सर्व एवागन्तुकमन्त्रा मध्य एव निवेशनीयां इति । सिद्धान्तस्तु–येषाम्मन्त्राणां धाय्यानाम्ना प्रसिद्धिस्तेषां निवेशो मध्ये स्यादपि—किन्तु सर्वे एवागन्तुका न धाय्यानाम्ना प्रसिद्धाः । तस्मात् धाय्यातिरिक्तानामागन्तूनां पठितसामिधेनीनाम्मध्ये निवेशने सामिधेनीपाठक्रमो बाध्येत—तत्र च न प्रमाणं किमप्यस्ति । तस्मादागन्तूनामन्त एव निवेश इति ।

अस्मिंश्चाधिकरणस्वरूपे—'धाय्याशब्दोदिता एव मन्त्रा मध्ये निवेशनीयास्तदतिरिक्तानान्त्वागन्तुकानामन्त एव निवेश' इति मूलव्याख्या ॥ ३ ॥

(४) ५।३।७-१२ स्तोमेष्वागन्तूचोऽन्ततः ।

( १ ) क्रमविचारे पूर्वाधिकरणापवादः ।

( २ ) सन्ति विवृद्धस्तोमकाः क्रतवः-'एकविंशेनातिरात्रेण प्रजाकामं याजयेयुः—त्रिणवेनौजस्कामम्—त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति । प्रकृतौ बहिष्पवमानस्तोत्रे त्रय एव तृचाः भवन्ति । त्रिषु तृचेषु नवैव ऋक्सङ्ख्या । एकविंशतिसङ्ख्यापूरणाय च चत्वारस्तृचा आगमयितव्याः, त्रिणवसङ्ख्यापूरणाय षट् तृचाः, त्रयस्त्रिंशत्सङ्ख्यापूरणाय चाष्टौ तृचा इति ।

( ३ ) तत्र सन्देहः—एतेषामागन्तूनां तृचानां कुत्र निवेशः–किन्नवानाम्मध्ये उतान्ते इति ।

( ४ ) पूर्वपक्षः—आगन्तूनाम्मन्त्राणां प्राकृतमन्त्राणाम्मध्य एव निवेशः—द्वादशाहे तथैव दर्शनात् इति ।

( ५ ) सिद्धान्तः—द्वादशाहे तु मध्ये निवेशनं श्रुतिविहितम् । अतस्तद्बलेन क्लृप्तोऽपि प्राकृतः क्रमो बाध्यते । इह तु नोपलभ्यते तादृशी

श्रुतिः। तस्मादत्र क्लृप्तः प्राकृत एव क्रमो गृह्यते। तथा चागन्तूनामन्ते एव निवेश इति ।

एतदभिप्रेत्याह स्तोमेष्विति । 'स्तोमेषु' 'आगन्तवः ऋचः' 'अन्ततः' प्राकृतानामन्ते एव—निविशन्ते इति शेषः ॥ ४ ॥

## (५) ५।३।१३–१४ गायत्र्यादावृगावापः ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) पूर्वोदाहृत एव विवृद्धस्तोमेऽतिरात्रे उत्तरयोः पवमानयोः विवृद्धसङ्ख्यापूरणं सामगानेन भवति ।

( ३ ) तत्र सन्देहः—आगम्यमानानि सामानि कुत्र निविशन्ते-सर्वासामृचामन्ते उत मध्ये इति ।

( ४ ) पूर्वपक्षः—आगन्तूनामन्ते निवेश इति न्यायेनागन्तूनां साम्नामन्ते निवेश इति ।

( ५ ) सिद्धान्तः—'त्रीणि ह वा यज्ञस्योदराणि गायत्री बृहती अनुष्टुप् च-अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति विशेष आम्नायते । अस्यार्थः—स्तोमस्य विवृद्धये यः साम्न आवापः क्रियते यश्च तस्य ह्रासायोद्वापः क्रियते। तावुभावावापोद्वापौ गायत्र्यादिष्वेव नान्यत्रेति। द्वयोश्च पवमानयोर्द्वावेव तृचौ गायत्रीछन्दस्कौ–'उच्चा ते जातमन्धस' इत्येष माध्यन्दिनपवमानस्याद्यः तृचः, 'स्वादिष्ठया' इत्येषार्भवपवमानस्य। तथा चानयोरेवावापः। तस्माच्च मध्ये एव सामागमो नान्त इति ।

एतदभिप्रेत्याह गायत्रीति । 'गायत्र्यादौ' गायत्रीबृहत्यनुष्टुप्सु एव, न तु त्रिष्टुब्जगत्योः—'ऋगावापः' ऋचि स्तोमस्य विवृद्धये साम्न आगमः—न त्वन्ते इत्याशयः ॥ ५ ॥

## (६) ५।३।१५–१६ यागाग्न्यर्था ग्रहेष्टकाः ।

(१) आवृत्तिविचारः ।

(२) अनारभ्य श्रूयते—'योऽदाभ्यं गृहीत्वा सोमाय यजते' इति–अत्रादाभ्यग्रह आम्नातः । तथा 'इष्टकाश्चित्रिणीरुपदधाति' इतीष्टका आम्नाताः ।

(३) तत्र सन्देहः—अत्रोक्तो ग्रहः किं सवनशेष उत यागशेषः—तथा च इष्टका किं चितिशेष उताग्निशेष इति ।

(४) पूर्वपक्षः—ग्रहाणां सवननिष्पादकत्वं प्रत्यक्षदृष्टम् । तथा चादाभ्यग्रहस्यापि सवनाङ्गत्वम् । एवं च प्रतिसवनमदाभ्यग्रह आवर्तनीयः । इष्टकाभिश्च प्रत्यक्षं चितिनिष्पत्तिर्दृश्यते । तथा च चित्रिणीनामपीष्टकानां

चित्यङ्गत्वम् । एवं च प्रतिचयनं चित्रिणीनामावृत्तिरिति ।

(५) सिद्धान्तः—सोमयाग एव फलवत्, न सवनम् । तथैवाग्निः फलोपेतो न तु चितिः । अनारभ्याधीतस्य च वाक्यात् फलवत्येव सम्बधो युक्तः । तस्मात् ग्रहस्य यागाङ्गत्वम् इष्टकानां चाग्न्यङ्गत्वम् । तथाच सति नैवावृत्तिरिति ।

एतदभिप्रेत्याह यागेति । 'ग्रहश्च' 'इष्टकाश्च'—'यागश्च' 'अग्निश्च' इति यागाग्नी-यागाग्नी अर्थौ प्रयोजनं यासां तास्तथाभूताः—यागाग्निशेषभूता-भवन्ति । क्रमिकश्चात्रान्वयः । एवं च ग्रहो यागार्थः यागस्य शेषः—इष्टकाश्च अग्न्यर्थाः अग्नेः शेष इत्यर्थः पर्यवसितः ॥ ६ ॥

## (७) ५।३। १७–१९ चित्रिण्याद्या मध्यचितौ

(१) पूर्वाधिकरणशेषो विचारः क्रमविचारसम्बद्धः ।

(२) 'चित्रिणीरुपदधाती'ति श्रुतं चित्रिण्या उपधानम् ।

(३) तत्र सन्देहः—पञ्चानां चितीनां कस्यां चिति चित्रिण्य उपधातव्या इति ।

(४) पूर्वपक्षः—अन्तिमायां पञ्चम्यामेव चितौ अनारभ्याधीतानां चित्रिणीनामुपधानं युक्तम् । तथा सति क्लृप्तक्रमाणाम्प्रकरणाधीतानामिष्टकानामुपधानक्रमो न बाध्येत इति ।

(५) सिद्धान्तः—'यां कां च ब्राह्मणवतीमिष्टकामभिजानीयात् ताम्मध्यमायां चितौ' इति वाक्येन—अनारभ्याधीतब्राह्मणविहितानामिष्टकानां मध्यमचितावेवोपधानम् ।

एतदभिप्रेत्याह—चित्रिणीति । 'चित्रिणी' 'आद्या' प्रथमा यासां तास्तथाभूता इष्टकाः—'मध्यचितौ' मध्यमायामेव चितौ—'उपधातव्याः' इति शेषः ॥ ७ ॥

## (८) ५।३।२० ताः प्राग्लोकम्पृणान्वयात् ।

(१) क्रमविचारः—पूर्वाधिकरणसम्बद्धः ।

(२) 'चित्रिणीरुपदधाति' इति श्रुतम् । तच्चोपधानं मध्यमायां चितौ भवतीति स्थितम्पूर्वाधिकरणे । मध्यमायां चितावुपहितानाम्मध्ये ऽन्तिमा लोकम्पृणा नाम्नी इष्टका भवति ।

[ लोकम्पृण इति मन्त्रेणोपहितत्वात्तस्यास्तन्नाम ]

(३) तत्र सन्देहः—यच्चित्रिण्या उपधानं तत् किं लोकम्पृणाया उपधानात् प्रागुत पश्चात् इति ।

(४) पूर्वपक्षः–आगन्तूनामन्ते निवेश इति न्यायेन प्राकरणिकाया अन्तिमेष्टकाया लोकम्पृणाया उपधानस्यान्ते एवोपधानं चित्रिण्या भवतीति ।

(५) सिद्धान्तः—अनुष्ठिते कर्मणि न्यूनत्वादिदोषसमाधानेन सम्पूर्तिहेतुत्वं लोकम्पृणेष्टकाया ब्राह्मणवाक्येनावगतम्—'यदेवास्योनं यच्छिद्रन्तदेतया पूरयति लोकम्पृण छिद्रं पृण' इति। एवं यद्येतस्या उपधानादनन्तरं चित्रिण्युपधानं क्रियेत तर्हि चित्रिणीगतं न्यूनत्वादिकमसमाहितमेव स्यात्। तस्मात् लोकम्पृणातः पूर्वमेव चित्रिण्युपधानमिति ।

एतदभिप्रेत्याह—ता इति। 'ता' चित्रिणीष्टकाः—'लोकम्पृणायाः' तन्नाम्न्या इष्टकायाः 'अन्वयात्' सम्बन्धात् उपधानात्—'प्राक्' एव—उपधातव्या इति शेषः ॥ ८ ॥

## (९) ५।३।२१–२५ सपावमानेऽग्नौ कर्म

(१) क्रमविचारो वर्तते ।

(२) अग्न्याधानाङ्गभूताः पवमानेष्टयः आधानद्वादशदिनानन्तरं क्रियन्ते—'द्वादशसु रात्रिष्वनुनिर्वपेत्' इति तस्या इष्टेः कालविधानात् । सन्ति च नियतानि कर्तव्यानि अग्निहोत्रादीनि ।

( ३ ) तत्र सन्देहः—किम्पवमानेष्टिं समाप्य तदनन्तरमग्निहोत्रादीनि कर्तव्यानि उत आहितमात्रेष्वग्निषु पवमानेष्टेः प्रागपीति ।

( ४ ) पूर्वपक्षः—आधानमात्रेण निष्पन्ने आहवनीयेऽग्नौ तस्मिन्नेवाग्निहोत्रादीनि कर्तव्यानि पवमानेष्टेः प्रागपि-इति ।

( ५ ) सिद्धान्तः—पवमानेष्टिनिरपेक्षेणाधानमात्रेण न सम्पद्यते आहवनीयाग्निः। उक्तेष्टिमन्तरेणाप्याहवनीयो यदि निष्पद्येत तर्हि सेष्टिर्व्यर्था स्यात्। आधानमुपजीव्यैव च तस्मादुत्तरकाले पवमानेष्टिर्विधीयते। अतः पवमानेष्टिसमुच्चितस्यैवाधानस्याहवनीयाग्न्युत्पादकत्वम्। तस्मात् पवमानेष्टिभिः संस्कृते एवाग्नावग्निहोत्रादीन्यनुष्ठेयानीति ।

एतदभिप्रेत्याह सपावमान इति—'सपावमाने' पावमानेष्टिसंस्कृते एव—'अग्नौ' आहवनीये—'कर्म' अग्निहोत्रादि—अनुष्ठेयमिति शेषः॥९॥

## (१०) ५।३।२६–२८ यागे पूर्णेऽग्निचिद्व्रतम् ।

( १ ) क्रमविचारः ।

( २ ) इदमाम्नायते—'अग्निचिद् वर्षति—न धावेन्न स्त्रियमुपेयात्—तस्मादग्निचिता न पक्षिणोऽशितव्या' इत्याद्यग्निचिद्व्रतं श्रूयते ।

( ३ ) तत्र सन्देहः—किमेतद् व्रतमग्निचयनसमनन्तरमेवानुष्ठेयमुताचितेऽग्नौ यागानुष्ठानादनन्तरमिति ।

( ४ ) पूर्वपक्षः—चितौ निष्पन्नायां तदनन्तरं व्रतानुष्ठाने विलम्बो नोचितः। अतश्चयनान्तरमेव व्रतमनुष्ठेयं न क्रत्वनुष्ठानमपेक्षणीयम्।

अग्निचित्पदेन चयनमात्रं व्रते निमित्तमुक्तम् । न हि सति निमित्ते नैमित्तिकस्य विलम्बो युज्यत इति ।

( ५ ) सिद्धान्तः—क्रत्वनुष्ठानायैवाग्निश्चयनेन संस्क्रियते । न चानिष्पन्ने क्रतौ चयनसंस्कारः सफलो भवति । तस्मात् क्रतौ सम्पन्ने एव चयनस्य याथार्थ्येन सम्पत्तिः । तत्सम्पत्त्यनन्तरं चानुष्ठातुरग्निचित्त्वम्-ततश्चास्याग्निचिद्व्रते ऽधिकारः । तस्मात् क्रत्वन्ते व्रतानुष्ठानमिति ।

एतदभिप्रेत्याह—याग इति । 'यागे पूर्णे' सम्पन्ने सति चयनसंस्कृताग्नौ यागानुष्ठानानन्तरमेव—'अग्निचिद्व्रतम्' अनुष्ठेयम्—न तु चयनमात्रे सम्पन्ने इत्याशयः ॥ १० ॥

## (११) ५।३।२९-३१ दीक्षितो दक्षिणीयान्ते

( १ ) क्रमविचारः आवृत्तिपरकः ।

( २ ) ज्योतिष्टोमे श्रूयते—'अग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः' इति । अन्यदपि श्रूयते—'दण्डेन दीक्षयति—मेखलया दीक्षयति—कृष्णाजिनेन दीक्षयति' इति ।

( ३ ) तत्र सन्देहः—किं सर्वैरेभिर्दीक्षणैर्दीक्षितत्वं सम्पद्यते—उत केवलमेकयैव दीक्षणीयेष्ट्येति ।

( ४ ) पूर्वपक्षः—इष्टिवद् दण्डादीनामपि दीक्षितत्वसाधनत्वाभिधानात् सर्वाणि दीक्षणान्यपेक्षितानि दीक्षितत्वसिद्धाविति ।

( ५ ) सिद्धान्तः—पुरुषसंस्कारकत्वेनैव दीक्षाया उपयोगः । संस्कारकत्वं च कर्मरूपाया इष्टेरेव, न द्रव्यरूपाणां दण्डादीनाम् । तस्माद्दीक्षासिद्धिर्दीक्षामात्रेणेति ।

एतदभिप्रेत्याह दीक्षित इति । 'दीक्षणीयायाः' इष्टेः—'अन्ते' सम्पत्तौ—'दीक्षितः' दीक्षासंस्कारयुक्तो भवति पुरुष इति ॥ ११ ॥

## (१२) ५।३।३२-३६ काम्ययागेषु न क्रमः ।

( १ ) क्रमविचारः ।

( २ ) भवन्ति काम्या यागाः—'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम' इत्यादयः ।

( ३ ) तत्र सन्देहः—किं येन क्रमेणाम्नातास्तेनैव क्रमेणानुष्ठेयाः काम्ययागा उत नियतक्रमं विनैवेति ।

( ४ ) पूर्वपक्षः—पाठस्य क्रमहेतुत्वात् पठितक्रमेणैवानुष्ठानमिति ।

( ५ ) सिद्धान्तः—एकप्रयोगाभावेन परस्पराकाङ्क्षाभावात् यदा काम उत्पद्यते तदैव काम्यस्य कर्मणोऽनुष्ठानम् । नाश्रयणीयस्तत्र कोऽपि क्रम इति ।

एतदभिप्रेत्याह काम्येति । 'काम्ययागेषु' 'क्रमः' अनुष्ठानपौर्वापर्य-रूपः 'न' आश्रयणीय इति शेषः ॥ १२ ॥

## (१३) ५।३।३७-३८ अग्निष्टोमस्त्वेतदर्थः

( १ ) क्रमविचारः ।

( २ ) ज्योतिष्टोमे श्रूयते—'एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः-य एतेनानिष्ट्वाऽथान्येन यजेत गर्तपत्यमेव हि तज्जीयेत प्रवा मीयेत' इति ।

( ३ ) तत्र सन्देहः—'य एतेन' इत्यनेन किं कर्म उच्यते—किं सर्व-संस्थो ज्योतिष्टोमः सकलः उत तस्याग्निष्टोमसंस्थामात्रमिति ।

( ४ ) पूर्वपक्षः—सप्तानां ज्योतिष्टोमसंस्थानां काम्यैकामनुपन्य-स्य 'एतेन' इति सामान्यनिर्देशात् प्रकृतः पूर्ववाक्योक्तः सकलः सर्वसं-स्थोपेतो ज्योतिष्टोमः परामृश्यते । तस्मात् सकलं ज्योतिष्टोमं समाप्यैव यागान्तरमनुष्ठेयमिति वाक्यार्थः—इति ।

( ५ ) सिद्धान्तः—अग्निष्टोमसंस्थैव ज्योतिष्टोमस्य नैजं रूपम् । अग्निष्टोमस्यैव नित्यत्वात् । अतः प्रकरणमेतदग्निष्टोमस्यैव । तस्माच्च एतच्छब्देन स एव परामृश्यते । संस्थान्तराणां काम्यत्वेनानित्यता । त-तश्च न तद्रूपत्वं नित्यस्य ज्योतिष्टोमस्य युक्तम् । तस्मात् अग्निष्टोम एव तत् कर्म यस्यानुष्ठानं विना यागान्तरं नानुष्ठेयमिति ।

एतदभिप्रेत्याह अग्निष्टोम इति । 'एतदर्थः' एतेनेत्यत्र एतच्छब्देन परामृष्टः—'अग्निष्टोमः' एव, न तु ज्योतिष्टोमस्य संस्थान्तराणी-त्याशयः ॥ १३ ॥

## (१४) ५।३।३९-४२ ऽथान्येनेत्यखिलः क्रतुः ।

( १ ) पूर्वाधिकरणशेष एव विचारः ।

( २ ) पूर्वोदाहृतमेवात्रापि विषयवाक्यम् ।

( ३ ) सन्देहान्तरं च तत्र—अथान्येनेत्यत्रान्यपदेन किं परामृश्यते-किं ज्योतिष्टोमस्य संस्थान्तराणि उत तानि सोमविकृतिरूपाण्य-न्यानि चेति ।

( ४ ) पूर्वपक्षः—सन्निधानात् अग्निष्टोमसजातीयानां संस्थान्तराणा-मेवात्र परामर्श इति ।

( ५ ) सिद्धान्तः—'यज्ञानां प्रथमो यज्ञ' इति सर्वयज्ञप्रतियोगिकं प्राथम्यमुक्तम् । तस्मात् अन्येनेतिपदेन सर्वे एव यागाः—ज्योतिष्टोम-स्य संस्थान्तराणि एकाहाहीनसत्ररूपाः सोमविकृतियागाश्च—परामृ-श्यन्ते । तस्मादग्निष्टोमानुष्ठानानन्तरमेव सर्वे एतेऽनुष्ठेया इति ।

अयं च नियमः सोमविकृतिष्वेव नेष्टिपशुरूपयागान्तरेषु इति लिङ्गाद् गम्यते—'प्रजापतिर्वा अग्निष्टोमः स उत्तरानेकाहान्तानसृजत्—तेभ्यः स्वां तनुं प्रायच्छत्' इत्यनेन एकाहादीनामेवाग्निष्टोमप्रभवत्वं सूच्यते न यागान्तराणाम् ।

एतदभिप्रेत्याह—अथेति । 'अथान्येनेति' शब्देन—'अखिलः क्रतुः—सर्व एव यागाः ज्योतिष्टोमस्य षट् संस्थाः सोमविकृतयश्च—परामृश्यन्ते इति शेषः ॥ १४ ॥

## (१५) ५।३।४३–४४ स चैकानेकशस्तोमः

( १ ) पूर्वविचारशेषः ।

( २ ) पूर्वोदाहृतमेवात्रापि विषयवाक्यम् ।

( ३ ) सन्देहस्तु—अन्येनेत्ययं शब्दः किमेकस्तोमके क्रतौ वर्तते उत एकस्तोमके बहुस्तोमके चेति ।

( ४ ) पूर्वपक्षः—एकस्तोमके एव क्रतौ वर्ततेऽत्रान्यशब्दः—अर्थवादेन तथैवावगमात् । अग्निष्टोमे यस्त्रिवृत् स्तोमः स तं यज्ञं दीपयतीत्यर्थवादवाक्ये उपलभ्यते । तस्मादर्थवादात् एकस्तोमकानामेव बुद्धौ प्राप्तिः । अत एकस्तोमका एवान्यशब्देनोच्यन्ते इति ।

( ५ ) सिद्धान्तः—अग्निष्टोमप्रतियोगिकतया एकस्तोमबहुस्तोमसाधारण्येन श्रूयमाणस्यान्यशब्दस्य सङ्कोचे हेत्वभावात् सर्वविषयोऽन्यशब्द इति ।

एतदभिप्रेत्याह स चेति । 'एकानेकशस्तोमः' एकस्तोमकः अनेकस्तोमकः 'च' क्रतुः—'स' अन्येनेत्यत्रान्यशब्देन परामृष्ट इत्यर्थः ॥१५॥

न्यायाः पञ्चदशेरिताः ।

'पञ्चदश' 'न्यायाः' अधिकरणानि—'ईरिताः' उक्ताः—भाष्यकारेणास्मिन् पादे इति शेषः ॥

इति पञ्चमस्य तृतीयः ।

---

# अथ पञ्चमस्य चतुर्थः पादः ।

[क्रमनियामकश्रुत्यादिबलाबलविचारात्मकः]

## (१) ५।४।१ श्रुत्यर्थाभ्यामपाठबाधः क्रमेषु

( १ ) क्रमबोधकेषु बलाबलविचारः ।

( २ )(अ)ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेषु आश्विनग्रहस्तृतीयस्थाने पठितः । तस्यैव दशमस्थानत्वं श्रुत्याऽऽम्नायते–'आश्विनो दशमो गृह्यते' इति ॥ (क) अग्निहोत्रानन्तरं यवागूपाकः पठितः अर्थवशात्तु अग्निहोत्रात्प्रागेव स प्राप्तः ॥

( ३ ) उभयथात्र सन्देहः—(अ) आश्विनग्रहस्य कः क्रमोऽभ्युपेयः—किं पाठानुरोधात् तृतीयस्थानं तस्योत श्रुत्यनुरोधाद् दशममिति । (क) तथैव यवागूपाकस्य कः क्रमः-किं पाठवशात् सोऽग्निहोत्रानन्तरं कर्तव्य उतार्थवशात् तस्मात् प्रागिति ।

( ४ ) पूर्वपक्षः—श्रुतिपाठयोरर्थपाठयोश्च समबलत्वादुभयत्रात्रच्छिको विकल्प इति ।

( ५ ) सिद्धान्तः—(अ)पाठो न क्रममभिधत्ते—केवलमन्यथानुपपत्त्या क्रमस्य कल्पने मूलं भवति । श्रुतिस्तु साक्षात् क्रममभिधत्ते । तस्मात् श्रुतिः पाठाद् बलवत्तरा । एवं चाश्विनस्य दशममेव स्थानमिति । (क)अर्थपाठयोर्मध्येऽपि पाठः क्रमं कल्पयन् वस्तुसामर्थ्यमनुसरन्नेव तं कल्पयति । असमर्थं तु यवागूपाकात् पूर्वमग्निहोत्रमनुष्ठातुम्—द्रव्यमन्तरेण होमस्यासम्भवात् । एवं चार्थपाठयोरुपजीव्योपजीवकभावे सिद्धेऽर्थः पाठाद् बलवत्तरः । तस्मात् यवागूपाकादनन्तरमेवाग्निहोत्रानुष्ठानमिति ।

एतदभिप्रेत्याह श्रुतीति । 'क्रमेषु' क्रमविषयकसंशये—'श्रुत्यर्थाभ्याम्' श्रुत्या अर्थेन च—'पाठस्य' 'बाधः'—तथा पाठापेक्षया श्रुतेरर्थस्य च प्राबल्यमित्याशयः ॥ १ ॥

## (२) ५।४।२–४ प्राक्सुख्यं न प्रवृत्तिर्विरोधे ।

( १ ) बलाबलविचारोऽनुवर्तते ।

( २ ) दर्शपूर्णमासयोः पूर्वं दध्नो धर्मा आम्नाता अवदानादयः पश्चादाग्नेयस्य । प्रदानं तु आग्नेयस्यैव पूर्वम् ।

( ३ ) तत्र सन्देहः—किं प्रावृत्तिकेन क्रमेण पूर्वं दध्नोऽवदानादयः उत मुख्यक्रमेणाग्नेयस्यैव पूर्वमिति ।

(४) पूर्वपक्षः-प्रावृत्तिकक्रमेणावदानादिर्दध्न एव पूर्वं कार्यं इति।

(५) सिद्धान्तः—यस्य प्रदानं पूर्वं तस्यैवावदानादिः पूर्वं कार्यः। फलप्रत्यासत्त्या प्रदानमेव मुख्यम् अवदानादिकं तु तदङ्गम्। तथा-सति मुख्यस्य क्रममनुसृत्यावदानादिकमप्याग्नेये पूर्वं कर्तव्यम्। मुख्य-क्रमो हि प्रावृत्तिकक्रमाद्बलवत्तरः। अन्यथाकरणे तु दध्नोऽवदा-नादि-तत आग्नेयस्यावदानादि—तत आग्नेयस्य प्रदानम्—ततो दध्नः प्रदानम् इति क्रमः स्यात्। तत्र च दध्नोऽवदानादेः प्रदानस्य च मध्ये महद्व्यवधानं स्यात्। मुख्यक्रमाश्रयणे तु आग्नेयस्यावदानादि-तत-स्तस्य प्रदानम्-ततो दध्नोऽवदानादि—ततो दध्नः प्रदानमिति न क-स्याप्यङ्गविप्रकर्ष इति।

एतदभिप्रेत्याह-ग्राह्यमिति। 'विरोधे' प्रवृत्तिक्रममुख्यक्रमयोर्विरो-धे 'मुख्यम्' मुख्यक्रम एव—'ग्राह्यम्' बलवत्तरत्वेनेति शेषः॥ २॥

(३) ५।४।५-६ इष्टिं कृत्वा सोमयागन्न कुर्यात्

(४) ५।४।५-६ यद्वा सोमः पूर्वमिष्टेरपि स्यात्।

(१) क्रमविरोधविचारः।

(२) स्तो दर्शपूर्णमासौ इष्टियागौ—अस्ति च ज्योतिष्टो-मः सोमयागः।

(३) तत्र सन्देहः—इष्टिसोमयागयोः कः क्रमः—किमादाविष्टिः पश्चात् सोम उत व्यत्यय इति

(४) पूर्वपक्षः—'दर्शपूर्णमासाविष्ट्वा सोमेन यजेत' इति स्पष्टं श्रुत्या क्रमस्याभिधानात् प्रथममिष्टिः कार्या ततः सोमयाग इति।

(५) सिद्धान्तः—'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इति श्रुतिः अग्न्याधानादनन्तरमेव सोमयागस्य कर्तव्यत्वं वक्ति। अत्र च यदान-न्तर्यमुच्यते तद् व्यवधानं न सहते। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र तु पौर्वापर्यमात्रमुक्तं नानन्तर्यम्। तस्मात् सोमेनेति श्रुति-बलात् सोमयागस्यैव पूर्वमनुष्ठानम् नेष्टेरिति।

एतदभिप्रेत्याह इष्टिमिति। 'इष्टिं' इष्टियागं 'कृत्वा' तत्पश्चात् 'सोमयागं' 'न' कुर्यात्—अपि त्विष्टेः प्रागेवेत्याशयः॥ ३॥

उभयोरपि क्रमयोः श्रौतत्वेन नात्र बलाबलमिति मनसि कृत्वा पूर्वापारौ सिद्धान्ते ऽरुचिं प्रदर्शयन् सिद्धान्तस्य स्वरूपान्तरमाह यद्वे-ति। 'यद्वा' अथवा—'इष्टेः' 'पूर्वम्' 'अपि'—न तु पश्चादेव—सोमः 'स्यात्'। दर्शपूर्णमासाविष्ट्वेत्यनेन इष्टेः प्रागनुष्ठेयता सोमेन यक्ष्य-

माण इत्यनेन च सोमस्य प्रागनुष्ठेयता—इत्युभयोः क्रमयोर्विकल्प एवा-स्थेयः । दर्शपूर्णमासाविष्ट्वेति वाक्येनेष्टेरनन्तरमेव सोमस्य कर्तव्यत्व-मुच्यते—किन्तु तदेव नैकान्तिकम्—वाक्यान्तरेण इष्टेः पूर्वमपि सोमः कर्तव्यो भवत्येव । अत ऐच्छिको विकल्प एवात्रेति ॥ ४ ॥

(५) ५।४।१०–१४ एतौ पक्षौ क्षत्रविड्ब्राह्मणानाम्

(१) पूर्वाधिकरणशेषः ।

(२) पूर्वोदाहृत एवात्र विषयः । इष्टिसोमयोः क्रमे ऽनियम इति स्थितम् ।

(३) तत्र सन्देहान्तरम्—इष्टिसोमयोः क्रमे योऽनियम उक्तः स किं त्रयाणामपि वर्णानामुत द्वयोरेव न ब्राह्मणस्येति ।

(४) पूर्वपक्षः—विट्क्षत्रिययोरेवानियमः । ब्राह्मणस्य तु सोमपूर्व-त्वमेव नियतम्, उत्कर्षश्रवणात्—'आग्नेयो वै ब्राह्मणो देवतया—स सोमेनेष्ट्वाऽग्नीषोमीयो भवति—यदेवादः पौर्णमासं हविः तत् तर्ह्यनुनि-र्वपेत्–तर्ह्युभयदेवतो भवति' इति । अत्र दर्शपूर्णमासयोः सोमादूर्ध्व-मुत्कर्ष उच्यते ब्राह्मणविषये । तस्माद् ब्राह्मणस्य सोमपूर्वत्वमेव नियतमिति ।

(५) सिद्धान्तः—आग्नेय इत्यादिवाक्ये दर्शपूर्णमासयागो नोक्तो नाम्ना । एकमेव हविरत्रोच्यते—तेन चाग्नीषोमीयपुरोडाशमात्रे ब्राह्म-णस्य सोमपूर्वत्वमनेन वाक्येनोच्यते । तस्मात्पूर्वाधिकरणन्यायस्य वर्ण-त्रयसाधारण्ये स्थिते वर्णत्रयेऽप्यनियम एव क्रमस्येति ।

एतदभिप्रेत्याह—'एतौ पक्षौ' यौ द्वौ सिद्धान्तौ पूर्वाधिकरणे उक्तौ तौ—'क्षत्रविड्ब्राह्मणानाम्' वैश्यक्षत्रियब्राह्मणानां त्रयाणामेव वर्णा-नाम्—न विट्क्षत्रिययोरेव । वृत्तानुरोधात् जात्यभिधाने क्रमव्य-तिक्रमः ॥ ५ ॥

(६) ५।४।१५–१८ सोमाधाने सोमकालस्य बाधः ।

(१) क्रमे विचारविशेषः ।

(२) 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं स प्रतीक्षेत न नक्ष-त्रम्' इति ऋतुनक्षत्रपरीक्षणं निषिद्धम् ।

(३) तत्र सन्देहः—अयं कालविशेषबाधः किमाधानस्योत सोमस्येति ।

(४) पूर्वपक्षः—आधानस्यैव कालबाधः । आधानकालविधावेवो-क्तम् 'वसन्तेऽग्नीनादधीत—कृत्तिकास्वग्निमादधीत' इति ऋतुनक्षत्रावेक्ष-

णम् । अङ्गश्चाधानम् । तस्मात् तस्यैव कालबाधो न्याय्यो न तु प्रधानस्य सोमस्येति ।

(५) सिद्धान्तः—सोमसम्बधिन आधानस्य विषये वसन्तकृत्तिकाद्युपलक्षितः कालः शास्त्रान्तरेणैव बाधितपूर्वः । 'यदैवैनं यज्ञमुपनमेदथादधीत' इति सोमयागचिकीर्षया आधानस्य काल उपदिष्टः ऋतुनक्षत्रादिनिरपेक्ष एव । तस्मादुदाहृतवाक्ये य ऋतुनक्षत्रपरीक्षणनिषेधस्तेन सोमकालस्यैव बाध इति ।

एतदभिप्रेत्याह—सोमाधान इति । 'सोमाधाने' सोमयागचिकीर्षया य आधानः क्रियते तस्मिन्—यदृतुनक्षत्रेक्षणनिषेधनं तेन—'सोमकालस्य' एव 'बाधः' न त्वाधानस्येति शेषः ॥ ६ ॥

## (७) ५।४।१९–२१ उत्कृष्टव्यः स्यात् पुरोडाश एव

(१) क्रमविशेषविचारः ।

(२) 'आग्नेयो वै ब्राह्मणो देवतया' इत्यादिना चतुर्थाधिकरणविचारप्रस्तावे उद्धृतेन वाक्येन अग्नीषोमीयस्य पुरोडाशस्य सोमादूर्ध्वमुत्कर्ष उक्तः । भवति चाग्नीषोमीयस्याज्यमपि ।

(३) तत्र सन्देहः—किम्पुरोडाशवदाज्यस्याप्युत्कर्षो न वेति ।

(४) पूर्वपक्षः—अग्नीषोमीयसम्बन्धस्योभयत्रापि तुल्यत्वात् पुरोडाशवदाज्यस्याप्युत्कर्ष इति ।

(५) सिद्धान्तः-मिश्रदेवतं हि आज्यम्—अग्नीषोमीयं प्राजापत्यं वैष्णवं चेति । पुरोडाशस्त्वेकदेवतः अग्नीषोमीय एव । उदाहृते च वाक्ये एकदेवतस्याभिधानम्। यथा चैन्द्राग्नं द्रव्यं न शक्यते आग्नेयमिति वदितुं तथा त्रिदेवतमाज्यं न शक्यते अग्नीषोमीयमिति वदितुम् । तस्मादुक्तवाक्येन सोमात् प्राक् अग्नीषोमीयस्यैवाकर्तव्यत्वमुच्यते अग्नीषोमीयत्वं च पुरोडाशस्यैव । आज्येन प्रजापतेः विष्णोर्वा यजनं न निषिध्यते । तस्मात् सोमात् प्रागप्याज्येन यजितं शक्यम् । ततश्च नाज्यस्य सोमादूर्ध्वमुत्कर्ष इति ।

एतदभिप्रेत्याह—उत्कृष्टव्य इति । अग्नीषोमीयः 'पुरोडाश' एव 'उत्कृष्टव्यः'-सोमादूर्ध्वमिति शेषः-न त्वाज्यमप्युत्कृष्टव्यमिति भावः॥७॥

## (८) ५।४।२२–२४ द्वैदिन्यं स्यान्नेष्टिधर्मो विकारे ।

(१) क्रमे विचारविशेषः—

(२) 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति इष्टिविकाराः । इष्टिप्रकृतिश्च द्व्यहकालः-'पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवतां यजेत' इति स्पष्टविधानात् ।

(३) तत्र सन्देहः—किं वैकृतानामपि द्व्यहकालतोतैकाहकालतेति ।

(४) पूर्वपक्षः—प्रकृतौ द्व्यहकालत्वं दृष्टम् । प्रकृतिधर्माणां च विकृतावतिदेशः । तस्माद् वैकृतानामपि द्व्यहकालतेति ।

(५) सिद्धान्तः—एकाहकालत्वं स्पष्टमुक्तं श्रुत्या—'इष्ट्या पशुना सोमेन वा यक्ष्यमाणः पौर्णमास्याममावास्यायां वा यजेत' इति । अत्र साङ्गस्य पौर्णमासीयागस्यैकाहनिर्वर्त्यत्वमुच्यते । अनेन चोक्ता वैकृतानामेकाहकालताऽतिदिष्टद्व्यहकालतां बाधते इति ।

एतदभिप्रेत्याह—द्वैदिन्यमिति । 'इष्टिधर्मः' इष्टिप्रकृतिगतो धर्मः'—'द्वैदिन्यम्' द्व्यहकालत्वम्—'विकारे' विकृतियागे—'न' 'स्यात्' अतिदिष्टतया न प्राप्नोतीत्यर्थः ॥ ८ ॥

## (९) ५।४।२५ सोमोर्ध्वं सान्नाय्यधर्मा विकारः

(१) क्रमविचारविशेषः ।

(२) 'वैश्वदेव्यामिक्षा' इत्यादिः सान्नाय्यविकारः—'अग्नीषोमीयमेकादशकपालम्' इत्यादिरग्नीषोमीयपुरोडाशविकारः ।

(३) तत्र सन्देहः—किमेते विकाराः सोमादूर्ध्वमेवोत प्रागूर्ध्वं चेति ।

(४) पूर्वपक्षः—सोमात्प्रागूर्ध्वं वा यथेच्छमनुष्ठानं विकाराणाम्—विशेषनियामकस्याभावादिति ।

(५) सिद्धान्तः—'नासोमयाजी सन्नयेत्' इति निषेधेन सान्नाय्यं नियमेन सोमादूर्ध्वमुत्कृष्यते । अग्नीषोमीयपुरोडाशस्य चोत्कर्षः पूर्वमेव चतुर्थाधिकरणे दर्शितः । तस्मात् सान्नायाग्नीषोमीययोर्विकारा अपि सोमादूर्ध्वमेवानुष्ठेया इति ।

एतदभिप्रेत्याह—सोमोर्ध्वमिति । 'सान्नाय्यधर्मा' सान्नाय्यस्य धर्म इव धर्मो यस्य स एवम्भूतः—'विकारः' सान्नाय्यविकार इति यावत्—'सोमाद्' 'ऊर्ध्वम्' एव अनुष्ठेय इति शेषः—न कदाचिदपि प्रागित्याशयः ॥ ९ ॥

## (१०) ५।४।२६ इष्टेः पश्चात् सोमधर्मा विकारः ।

(१) क्रमविचारो वर्तते ।

(२) 'गवा यजेत' इत्यादिना गवादिनामकाः सोमविकारा एकाहा आम्नाताः ।

(३) तत्र सन्देहः—इष्टिसोमयोः पौर्वापर्यविकल्पः स्थितस्तृतीयेऽधिकरणे । अयमेव विकल्पः किं सोमविकारेष्वपि उत भवति तत्र नियम इति ।

(४) पूर्वपक्षः—प्रकृतिवद्विकृतिरिति न्यायेन-यथा सोमस्य इष्टिपूर्वत्वे विकल्पस्तथैव सोमविकाराणामपीति ।

(५) सिद्धान्तः—इष्टेः पूर्वं यत्सोमानुष्ठानं प्राप्नोति तन्न साक्षादुक्तमपि त्वर्थाक्षिप्तम् । तस्मात्तन्न शक्यते विकारेष्वतिदेष्टुम् । इष्टेः पश्चात्कर्तव्यत्वं तु सोमस्य साक्षादुक्तं 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र । अस्यैव चेष्ट्युत्तरकालीनताधर्मस्यातिदेशो विकारेषु । तस्मात् सोमविकारा इष्टेः पश्चादेवानुष्ठेया इति नियम इति ।

एतदभिप्रेत्याह इष्टेरिति । 'सोमधर्मा' 'विकारः' सोमस्य विकारः गवादियागः—'इष्टेः' 'पश्चात्'-एव अनुष्ठेय इति शेषः ॥ १० ॥

पादे तुर्ये पञ्चमस्येह सम्यक्
प्रोक्ता न्याया न्यायविद्भिर्दशैव ।

स्पष्टम् ।

इति पञ्चमस्य चतुर्थः ।

समाप्तः पञ्चमोऽध्यायः ।



# अथ षष्ठोऽध्यायः ॥

## अथ षष्ठस्य प्रथमः पादः ।

### [ अधिकारिविचारात्मकः ]

(१) ६।१।१-३ स्वर्गादिफलमिज्यादेः

(१) अनुष्ठानक्रमो निरूपितः। कोऽनुष्ठातेत्यधिकार इदानीं कर्मसु विचार्यते। अधिकारश्च कर्मसु तत्फलभोक्तृतयैवेति कर्मणां सफलत्वमेवादौ परीक्ष्यते। ( अधिकारन्यायः )

(२) 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र यागस्वर्गकामयोः सम्बन्धोऽवगम्यते ।

(३) तत्र सन्देहः—किमत्र प्रधानं-यागो वा स्वर्गो वा-अर्थात् किमत्र यागः साधनत्वेन सम्बध्यते उत साध्यत्वेनेति प्रधानः संशयः। तन्मूलत्वेन चापरः सन्देहः-स्वर्गः किं द्रव्यविशेषः उत सुखविशेषः। यदि स्वर्गो द्रव्यविशेषस्तर्हि स एव प्रधानं यागो गुणः ।

यागस्य प्राधान्यपक्षे स एव साध्यतयाऽन्वेति-ततश्च स्वर्गकामस्य पुरुषस्याधिकारोऽनेन वाक्येन नैवोच्यते-इत्येव स्यात् ।

(४) पूर्वपक्षः—स्वर्गो द्रव्यविशेषः लोके सुखसाधनद्रव्यपरत्वेन स्वर्गशब्दस्य प्रयोगदर्शनात्। अतः स्वर्गोयं गुणः साधनम्, यागः प्रधानं साध्यम्। तथा स्वर्गरूपेण द्रव्येण यागं साधयेदित्यर्थो वाक्यस्य पर्यवसितः। एवं च वाक्ये फलानभिधानेन तद्भोगाभावात् यजमानस्य यागे कर्तृत्वमेव, न त्वधिकारः-फलभोक्तृतया स्वामित्वमेव ह्यधिकारशब्दार्थः इति ।

(५) सिद्धान्तः—स्वर्गशब्दः सुखविशेषे रूढः द्रव्ये तु लाक्षणिक एव। यजेतेति पदमाख्यातत्वाकारेण भावनामाचष्टे विधित्वाकारेण च पुरुषं प्रवर्तयति। पुरुषश्च स्वाभिमतफलमन्तरेण न प्रवर्तते इति तदपेक्षितं स्वर्गमेव भाव्यतया उपादीयते। एवं च सुखविशेषस्य भाव्यत्वं विधिश्रुत्या सिद्धम्। कामशब्दयोगादपि स्वर्गस्यैव भाव्यत्वम्। तस्मात् स्वर्गरूपफलसम्भोगस्य सम्भाव्यमानत्वादस्त्येवात्र वाक्येऽधिकारप्रदर्शनं यजमानस्येति ।

एतदभिप्रेत्याह स्वर्गादीति। 'इज्यादेः' यागादेः कर्मणः साधनभू-

नस्य 'फलं' साध्यम्—'स्वर्गादि' स्वर्गपश्विन्द्रियादि—भवतीति स्वर्गादिकामस्यैव यजमानस्य तत्तत्कर्मण्यधिकार इति ॥ १ ॥

(२) ६।१।४–५ मनुष्योऽत्राधिकारभाक् ।

(१) अधिकारिविचारः ।

(२) 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्युक्तम् ।

(३) तत्र सन्देहः—अत्र विहिते कर्मणि कोऽधिकारी-यः कश्चन चेतनो जीवः स सर्व उत केवलं स एव यः समर्थ इति ।

(४) पूर्वपक्षः—स्वर्गकामोऽत्राधिकारीति स्थितम् । स्वर्गश्च सुखविशेषः सुखविशेषकामना च सर्वेषां जीवानां भवति । तस्मात् सर्वेषां जीवानामत्राधिकार इति ।

(५) सिद्धान्तः—दर्शपूर्णमासयागे भवन्ति बहून्यङ्गानि । तेषामननुष्ठानेऽङ्गविकलत्वात् यागो न फलं साधयेत् । एवं यः कश्चित् सकलमङ्गजातं सम्पादयितुं शक्नुयात् तेनैव यागः सम्पद्येत फलं च साधयेत् । न च मनुष्यातिरिक्तानां जीवानामस्ति शक्तिः कर्मानुष्ठाने । तस्मात् साङ्गकर्मानुष्ठानसमर्थस्य पुरुषस्यैवात्राधिकार इति ।

एतदभिप्रेत्याह मनुष्य इति । 'अत्र' स्वर्गादिफलके यागादौ–'मनुष्यः' न तु तिर्यगादयः—'अधिकारभाक्' अधिकारी भवतीति शेषः ॥२॥

(३) ६।१।६–१६ पत्नीनां चाधिकारोऽत्र

(१) अधिकारविचारः ।

(२) 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्युक्तम् ।

(३) तत्र सन्देहः—अत्र विहिते कर्मणि किं पुंसामेवाधिकार उत स्त्रीणामपीति ।

(४) पूर्वपक्षः—स्वर्गकाम इत्यत्र पुल्लिङ्गनिर्देशात् कर्मजन्यफलभोक्तृत्वरूपोऽधिकारः पुंस एवेति ।

(५) सिद्धान्तः—लिङ्गस्य प्रकृत्यर्थत्वाभावात् उद्देशगतत्वेनाविवक्षितत्वम् । तथा च स्वर्गकामपदबोधिताधिकारः स्त्रीपुरुषसाधारणः । तस्मात् स्त्रीणामप्यत्राधिकार इति ।

एतदभिप्रेत्याह पत्नीनामिति । 'अत्र' विधिबोधितकर्मणि–'पत्नीनां' स्त्रीणाम्—'च'–न केवलं पुंसाम्–'अधिकारः' फलभोक्तृत्वमनुष्ठातृत्वं च भवतीति शेषः ॥ ३ ॥

(४) ६।१।१७–२१ दम्पत्योश्च यजिः सह ।

(१) पूर्वाधिकरणशेषभूतो विचारः ।

(२) पुरुषवत् स्त्रियोऽपि यागानुष्ठानेऽधिकार इति स्थितम्।

(३) तत्र सन्देहः—किं पृथक् पत्नी यजेत पृथक् च तस्याः पतिः उतोभावपि सहैव यजेयातामिति।

(४) पूर्वपक्षः—'यजेत' इत्यत्रैकवचनस्य विवक्षितत्वात् एकैकस्य पृथगधिकारः। तस्मात् दम्पतीभ्यां पृथक् पृथगेव कर्मानुष्ठेयमिति।

(५) सिद्धान्तः—कर्मणि तत्र तत्र यजमानकर्तृकं तत्पत्नीकर्तृकं चाङ्गजातं विहितमुपलभ्यते। यथैकत्र पत्न्यवेक्षणमन्यत्र यजमानावेक्षणम्। यदि पृथक् कर्मानुष्ठीयेत तर्हि यजमानकर्तृके यागे पत्नीकर्तृकमङ्गं लुप्येत पत्नीकर्तृके च यागे यजमानकर्तृकं लुप्येत। एवं च कर्म विगुणं स्यात्। कर्मणो वैगुण्ये च फलं न सिध्येत। तस्मात् सहैवाधिकारो दम्पत्योः। न चैकवचनं विरुद्धम्। दम्पत्योरेकस्यैव कर्तृत्वस्याङ्गीकारात् इति।

एतदभिप्रेत्याह दम्पत्योरिति। 'दम्पत्योः' स्त्रीपुंसोः—'च' 'यजिः' यागः 'सह' सहैवानुष्ठेय इति शेषः ॥ ४ ॥

## (५) ६।१।२२-२३ वसानौ दम्पती प्रोक्तौ

(१) पूर्वाधिकरणशेषो विचारः।

(२) अस्त्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति। तत्रोक्तम् 'क्षौमे-वसानावग्निमादधीयाताम्' इति।

(३) तत्र सन्देहः—किमेकेन पुरुषेणेदमाधानं कार्यमुत द्वाभ्यामिति।

(४) पूर्वपक्षः—वसानावित्यत्र पुंल्लिङ्गद्विवचनोपलम्भात् द्वयोः पुरुषयोरत्राधिकारो नैकस्येति।

(५) सिद्धान्तः—क्षौमस्यैवात्र विधेयत्वात् पुन्द्वित्वमत्र न विधीयते। अपि तु दम्पत्योः सहाधिकारेण प्राप्तं द्वित्वमनूद्यते। तस्मादाधानेऽधि-कारिणः पुरुषस्यैकत्वमेवेति।

एतदभिप्रेत्याह—वसानाविति। 'दम्पती' सहाधिकारिणौ एव 'वसा-नौ' क्षौमे वसानौ इति 'प्रोक्तौ'-क्षौमे वसानाविति दम्पती उद्दिश्यैव प्रोक्त-म्—न पुरुषद्वयमुद्दिश्य—ततश्चैकस्यैव पुरुषस्याधिकार इत्याशयः ॥५॥

## (६) ६।१।२४ यावदुक्ताः स्त्रियः क्रियाः।

(१) दम्पत्योः सहाधिकारे विचारविशेषः।

(२) 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिविहितेषु यागेषु दम्पत्योः सहाधिकार इति स्थितम्।

(३) तत्र सन्देहः—किं यागान्तर्गतं सर्वं यजमानकर्तृकं कर्म स्त्रिया पुरुषेण च कर्तव्यमुत कानिचिदेव स्त्रिया कार्याण्यन्यानि सर्वाणि पुरुषेणैवेति।

(४) पूर्वपक्षः—उभयोः सहाधिकाराद् यथा पुरुषो यजमानस्तथा स्त्री अपि यजमाना—तथाच याजमानं सर्वं स्त्रियाऽपि कार्यमिति।

(५) सिद्धान्तः—यावदेव कर्म साक्षाच्छ्रुत्या पत्नीकर्तृकत्वेनोभयकर्तृकत्वेन वाऽऽम्नातं तावन्मात्रे एव स्त्रियाः कर्तृत्वमन्यत्र तु पुरुषस्यैवेति।

एतदभिप्रेत्याह—यावदिति। 'यावदुक्ताः' यावन्ति कर्माणि स्त्रीकर्तृकत्वेन स्पष्टमाम्नातानि तान्येव—'क्रियाः' कर्माणि—'स्त्रियः' स्त्रिया कार्या इति भावः॥ ६॥

## (७) ६।१।२५-३८ शूद्राधिकारी नेज्यादौ

(१) अधिकारविचारः।

(२) सन्त्यग्निहोत्रादीनि कर्माणि।

(३) तत्र सन्देहः—किमेतेषु कर्मसु चतुर्णामपि वर्णानामधिकारः उत शूद्रवर्जं त्रयाणामेवेति।

(४) पूर्वपक्षः—'स्वर्गकामो यजेत' इति साधारण्येन विधानम्। स्वर्गस्य च कमनीयत्वं चतुर्वर्णसाधारणम्। तस्माच्चतुर्णामेवाधिकार इति।

(५) सिद्धान्तः—यागानुष्ठाने या विद्याऽपेक्षिता सा त्रैवर्णिकस्यैव न शूद्रस्य। तस्मादपेक्षितविद्याभावात् न शूद्रस्य यागादावधिकार इति।

एतदभिप्रेत्याह—शूद्रेति। 'इज्यादौ' यागादौ कर्मणि—'शूद्राधिकारः' शूद्रस्य विद्यारहितस्य—'अधिकारः' 'न' अस्तीति शेषः॥ ७॥

## (८) ६।१।३९-४० अद्रव्योऽप्यधिकारवान्।

(१) अधिकारविचारो वर्तते।

(२) सन्त्यग्निहोत्रादीनि कर्माणि।

(३) तत्र सन्देहः—एतेषु कर्मसु निर्धनस्याधिकारो भवति न वेति।

(४) पूर्वपक्षः—यथा विद्याऽधिकारेऽपेक्षिता तथा धनमपि। तस्मात् उपयुक्तधनवत एव कर्मण्यधिकारो न निर्धनस्येति।

(५) सिद्धान्तः—विद्याध्ययनविधिरिव धनार्जनविधिर्नास्ति। एवं भोजनादिकर्मवत् यागस्यापि धनसम्पादनीयत्वात् धनार्जनमपेक्ष्यते। तस्मान्निर्धनोऽपि धनमर्जयित्वा भवत्येव यागेष्वधिकारी—इति।

एतदभिप्रेत्याह—अद्रव्य इति। 'अद्रव्यः' द्रव्यरहितः निर्धनः—'अपि' न केवलं धनी एव—'अधिकारवान्' अधिकारी—यागाद्यनुष्ठाने इति शेषः॥ ८॥

## (९) ६।१।४१ अङ्गहीनोऽप्यधिकृतः

( १ ) अधिकारविचारः ।

( २ ) अग्निहोत्रादीनि कर्माणि ।

( ३ ) तेषु सन्देहः—एतेषु कर्मसु अङ्गहीनोऽधिक्रियते न वेति ।

( ४ ) पूर्वपक्षः--नेत्रहीन आज्यावेक्षणं कर्तुमसमर्थः खञ्जः पादरहितो विष्णुक्रममनुष्ठातुमसमर्थः । अतोऽङ्गहीनो न कर्मस्वधिकारी इति ।

( ५ ) सिद्धान्तः--यथा धनहीनो धनमर्जयित्वाऽधिकारवान् भवति तथैव विकलाङ्गोपि चिकित्सया विकलमङ्गं समाधायाधिकारवान् भवति । तस्मादङ्गहीनत्वमात्रं नाधिकारविरोधीति ।

एतदभिप्रेत्याह--अङ्गेति । 'अङ्गहीनः' विकलाङ्गः--'अपि'--'अधिकृतः' अधिकारी भवति कर्मस्विति शेषः ॥ ९ ॥

## (१०) ६।१।४२ न त्वत्यन्ताङ्गहीनकः ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) पूर्वोदाहृतान्येव कर्माण्यत्रापि ।

( ३ ) सन्देहः—यस्याङ्गवैकल्यमप्रतिसमाधेयमेव सर्वथा स भवत्यधिकारी न वेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन तस्याप्यधिकार इति ।

( ५ ) सिद्धान्तः—अङ्गवैकल्यं चिकित्सादिना प्रतिसमाधायाधिकारः सम्पाद्यत इत्येव स्थितम् । यस्य त्वङ्गवैकल्यादिकं सर्वथाऽचिकित्स्यमेव--यथा जात्यन्धादौ- तस्याधिकारोऽसम्भव एव ।

एतदभिप्रेत्याह--न त्विति । 'अत्यन्ताङ्गहीनकः' यस्याङ्गवैकल्यमप्रतिसमाधेयं सः--'तु'--'न'--'अधिकृतः' इत्यनुषज्यते ।

[ काम्येष्वेवानधिकारोयं न नित्येष्विति नव्या माधवादयः ] ॥१०॥

## (११) ६।१।४३ विधिस्त्र्यार्षेयवरणे

( १ ) अधिकारविचारः ।

( २ ) दर्शपूर्णमासयोः 'आर्षेयं वृणीते' इति विधाय इदमाम्नातम्—एकं वृणीते-द्वौ वृणीते-त्रीन् वृणीते-न चतुरो वृणीते-न पञ्चापि वृणीते' इति । गोत्रप्रवर्तक ऋषिः 'आर्षेयः' तस्योच्चारणमत्र विहितम् । 'एकस्य ऋषेर्नामोल्लेखः—द्वयोः—त्रयाणाम्—न चतुर्णाम्—नापि पञ्चाधिकानाम्' इत्युक्तवाक्यस्यार्थः ॥

( ३ ) तत्र सन्देहः—यः त्र्यार्षेयो न भवति तस्याधिकारो न वेति ।

( ४ ) पूर्वपक्षः—'आर्षेयं वृणीते' इति सामान्याभिधानात् एकार्षेयस्य द्व्यार्षेयस्य त्र्यार्षेयस्येति सर्वेषां तुल्योऽधिकारः तथाच 'एकं वृणीते' इत्यादि त्रीण्यपि विधिवाक्यान्येवेति ।

(५) सिद्धान्तः—यो न त्र्यार्षेयस्तस्य नैवाधिकारः। तथा च 'त्रीन् वृणीते' इत्यस्यैवैकस्य विधित्वम्। 'एकं वृणीते—द्वौ वृणीते' इति वाक्यद्वयन्तु त्रिवरणस्य स्तावकमेव। तथैव च चतुःपञ्चाधिकवरण-निषेधवाक्यद्वयमपि। तस्मात् कर्मस्वधिकुर्वन् यजमानः त्रीनेवार्षेयानु-च्चारयेत्, न न्यूनं नाप्यधिकमिति।

एतदभिप्रेत्याह—विधिरिति। 'त्र्यार्षेयस्य' गोत्रत्रयस्यैव 'वरणे' उच्चारणे—'विधिः' त्रीन् वृणीते इत्येवंरूपः—अन्यच्च वाक्यजातं स्तावकमेवेति भावः॥ ११॥

(१२) ६।१।४४–५० त्रिवर्णो रथकृन्न हि।

(१) अधिकारविचारः।

(२) आधाने श्रूयते—'वर्षासु रथकारः आदधीत' इति।

(३) तत्र सन्देहः—किं त्रैवर्णिकानामन्यतमोऽत्र रथकार उतात्रै-वर्णिक इति।

(४) पूर्वपक्षः—रथं करोतीति व्युत्पत्त्या त्रैवर्णिकानामेव यः कश्चिद् रथं करोति स एवात्राधिक्रियत इति।

(५) सिद्धान्तः—रथं करोति यः सोऽत्र रथकारो न विवक्षितः—अपि तु वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः—शूद्रायां वैश्यादुत्पन्ना करणी—करण्याम्माहिष्यादुत्पन्नः सङ्कीर्णजातिविशेषो रथकार एवात्र विवक्षितः। तस्यैवाधानकालो वर्षर्तुरत्र विधीयते न त्रैवर्णिकस्येति।

एतदभिप्रेत्याह—त्रिवर्ण इति। 'त्रिवर्णः' त्रैवर्णिकः—'न हि' 'रथकृत्' रथकारपदेन विवक्षितः—अपि त्वत्रैवर्णिकोऽशूद्रश्च कश्चित् सङ्कीर्णजातिविशेष इत्याशयः॥ १२॥

(१३) ६।१।५१–५२ स्थपतिस्तु निषादः स्यात्

(१) अधिकारविचारः।

(२) 'वास्तुमयं रौद्रं चरुं निर्वपेत्, इति प्रकृत्य श्रूयते—'एतया निषादस्थपतिं याजयेत्' इति।

(३) तत्र किमधिकृतानां त्रैवर्णिकरथकाराणाम्मध्य एवैकतमो निषादस्थपतिरुत तेभ्योऽन्य एव कश्चिदिति।

(४) पूर्वपक्षः—अधिकृतानामेवान्यतमोऽयम्। तेषामेव विद्वत्त्वात् अग्निमत्त्वाच्च। तदन्ये तु न विद्यावन्तो नाप्यग्निमन्तस्तस्मान्नैते-ऽधिकृताः कर्मस्विति निषादानां स्थपतिस्त्रैवर्णिको भवितुमर्हत्येवेति।

(५) सिद्धान्तः—निषादश्चासौ स्थपतिश्चेति कर्मधारयसमासस्यैव मुख्यता। निषादश्च सङ्कीर्णजातिविशेषः। विद्याहीनोऽपि स तात्कालि-

काचार्योपदेशादिना विद्यां सम्पाद्य एकस्मिन् यागविशेषे वचनवला-द्धिक्रियते । तस्मात् त्रैवर्णिकरथकारेभ्योऽन्य एव निषादस्थपतिरिति ।

एतदभिप्रेत्याह—स्थपतिरिति । निषादस्थपतिरित्यत्र यः 'स्थपतिः'-यागेऽधिकृतः स निषादः सङ्कीर्णजातिविशेष एव—न तु त्रैवर्णिकरथका-राणामन्यतम इति भावः ॥ १३ ॥

न्यायाः पादे त्रयोदश ।

स्पष्टम् ।

इति षष्ठस्य प्रथमः ।

---

## षष्ठस्य द्वितीयः पादः ।

[ अधिकारिधर्मविचारात्मकः ]

### (१) ६।२।१-२ एकैकशः सत्रफलं समग्रम्

( १ ) अधिकारिणो विचारानन्तरं तस्य धर्मा विचार्यन्ते । तत्रादौ तस्य कामनाया विचारः ।

( २ ) 'श्राद्धकामा उपेयुः' 'सप्तदशावराः सप्तविंशपरमाः सत्र-मासीरन्' इत्यनेककर्तृकं सत्रमाम्नातम् ।

( ३ ) तत्र सन्देहः—सत्रस्य फलं समग्रं किमेकैकस्य कर्तुरुत समु-दायस्येति—तथा च किं फलांशकामिन एवाधिकार उत समग्रफल-कामिन एवेति ।

( ४ ) पूर्वपक्षः—सत्रस्य कर्ता नैकः पुरुषः अपि तु अनेकपुरुषस-मुदायः । कर्तुरेव च फलेनाभिसम्बन्धः । तस्मात् समुदायस्यैव फलम्-पुरुषाणां प्रत्येकं तु फलांश एवेति । तस्माच्च फलांशमात्रकामिनोऽप्य-धिकार इति ।

( ५ ) सिद्धान्तः—एकैकस्यापि पुरुषस्य समुदायान्तर्गतत्वेनास्त्येव कर्तृत्वम् । एवमेव 'सत्रमासीरन्' इति बहुवचनमुपपद्यते कर्तॄणां बहुत्वे । तस्मात् एकैकस्य कर्तुः सकलफलाभिसम्बन्धात् समस्तफलकामिना-मेवाधिकारो नांशमात्रकामिनामिति ।

एतदभिप्रेत्याह—एकेति । 'समग्रं' सकलं—'सत्रफलं'—'एकैकशः' सत्रकर्तॄणां सप्तदशपुरुषाणां प्रत्येकं—अभिसम्बध्यते इति शेषः ॥ १ ॥

### (२) ६।२।३-१२ दर्शादियागे यजमान एकः ।

(१) अधिकारिणो धर्मभूता संख्या विचार्यते।

(२) 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति श्रुतम्।

(३) तत्र सन्देहः—किमत्र यागे यजमान एक एव स्यादुत एको द्वौ बहवो वेत्यनियम इति।

(४) पूर्वपक्षः—स्वर्गकाम इत्यत्रैकत्वसंख्या उद्देश्यगतत्वादविवक्षिता ग्रहैकत्ववत्। तस्मात् दर्शपूर्णमासयागे एको द्वौ बहवो वा यजमाना भवितुमर्हन्तीति।

(५) सिद्धान्तः—स्वर्गकामगतैकत्वस्याविवक्षितत्वेऽपि यजेतेत्यत्राख्यातगतमेकत्वं तद्विधेयगतम्। क्रियाद्वारा च कर्ताऽपि विधेय एव। अतो विधेयकर्तृगता यैकत्वसंख्या सा विवक्षितैव। ततश्चैक एव यजमानः कर्तेति नियम्यते—इति।

एतदभिप्रेत्याह दर्शेति। 'दर्शादियागे' 'एकः' एव—'यजमानः' कर्तेति नियम एवेत्याशयः ॥ २ ॥

## (३) ६।२।१३–१५ अवश्यमारब्धसमापनं स्यात्

(१) अधिकारिणोऽधिकारस्य कदा निवृत्तिरिति विचार्यते।

(२) 'कारीर्या वृष्टिकामो यजेत, 'चित्रया यजेत पशुकाम' इत्यादीनि काम्यानि कर्माणि। कदाचिदेवं भवति यदुक्तकामेन प्रेरितः पुरुषः कर्म प्रारभते तदनन्तरं कर्मसमापनात् प्रागेव वृष्ट्यादिरूपं फलं लभ्यते।

(३) तत्र सन्देहः—एतस्यामवस्थायां किं प्रक्रान्तं कर्म नियोगतः समापनीयमुत फलप्राप्त्यनन्तरम् हेयमपि इच्छया भवतीति।

(४ पूर्वपक्षः—फलप्राप्त्या तत्कामो निवर्तते। ततश्च तत्काममूलकोऽधिकारोऽपैति। तस्मात् फलप्राप्त्यनन्तरं प्रयोजनाभावात् कर्म न समापनीयमिति।

(५) सिद्धान्तः—प्रक्रान्तस्यासमाप्तौ निन्दा प्रायश्चित्तं च श्रूयते—'देवताभ्यो वा एव आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते—त्रैधातवीयेन यजेत' इति। प्रक्रान्तमसमाप्य च लोकेऽपि शिष्टविगर्हितो भवति। तस्मात् प्रक्रान्तं कर्म समापनीयमेवेति।

एतदभिप्रेत्याह—अवश्यमिति। 'आरब्धस्य' प्रक्रान्तस्य कर्मणः—'समापनम्'—'अवश्यम्' नियमेन कर्तव्यमेव—'स्यात्' इति सम्बन्धः॥३॥

## (४) ६।२।१६–१८ न लौकिकानान्नियमः समाप्तौ।

(१) पूर्वाधिकरणापवादः।

(२) लौकिकानि कर्माण्युदाहरणानि—गृहकरणं रथकरणमुपक्रान्तम्—ततस्तस्येच्छा विगताऽथवाऽन्यतः प्राप्तो गेहो रथो वा।

( ३ ) तत्र सन्देहः—किं प्रक्रान्तं समापनीयमेवोत ऐच्छिकमिति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन फलप्राप्तावपि समापनीयमेवेति ।

( ५ ) सिद्धान्तः—लौकिककर्मविषये निन्दा प्रायश्चित्तं वा न श्रूयते । दृष्टमेव तत्र प्रयोजनं—तस्य सिद्धौ सति नास्ति प्रयोजनमायासस्य । तस्मान्नास्ति लौकिके समापननियम इति ।

एतदभिप्रेत्याह नेति । 'लौकिकानां' कर्मणां—'समाप्तौ' समापने—'नियमः' अवश्यकर्तव्यत्वम्—'न' भवति । तत्त्वैच्छिकमेवेत्याशयः ॥४॥

## (५) ६।२।१९–२० निषेधमात्रं लशुनाशनादौ

( १ ) निषिद्धे अधिकारस्य विचारः । कलञ्जन्यायः ।

( २ ) 'न कलञ्जं भक्षयेत्—न लशुनं—न गृञ्जनम्' इति ।

( ३ ) तत्र सन्देहः—किमेवंजातीयकं निषिद्धं फलकामेन न भक्षयितव्यम्, निष्कामेन तु भक्षयितव्यम्—अथवा नियोगतः केनापि न भक्षयितव्यमेवेति ।

( ४ ) पूर्वपक्षः—यथा नेक्षेतोद्यन्तमादित्यमित्यादि व्रतरूपेण विहितं तथैवात्रापि कलञ्जादिभक्षणवर्जनं व्रतरूपेणैवोपदिश्यते । फलकामस्यैव च व्रतानुष्ठाने प्रवृत्तिः । विश्वजिन्न्यायेन च स्वर्गः फलमत्र कल्प्यते । तस्मात् यः स्वर्गकामः स एव कलञ्जादिभक्षणं वर्जयेत् तत्फलाकामस्य तु ऐच्छिकमिति । स्वर्गकामस्यैवात्र व्रतेऽधिकार इति ।

( ५ ) सिद्धान्तः—अत्र वाक्ये रागप्राप्तां भक्षणप्रवृत्तिमनूद्य निषेधो विधेयः । निषेधश्च नरकपातनिवारकः । तस्माद् भक्षणवर्जनेऽधिकारो नरकभीतस्य न तु स्वर्गार्थिनः । नरकभयं च सर्वेषां साधारणम् । तस्मात् नियोगत एव कलञ्जादि न भक्षयितव्यम्—यथा 'न सर्पायाङ्गुलिं दद्यात्' इति निषेधे सर्वैः पुरुषैर्नियोगत एवाङ्गुलिः सर्पाय न दीयते तथैवेति ।

एतदभिप्रेत्याह—निषेधेति । 'लशुनाशनादौ' लशुनाद्यभक्ष्यभक्षणविषये—'निषेधमात्रम्' वर्जनमात्रमनुष्ठेयम्—नतु किमपि फलान्तरमस्तीति मात्रपदेन सूचितम् ॥ ५ ॥

## (६) ६।२।२१–२२ स्मार्ताश्च धर्मा उपनीतकार्याः ।

( १ ) अधिकारविचारोऽनुवर्तते ।

( २ ) इह स्मार्ता धर्मा उदाहरणम्—'प्राङ्मुखोऽन्नानि भुञ्जीत' 'गुरुरनुगन्तव्योऽभिवादयितव्यश्च' इत्यादि ।

( ३ ) तत्र सन्देहः—किं जातमात्रस्यैते कर्तव्या उतोपनीतस्यैवेति ।

(४) पूर्वपक्षः—एतेषु कर्मसु श्रौताग्न्याद्यपेक्षा नास्ति। तस्मात् उपनयनस्य नास्त्यावश्यकताऽत्राधिकारे। अतो जातमात्रेणैते कर्तव्या इति।

(५) सिद्धान्तः—श्रौतस्याध्ययनादिनियम उपनयनानन्तरमेव प्राप्नोति। एवं च वेदमूलस्मृतिगम्योऽपि नियमस्तस्मिन्नेव काले प्राप्तः। अत एवोच्यते-'उपनयनादिर्नियमः' 'प्रागुपनयात् कामचारवादभक्षः' इत्यादि। तस्मादुपनयानन्तरमेव कार्या उक्ताः स्मार्ता धर्मा इति।

एतदभिप्रेत्याह—स्मार्ता इति। 'स्मार्ताः' स्मृतिषु उक्ताः—'धर्माः' गुर्वनुगमनादयः—'उपनीतेन' 'कार्याः' अनुष्ठेयाः-नोपनयनात् प्रागिति शेषः ॥ ६ ॥

## (७) ६।२।२३-२६ दर्शादियागः सततन्न कार्यः

(१) अधिकारस्य निर्वाहकालो विचार्यते।

(२) 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'-'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादि श्रूयते।

(३) तत्र सन्देहः—किमेतादृशं यावज्जीवकर्तव्यत्वेन विहितं कर्म सातत्येनानवरतं कर्तव्यमुत न सातत्येनापि तु नियमित एव काले-इति।

(४) पूर्वपक्षः—जीवनमत्र निमित्तत्वेनोपन्यस्तम्। सति च निमित्ते नैमित्तिकमवश्यम्भावि। अतो जीवतो मनुष्यस्य सातत्येनैवैतत् कर्तव्यत्वेन प्राप्तम्-इति।

(५) सिद्धान्तः—अमावास्या पौर्णमासी च दर्शपूर्णमासयोः कालौ विहितौ। अनयोश्च विहितयोः कालयोः जीवनरूपनिमित्तसङ्कोचकत्वेनान्वयः सम्भवति। अन्यथा विधिद्वयस्यासामञ्जस्यम्। तथा च सत्युक्तकालविशिष्टमेव निमित्तमत्र। तस्मान्न सातत्यमपि तु स्वकाल एवानुष्ठानमिति।

एतदभिप्रेत्याह दर्शेति। 'दर्शादियागः' यावज्जीवकर्तव्यत्वेनोपदिष्टः—'सततम्' सातत्येनानवरतम्—'न कार्यः'-अपि तु स्वकाल एवेत्याशयः ॥ ७ ॥

## (८) ६।२।२७-२८ दर्शादिकाले च पुनः पुनः स्यात्।

(१) पूर्वाधिकरणशेषो विचारः।

(२) 'पौर्णमास्यां पौर्णमासेन यजेत अमावस्यायाममावास्येन' इत्युक्तम्।

(३) तत्र सन्देहः—किं सकृदेव पौर्णमास्यां पौर्णमासयागोऽनुष्ठेयः सकृदेव चामावास्यायान्दर्शयागः—उत यदा यदा पौर्णमासी

अमावास्या चापतति तदा तदा ऽऽवर्तितव्य इति।

(४) पूर्वपक्षः—सकृदेवानुष्ठानेन विधिशास्त्रस्य चरितार्थत्वात् सकृदेवानुष्ठानन्न वारम्वारमिति।

(५) सिद्धान्तः—कालविशिष्टं जीवनं दर्शपूर्णमासकर्मणो निमित्तमिति स्थितम्। एवं च सति यदा यदा कालविशिष्टं जीवनं तदा तदा कर्मण आवृत्तिः। तस्मात् प्रतिपौर्णमासि पौर्णमासयागः प्रत्यमावास्यं च दर्शयागोऽनुष्ठेय इति।

एतदभिप्रेत्याह—दर्शेति। 'दर्शादिकाले' अमावास्या पौर्णमासी चेत्यनयोः कालयोः प्राप्तौ–'पुनः पुनः' आवृत्तिः–'स्यात्'–तत्कालविहितकर्मण इति शेषः॥ ८॥

## (९) ६।२।२९ भिन्नादिहोमोऽपि पुनर्निमित्ते

(१) पूर्वाधिकरणप्रसङ्गेनैवावृत्तिविचारः।

(२) दर्शपूर्णमासयोः श्रूयते—'भिन्ने जुहोति-स्कन्ने जुहोति' इति भेदादिनिमित्तको होमः।

(३) तत्र सन्देहः–किं सकृत् भिन्ने होमं कृत्वा कृतार्थता उत यदा यदा पात्रादिभेदस्तदा तदा होमस्य आवृत्तिरिति।

(४) पूर्वपक्षः—पात्रादिभेदं निमित्तीकृत्य होम आम्नातः। स च होमः सकृदेव कार्यः–तेनैव क्रतूपकारस्य सिद्धत्वादिति।

(५) सिद्धान्तः—भेदरूपस्य निमित्तस्यावृत्तौ होमरूपस्य नैमित्तिकस्याप्यावृत्तिरवश्यं कर्तव्येति।

एतदभिप्रेत्याह–भिन्नेति। 'भिन्नादिहोमः' भिन्ने जुहोति स्कन्ने जुहोतीत्येवं भेदादिनिमित्तको विहितो होमः–'अपि' दर्शादियागवत् 'निमित्ते' भेदादिरूपनिमित्तस्य प्राप्तौ 'पुनः' वारम्वारं अनुष्ठेय इति शेषः॥ ९॥

## (१०) ६।२।३० ऽभ्यासो निमित्ते गुरुवन्दनादेः।

(१) पूर्वविचारसदृशो विचारः।

(२) 'गुरुरनुगन्तव्योऽभिवादयितव्यश्च' इत्यादि विहितम्।

(३) तत्र सन्देहः—किं सकृदेव गुर्वनुगमनेन कृतार्थता उत यदा यदा गुरुरागच्छेत् तदा तदाऽनुगमनमिति।

(४) पूर्वपक्षः—गुर्वनुगमनादेः गुरोः प्रीतिरेव दृष्टं फलम्। तस्य च सकृदेवानुगमनेन निष्पन्नत्वात्–न पुनः पुनः कर्तव्यता। यदि कदाचिदेकेनानुगमनेन प्रीतिर्न सम्पादिता तदा पुनः कर्तव्यमित्यैच्छिकमेवेति।

(५) सिद्धान्तः—दृष्टार्थेष्वपि विहितेषु नियमादृष्टसम्भवात् यदा

यदा गुरोरागमनरूपं निमित्तमापतति तदा तदा नैमित्तिकमनुगमनमप्य-नुष्ठेयमेवेति ।

एतदभिप्रेत्याह—अभ्यास इति । 'निमित्ते' गुरोरागमनादिरूपे प्राप्ते सति यदा यदा तन्निमित्तम्प्राप्नोति तदा तदा—'गुरुवन्दनादेः' नैमित्ति-कस्य—'अभ्यासः' आवृत्तिः—कर्त्तव्य एवेति शेषः ॥ १० ॥

## (११) ६।२।३१ यज्ञः प्रजा चाध्ययनं च नित्यम्

( १ ) अधिकारविचारोऽनुवर्तते ।

( २ ) 'सोमेन यजेत'-'प्रजामुत्पादयेत'—'स्वाध्यायमधीयीत' इति यागप्रजोत्पादनाध्ययनानि विहितानि ।

( ३ ) तत्र संशयः—किमेतानि सकामेनैव कार्याणि काम्यान्युत सर्वैः कार्याणि नित्यानीति ।

( ४ ) पूर्वपक्षः—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति स्पष्टं काम्य-त्वं सोमयागस्य । प्रजोत्पादनेऽध्ययने च विश्वजिन्न्यायेन स्वर्गः फ-लम् । तस्मात् तत्तत्फलकामस्यैवैतेष्वधिकार इति ।

( ५ ) सिद्धान्तः—'वसन्ते वसन्ते ज्योतिषा यजेत' इति वीप्सयो-क्तत्वात् ज्योतिष्टोमस्य नित्यता । अध्ययनस्य दृष्टमेव कर्तव्यविज्ञानम्प्र-योजनम् । कर्तव्यानुष्ठानस्य नित्यत्वादध्ययनस्यापि नित्यता । 'अनुत्पा-द्य सुतान्न लोकं गच्छति' इति स्मृतेर्लोकसिद्ध्यर्थमपत्योत्पादनस्यापि नित्यता । तस्मात् त्रयोऽप्येते नित्या एवेति ।

एतदभिप्रेत्याह—यज्ञ इति । 'यज्ञः' सोमादियागानुष्ठानम्—'प्रजा' अपत्योत्पादनम्—'अध्ययनम्' वेदादेरिति—एतत् सर्वमपि—'नित्यम्' अतः सर्वेषामत्राधिकारो, न सकामस्यैवेत्याशयः ॥ ११ ॥

## (१२) ६।२।३१ वर्णत्रये नित्यमिदं त्रयं स्यात् ।

( १ )पूर्वविचारशेषः । एकत्रिंशसूत्रभाष्ये 'अन्योऽर्थः' इत्युपक्रम्या-धिकरणान्तरमिदमुपन्यस्तम् ।

( २ ) यज्ञप्रजाध्ययनान्युदाहरणम् । एतानि नित्यानीति स्थितम् ।

( ३ ) तत्र सन्देहः-किमेतानि ब्राह्मणमात्रस्य नित्यान्युत सर्वेषां त्रैव-र्णिकानामिति ।

( ४ ) पूर्वपक्षः—एवं हि ब्राह्मणमात्रमुद्दिश्य श्रूयते—'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते' इति । अत्रोक्तस्य च ऋणत्रयस्यापा-करणाय अध्ययनप्रजोत्पादनयागानुष्ठानानि विहितानि । तस्माद् ब्राह्म-णस्यैवैतानि नित्यानीति ॥

( ५ ) सिद्धान्तः—अविशेषेणैवैषां कर्मणां विधानात् सर्वेषां त्रैवर्णिकानामेतानि नित्यानीति ।

एतदभिप्रेत्याह—वर्णेति । 'वर्णत्रये' ब्राह्मणक्षत्रियवैश्येषु त्रिष्वेव 'इदं त्रयं' यागः प्रजोत्पादनमध्ययनं चेति—'स्यात्'—नित्यकर्तव्यमिति शेषः ॥ १२ ॥

षष्ठस्य पादे कथिता द्वितीये
न्याया इह द्वादश नीतिविद्भिः ॥

स्पष्टम् ।

इति षष्ठस्य द्वितीयः ।

---

## षष्ठस्य तृतीयः पादः

[ प्रातिनिध्यविचारात्मकः ]

---

### (१) ६।३।१–७ यावच्छक्ति क्रिया नित्ये —

( १ ) अधिकारप्रसङ्गेन सामर्थ्यविचारः ।

( २ ) 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादीनि नित्यानि कर्माण्याम्नायन्ते ।

( ३ ) तत्र सन्देहः—यस्य सकलानि साङ्गानि नित्यानि कर्माणि कर्तुं सामर्थ्यं किं तस्यैवैतेष्वधिकारः तेनैवैतानि कर्तव्यानि—उत यो यथाकथञ्चिदपि कर्तुं शक्नोति तस्यापीति ॥

( ४ ) पूर्वपक्षः—सर्वाण्यङ्गान्युपसङ्गृह्यैव कर्माणि कर्तव्यानि । तस्मात् यः साङ्गं कर्तुं शक्नोति तेनैव नित्यमप्यग्निहोत्रादिकं कर्तव्यम् । साङ्गस्यैव कर्मणोऽग्निहोत्रमिति नाम । योऽङ्गहीनं तत् करोति नैव करोति सोऽग्निहोत्रमिति ।

( ५ ) सिद्धान्तः—प्रधानमेव कर्म अग्निहोत्रपदवाच्यम् । तदेव यावज्जीववाक्ये उक्तम् । अङ्गजातं तु वाक्यान्तरेषु प्राप्तम् । एवं च जीवने निमित्ते नैमित्तिकस्य प्रधानस्य कर्मणोऽनुष्ठानमावश्यकम् । तस्मात् वाक्यान्तरेभ्योऽवगतेष्वङ्गेषु यदि किञ्चिदनुष्ठातुं न शक्यते तदा तत्परित्यज्यापि अनुष्ठातुं शक्यैरेवाङ्गैस्समेतं प्रधानमनुष्ठेयमेवेति ।

एतदभिप्रेत्याह यावदिति । 'नित्ये' नित्यकर्मविषये—'यावच्छक्ति' स्वशक्त्यनुसारमेव-'क्रिया' अनुष्ठानम् । नित्यानि कर्माणि स्वशक्त्यनुसारेणाङ्गहीनान्यपि कर्तव्यानि न परित्याज्यानीत्याशयः ॥ १ ॥

(२) ६।३।८–१० काम्ये सर्वाङ्गसङ्ग्रहः ।

( १ ) पूर्वाधिकरणशेषो विचारः-अपवादरूपः ।

( २ ) सन्ति काम्यानि—'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यादीनि ।

( ३ ) तत्र सन्देहः—किमत्रापि नित्यवत् अङ्गविहीनमपि यथाशक्त्येव कर्तव्यमुत सकलाङ्गोपसङ्गृहीतमेवेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन यदि सकलमङ्गजातं कर्तुं न शक्यते तर्हि यावच्छक्यते तावद्भिरेवाङ्गैर्युतं कर्म कर्तव्यमिति ।

( ५ ) सिद्धान्तः—काम्येषु फलप्राप्तिरिष्टा । फलं च साङ्गेनैव कर्मणा सम्पादयितुं शक्यम्, न विगुणेन । तस्मात् अङ्गहीनेऽनुष्ठिते फलप्राप्तिर्न स्यात् । अतो व्यर्थमेवानुष्ठानं स्यात् । नित्ये तु अकरणे यः प्रत्यवायस्तद्वर्जनमेव फलं तत्त्वङ्गहीनानुष्ठानेऽपि भवत्येव । इह तु न तथा । अतो नात्र पूर्वाधिकरणन्यायावतारः । तस्मात् नित्येष्वङ्गलोपेऽपि काम्येष्वङ्गलोपो न सोढुं शक्य इति ।

एतदभिप्रेत्याह—काम्य इति । 'काम्ये' काम्यानां कर्मणां विषये—'सर्वेषां' 'अङ्गानां' 'सङ्ग्रहः' साकल्येनानुष्ठानम्—कर्तव्य इति शेषः ॥२॥

(३) ६।३।११–१२ कर्म नान्यत् प्रतिनिधौ

( १ ) अधिकारविचारे सामर्थ्यविचारविशेषः ।

( २ ) दर्शपूर्णमासयागे पुरोडाशो द्रव्यम् । स च व्रीहिमयः कर्तव्य इत्याम्नातम् । यदि कदाचिद् व्रीहयो नोपलभ्यन्ते तर्हि नीवारा गृह्यन्ते ।

( ३ ) तत्रसन्देहः—नीवारैरनुष्ठितो यागो दर्शपूर्णमासो भवत्युत तस्मादन्यदेव कर्म तदिति ।

( ४ ) पूर्वपक्षः—तत्कर्मान्तरं स्यात् । व्रीह्याश्रयो हि दर्शपूर्णमासयागः—अयं तु नीवाराश्रयः । तस्मात् भिन्नरूपत्वाद् भिन्नमेव कर्मेति ।

( ५ ) सिद्धान्तः—द्रव्यभेदेऽपि न कर्मभेदः । ईषद्भेदेऽपि नात्यन्तरूपपरिवृत्तिः । तस्मात् प्रतिनिधिद्रव्येणानुष्ठितोऽपि दर्शपूर्णमासयागो न कर्मान्तरमिति ।

एतदभिप्रेत्याह कर्मेति । 'प्रतिनिधौ' विहितद्रव्यालाभे प्रतिनिधिभूतेन द्रव्यान्तरेण कृते यागे—'अन्यत्' भिन्नं—'कर्म' यागो 'न' भवति । द्रव्यमात्रभेदेन न कर्मभेद इत्याशयः ॥ ३ ॥

## (४) ६।३।१३–१७ मुख्याभावे तमानयेत् ।

(१) पूर्वाधिकरणशेषो विचारः ।

( २ ) कर्मसु विहितानि द्रव्याणि । सम्भवति च तेषामलाभोऽपचारो वा ।

( ३ ) तत्र सन्देहः—विहितस्य द्रव्यस्यालाभेऽपचारे वा किं कर्मानुष्ठानं त्यक्तव्यमुत द्रव्यान्तरमुपादाय प्रयोगः समापनीय इति ।

( ४ ) पूर्वपक्षः—द्रव्यापचारे द्रव्यान्तरमुपादेयमिति कुत्रापि न विहितम् । अतो मानाभावान्नोपादेयः प्रतिनिधिः—अनुष्ठानमेव त्यक्तव्यमिति ।

( ५ ) सिद्धान्तः—कर्मचोदना द्रव्यमन्तरेणानुपपन्ना द्रव्यसामान्यमाक्षिपति । यत्र क्वचन द्रव्यविशेषो विहितस्तत्र स द्रव्यविशेष उक्तस्य द्रव्यसामान्यस्य नियामकत्वेन गृह्यते । एवं यदा स द्रव्यविशेषो नोपलभ्यते तदा नियामकं नास्ति । एवं च नियामकाभावे द्रव्यसामान्यप्राप्तिसम्भवे यत्र क्वचित् विशेषे पर्यवसानं भवति । तस्मात् मुख्याभावे प्रतिनिध्युपादानमुचितमेव—न तु कर्मलोपः कार्य इति ।

एतदभिप्रेत्याह मुख्येति । 'मुख्यस्य' साक्षाद्विहितस्य द्रव्यस्य—'अभावे' अलाभे अपचारे वा-'तम्' प्रतिनिधिम्—'आनयेत्' प्रयोजयेत्-न तु कर्म त्यजेदित्याशयः ॥ ४ ॥

## (५) ६।३।१८–१९ न मन्त्रादौ प्रतिनिधिः

( १ ) पूर्वाधिकरणापवादः ।

( २ ) 'आग्नेयोऽष्टाकपालः' 'सौर्यं चरुम्' इत्यादौ उक्ता अग्निसूर्यादयो देवाः, 'आहवनीये जुहोति' इति आहवनीयादयोऽग्नयः, 'बर्हिर्देवसदनं दामि' इत्यादयो मन्त्राः, 'व्रीहीन् प्रोक्षति' इति प्रोक्षणादयः क्रियाः ।

( ३ ) तत्र सन्देहः—किमेतेषां मन्त्रादीनामपचारेऽपि प्रतिनिधिर्ग्राह्यः उत कर्म त्यक्तव्यमिति ।

( ४ ) पूर्वपक्षः—यथा द्रव्यापचारे प्रतिनिधिर्गृह्यते तथैव मन्त्रादीनामप्यपचारे प्रतिनिधिरुपादेय इति ।

( ५ ) सिद्धान्तः—नात्र पूर्वाधिकरणन्यायावतारः-वैषम्यात् । यागेऽपेक्षितस्य पुरोडाशस्य निष्पादनं व्रीह्यभावे नीवारादिनाऽपि भवति । ततो व्रीह्यपचारे भवति नीवाराणां ग्रहणम् । मन्त्रदेवताकार्यन्तु नान्येन सम्पद्यते । न ह्याग्नेययागो विष्णुना सम्पन्नो भवति-नापि 'बर्हिर्देवसदनं दामि' इति मन्त्रसाध्यमर्थप्रकाशनं मन्त्रान्तरेण सम्भवति-

नाप्याहवनीयकार्यमसंस्कृतेऽग्नौ सम्भवति। तस्मान्नास्ति मन्त्रदेवतादीनां प्रतिनिधिरिति।

एतदभिप्रेत्याह—नेति। 'मन्त्रादौ' मन्त्रे देवतायामग्नौ वा—'प्रतिनिधिः' 'न' उपादेय इति शेषः ॥ ५ ॥

(६) ६।३।२० प्रतिषिद्धश्च गृह्यते।

(१) प्रतिनिधिविषये विचारः।

(२) द्रव्यापचारे प्रतिनिधिरुपादेय इति स्थितम्।

(३) तत्र सन्देहः—प्रतिनिधिमुपादित्समानो किं यत्किंचिद्द्रव्यमुपाददीत्-यानि द्रव्याणि प्रत्यक्षप्रतिषिद्धानि तान्यपि—उत प्रतिषिद्धानि नैव ग्राह्याणीति।

(४) पूर्वपक्षः—'मौद्गं चरुं निर्वपेच्छ्रीकाम' इति विहितस्य मुद्गस्यापचारे माषा अपि गृहीतव्याः। चरुनिष्पत्तिर्यथा मुद्गैर्भवति तथैव माषैरपीति।

(५) सिद्धान्तः—'अयज्ञिया वै माषाश्चणकाः कोद्रवाश्च' इति माषादीनां प्रतिपदनिषेधात् यज्ञानुष्ठाने नैतानि प्रवेशमर्हन्ति। तेषामयज्ञियत्वाद्। सामान्यतश्चरुनिष्पादकत्वेऽपि न भवति यज्ञोपयोगिचरुनिष्पादकत्वम्। तस्मात् प्रतिषिद्धानां द्रव्याणां प्रतिनिधित्वेन नोपादानमिति।

एतदभिप्रेत्याह प्रतिषिद्धमिति। 'प्रतिषिद्धम्' स्पष्टरूपेण निषिद्धं द्रव्यं 'न' 'गृह्यते' प्रतिनिधित्वेनेति शेषः ॥ ६ ॥

(७) ६।३।२१ न स्वामिनः प्रतिनिधिः

(१) पञ्चमाधिकरणशेषो विचारः।

(२) सन्त्यग्निहोत्रादीनि कर्माणि।

(३) तत्र सन्देहः—स्वामिनोऽपचारे भवति प्रतिनिधिर्न वेति।

(४) पूर्वपक्षः—यथा द्रव्यापचारे प्रतिनिधिरुपादीयते तथा स्वामिनोऽप्यपचारे प्रतिनिधिः करणीय इति।

(५) सिद्धान्तः—द्रव्यादावपचरिते यजमानः प्रतिनिधिं गृह्णाति—यजमानेऽपचरिते कः प्रतिनिधिं गृह्णीयात्। फलित्वं च यजमानस्य कार्यम्। तच्च नान्यस्य सम्भवति। यदि सम्भवेत् तर्हि स यजमान एव स्यात्, न यजमानस्य प्रतिनिधिरिति।

एतदभिप्रेत्याह—नेति। 'स्वामिनः' यजमानस्य—'प्रतिनिधिः' 'न'—स्यादिति शेषः ॥ ७ ॥

(८) ७।३।२२ सत्रेऽसौ स्वामिनो भवेत्।

( १ ) पूर्वाधिकरणापवादः—सत्रन्यायः ।

( २ )सत्राणि उदाहरणम् । सत्रे च भवन्ति सप्तदश यजमानाः ।

( ३ ) तत्र सन्देहः—सप्तदशानां सत्रे यजमानानामेकतमस्यापचारे तस्य प्रतिनिधिः करणीयः उत कर्म एव त्याज्यमिति ।

(४)पूर्वपक्षः–पूर्वाधिकरणन्यायेन यजमानस्य प्रतिनिधिर्न ग्राह्य इति ।

(५) सिद्धान्तः—अस्ति सत्रस्य यागान्तरेभ्यो ऽयं विशेषो यत् सत्रे य एव यजमानास्त एवर्त्विजोपि । एवं च सत्रे स्वामिनः कार्यद्वयम्-फलभोक्तृत्वं कार्यकर्तृत्वं च । तत्र च यद्यपि प्रतिनिधेः फलोपभोक्तृत्वं न भवति तथाऽपि भवत्येव तस्य कार्यकर्तृत्वम्। तस्मात् यजमानत्वेन प्रतिनिध्यभावेऽपि ऋत्विक्त्वेन प्रतिनिधेरवश्यम्भावाद् भवत्येव सत्रे स्वामिनः प्रतिनिधिरिति ।

एतदभिप्रेत्याह सत्र इति । 'सत्रे' सप्तदशस्वामिके यज्ञे—'स्वामिनः' यजमानस्य अपि—'असौ' प्रतिनिधिः—'भवेत्' इति सम्बन्धः ॥ ८ ॥

(९) ६।३।२३–२५ न त्वसौ फलभागी स्यात्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) सत्रे भवति स्वामिनः प्रतिनिधिरिति स्थितम् ।

( ३ ) तत्र सन्देहः—यः स्वामिनः प्रतिनिधिर्गृह्यते स सत्रफलभागी भवति न वेति ।

( ४ ) पूर्वपक्षः—यः स्वामिनः प्रतिनिधित्वेन गृह्यते स स्वामिनो धर्मानादत्ते । फलभागित्वं च स्वामिनो धर्मः । तस्मात् स्वामिप्रतिनिधिर्भवति फलभागीति ।

( ५ ) सिद्धान्तः—आरम्भप्रभृतिसमाप्तिपर्यन्तं कर्मानुतिष्ठतः फलं युक्तम् , प्रतिनिधिस्तु नारब्धवान् । अतो नास्त्यस्य फलभागित्वम् । ऋत्विक्त्वेन तु कार्यकर्तृत्वमात्रमस्ति । श्रूयते च सत्रस्वामिनो ऽनुष्ठानमध्ये मृतस्यापि फलभोगः—'यो दीक्षितानां प्रमीयेत अपि तस्य फलम्' इति । तस्मात् फलभागित्वमपचरितस्यैव स्वामिनो न तस्य प्रतिनिधेरिति ।

एतदभिप्रेत्याह न त्विति । 'असौ' सत्रिणः प्रतिनिधिः—'फलस्य' 'भागी' भोक्ता—'तु' 'न' 'स्यात्' । यद्यपि कार्यकर्ता स्यात्तथाऽपि न फलभागीति तुना सूचितम् ॥ ९ ॥

(१०) ६।३।२६ स्वामिधर्मा त्वसौ भवेत् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) सत्राण्येवोदाहरणम् ।

सत्रेऽपचरितस्य स्वामिनः प्रतिनिधिः स्यादिति स्थितम्।

(३) तत्र सन्देहः—योऽयं प्रतिनिधिः तस्य किं स्वामिनो धर्माः वपनादिसंस्कारादयः स्युरुत ऋत्विजो धर्माः वरणादय इति।

(४) पूर्वपक्षः—प्रतिनिधेः फलभोगित्वन्न भवतीति स्थितम्। एवं च फलभोगयोग्यताहेतवो ये धर्माः संस्कारादयस्ते तस्य न कर्तव्याः। कार्यकर्तृत्वं तु भवति। तस्मात् ऋत्विज एव धर्मा अस्य कर्तव्या इति।

(५) सिद्धान्तः—फलभोगित्वाभावेऽप्यस्य यदि संस्कारा न क्रियेरन् तर्हि अन्येषामपि साप्तदश्यमपूर्णं स्यात्। साप्तदश्यं तु सत्रस्वामिनां विहितम्—'सप्तदशावराः सत्रमासीरन्' इति। प्रतिनिधेरसंस्कारे षोडशैव सत्रिणः स्युः। तथा च विहितार्थबाधः स्यात्। तस्माद् भवन्त्येव प्रतितिधेः संस्कारादयः स्वामिधर्माः इति।

एतदभिप्रेत्याह—स्वामीति। 'असौ' प्रतिनिधिः—'स्वामिधर्मा' स्वामिनो धर्माः संस्कारादय एव धर्मा यस्य स तथाभूतः—'भवेत्'—फलभोगराहित्येऽपि स्वामिधर्मत्वमिति तुना सूचितम्॥ १०॥

## (११) ६।३।२७ सदृक् प्रतिनिधिर्ग्राह्यः

(१) चतुर्थाधिकरणशेषः।

(२) द्रव्यापचारे प्रतिनिधिर्ग्राह्य इति स्थितं चतुर्थेऽधिकरणे।

(३) तत्र सन्देहः—किं यत् किञ्चिद्द्रव्यं प्रतिनिधिमुपादाय प्रयोगः कर्तव्यः उत श्रुतापचरितसदृशमेव द्रव्यान्तरं प्रतिनिधीकर्तव्यमिति।

(४) पूर्वपक्षः—प्रधानविधिना सामान्यतो द्रव्यमात्रस्याक्षिप्तत्वात् यत् किञ्चिद् द्रव्यं प्रतिनिधातव्यमिति।

(५) सिद्धान्तः—'व्रीहिभिर्यजेत' इत्यत्र व्रीह्यवयवा एव पुरोडाशनिष्पादकत्वेन विहिताः। व्रीह्यवयवाश्च बहुशस्तत्सदृशे नीवारे एवानुगच्छन्ति। अतो यादृशं विहितपुरोडाशनिष्पादकत्वं नीवाराणां स्यात् न तथा ऽन्येषां धान्यानाम्। भूयोवयवसामान्यं च सादृश्यम्। तस्मादत्यन्तसदृशमेव द्रव्यं प्रतिनिधातव्यमिति।

एतदभिप्रेत्याह सदृगिति। 'सदृक्' श्रुतापचरितद्रव्यसदृशमेव द्रव्यम्—'प्रतिनिधिर्ग्राह्यः' प्रतिनिधित्वेनोपादेयः—न यत् किञ्चिद् द्रव्यमित्याशयः॥ ११॥

## (१२) ६।३।२८–३० ग्राह्यो वैकल्पिको न तु।

(१) प्रतिनिधिविषयो विचारोऽनुवर्तते।

(२) 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति व्रीहियवयोर्वैकल्पिकं द्रव्यत्वं श्रुतम्।

( ३ ) तत्र सन्देहः—कर्म यदा व्रीहिणा आरब्धं तदा किञ्चित्कालानन्तरं तस्यापचारो जातस्तर्हि तस्य स्थाने किं वैकल्पिको यवो ग्राह्य उत अन्यत् किमपि व्रीहिसदृशमेव द्रव्यमिति।

( ४ ) पूर्वपक्षः—यवस्य व्रीहिवद् विहितत्वात् मुख्यत्वम्। अतः स एव ग्राह्यः। मुख्यस्य लाभेऽन्यस्य ग्रहणमन्याय्यम् इति।

( ५ ) सिद्धान्तः—येन द्रव्येणोपक्रान्तं तस्यापचारे तत्सदृशमेव प्रतिनिधातव्यम् न वैकल्पिकम्। व्रीहियवयोर्विकल्पितत्वेऽपि यदा व्रीहिणा आरब्धं तदा तस्मिन् कर्मणि यवस्य विहितत्वमपेतम्। पूर्वाधिकरणन्यायेन चापचरितसदृशमेव प्रतिनिधातव्यम्। तस्मान्न यवग्रहणमिति।

एतदभिप्रेत्याह ग्राह्य इति। 'वैकल्पिकः' मुख्यस्य विकल्पत्वेन विहितः पदार्थः—'तु' 'न ग्राह्यः' प्रतिनिधित्वेनेति शेषः॥ १२॥

## (१३) ६।३।३१ पुतीकास्तु नियम्यन्ते

( १ ) प्रतिनिधिविचारः।

( २ ) 'यदि सोमं न विन्देत पुतीकामभिषुणुयात्' इति श्रुतम्।

( ३ ) तत्र सन्देहः—किं सोमस्याभावे पुतीका ग्राह्या इति पुतीकाया विधिरयम् उत सोमस्य प्रतिनिधित्वेन पुतीका ग्राह्या इति प्रतिनिधिनियम इति।

( ४ ) पूर्वपक्षः—अभिषुणुयादित्यत्र विधेः स्पष्टत्वाद् विधिरेवायं पुतीकायाः सोमाभावनिमित्तक इति।

( ५ ) सिद्धान्तः—सदृशतया प्रतिनिधित्वेन प्राप्तेषु पुतीकादिद्रव्येष्वनेकेषु नियममात्रविधिरयम्। तस्मात् पुतीकैव प्रतिनिधित्वेन नियम्यतइति।

एतदभिप्रेत्याह पुतीका इति। 'पुतीकाः' 'नियम्यन्ते'—सोमस्य प्रतिनिधित्वेन—न तु सोमाभावनिमित्तमुपलक्ष्य विधीयन्त इत्याशयः॥ १३॥

## (१४) ६।३।३२ मुख्यदृक् सदृशग्रहः।

( १ ) प्रातिनिध्यविचारोऽनुवर्तते।

( २ ) श्रुतद्रव्यापचारे प्रतिनिधिर्गृहीतः। स प्रतिनिधिरपि नष्टः।

( ३ ) तदा सन्देहः—प्रतिनिध्यपचारे यदन्यत् गृह्येत तत् किं प्रतिनिधेः—सदृशमुत श्रुतस्य मुख्यस्य सदृशमिति।

( ४ ) पूर्वपक्षः—द्रव्यापचारे तत्सदृशः प्रतिनिधिर्ग्राह्य इति एकादशाधिकरणे स्थितम्। तथा च यदा प्रतिनिधिरपचरितस्तदा प्रतिनिधिसदृशमेवान्यत् पुनः प्रतिनिधातव्यमिति।

( ५ ) सिद्धान्तः—यद् द्रव्यं कार्यार्थमुपादीयते तत् श्रुतस्यैव मुख्यस्यैव प्रतिनिधित्वेन न तु प्रतिनिधेः प्रतिनिधिग्रहणे किमपि प्रयोज-

नम् । तस्यापि प्रथमस्य प्रतिनिधेरपचारे यो द्वितीयः प्रतिनिधिर्गृह्यते सोऽपि श्रुतस्य मुख्यस्यैव सदृशः स्यादिति ।

एतदभिप्रेत्याह मुख्यदृगिति । 'सदृशग्रहः' मुख्यापचारनिमित्तक-प्रथमप्रतिनिध्यपचारे यः प्रतिनिधिर्द्वितीयः एकादशाधिकरणन्यायेन स-दृशतया ग्राह्यः स—'मुख्यदृक्' मुख्यस्य श्रुतस्य एव सदृशः स्यात्—न प्रथमस्य प्रतिनिधेरित्याशयः ॥ १४ ॥

## (१५) ६।३।३३-३४ श्रुते प्रतिनिधौ चैवम्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) प्रतिनिधेरपचारे मुख्यसदृशमेव प्रतिनिधातव्यमिति स्थितम् ।

( ३ ) तत्र सन्देहः—यस्मिन् स्थले प्रतिनिधिरपि श्रुत एव-यथा सोमस्य स्थाने पुतीका-तत्रापि किम्प्रतिनिध्यपचारे मुख्यसदृशमेव प्रतिनिध्यन्तरमुत प्रतिनिधिसदृशमेवेति ।

( ४ ) पूर्वपक्षः—यदा सोमप्रतिनिधेः पुतीकाया अपचारस्तदा पु-तीकासदृशमेव प्रतिनिध्यन्तरं गृहीतव्यम् । पुतीकाया अपि श्रुतत्वान्मु-ख्यत्वमेवेति न पूर्वाधिकरणन्यायावतारोऽत्रेति । तस्मात् श्रुतस्य प्रतिनि-धेरपचारे प्रतिनिधिसदृशमेव प्रतिनिध्यन्तरमुपादेयमिति ।

( ५ ) सिद्धान्तः—नास्ति पुतीकाया विधिः । नियमनार्थमेव तस्या वचनमिति स्थितम् । तस्मात् श्रुतस्यापि प्रतिनिधेः पुतीकाया अपचारे मुख्यस्यैव सोमस्य सदृशं प्रतिनिध्यन्तरमुपादेयमिति ।

एतदभिप्रेत्याह श्रुत इति । 'श्रुते' श्रुत्युक्तेऽपि—'प्रतिनिधौ च' यत्र प्रतिनिधिः विहितत्वेनैव परिगृहीतो न मुख्यसदृशत्वेन तत्रापि—'एवम्' पूर्वाधिकरणन्याय एव प्रवर्तते—तथा च मुख्यस्यैव सदृशं प्रति-निध्यन्तरमुपादेयम्, नापचरितप्रतिनिधिसदृशमित्याशयः ॥ १५ ॥

## (१६) ६।३।३५ मुख्यप्राप्तौ तदानयेत् ।

( १ ) प्रतिनिध्यविचारः ।

( २ ) मुख्यं द्रव्यं विनष्टम्—तत्सदृशमन्वेष्टुम्प्रस्थितस्तदेव पुनः प्राप्नोति ।

( ३ ) तत्र सन्देहः—किं पुनः प्राप्तमेव गृहीत्वा कर्म समापनीयमुत तत् त्यक्त्वा तत्सदृशमेव द्रव्यान्तरमुपादायेति ।

( ४ ) पूर्वपक्षः—मुख्यापचारे तत्सदृशं प्रतिनिधातव्यमिति स्थि-तम् । एवं च तत्सदृशमेव मृग्यम् न पुनर्मुख्यमेवोपादेयमिति ।

( ५ ) सिद्धान्तः—मुख्यालाभे एव प्रतिनिधेः प्राप्तिः । मुख्यस्य लाभे तु निमित्तस्याभावे नैमित्तिकस्य प्रतिनिधिकरणं नैव प्राप्तम् ।

तस्मात् मुख्येनैव कर्म समापनीयमिति ।

एतदभिप्रेत्याह मुख्येति । 'मुख्यस्य' श्रुतस्य द्रव्यस्य—'प्राप्तौ' पूर्व-सङ्गृहीतस्यापचारे पुनर्यदि तदेव लभ्यते तदा—'तत्' मुख्यमेव—'आनयेत्' उपाददीत—नान्यः प्रतिनिधिर्मृग्य इत्याशयः ॥ १६ ॥

## (१७) ६।३।३६-३७ प्रवृत्ते न पुनर्मुख्यम्

(१) पूर्वाधिकरणापवादः ।

(२) यदा मुख्यस्यापचारे प्रतिनिधिमुपादाय केचित्तत्संस्काराः कृताः तदनन्तरं यदि पुनर्मुख्यं लभ्यते—

(३) तत्र सन्देहः—किं प्रतिनिधिद्वारैवावशिष्टं कर्म समापनीय-मुत तं त्यक्त्वा पुनर्मुख्यद्वारैव कार्यमिति ।

(४) पूर्वपक्षः—प्रतिनिधिद्वारा प्रवृत्तेऽपि कार्ये मुख्यलाभे मुख्य-मेवोपादेयम्—मुख्यलाभे हि प्रतिनिधेः प्राप्तिरेव नास्तीति ।

(५) सिद्धान्तः—कार्यार्थमेव द्रव्योपादानम् । कार्यं च यदा प्रतिनिधिद्वारा प्रवृत्तमेव तदा मुख्यस्य लाभेऽपि किन्तेन प्रयोजनम् । प्रत्युत तस्योपादाने प्रतिनिधौ कृताः संस्कारा व्यर्था भवेयुः । तस्मात् मुख्यो नवोपादेय इति ।

एतदभिप्रेत्याह प्रवृत्त इति । 'प्रवृत्ते' प्रतिनिधिद्वारा कार्ये आरब्धे पुनर्मुख्यस्य लाभेऽपि—'न' 'मुख्यं' उपादेयम्—अपि तु प्रतिनिधिद्वारैव कार्यं समापनीयमित्याशयः ॥

एतदधिकरणे अधिकरणद्वयमपठितं न्यायमालायाम् । तत्तु न भा-ष्यसम्मतमित्युपेक्षितम् ॥ १७ ॥

## (१८) ६।३।३८ ग्राह्यं न्यूनमपि श्रुतम् ।

(१) प्रातिनिध्यविचारः ।

(२) 'खादिरो यूपो भवती'त्यत्र खदिरः श्रुतः । कर्मकाले तु यत् खदिरकाष्ठमुपलब्धं तत् सम्यक् संस्कारयोग्यं नास्ति—अस्ति तु तद्यो-ग्यमपरं काष्ठं खदिरसदृशं तत्प्रातिनिध्ययोग्यम् ।

(३) तत्र सन्देहः—किं न्यूनगुणः खदिर उपादेय उत सगुणं काष्ठान्तरमिति ।

(४) पूर्वपक्षः—तक्षणसंस्कारादिबहुगुणलोपो माभूदित्यत्र प्रति-निधिभूतं काष्ठान्तरमेवोपादेयमिति ।

(५) सिद्धान्तः—मुख्यसिद्धये गुणलोपः सह्यः । तस्मान्निर्गुणोऽपि मुख्य एवोपादेय इति ।

एतदभिप्रेत्याह ग्राह्यमिति । 'न्यूनमपि' प्रतिनिध्यपेक्षयाऽल्पगुणमपि—'श्रुतम्' मुख्यमेव—'ग्राह्यम्' उपादेयमिति ॥ १८ ॥

(१६) ६।३।३६ कार्यहानेस्तदग्राह्यम्

( १ ) पूर्वविचारशेषः ।

( २ ) मुख्यं श्रुतं यदा कार्ययोग्यं नास्ति—

(३) तदा भवति सन्देहः-किं मुख्यमेवोपादेयमुत प्रतिनिधातव्यमिति ।

(४) पूर्वपक्षः-पूर्वाधिकरणन्यायेन निर्गुणमपि मुख्यमेवोपादेयमिति ।

( ५ ) सिद्धान्तः—कार्यसिद्धिरेव सर्वथाऽपेक्षिता । यदि मुख्यं कार्यायाक्षमं तदा तदुपादानं व्यर्थम् । अतस्तत् परित्यज्य कार्यक्षमः प्रतिनिधिरेवोपादेय इति ।

एतदभिप्रेत्याह कार्येति । 'कार्यहानेः'-यदि मुख्यग्रहणे 'कार्यस्य' कर्मणः 'हानिः' नाशः भवेत् तर्हि तस्मादेव कारणात्—'तत्' श्रुतम्मुख्यम्-'अग्राह्यम्' नैवोपादेयम्—अपि तु प्रतिनिधिद्वारैव कार्यं सम्पादनीयमित्यर्थः ॥ १९ ॥

(२०) ६।३।४०-४१ ग्राह्यं तन्मुख्यमात्रकृत् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) सन्ति मुख्या व्रीहयः प्रधानद्रव्यप्रदानमात्रपर्याप्ताः —सन्ति तु नीवाराः सकलकार्यपर्याप्ताः ।

( ३ ) तत्र सन्देहः—किमत्रोपादेयम्—व्रीहय उत नीवारा इति ।

( ४ ) पूर्वपक्षः—कार्यसिद्धेरेवापेक्षितत्वात् यैः सम्पूर्णं कार्यजातं सम्पन्नम् भवेत् ते एव उपादेयाः । तस्मादत्रापर्याप्तं व्रीहिं परित्यज्य नीवार एवोपादेय इति ।

( ५ ) सिद्धान्तः—यदि मुख्यं व्रीहिद्रव्यं प्रधानकार्यमात्रायापि पर्याप्तं लभ्यते तर्हि तावन्मात्रं तेनैव कार्यम् । प्रधानसिद्धौ च यदि शेषकार्याणि लुप्येरन् लुप्यन्तु नाम तानि । तस्मादल्पा अपि व्रीहय एवोपादेया इति ।

एतदभिप्रेत्याह ग्राह्यमिति । 'मुख्यमात्रकृत्' प्रधानकार्यमात्रसम्पादनयोग्यमल्पपरिमाणमपि—'तत्' श्रुतं मुख्यं द्रव्यमेव—'ग्राह्यम्' उपादेयमिति सम्बन्धः ॥ २० ॥

पादेऽस्मिन् विंशतिर्न्याया
भाष्यकारेण वर्णिताः ।

स्पष्टार्थम् ॥

इति षष्ठस्य तृतीयः ।

# अथ षष्ठस्य चतुर्थः पादः

[ अर्थलोपविचारात्मकः ]

## (१) ६।४।१-२ नष्टेऽवदाने हविरन्तरं स्यात्

( १ ) प्रारब्धकर्मसु अर्थलोपनिमित्तकप्रायश्चित्तादिप्रतीकारा-श्चिन्त्यन्ते ।

( २ ) दर्शपूर्णमासयोः पुरोडाशादवदानानि भवन्ति—'मध्यादव-द्यति पूर्वार्धादवद्यति' इत्यादि । कदाचिदेवं भवति यत् पुरोडाशादवदत्तं द्व्यवदानं नष्टम्भवति ।

( ३ ) तत्र भवति सन्देहः—द्व्यवदाने नष्टे किम्पुनः पुरोडा-शशेषादवदानद्वयं कर्तव्यमुत समग्रः पुरोडाशस्त्याज्यो हविरन्तर-मुपादेयमिति ।

( ४ ) पूर्वपक्षः—पुरोडाशशेषेऽपि मध्यपूर्वभागौ सम्भवतः । अत-स्तयोर्भागयोः पुनरवदानद्वयं कर्तव्यमिति ।

( ५ ) सिद्धान्तः—कृत्स्नस्य पुरोडाशस्य भागौ मध्यपूर्वशब्दाभ्या-मुक्तौ न पुनः पुरोडाशशेषः । ततो मुख्यस्य हविषो नाशादन्यदेव हविः प्रतिनिधातव्यम् । स च प्रतिनिधिराज्यमेव । तथा हि श्रूयते-'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः परिस-ङ्ख्याय यजेत' इति । एवं च विहितस्य द्व्यवदानस्य नाशे हविरन्तरेण कर्म समापनीयम् इति ।

एतदभिप्रेत्याह नष्ट इति । 'अवदाने' पुरोडाशस्य विहिते खण्डे—'नष्टे' सति—'हविरन्तरं' अन्यदेव द्रव्यम्—'स्यात्' ग्राह्यमिति शेषः । नत्ववशिष्टात् पुरोडाशात्पुनरवदानं कर्तव्यमित्याशयः ॥ १ ॥

## (२) ६।४।३ शेषक्रिया नास्ति तु शेषनाशे ।

( १ ) अर्थलोपविचारः ।

( २ ) होमान्ते द्रव्यशेषेण भवति स्विष्टकृद्धोमः । कदाचित्तदर्थं स्थापितस्य शेषावदानस्य नाशः स्यात् ।

( ३ ) तदा भवति सन्देहः—किं शेषात् पुनरवदानं कर्तव्यमुत शेष-होम एव परित्याज्य इति ।

( ४ ) पूर्वपक्षः—स्विष्टकृद्धोमार्थं शेषादवदातव्यमिति विहितम् । तस्माच्छेषाद्द यद्येकमवदानं नष्टम् तदाऽवशिष्टाच्छेषात् पुनरवदानं कर्तव्यमेव—अन्यथा कर्मलोप एव स्यादिति ।

( ५ ) सिद्धान्तः—स्विष्टकृदवदानानन्तरं यः शेषः शिष्यते तस्यान्यथोपयोगो विहितः। एवं च पुनरवदानाय शेषो नास्त्येव। तस्मात्पूर्वावदाननाशे द्रव्यस्याभावात् लोप एव भवति कर्मण इति।

एतदभिप्रेत्याह शेषेति। 'शेषस्य' स्विष्टकृदर्थमवत्तस्य 'नाशे' सति—'शेषक्रिया' स्विष्टकृद्धोमरूपं शेषप्रतिपत्तिमूलं कृत्यम्—'न' 'अस्ति'—कर्तव्येति शेषः ॥ २ ॥

(३) ६।४।४-६ शेषस्य भक्षः प्रकृतर्त्विजां स्यात्।

( १ ) शेषविषयो विचारः।

( २) दर्शपूर्णमासयोः इडाभक्षणं प्राशित्रादिशेषभक्षणं चाम्नातम्।

( ३) तत्र सन्देहः—इदं प्राशित्रादिशेषभक्षणं किं प्रकृतकर्मव्यापृतैर्ऋत्विग्भिः कार्यमुत तेभ्योन्यैरिति।

( ४ ) पूर्वपक्षः—'यजमानपञ्चमा इडां भक्षयन्ति' इत्यत्र यजमानसहितानां चतुर्णामृत्विजामिडामात्रभक्षणे विहिते तदितरभक्षणमन्यैः कर्तव्यमिति स्पष्टं सूचितम्। तस्मादृत्विग्भ्योऽन्य एव प्राशित्रादिभक्षणं कुर्युरिति।

( ५ ) सिद्धान्तः—यजमानपञ्चमा इति वाक्येनान्यतोऽप्राप्तं यजमानकर्तृकं भक्षणं विधीयते, न त्वेतस्येदं तात्पर्यं यदिडामात्रं यजमाना ऋत्विजश्च भक्षयेयुः। तस्मादृत्विग्भिर्भक्षणस्यानेनापरिसङ्ख्याते तस्य परित्यागे मानाभावादृत्विग्भिरेव प्राशित्रादिशेषभक्षणं कार्यमेवेति।

एतदभिप्रेत्याह—शेषस्येति। 'शेषस्य' प्राशित्रादिशेषस्य—'भक्षः' भक्षणं—'प्रकृतानां' प्रकृतकर्मणि व्यापृतानामेव—'ऋत्विजां' ऋत्विग्भिः करणीयम्—'स्यात्'—इति सम्बन्धः ॥ ३ ॥

(४) ६।४।१०-१६ भिन्नैकदेशेऽपि भवेज्जुहोतिः।

( १ ) द्रव्यनाशनिमित्तकप्रायश्चित्तविचारः।

( २ ) दर्शपूर्णमासयोः श्रूयते—'भिन्ने जुहोति'—इति कपालभेदे होमः।

( ३ ) तत्र सन्देहः—किं कृत्स्ने एव कपाले भिन्ने सत्ययं प्रायश्चित्तहोमः नैकदेशे भिन्ने—उत एकदेशे एव भिन्ने न कृत्स्ने भिन्ने—उत कृत्स्नेऽपि भिन्ने एकदेशेऽपि भिन्ने इत्युभयथापीति।

( ४ ) पूर्वपक्षः—अयं होमः कपालस्य संस्काररूपः। अत्यन्तभिन्ने कपाले संस्कार्यः कपालो नष्ट इति होमस्य नास्ति प्रयोजनम्। तस्मादीषद्भङ्गे एव होमो नात्यन्तभङ्गे इति।

( ५ ) सिद्धान्तः—भिन्ने जुहोतीत्यत्र भिन्नशब्दो निमित्तमात्रप्रतिपादकः । ततश्च कपालभेदनिमित्तकोऽयं होम इति स्थितो वाक्यार्थः । अंशतो भिन्नोऽपि कपालो भिन्न एव—अत्यन्तभिन्नस्तु सुतराम् । तस्मादत्यन्तभिन्ने अंशतोपि भिन्ने—उभयथापि भवत्येव होम इति ।

एतदभिप्रेत्याह भिन्नेति । 'भिन्नः' 'एकदेशः' अंशमात्रं यस्य कपालस्य तस्मिन्नेवम्भूते—'अपि' कपाले—'जुहोतिः' होमः—'भवेत्' । न केवलमत्यन्तभिन्ने इत्यपिना बोध्यते ॥ ४ ॥

## (५) ६।४।१७-२१ क्षामेऽत्र कृत्स्ने यजतेर्विधानम्

( १ ) पूर्वाधिकरणापवादः—क्षामेष्टिन्यायः ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'अथ यस्य पुरोडाशौ क्षाययत्-तं यज्ञं वरुणो गृह्णाति—यदा तद्धविः सन्तिष्ठेत अथ स तदेव हविर्निर्वपेत्—यज्ञो ह यज्ञस्य प्रायश्चित्तिः' इति । अस्यार्थः—यस्य यज्ञस्य पुरोडाशौ आग्नेयाग्नीषोमीयौ दग्धौ तं यज्ञं वरुणो गृह्णाति—नायं यज्ञो यजमानस्य फलं ददाति—यदि तादृशहविष्को यज्ञ आसमाप्तेरनुष्ठीयेत तदा तत्प्रत्यवायपरिहाराय पुनस्तदेव हविर्निरुप्य यजमानो यज्ञमनुतिष्ठेत' इति ।

( ३ ) तत्र सन्देहः—किमत्यन्तक्षामेऽयं प्रायश्चित्तहोम उतांशतोऽपि क्षामे इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिरणन्यायेनात्यन्तदाहे ऽनत्यन्तदाहे इत्युभयथाऽपि होम इति ।

( ५ ) सिद्धान्तः—तप्तेषु कपालेषु यदा पुरोडाशः स्थाप्यते तदा सूक्ष्मांशदाहोऽवश्यम्भावी । एवं च यदि सूक्ष्मांशदाहेऽपि प्रायश्चित्तं स्यात्तदा सर्वत्र स्यात् । तथाच प्रायश्चित्तस्य नित्यत्वन्न नैमित्तिकत्वम् । सर्वदाहस्तु कादाचित्को भवति प्रायश्चित्तस्य निमित्तम् । तस्मात् सर्वदाहे एव प्रायश्चित्तहोम इति ।

एतदभिप्रेत्याह क्षाम इति । 'अत्र' यागे—'कृत्स्ने' सर्वस्मिन्-'क्षामे' दग्धे—'यजतेः' यज्ञस्य—'विधानम्' कर्तव्यताविधिरिति सम्बन्धः ॥५॥

## (६) ६।४।२२-२३ आर्ते हविष्येकतरेऽपि यागः ।

( १ ) द्रव्यनाशनिमित्तकप्रायश्चितविषयो विचारः ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति । हविर्द्वयनाशनिमित्तकं प्रायश्चित्तमत्र विहितम् ।

( ३ ) तत्र सन्देहः—किमुभयनाशे प्रायश्चित्तमुतैकतरनाशे इति ।

(४) पूर्वपक्षः—प्रायश्चित्तमिदं द्वयोरपि हविषोर्नाशे सति कर्तव्यम् नैकहविर्नाशे—उभयशब्दस्य श्रुतत्वात् इति।

(५) सिद्धान्तः—उभयशब्दार्थोऽत्र न विवक्षितः, हविःशब्दार्थमात्रेण निमित्तस्य पर्यवसितत्वात्। तस्मात् द्वयोर्नाशे एकतरनाशे चेत्युभयथापि प्रायश्चित्तमनुष्ठेयमेवेति।

एतदभिप्रेत्याह—आर्ते इति। 'एकतरेऽपि'—'हविषि' हविर्द्वये—'आर्ते' नष्टे सति—'यागः' प्रायश्चित्तरूपः—भवेदिति शेषः। एकतरस्य नाशे द्वयोश्च नाशे प्रायश्चित्तमनुष्ठेयमिति अपिना सूचितम्॥ ६॥

## (७) ६।४।२४-२५ होतुस्तु भक्षोऽभिषव सहोमे

(१) नैमित्तिकप्रायश्चित्तविचारप्रसङ्गेनान्यदपि निमित्तनैमित्तिकभावादिकं परीक्ष्यते।

(२) ज्योतिष्टोमे श्रूयते—'हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। अभिषवे होमे च कृते तत्कर्तृभिर्भक्षणमत्र विहितम्।

(३) तत्र सन्देहः—किं यो होमाभिषवयोरुभयोरपि कर्ता तस्यैव भक्षणमुत एकतरस्यापि कर्तुरिति।

(४) पूर्वपक्षः—अभिषवहोमयोरेकैकं भक्षणनिमित्तम्। अभिषवहोमौ भक्षणनिमित्तत्वेनात्र श्रुतौ। न चानयोस्साहित्यविधायकं किमप्यस्ति। तस्मादेकस्यापि कर्तुर्भवति भक्षणमिति।

(५) सिद्धान्तः—नात्राभिषवहोमयोर्निमित्तत्वं विधीयते। अपि तु होमाभिषवयोः कर्तुर्भक्षणं प्रति तयोरङ्गत्वमेव विधीयते। तस्मात् स्पष्टप्रतीयमानमनयोः साहित्यं विवक्षितमेव। तस्मात् सहितयोरेवाभिषवहोमयोः कर्तुर्भक्षणं नैकैकस्येति।

एतदभिप्रेत्याह होतुरिति। 'सहोमे' होमसहिते एव 'अभिषवे'—यदा अभिषवो होमश्च सहैवैकेनैव कर्त्रा क्रियते तदैव—'होतुः' होमकर्तुः—'भक्षः' भक्षणम्। यदा होताऽभिषवसहितं होमं करोति तदैव तस्य भक्षणं प्राप्नोतीत्यर्थः॥ ७॥

## (८) ६।४।२६-२७ द्वयोर्विनाशे पुनरादधातिः।

(१) इदमपरं निमित्तनैमित्तिकत्वम्।

(२) अग्निहोत्रे श्रूयते 'यस्योभावग्नी अनुगतावभिम्लोचेत सूर्यो वाऽभ्युदियात् पुनराधेयं तस्य प्रायश्चित्तिः' इति। अस्यार्थः—'आहवनीयगार्हपत्यौ उभावग्नी यदा नष्टौ भवतः तदा यदि सूर्यास्तः सूर्योदयो वा भवेत तर्हि पुनराधानं कर्तव्यम्' इति।

( ३ ) तत्र सन्देहः—किमन्यतरस्य नाशे प्रायश्चित्तमुतोभयोरिति ।

( ४ ) पूर्वपक्षः—षष्ठाधिकरणे यथा एकहविर्नाशोऽपि प्रायश्चित्तस्य निमित्तं तथाऽत्रापि एकवह्निनाशोऽपि प्रायश्चित्तस्य निमित्तमिति ।

( ५ ) सिद्धान्तः 'अग्नी आदधीत' इति पुनराधानविधिः । तत्र च द्वित्वविशिष्टस्याग्नेरुत्पादनं विहितम् । न चैकस्य नाशे द्वयोरुत्पादनं सम्भवति । तस्मात् नैमित्तिकं यत् पुनराधानं तत्र द्वित्वस्योपपत्तये निमित्तेऽपि वह्निनाशे द्वित्वं विवक्षितव्यम् । तस्मात् सूर्यास्तमयकाले उदयकाले वोभयाग्निनाशः पुनराधाननिमित्तमिति ।

एतदभिप्रेत्याह द्वयोरिति । 'द्वयोः' एवाग्नयोः—'विनाशे' सति—'पुनरादधातिः' पुनराधानरूपं प्रायश्चित्तं कर्तव्यं—न त्वेकतरस्य विनाशे इति भावः ॥ ८ ॥

## (९) ६।४।२८-२९ कर्मान्तरं पञ्चशरावयागः

( १ ) प्रातिनिध्यविचारोऽनुवर्तते नैमित्तिकविचारप्रसङ्गेन ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'यस्योभयं हविरार्तिमार्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति ।

( ३ ) तत्र सन्देहः—हविषि नष्टे पञ्चशरावौदनस्य प्रतिनिधिः उत निमित्ते सति कर्मान्तरमिति ।

( ४ ) पूर्वपक्षः—पूर्वस्मिन्नेव कर्मणि हविर्द्रव्येऽपचरिते द्रव्ये तत्प्रतिनिधिरेव पञ्चशरावौदनोऽत्र विहितः । हविर्द्रव्ये नष्टेऽपेक्ष्यते द्रव्यान्तरं दर्शयागे इति ।

( ५ ) सिद्धान्तः—पञ्चशराव ऐन्द्र इति पदद्वयेन द्रव्यदेवतासम्बन्धाभिधायिना यागान्तरमेव स्पष्टं विधीयते । द्रव्यदेवताभ्यां विशिष्टमिदं कर्म दर्शयागात् भिन्नमेवेति ।

एतदभिप्रेत्याह कर्मेति । 'पञ्चशरावयागः' इन्द्रदेवताकः पञ्चशरावौदननिर्वापः—'कर्मान्तरम्' दर्शयागात् पृथगेव कर्मेति ॥ ९ ॥

## (१०) ६।४।३०-३१ दर्शस्य नैमित्तिकमङ्गमेषः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) पञ्चशरावौदननिर्वापः कर्मान्तरमिति स्थितम् ।

( ३ ) तत्र सन्देहः-किमिदं कर्म दर्शयागस्य प्रतिनिधिरुत तस्यैवाङ्गमिति ।

( ४ ) पूर्वपक्षः—हविर्द्रव्यनाशेन दर्शयागस्य निवृत्तत्वात् तस्य स्थाने प्रतिनिधिराम्नात ऐन्द्रः पञ्चशरावौदन इति ।

(५) सिद्धान्तः—आदौ सम्पादितस्य हविर्द्रव्यस्य नाशेऽपि पुनरासादितेन हविषा दर्शयागः सुसम्पादः। एवं च न दर्शयागस्य सर्वथा निवृत्तिः। किन्तु दर्शेऽनुष्ठीयमाने यद्धविर्नाशरूपं वैगुण्यमापतितं तत्परिहाराय पञ्चशरावौदननिर्वापरूपं कर्म दर्शयागमुपकुर्वत्तस्यैवाङ्गं भवतीति।

एतदभिप्रेत्याह—दर्शस्येति। 'एषः' पञ्चशरावौदननिर्वापः—'दर्शस्य' दर्शयागस्यैव—'नैमित्तिकम्' हविर्द्रव्यनाशनिमित्तकम् 'अङ्गम्'-न तु तस्य प्रतिनिधिरिति भावः॥ १०॥

## (११) ६।४।३२-३३ सत्रोद्यमे विश्वजिदप्रवृत्तौ

(१) निमित्तनैमित्तिकविचारः।

(२) 'यः सत्राय आगुरते विश्वजिता यजेत' इति सत्रसङ्कल्पे निमित्ते विश्वजित् श्रूयते।

(३) तत्र सन्देहः—यः कश्चित् सत्राय सङ्कल्पं करोति स सर्वोऽपि विश्वजितमनुतिष्ठेत्—उत केवलं स एव यः सङ्कल्पं कृत्वा तस्यानुष्ठाने न प्रवर्तते—इति।

(४) पूर्वपक्षः—सङ्कल्पमात्रं विश्वजिदनुष्ठाने निमित्तं श्रूयते। अतो यः कोऽपि सङ्कल्पं करोति तेन विश्वजिद्यागोऽनुष्ठेयः। सत्रप्रयोगे स प्रवर्तते न वेत्यकिञ्चित्करमिति।

(५) सिद्धान्तः—कर्तव्याननुष्ठानस्य प्रायश्चित्तरूप एव विश्वजिद्याग इति स्पष्टं प्रतीयते। एवं च सङ्कल्पमात्रं न निमित्तमपि तु सङ्कल्प्याननुष्ठानम्। तस्मात् सङ्कल्प्य सत्रेऽप्रवृत्तेनैव विश्वजिदनुष्ठानमिति।

एतदभिप्रेत्याह—सत्रेति। 'सत्रोद्यमे' सत्राय उद्यमं सङ्कल्पं कृत्वा—'अप्रवृत्तौ' सत्रस्यानुष्ठाने यदि तस्य अप्रवृत्तिः स्यात् तदैव 'विश्वजित्' विश्वजिद्यागोऽनुष्ठेयः—न तु सङ्कल्पमात्रे-इत्याशयः॥११॥

## (१२) ६।४।३४-४० वत्सेन कालं कलयेद्व्रतस्य।

(१) निमित्तनैमित्तिकपरीक्षायां विशेषः।

(२) दर्शपूर्णमासयोः श्रूयते—'वत्सैरमावास्यायां व्रतमुपैति'। एतद्व्रतं च—'अमाषममांसं बहुसर्पिष्कं व्रतयति' इत्येतद्रूपो भोजनविशेषः॥

(३) सन्देहः—वत्सशब्देन किं व्रतसाधनमुच्यते उत व्रतस्य कालो विधीयते—इति।

(४) पूर्वपक्षः—वत्सैरिति तृतीयया साधनत्वमुच्यते। तस्मात् वत्ससाधनकं व्रतमत्र विधीयत—इति।

( ५ ) सिद्धान्तः—न योग्यो वत्सो व्रतस्य साधनं भवितुम् । वत्सशब्देनात्र वत्सापाकरणकाल उच्यते । तस्माद्वाक्येनानेन व्रताय वत्सापकरणकालो विधीयते-इति ।

एतदभिप्रेत्याह वत्सेनेति । 'वत्सेन' वत्सपदेन वत्सापाकरणसूचकेन—'व्रतस्य' 'कालं' 'कलयेत्' उपलक्षयेदित्यर्थः ॥ १२ ॥

## (१३) ६।४।४१-४२ असन्नयत्स्वप्ययमेव कालः

( १ ) पूर्वाधिकरणशेषः ।

( २ ) वत्सशब्देन व्रतस्य कालो लक्ष्यते इति स्थितम् ।

( ३ ) तत्र सन्देहः—अयं व्रतकालः किं यस्य सान्नाय्यमस्ति तस्यैव उत यस्य सान्नाय्यमस्ति यस्य च नास्तीत्युभयोरपीति ।

( ४ , पूर्वपक्षः—वत्सापाकरणं कालस्य लक्षकम् । यस्त्वमावास्यायां सान्नाय्यं न करोति—किन्तु ऐन्द्राग्नपुरोडाशं करोति—तस्य वत्सापाकरणं नास्त्येव। तस्मात् यस्य सान्नाय्यं तस्यैवायं व्रतकाल इति ।

( ५ ) सिद्धान्तः-यत्रापि नास्ति वत्सापाकरणां तत्रापि तदुपलक्षितः कालोऽस्त्येव । तस्मात् स कालः सर्वस्य—यस्य सान्नाय्यमस्ति यस्य च तन्नास्ति—इति ।

एतद्भिप्रेत्याह असन्नयत्स्विति । 'अयम्' वत्सापाकरणोपलक्षितः 'एव'—नान्यः— 'कालः'-'असन्नयत्सु' सान्नाय्यरहितेषु अपि कर्तृषु स्यात् । सान्नाय्यासान्नाय्योभयसम्बन्धी काल इत्यपिना सूचितम् ॥१३॥

## (१४) ६।४।४३-४७ शाखां क्षिपेत् प्रस्तरहोमकाले ।

( १ ) निमित्तनैमित्तिकविचारः ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'सह शाखया प्रस्तरं प्रहरति' इति ।

( ३ ) तत्र सन्देहः-किमत्र विधीयते—किं शाखा प्रस्तरस्याङ्गभूतेति उत प्रस्तरप्रहरणकाले शाखा प्रहर्तव्येति ।

(४) पूर्वपक्षः—प्रस्तरप्रहरणं प्रति शाखाया अङ्गत्वं स्पष्टमत्र विहितं प्रतिभासते ।

(५) सिद्धान्तः—वत्सापाकरणादौ शाखाया उपयोगः । उपयुक्तस्य चोपयोगान्तरमन्याय्यम् । तस्मात्प्रहरणं प्रत्यस्या अङ्गत्वं न सम्भवति । उपयुक्ता च शाखा प्रतिपत्तिमपेक्षते । प्रक्षेप एव चास्याः प्रतिपत्तिः । तस्मात् प्रस्तरप्रहरणेन शाखाप्रक्षेपकालो लभ्यते । तस्मात् प्रस्तरप्रहरणकाले एव शाखाप्रक्षेपः कर्तव्य इत्येव विध्यर्थः इति ।

एतदभिप्रेत्याह शाखामिति । 'प्रस्तरहोमकाले' यस्मिन् काले प्रस्त-

रहोमः क्रियते तस्मिन्नेव काले-'शाखां' वत्सापाकरणे कृतोपयोगाम्-'क्षिपेत्' प्रतिपत्तिरूपेण, न तु शाखा प्रस्तरहोमस्याङ्गमिति भावः ॥१४॥

षष्ठस्य पादे कथिताश्चतुर्थे
न्यायाः समीक्ष्यात्र चतुर्दशैव ।

स्पष्टम् ।

इति षष्ठस्य चतुर्थः ।

---

# अथ षष्ठस्य पञ्चमः पादः

दीक्षाविचारबहुलः ।

## (१) ६।५।१-७ देवताऽभ्युदयेऽन्या स्यात्

(१) निमित्तनैमित्तिकविचारोऽनुवर्तते पूर्वपादगतदशमाधिकरणविचारात् ।

(२) दर्शपूर्णमासयोः श्रूयते-'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेत्—ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्—ये स्थविष्ठास्तानिन्द्राय प्रदात्रे चरुम्—येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय चरुम्'। इति । अस्यायमर्थः—दर्शभ्रान्त्या केनचिद् चतुर्दश्यां हविर्निरुप्तं—ततः पूर्वस्यां दिशि प्रत्यूषे चन्द्रेऽभ्युदिते चतुर्दश्यामेव भ्रान्त्या निर्वपनं कृतमिति चन्द्रदर्शनेन निश्चित्य निरुप्तास्तण्डुलास्त्रेधा विभजनीयाः-अखण्डिताः ईषत्खण्डिताः अतिसूक्ष्मकणाश्चेति-त एते इन्द्रादिदेवताभ्यो प्रदातव्या' इति ।

( ३ ) तत्र सन्देहः—किमत्र कालापराधे यागान्तरं विधीयते—उत कालव्यत्यासं निमित्तीकृत्य दर्शपूर्णमासस्यैव देवतान्तरसंयोगरूपः प्रकारभेद उपदिश्यते इति ।

( ४ ) पूर्वपक्षः—प्रक्रान्तदर्शपूर्णमासादन्यदेवेदं कर्म—कालापराधप्रायश्चित्तार्थं द्रव्यदेवतान्तरविशिष्टस्य कर्मणः स्पष्टं विधीयमानत्वात्। तस्मादिदं कर्मान्तरं प्रायश्चित्तरूपमनुष्ठाय परेद्युर्दर्शपूर्णमासोऽनुष्ठेय इति।

( ५ ) सिद्धान्तः—हविर्निरुप्तमिति प्रकृतं यद् दर्शकर्म तत् परित्यज्य कर्मान्तरकल्पने प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येताम् । अतः प्रकृते एव दर्शकर्मणि कालव्यत्यासदोषं निमित्तीकृत्य निरुप्तस्य हविषः दर्शदेवताभ्योऽपनीय देवतान्तरेभ्यः प्रदानं कर्तव्यमिति दर्शस्यैव प्रयोग-

प्रकारभेदः। एवं च दर्शस्यैवायं नैमित्तिकः प्रयोगः न तु काललोपप्राय-श्चित्तम्। ततश्च कालव्यत्यासनिमित्तकं देवतान्तरसंयोगिदर्शप्रयोगमेवानुष्ठाय पश्चात् स्वकाले नित्योऽपि दर्शप्रयोगोऽनुष्ठेय इति।

एतदभिप्रेत्याह–देवतेति। 'अभ्युदये' दर्शीयाभ्युदितेष्टौ–'देवता' एव केवलम्– 'अन्या' दर्शीयदेवताभ्योऽतिरिक्ता–'स्यात्'—अन्यत् तु सर्वं दर्शेतिकर्तव्यतानुसार्येव, न तु कर्मान्तरमित्याशयः॥ १॥

(२) ६।५।१०–११ उपांशुस्तत्र हीयते।

(१) पूर्वाधिकरणशेषो विचारः।

(२) दर्शपूर्णमासयोर्यथा पुरोडाशहविष्को होमस्तथाज्यहविष्कोऽपि उपांशुयागरूपो भवति।

(३) तत्र सन्देहः—पूर्वाधिकरणवाक्येन यथा पुरोडाशसम्बन्धे देवतान्तरसंयोगः स्थितस्तथैव किमुपांशुयागेऽपि भवति न वेति।

(४) पूर्वपक्षः—यथैव पुरोडाशे हविषि दर्शीयदेवतात्यागस्तथैवोपांशुयागहविषि आज्येऽपि पूर्वदेवतां त्यक्त्वा प्रयोगान्तरं कर्तव्यमिति।

(५) सिद्धान्तः—पुरोडाशविषये उदाहृतवाक्ये देवतान्तरं विहितम्। आज्यविषये तु न तथा। तस्मात् अत्र कालव्यत्यासनिमित्तके दर्शस्य प्रयोगान्तरे यदि उपांशुयागोऽनुष्ठीयेत तर्हि पूर्वदेवतानां त्यक्तत्वात् देवतान्तरस्य चाश्रवणात् उपांशुयागस्य लोप एव स्यादिति। [वस्तुतस्तु उपांशुयागस्य पौर्णमासान्तर्गतत्वात् दर्शे प्रसक्तिरेव नास्ति। तस्मात् कृत्वा चिन्तारूपोऽयं विचारः। अत एवोक्तं यद्युपांशुयागोऽनुष्ठीयेतेति]।

उक्तसिद्धान्तमभिप्रेत्याह उपांशुरिति। 'तत्र' कालव्यत्यासनिमित्तके' दर्शस्य प्रयोगान्तरे—'उपांशुः' उपांशुयागः—'हीयते' लुप्यते नैवानुष्ठीयत इत्यर्थः॥ २॥

(३) ६।५।१२–१५ अनिरुप्तोदयेऽपीज्या

(१) प्रथमाधिकरणशेषो विचारः।

(२) कालव्यत्यासनिमित्तकाऽभ्युदयेष्टिरूपं दर्शस्य प्रयोगान्तरं कर्तव्यमिति स्थितम्।

(३) तत्रैव सन्देहान्तरम्—'किं हविषो निर्वापानन्तरं यदा चन्द्रोदयस्तदैवाभ्युदयेष्टिः कर्तव्या—उत यदा निर्वापात् प्रागपि चन्द्रोदयस्तदाऽपीति।

(५) पूर्वपक्षः—'यस्य हविर्निरुप्तम्' इति स्पष्टमभिधानात् हविषि निरुप्ते एव यदि चन्द्रोदयस्तदैवाभ्युदयेष्टिरिति निर्विवादमिति।

( ५ ) सिद्धान्तः—हविर्मात्रस्य चन्द्रोदयसम्बन्धोऽभ्युदयेष्टिनिमित्तत्वेनोच्यते—न तु निर्वापविशिष्टस्य हविषः । एवं च दर्शानुष्ठानप्रारम्भमात्रे तात्पर्यम् । तस्मात् प्रारब्धमात्रे दर्शानुष्ठाने यदि चन्द्र उदेति तर्हि निरुप्तेऽनिरुप्ते वा हविषि सम्पादितमात्रे अभ्युदयेष्टिरनुष्ठेयेति ।

एतदभिप्रेत्याह अनिरुप्तेति । 'अनिरुप्तोदये' हविषि अनिरुप्ते, हविर्निर्वापात् प्राक्, 'उदये' चन्द्रोदये सति—'अपि'—'इज्या' अभ्युदयेष्टिः—अनुष्ठेयेति शेषः ॥ ३ ॥

## (४) ६।५।१६–१७ तत्रोद्वापो हविर्ग्रहे ।

( १ ) पूर्वाधिकरणशेषो विचारः ।

( २ ) दर्शानुष्ठानस्याकाले प्रारम्भमात्रं निमित्तमभ्युदयेष्टेरिति स्थितम् ।

( ३ ) तत्र सन्देहः—हविर्निर्वापात् प्रागेव यदा चन्द्रोदयस्तदा चन्द्रोदयानन्तरमभ्युदयेष्टौ प्रक्रान्तायां हविषो निर्वापः काभ्यो देवताभ्यः स्यात्-किं प्राकृताभ्यो दर्शपूर्णमासीयाभ्य उत वैकृताभ्यः 'यस्य हविरि'त्यादिवाक्योक्ताभ्य एवेति ।

( ४ ) पूर्वपक्षः—तण्डुलान् विभजेदिति वाक्ये तण्डुलभूतस्य हविषः सम्बन्धेन वैकृतदेवतान्तरविधानं दृश्यते तण्डुलविभागस्तु अतण्डुलभूतानां न सम्भवति । तस्मात् अनिरुप्ते हविषि तण्डुलाभावात् प्राकृतदेवतापनये प्रमाणाभावात् चन्द्रोदयानन्तरं कृतो निर्वापः प्राकृताभ्य एव देवताभ्यः स्यादिति ।

( ५ ) सिद्धान्तः-उदाहृतवाक्ये तण्डुलशब्दो हविर्मात्रस्योपलक्षकः । अन्यथा दधिपयसोर्देवतापनयो न स्यात् । एवं च तण्डुलशब्देन हविर्मात्रविवक्षायां व्रीहीणामपि हविष्ट्वात् प्राकृतदेवतासम्बन्धमपनीय देवतान्तरसम्बन्धः कर्तव्यः । तस्माद् वैकृताभ्य एव देवताभ्यो निर्वाप इति ।

एतदभिप्रेत्याह-तत्रेति । 'तत्र' अभ्युदयेष्टौ—'हविर्ग्रहे' हविर्मात्रग्रहणे 'उद्वापः' अपनयः—प्राकृतदेवतायाः स्यादेवेति शेषः ॥ ४ ॥

## (५) ६।५।१८—२० अर्धोप्तेऽर्धग्रहस्तूष्णीम्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्त्यभ्युदितेष्टिः । तत्र हविष्यनिरुप्ते यदि चन्द्र उदेति तदा निर्वापो वैकृताभ्य एव देवताभ्यो भवतीति स्थितम् ।

( ३ ) तत्र सन्देहः-यदा हविषोऽर्धं निरुप्तमर्धमनिरुप्तं तदा यदि च-

न्द्रोदयः-तर्हि किं कर्तव्यम्-किं यदनिरुप्तं तद्वैकृतीभ्यो निर्वप्तव्यमुत प्राकृतीभ्य आहोस्वित् तूष्णीमेवेति ।

( ४ ) पूर्वपक्षः—अवशिष्टोंऽशः प्राकृतीभ्य एव निर्वप्तव्यः—तासामेव प्रवृत्तत्वात् ॥ अथवा चन्द्रोदये निमित्ते सति नैमित्तिकस्य प्राकृतदेवतासम्बन्धापनयस्य प्रथमाधिकरणन्यायेनावश्यम्भावित्वात् वैकृतीभ्य एवावशिष्टांशनिर्वाप इति पूर्वपक्षद्वयम् ।

( ५ ) सिद्धान्तः—अस्ति प्राकृतदेवतापनयः प्रथमाधिकरणन्यायेन । अन्यदेवतासम्बन्धस्तु न प्राप्नोति । एवं च प्राकृतीनामपनयात् वैकृतीनां च सम्बन्धाभावात् अवशिष्टांशस्य तूष्णीमेव निर्वाप इति ।

एतदभिप्रेत्याह अर्धेति । 'अर्धोंऽसे' हविषः 'अर्धं' अंशमात्रं यदा निरुप्तमवशिष्टं त्वनिरुप्तं तस्मिन्नभ्यन्तरे यदि चन्द्रोदयस्तर्हि—'अर्धस्य' अवशिष्टस्य हविरंशस्य 'ग्रहः' ग्रहणं निर्वापः—'तूष्णीम्' देवतासम्बन्धरहित एव भवतीति शेषः ॥ ५ ॥

## (६) ६।५।२१-२४ असान्नाय्येऽप्ययं यजिः ।

( १ ) अभ्युदयेष्टिविषयको विचारोऽनुवर्तते ।

( २ ) अभ्युदयेष्टौ श्रूयते—'दधनि चरुम्, शृते चरुम्' इति प्रायश्चित्तम् ।

( ३ ) तत्र सन्देहः—किमिदं प्रायश्चित्तं सान्नाय्यिन एवोत सान्नाय्यसन्नाय्युभयोरिति ।

( ४ ) पूर्वपक्षः—सान्नाय्यरहितस्य दधिपयसी न वर्तेते । तदभावे च 'दधनि चरुम्—शृते चरुम्' इति विधानं न सङ्गच्छते । तस्मात् सान्नाय्यिन एवषेष्टिरिति ।

( ५ ) सिद्धान्तः अभ्युदयेष्टिविधौ—'यस्य हविर्निरुप्त'मित्यादौ—अप्राप्ता देवता एव विधीयन्ते । न च तण्डुलवद् दधिपयसी अनूद्य एतद्विधानम् । चरुश्रपणं चोदकेऽपि सम्भवति । तस्मान्नात्रापि दधिपयसोरवश्यसंयोगः । तस्मात् सान्नाय्यिवदसान्नाय्यिनोऽपि भवतीष्टिरिति ।

एतदभिप्रेत्याह असान्नाय्य इति । 'असान्नाय्ये' यथा सान्नाय्ययुक्ते तथा सान्नाय्यरहितेऽपि-'अयं यजिः' अभ्युदयेष्टिरनुष्ठेया भवतीति शेषः६॥

## (७) ६।५।२५-२७ साभ्युत्थानोऽक्रयेऽपि स्यात्

( १ ) अधिकारविचारे निमित्तनैमित्तिकविचारोऽनुवर्तते ।

( २ ) इदमाम्नायते—'यदि सत्राय दीक्षितानां साभ्युत्तिष्ठासेत्, सोमं विभज्य विश्वजिता यजेत' । अस्यार्थः-सप्तदशानां सत्रिणामभ्ये

यदि कोऽपि सत्रैकदेशमनुष्ठाय सत्रं परित्यज्य गन्तुमिच्छेत्, तदा स्वकीयं सोमं विभज्य तेन सोमेन विश्वजिद्यागं कुर्यादिति ।

(३) तत्र सन्देहः—अयं विश्वजिद्यागः किं सोमक्रयानन्तरमुत्थातुमिच्छतो भवत्युत तस्मात् पूर्वमपि इति ।

(४) पूर्वपक्षः—उच्यमानस्य सोमविभजनस्य सोमक्रयात् पूर्वमसम्भवात् सोमक्रयानन्तरमेवोत्थातुमिच्छतोऽयं विश्वजिद्याग इति ।

(५) सिद्धान्तः—नात्र सोमविभागोऽङ्गत्वेन विधीयते । सोमग्रहणं तु प्रदर्शनार्थमेव । उत्थानेच्छां निमित्तीकृत्य विश्वजिदनुष्ठानमात्रमत्र विधीयते । तस्मात् प्रागपि सोमक्रयणादुत्थातुमिच्छतो भवति याग इति।

एतदभिप्रेत्याह साभ्युत्थान इति । 'अक्रये' सोमक्रयणात् प्राक् 'अपि'—सत्रे प्रवृत्तमात्रः—'साभ्युत्थानः' अभ्युत्थानेन सहितः अभ्युत्थानमिच्छन्—'स्यात्' विश्वजित्यधिकृत इति शेषः । तस्मात् सत्रे प्रवृत्तमात्रः सोमक्रयणात् प्रागूर्ध्वं वा उत्थातुमिच्छन् विश्वजिद्यागं कुर्यादित्याशयः ॥ ७ ॥

(८) ६।५।२८ दीक्षामानं विकल्पतः ।

(१) दीक्षाविचारः प्रस्तूयते ।

(२) ज्योतिष्टोमप्रकरणे दीक्षाकल्पाः श्रूयन्ते—'एका दीक्षा'''तिस्रो वा दीक्षाः'''चतस्रो दीक्षाः'''द्वादश दीक्षाः' इति । दीक्षणीयेष्ट्या सम्पन्नः संस्कारो दीक्षा । सा चैकस्मिन्दिनेऽनुष्ठिता एका । एवं त्रिषु चतुर्षु द्वादशसु वा दिनेषु दीक्षाधर्मा वाङ्नियमादयोऽनुवर्तनीयाः—इत्यस्य वाक्यस्यार्थः ।

(३) तत्र सन्देहः—किं ज्योतिष्टोमे द्वादशदीक्षाकल्प उपादेय उत दीक्षासङ्ख्यायामनियम इति ।

(४) पूर्वपक्षः—द्वादशैव दीक्षाः । 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' इति श्रूयते । यज्ञार्थं याच्ञया द्रव्यसम्पादनं भृतिवननम्—तच्च नित्यम् । तत्संयोगेन द्वादशत्वपक्षोऽपि नित्यः । एकादिसङ्ख्यानां च विकृतिषु सम्बन्ध इति ।

(५) सिद्धान्तः—उदाहृतवाक्यस्य 'दीक्षितो भृतिं वन्वीत' इत्येतावत्येव तात्पर्यम्-द्वादशवचनं तु प्रदर्शनार्थम् । एवं च सति प्रत्यक्षश्रुता एकत्वादिकल्पा अबाधितास्तिष्ठन्ति । तस्मात् सर्वे कल्पा ज्योतिष्टोमे विकल्पिता इति ।

एतदभिप्रेत्याह दीक्षेति । 'दीक्षायाः' 'मानम्' परिमाणं सङ्ख्येति यावत्—'विकल्पतः' वैकल्पिकमेव भवतीत्यर्थः ॥ ८ ॥

[ भाष्यकारेण त्वष्टमनवमाधिकरणयोः स्थाने एकमेवाधिकरणं स्थापितम् । तत्र चाष्टमाधिकरणसिद्धान्तभूतो वैकल्पिकपक्षः पूर्वपक्षः, नवमाधिकरणसिद्धान्तभूतो द्वादशकल्पः सिद्धान्त इति ज्ञेयम् ॥ अत्र धृत-श्चाधिकरणद्वयविभागो वार्तिककारसम्मतो मण्डनमिश्रेणापि स्वीकृतः । ]

(९) ६।५।२९ द्वादशाहे द्वादशैताः

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्ति दीक्षायां सङ्ख्याभेदः । स च ज्योतिष्टोमे वैकल्पिक इति स्थितम् ।

( ३ ) तत्र सन्देहः—किं सर्वासु ज्योतिष्टोमविकृतिषु विकल्प एव उत कुत्रापि नियमोऽपीति ।

( ४ ) पूर्वपक्षः—ज्योतिष्टोमे दीक्षापक्षेषु विकल्प इति स्थितम् । प्रकृतिवच्च विकृतिः। तस्मात् सर्वासु ज्योतिष्टोमविकृतिष्वपि विकल्प एवेति।

( ५ ) सिद्धान्तः—ज्योतिष्टोमविकृतौ दीक्षासङ्ख्यायाः द्वादशत्व एव नियमः । 'षट्त्रिंशदहो वा एष यद् द्वादशाहः' इति श्रूयते । तत्र सुत्या द्वादश उपसदो द्वादश इत्यविवादम् । एवं सति यदि दीक्षाया अपि द्वादशत्वं न स्यात्तर्हि षट्त्रिंशत्संख्यापूर्तिरेव न स्यात् । तस्माद् द्वादशाहे द्वादशैव दीक्षा नियता इति ।

एतदभिप्रेत्याह द्वादशाह इति । 'द्वादशाहे' द्वादशाहनामिकायां ज्योतिष्टोमविकृतौ—'एताः' दीक्षाः—'द्वादश' द्वादशसङ्ख्यका एव, न न्यूना नाप्यधिका इति नियम एवेत्याशयः ॥ ९ ॥

(१०) ६।५।३०–३७ माघीदीक्षासु पूर्णिमा ।

( १ ) दीक्षाविषयो विचारः ।

( २ ) गवामयने श्रूयते—'पुरस्तात् पौर्णमास्याश्चतुरहे दीक्षेरन्' इति ।

( ३ ) तत्र सन्देहः—कस्याः पौर्णमास्या इति ।

( ४ ) पूर्वपक्षः—यस्याः कस्या अपि पौर्णमास्या इति । नास्ति नियमः विशेषवचनाभावात् इति । अथवा यदि नियमस्तर्हि चैत्र्यामेव नियमः । उदाहृतवाक्ये पौर्णमासीमुक्त्वा वाक्यशेषे चैत्री सङ्कीर्त्यते । तस्मात् वाक्यशेषन्यायेन चैत्र्यां नियम इति वा पूर्वपक्षः ।

( ५ ) सिद्धान्तः—अस्ति नियमः—स च माघ्यामेव । उदाहृते वाक्ये एव 'एकाष्टकायां क्रयः सम्पद्यत' इत्युक्तम् । माघ्या एव पुरस्तात् चतुरहे दीक्षितस्य एकाष्टकायां क्रयः शक्यते कर्तुम् । न चैतत् चैत्र्यां सम्भवति । तस्मादत्र पौर्णमासी माघ्येवेति ।

एतदभिप्रेत्याह माघीति । 'दीक्षासु' विहिता—'पूर्णिमा' पौर्णमासी—'माघी' माघमासीयैव ग्राह्येति ॥ १० ॥

(११) ६।५।३८-३९ यावद्दीक्षं निषिद्धानि

(१) दीक्षाविचारोऽनुवर्तते निमित्तनैमित्तिकभावविचारप्रसङ्गेन।

(२) ज्योतिष्टोमे दीक्षारम्भदिनमारभ्य पञ्चमे सप्तमेऽष्टमे वा दिने सुत्या भवति—तस्मिन् सुत्यादिने त्रिषु सवनेष्वनुष्ठितेष्ववभृथः कर्तव्यः—तस्मिन् कृते दीक्षानियमाः ( दीक्षितो न ददाति न पचति न जुहोतीत्येवमादयः ) निवर्तन्ते । कदाचिदेवं स्याद्यद् दैवान्मानुषाद्वा विघ्नात् अवभृथः कतिचिद्दिनानि विलम्ब्यते ।

(३) तत्र सन्देहः—विहितकालादनन्तरं विलम्बितादवभृथानुष्ठानाच्च प्राग् यानि दिनानि तेषु किं दानपाकहोमनिवृत्तिरूपा नियमा अनुष्ठीयन्ते न वेति ।

(४) पूर्वपक्षः—तेषु दिनेषु न सन्ति नियमाः—श्रुतस्य नियमावधेरवभृथकालस्यातिक्रान्तत्वात् । तस्मात् उक्तायामवस्थायामवभृथात् प्राक् दानपाकहोमाः कर्तव्या एवेति ।

(५) सिद्धान्तः—दीक्षानियमत्यागस्यावभृथो निमित्तं नावभृथकालः । तस्मादवभृथकालेऽतिक्रान्तेऽपि यावदवभृथं दीक्षानियमा अनुवर्तन्ते । तस्मात्तेषु दिनेषु निषिद्धाः दानपाकहोमा नैव कार्या इति ।

एतदभिप्रेत्याह यावदिति । 'यावद्दीक्षं' यावत्कालपर्यन्तं दीक्षाऽनुवर्तते—दीक्षावसानसूचकोऽवभृथो नानुष्ठीयते—तावत्कालपर्यन्तं—'निषिद्धानि' मन्तव्यानि दानपाकहोमादिकर्माणि । तस्मादवभृथोत्कर्षे दीक्षानियमानामप्युत्कर्ष इत्याशयः ॥ ११ ॥

(१२) ६।५।४०-४१ नात्र लोपे पुनःक्रिया ।

(१) पूर्वाधिकरणशेषो विचारः ।

(२) अवभृथोत्कर्षे दीक्षानियमानामनुवृत्ताववान्तरेषु दिनेषु पाकादिकर्माभावात् अग्निहोत्रादि नानुष्ठीयते ।

(३) तत्र सन्देहः—एतेषु दिनेषु नित्यस्याग्निहोत्रादेरननुष्ठाने यो दोषस्तत्परिहाराय यः प्रतिहोमो विहितस्स कर्तव्यो न वेति ।

(४) पूर्वपक्षः—अग्निहोत्राङ्गभूतयोः प्रातस्सायंहोमयोः पुरुषापराधादननुष्ठाने सति प्रतिहोमोऽपराधपरिहारायावश्यकर्तव्यत्वेन विहितः । प्रकृतेऽपि पुरुषापराधादेवावभृथे विलम्बः पाकादिनिवृत्त्यनुवृत्तिश्च । तस्मादत्रापि दोषपरिहाराय प्रतिहोमोऽवश्यमेव कर्तव्य इति ।

(५) सिद्धान्तः-अवभृथविलम्बस्य पुरुषापराधकृतत्वेऽपि दीक्षा यदा

अनुवर्तते तदा दानादेः श्रुत्या प्रतिषिद्धत्वात् तदनुष्ठाने नास्ति कश्चित् पुरुषस्यापराधः । अतो नैवास्ति कर्तव्यस्य त्यागः । तस्मादपराधाभावे तत्परिहाराय प्रतिहोमो नैव प्राप्नोतीति ।

एतदभिप्रेत्याह—नात्रेति । 'अत्र' अवभृथोत्कर्षे दीक्षानियमानुवृत्तौ—'लोपे' पाकाद्यभावाद्धोमादीनामननुष्ठाने सति 'पुनःक्रिया' होमस्य पुनरनुष्ठानम् प्रतिहोमरूपेण—'न' भवति इति शेषः ॥ १२ ॥

(१३) ६।५।४२ प्रतिहोमो न चोत्कर्षे ।

( १ ) पूर्वविचारसदृशमेव विचारान्तरम् ।

( २ ) कृतेऽवभृथे तत्पश्चादुदवसानीयेष्टिर्विहिता । सेष्टिर्यदि केनापि कारणेन विलम्बिता तत्रापि तदिष्टिकरणपर्यन्तमग्निहोत्रादेर्निवृत्तिर्भवति ।

( ३ ) तत्र सन्देहः—किं तदनुष्ठानदोषपरिहाराय प्रतिहोमः कर्तव्यो न वेति ।

( ४ ) पूर्वपक्षः—अवभृथान्ते दीक्षानियमा निवृत्ताः । तथाच पाकादिनिषेधनिवृत्ताववश्यकर्तव्यत्वमग्निहोत्रादेः । तत् चेन्न कृतं तर्हि कर्तव्यस्य कर्मणोऽननुष्ठानात् तद्दोषपरिहाराय कर्तव्य एव प्रतिहोम इति ।

( ५ ) सिद्धान्तः—'एतया पुनराधेयसम्मितयेष्ट्वाऽग्निहोत्रं जुहुयात्' इति स्पष्टं श्रुत्या उदवसानीयेष्टेरनन्तरमग्निहोत्रानुष्ठानमुक्तम् । तस्मादकृतायामुदवसानीयायामिष्टौ अग्निहोत्रस्य कर्तव्यत्वं नैवापतति । तथा च तदननुष्ठाने दोषाभावात् दोषपरिहाराय प्रतिहोमो नैव कार्य इति ।

एतदभिप्रेत्याह प्रतिहोम इति । 'उत्कर्षे' उदवसानीयेष्टेरिति शेषः—यदा केनापि कारणेनावभृथानन्तरमुदवसानीयेष्टिर्न क्रियते तदा—'च' यथा पूर्वस्मिन्नधिकरणे—'प्रतिहोमः' 'न' कार्य इति शेषः ॥ १३ ॥

(१४) ६।५।४३ होमाश्चेत् सायमादितः ।

( १ ) प्रतिहोमविचारोऽनुवर्तते ।

( २ ) प्रतिहोमो न कर्तव्य इति स्थितम् । तत्र कृत्वा चिन्तायाम्—

( ३ ) सन्देहः—यदि प्रतिहोमः क्रियेत तर्हि तत्र बहूनां होमानाम्प्राप्तत्वात् तेषामनुष्ठाने अस्ति कोऽपि क्रमनियमो न वेति ।

( ४ ) पूर्वपक्षः—युगपदेव सर्वे होमाः प्राप्ताः । नास्ति तत्र किञ्चिदपि क्रमनियामकम् । तस्मात् क्रमाभावे यथारुचि कर्तव्या इति ।

( ५ ) सिद्धान्तः—अतिपातितानां कर्मणां यः क्रमस्तस्य परित्यागे मानाभावात् प्रतिहोमेऽपि स एव क्रमोऽनुष्ठेयः । तत्राग्निष्टोमस्य सूर्यास्तसमयात् प्रागेव समाप्तत्वात् सायंहोम एवादावतिपातितः । तस्मात् प्रतिहोमानुष्ठानकाले सायंहोम एवादौ कर्तव्य इति ।

एतदभिप्रेत्याह होमा इति । 'चेत्' यदि—'होमाः' क्रियेरन् तर्हि—'सायमादितः' सायंहोम एव आदिः प्रथमः यस्मिन् तमेव क्रममवलम्ब्य—कर्तव्या इति शेषः ॥ १४ ॥

## (१५) ६।५।४४ प्रातराद्या षोडशिनी

( १ ) पूर्वाधिकरणापवादः ।

( २ ) अग्निष्टोमसंस्थानन्तरं षोडशिसंस्था यदा परित्यज्यते—तन्निमित्ताश्च प्रतिहोमाः क्रियन्ते—

( ३ ) तत्र सन्देहः—षोडशित्यागनिमित्तेषु कः क्रम इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन अत्रापि सायंहोमादिक्रमेणैव कार्याः प्रतिहोमा इति ।

( ५ ) सिद्धान्तः—षोडशिसंस्थाया रात्रौ समाप्तिर्भवति । तस्मात् तत्रातिपाते प्रातर्होम एव प्रथमः । तस्मात् प्रतिहोमेष्वपि प्रातर्होम एवादौ कर्तव्य इति ।

एतदभिप्रेत्याह—प्रातरिति । 'षोडशिनी' षोडश्यतिपातनिमित्तकप्रतिहोमः-'प्रातराद्या' प्रातर्होम आद्यो यस्याः सा तथाभूता कार्या इति शेषः।

[ न्यायमालायामिदमधिकरणान्तरं न गृहीतम्—पूर्वाधिकरण एवान्तर्भावितम् ] ॥ १५ ॥

## (१६) ६।५।४५–४७ प्रकृते स्याद्‌ भिदाहुतिः ।

( १ ) निमित्तनैमित्तिकभावविचारोऽनुवर्तते ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'भिन्ने जुहोति' इति पात्रभेदनिमित्तको होमः ।

( ३ ) तत्र सन्देहः—पात्रभेदनिमित्तकोऽयं होमः किं दर्शपूर्णमासयोरेव उत यत्र यत्र वैदिके लौकिके वा कर्मणि पात्रं भिद्यते तत्रापीति।

( ४ ) पूर्वपक्षः—पात्रभेदे निमित्ते सति होमः कर्तव्य इति सामान्येनैव विधिः श्रुतः । तस्माद्‌ दर्शपूर्णमासयोरेव नियमने प्रमाणाभावात् सर्वत्रैव कर्मणि यदा यदा पात्रं भिद्यते तदा तदा तन्निमित्तको होमः कर्तव्य इति ।

( ५ ) सिद्धान्तः—सर्वत्र योजने प्रतिकर्म फलं कल्पनीयं प्रसज्यते । प्रकृतेनैव तु दर्शपूर्णमासकर्मणा सहैकवाक्यतायां तत्फलेनैव फलवत्ता सिध्यति । तस्मात् दर्शपूर्णमासयोरेव पात्रभेदे सति होमः कर्तव्य इति ।

एतदभिप्रेत्याह प्रकृत इति । 'भिदाहुतिः' पात्रभेदनिमित्तको होमः–'प्रकृते' दर्शपूर्णमासकर्मण्येव, नान्यत्र कर्मणि—'स्यात्'—कर्तव्येति शेषः ॥ १६ ॥

## (१७) ६।५।४८ व्यापन्नं भोजनानर्हम्

( १ ) निमित्तनैमित्तिकविचारः।

( २ ) इदमाम्नायते 'व्यापन्नमप्सु प्रहरति' इति।

( ३ ) तत्र सन्देहः—किमिदं व्यापन्नं नामेति निश्चेतुं शक्यते न वेति।

( ४ ) पूर्वपक्षः—निश्चायकस्य हेतोरभावान्नैव शक्यो निश्चेतुं व्यापन्नशब्दार्थ इति।

( ५ ) सिद्धान्तः—केशकीटादिभिर्दूषितं द्रव्यं यदार्यैर्भोक्तुमयोग्यं तदेव व्यापन्नमिति स्पष्टं निश्चेतुं शक्यत एवेति।

एतदभिप्रेत्याह व्यापन्नमिति। 'भोजनानर्हम्' आर्यैर्भोक्तुमशक्यं तदेव 'व्यापन्नम्' इति कथ्यते इति शेषः॥ १७॥

## (१८) ६।५।४९-५० अपच्छेदेऽपि तद्विधिः।

( १ ) निमित्तनैमित्तिकविचारः।

( २ ) ज्योतिष्टोमे श्रूयते—'यद्युद्गाताऽपच्छिद्येत अदक्षिणो यज्ञः संस्थाप्यः—यदि प्रतिहर्ताऽपच्छिद्येत सर्वस्वं दद्यात्' इति। अस्यार्थः—प्रातःसवने बहिष्पवमानेन स्तोष्यमाणा ऋत्विजः शालाया बहिः प्रसर्पन्ति। तदानीमेकस्य पृष्ठतो ऽन्य इति पिपीलिकावत् पङ्क्त्याकारेण गन्तव्यम्। तत्र पुरतो गन्तुः कच्छं गृहीत्वैव पृष्ठतोऽन्यो गच्छेत्। एवं सति प्रमादाद् यद्युद्गाता गृहीतं कच्छं मुञ्चेत् तदा दक्षिणामदत्वा यज्ञः समापनीयः—तं समाप्य पुनरपि यज्ञोऽनुष्ठेयः। यदा च प्रतिहर्ता कच्छं मुञ्चेत् तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यात्—इति।

( ३ ) तत्र सन्देहः—यद्युद्गाता प्रतिहर्ता चोभौ युगपदेव कच्छं मुञ्चेयातां तदोक्तं प्रायश्चित्तमनुष्ठेयं न वेति।

( ४ ) पूर्वपक्षः—उद्गातुरपच्छेदः प्रतिहर्तुश्चापच्छेदः पृथक् पृथक् प्रायश्चित्तद्वयनिमित्तत्वेन श्रुतः। यत्र द्वयोरपच्छेदस्तत्र नोद्गात्रपच्छेदो नापि प्रतिहर्त्रपच्छेदः। तस्मादुभयोरपच्छेदे श्रूयमाणनिमित्तस्याभावात् प्रायश्चित्तं नानुष्ठेयमिति।

( ५ ) सिद्धान्तः—द्वौ ह्यत्रापच्छेदौ। तयोरेकस्यैकैक एव कर्ता—इति निमित्तस्य नास्ति विघातः। तस्मान्निमित्तविघाताभावात् अस्त्येव प्रायश्चित्तमिति।

एतदभिप्रेत्याह द्व्यपच्छेद इति। 'द्व्यपच्छेदे' द्वयोः ऋत्विजोः उद्गातृप्रतिहर्त्रोरपच्छेदे पङ्क्तिविघाते—'तद्विधिः' 'तस्य' अपच्छेदनिमित्तकप्रायश्चित्तस्य 'विधिः' विधानम् अनुष्ठानम् भवत्येवेति शेषः॥१८॥

## (१९) ६।५।५१-५३ नैमित्तिकविकल्पोऽत्र

( १ ) पूर्वाधिकरणशेषः ।

( २ ) द्वयोरपच्छेदे प्रायश्चित्तमनुष्ठेयमिति स्थितम् ।

( ३ ) तत्र सन्देहः—द्वयोरुक्तयोः प्रायश्चित्तयोः अत्र किं समुच्चय उत विकल्प इति ।

( ४ ) पूर्वपक्षः—प्रायश्चित्तद्वयमत्र निमित्तभेदेन श्रुतम् । तन्निमित्तद्वयसमुच्चये च प्रायश्चित्तद्वयमपि समुच्चेतव्यम् । यद्यपि अदक्षिणत्वसर्वस्वदक्षिणत्वयोर्विरोधस्तथाऽपि प्रयोगभेदेन व्यवस्था-अपच्छेदयुक्ते प्रथमप्रयोगे दक्षिणा न दातव्या उत्तरप्रयोगे च सर्वस्वं दातव्यमिति ।

( ५ ) सिद्धान्तः—उत्तरप्रयोगेऽपच्छेदो नास्ति । नचासति निमित्ते प्रायश्चितं युक्तम् । तस्मात् प्रथमप्रयोगे एव निमित्तद्वयसम्पातात् तत्रैव प्रायश्चित्तम् । एवं च सत्यन्योन्यविरुद्धत्वात्तयोर्विकल्प एवेति ।

एतदभिप्रेत्याह नैमित्तिकेति । 'अत्र' उक्ते द्व्यपच्छेदरूपे निमित्ते—'नैमित्तिकयोः' प्रायश्चित्तयोः—'विकल्प' एव न तु समुच्चय इत्यर्थः॥१९॥

## (२०) ६।५।५४ परं पूर्वस्य बाधकम् ।

( १ ) अपच्छेदप्रायश्चित्तविषयक एव विचारोऽनुवर्तते ।

( २ ) युगपदपच्छेदे प्रायश्चित्तयोर्विकल्प इति स्थितम् । यत्र तु पौर्वापर्येणापच्छेदः—प्रथममुद्गातुस्ततः प्रतिहर्तुः—

( ३ ) तत्र सन्देहः—प्रायश्चित्तयोः—किं पूर्वापच्छेदकनिमित्तकमनुष्ठेयमुतोत्तरापच्छेदनिमित्तकमिति ।

( ४ ) पूर्वपक्षः—पूर्वापरबलीयस्त्वन्यायेन पूर्वापच्छेदनिमित्तकेन प्रायश्चित्तेनोत्तरापच्छेदनिमित्तकप्रायश्चितस्य बाधे पूर्वमेव प्रथममनुष्ठेयमिति ।

( ५ ) सिद्धान्तः—इह वाक्यद्वयात् ज्ञानद्वयमन्योन्यनिरपेक्षमेवोत्पद्यते । उत्पद्यमानं चोत्तरज्ञानं पूर्वज्ञानं बाधित्वैवात्मानं लभते । एवं चोत्तरकाले स्वयं बाधितं सत् नोत्तरस्य बाधकं भवितुमर्हति । न चान्यत् किञ्चिदुत्तरस्य बाधकमुपलभ्यते । तस्मादुत्तरकालीनमबाधितमेव वर्तते । तथा चोत्तरकालीनापच्छेदनिमित्तकमेव प्रायश्चित्तमनुष्ठेयमिति ।

एतदभिप्रेत्याह परमिति । 'परम्' उत्तरकालीनापच्छेदनिमित्तं प्रायश्चित्तं—'पूर्वस्य' पूर्वकालीनापच्छेदनिमित्तकप्रायश्चित्तस्य—'बाधकम्' । तस्मात् पूर्वकालीनापच्छेदकनिमित्तकमेव प्रायश्चित्तमनुष्ठेयमित्यर्थः ॥ २० ॥

## (२१) ६।५।५५। सर्वं दद्यात् पुनर्यज्ञे

( १ ) पूर्वविचारशेषः ।

( २ ) प्रथममुद्गातुस्ततः प्रतिहर्तुरपच्छेदे प्रायश्चित्तं विचारितम् । यत्र तु प्रथमम् प्रतिहर्त्रैवापच्छिद्यते तत उद्गाता तत्रोद्गात्रपच्छेदनिमित्तकमदक्षिणयागरूपं प्रायश्चित्तमनुष्ठेयमिति पूर्वाधिकरणे स्थितम् । तस्य प्रायश्चित्तस्वरूपं चेत्थम्-यागस्य प्रथमप्रयोगं दक्षिणारहितमनुष्ठाय द्वितीयप्रयोगोऽनुष्ठेय इति ।

( ३ ) तत्र सन्देहः—अस्मिन् द्वितीयप्रयोगे का दक्षिणा—किं द्वादशाधिकं गवां शतमुत सर्वस्वमिति ।

( ४ ) पूर्वप्रयोगे या दक्षिणा दित्सिता सैवोत्तरप्रयोगे दातव्येति स्पष्टं श्रूयते । पूर्वप्रयोगे च ज्योतिष्टोमदक्षिणाभूतं गवां द्वादशाधिकं शतं दित्सितम् । तस्मादुत्तरप्रयोगे गवां द्वादशाधिकशतरूपैव दक्षिणा देयेति।

( ५ ) सिद्धान्तः—प्रतिहर्तुः प्रथमेऽपच्छेदे प्राप्ते तन्निमित्तकं सर्वस्वदानं प्रायश्चित्तम् प्रथमप्रयोगे प्राप्तम् । तेन च द्वादशाधिकशतस्य बाधः । तस्मात् प्रथमप्रयोगे सर्वस्वमेव दित्सितम् । यच्च पूर्वं दित्सितं तदेवोत्तरप्रयोगे दातव्यमिति श्रुतम् । एवं चोत्तरकालीनोद्गात्रपच्छेदनिमित्तेऽपि उत्तरप्रयोगे पूर्वकालीनप्रतिहर्त्रपच्छेदप्रयुक्तं सर्वस्वमेव दातव्यमिति।

एतदभिप्रेत्याह—सर्वमिति । 'पुनर्यज्ञे' उत्तरप्रयोगे—'सर्वं' सर्वस्वम्-एव—'दद्यात्' दक्षिणारूपेणेत्यर्थः ॥ २१ ॥

## (२२) ६।५।५६ पुनरेकमहर्भवेत् ।

(१) अपच्छेदनिमित्तकप्रायश्चित्तमेव विचार्यते ।

(२) द्वादशाद्यहर्गणे यदि कस्मिंश्चिदहनि उद्गातुरपच्छेदस्तन्निमित्तके प्रायश्चित्तेऽदक्षिणमेव तं प्रयोगं समाप्य पुनः प्रयोगः कर्तव्य इति स्थितम्।

( ३ ) तत्र सन्देहः—किमत्र कृत्स्नोऽप्यहर्गणः पुनः प्रयोक्तव्य उतैकाहमात्रमिति ।

( ४ ) पूर्वपक्षः—कृत्स्नस्याहर्गणस्यैककर्मत्वात् कृत्स्नोऽपि पुनः प्रयोक्तव्य इति ।

( ५ ) सिद्धान्तः—महाप्रयोगस्यैकत्वेऽपि अवान्तरप्रयोगाणां परस्परभिन्नत्वात् एकाहमेवावर्तनीयमिति ।

एतदभिप्रेत्याह पुनरिति । 'पुनः' पुनः पुनः प्रयोगे—'एकमेव अहः भवेत्' आवर्तनीयम्—न तु कृत्स्नोऽपि गण इति भावः ॥ २२ ॥

पादे द्वाविंशतिर्न्याया न्यायविद्भिः समीरिताः ॥

स्पष्टार्थम् ॥

इति षष्ठस्य पञ्चमः ।

# अथ षष्ठस्य षष्ठ पादः ।

( सत्रविचारात्मकः )

## (१) ६।६।१-११ न भिन्नकल्पाः खलु सत्रिणः स्युः

( १ ) सत्राधिकारविषयको विचारः प्रवर्तते ।

( २ ) सन्ति सत्राणि-तत्र श्रूयते 'सप्तदशावराः सत्रमासीरन्' इति । प्रयाजेषु चानुष्ठानप्रकारे भेदोऽस्ति पुरुषभेदकृतः—कण्वकश्यपादिगोत्राणां नाराशंसो द्वितीयः प्रयाजः, इतरेषां तु तनूनपादेव । ते एते भिन्नकल्पाः ।

( ३ ) तत्र सन्देहः—सत्रेषु किं समानकल्पानां भिन्नकल्पानां च सहाधिकारः–उत समानकल्पानामेवेति ।

( ४ ) पूर्वपक्षः—'सप्तदशावरा' इति निर्विशेषं सामान्यमेवोक्ताः सत्रिणः । न चोपलभ्यते भिन्नकल्पानां सहानुष्ठाननिषेधः । तस्मात् समानकल्पा भिन्नकल्पाश्च सर्वेऽप्यधिकारिणः सत्रेषु–इति ।

( ५ ) सिद्धान्तः—भिन्नकल्पानां सहानुष्ठाने कर्म विगुणं स्यात् । यस्मिन् काले कण्वगोत्रस्य सत्रिणो नाराशंसः प्राप्नोति तस्मिन्नेव कालेऽपरस्य तनूनपात् प्राप्तः–एवं च यदि तनूनपात् कृतस्तर्हि काण्वस्य वैगुण्यम्–यदि नाराशंसस्तर्हीतरस्य वैगुण्यम् । एवं च वैगुण्ये दुर्निवारे सत्रस्य फलं न स्यात् । तस्मात् समानकल्पानामेव सहाधिकार इति ।

एतदभिप्रेत्याह नेति । 'भिन्नकल्पाः' भिन्नः कल्पः अनुष्ठानप्रकारो येषां ते–'सत्रिणः' सत्रे सहानुष्ठानाधिकारिणः–'न खलु' नैव 'स्युः'–अपि तु समानकल्पा एवेति भावः ॥ १ ॥

## (२) ६।६।१२–१५ यजेत राजा सपुरोहितस्तु ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) कुलाययज्ञं प्रकृत्य श्रूयते–'अनेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति ।

( ३ ) तत्र सन्देहः—अत्र किं राज्ञः द्वौ पुरोहितौ अधिकृतौ उत पुरोहितेन सहितो राजेति ।

( ४ ) पूर्वपक्षः—राजा क्षत्रियः पुरोहितो ब्राह्मणः । तस्माद्विभिन्नकल्पौ इमौ । अतश्च पूर्वाधिकरणन्यायेन न तयोः सहाधिकारः । द्वयोस्तु पुरोहितयोर्ब्राह्मणत्वादेककल्पत्वसम्भवे राज्ञो द्वौ पुरोहितावेवात्राधिकृताविति ।

( ५ ) सिद्धान्तः—'पुरोहितं वृणीते' इति वचनेनैकस्य राज्ञ एक

एव पुरोहितः । एवं च द्वयोः पुरोहितयोरसम्भवे राजा च पुरोहितश्चेति द्वावत्राधिकृतौ । स्थितेऽपि पूर्वाधिकरणन्याये श्रुतिवचनबलाद् भिन्नकल्पयोरपि सहाधिकारो भवति इति ।

एतदभिप्रेत्याह—यजेतेति । 'सपुरोहितः' पुरोहितेन सहितः—'राजा' तु भिन्नकल्पोऽपि—'यजेत' कुलाययज्ञेनेति शेषः ॥ २ ॥

## (३) ६।६।१६–२३ अब्राह्मणस्याधिकृतिर्न सत्रे

( १ ) सत्राधिकारविचारोऽनुवर्तते ।

( २ ) सन्ति सत्राणि ।

( ३ ) तत्र सन्देहः—सत्रेषु किं त्रयाणां वर्णानामधिकार उत ब्राह्मणमात्रस्येति ।

( ४ ) पूर्वपक्षः—'सप्तदशावरा ऋद्धिकामाः सत्रमासीरन्' इति सामान्यत ऋद्धिकामानामेवाधिकारस्य श्रुतत्वात् त्रयाणामेव वर्णानामधिकारः इति ।

( ५ ) सिद्धान्तः—ब्राह्मणमात्रस्यार्त्विज्येऽधिकार इति द्वादशे स्थास्यति । अत्र तु ये 'यजमानास्त एवर्त्विजः' इति यजमानानामेव ऋत्विक्कार्याणि । तस्माद् ब्राह्मणस्यैवाधिकार इति ।

एतदभिप्रेत्याह—अब्राह्मणस्येति । 'सत्रे' सत्रानुष्ठाने—'अब्राह्मणस्य' यो ब्राह्मणो न भवति तस्य—'अधिकृतिः' अधिकारो न भवतीति शेषः ॥३॥

## (४) ६।६।२४–२६ वासिष्ठशब्दो भवतीह गौणः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) ब्राह्मणस्यैव सत्रेऽधिकार इति स्थितम् ।

( ३ ) तत्र सन्देहः—अयमधिकारः किं सर्वेषां ब्राह्मणानामुत वासिष्ठानामेव उत वैश्वामित्राणामेवेति ।

( ४ ) पूर्वपक्षः—ऋद्धिकामत्वमेवात्राधिकारनियामकम् । तच्च सर्वेषां तुल्यम् । तस्मात् सर्वेषामधिकारः । अथवा 'वासिष्ठो ब्रह्मा भवति' इति वासिष्ठस्यैव ब्रह्मत्वविधानात् सर्वेषां सत्रिणां वासिष्ठत्वमेव प्राप्तमिति ।

( ५ ) सिद्धान्तः—'वासिष्ठो ब्रह्मा' इति न ब्रह्मणो वासिष्ठत्वं विदधाति—स्तोमभागप्रशंसारूपोऽयमर्थवाद एव—ईदृशाः स्तोमभागमन्त्रा यदेतानधीयानोऽवासिष्ठोऽपि ब्रह्मतामर्हतीत्यस्यार्थः । होतुस्तु वैश्वामित्रत्वं स्पष्टं विहितम्—'वैश्वामित्रो होता' इति वाक्ये । तस्मात् होतुर्वैश्वामित्रत्वे स्थिते प्रथमाधिकरणन्यायेन वैश्वामित्राणां तत्समानकल्पानामेव चाधिकारः सत्रे इति ।

एतदभिप्रेत्याह—वासिष्ठेति । 'इह' वासिष्ठो ब्रह्मेत्यत्र वाक्ये—'वासिष्ठशब्दः' 'गौणः' स्तावकोऽर्थवादः—'भवति'—न तु ब्रह्मणो वासिष्ठत्वविधायक इति शेषः । तस्मात् सत्रे न वासिष्ठादीनामपि तु वैश्वामित्राणां तत्समानकल्पानां चात्राधिकार इत्याशयः ॥ ४ ॥

## (५) ६।६।२७-३२ सत्रेऽधिकारी न भवेन्निरग्निः

( १ ) सत्राधिकारोऽनुवर्तते ।

( २ ) सत्राण्येवात्राप्युदाहरणम् ।

( ३ ) तत्र सन्देहः—अत्र किं साग्नीनामेवाधिकार उतानग्नीनामपीति ।

( ४ ) पूर्वपक्षः—सत्रिणाम्मध्ये यद्येकोऽपि साग्निः स्यात्तर्हि तस्यैवाग्निषु तेन सह प्रवृत्तैरनग्निकैरपि कार्यं कर्तुं शक्यत एव । तस्मात् सर्वे साग्निकाः स्युरित्यस्यावश्यकता नास्ति । तस्मात् साग्नीनामनग्नीनामप्यधिकार इति ।

( ५ ) सिद्धान्तः—'अग्नीनादधीत' इति विधावात्मनेपदश्रवणादाधानफलस्य कर्तृमात्रगामित्वम् । तत्फलं च कर्मानुष्ठानयोग्यता । तस्मात् य अग्नीनाधत्ते तन्मात्रस्यैव तत्साध्यकर्मस्वधिकारः । तस्मादनग्नयो नाधिकारिण इति ।

एतदभिप्रेत्याह—सत्र इति । 'निरग्निः' अनाहिताग्निः—'सत्रे' सत्रानुष्ठाने—'अधिकारी' 'न भवेत्'—अपि तु साग्निरेवेति भावः ॥ ५ ॥

## (६) ६।६।३३-३५ जुह्वादिपात्रं पृथगत्र कार्यम् ।

( १ ) सत्रविषयक एव विचारः ।

( २ ) सन्ति सत्रप्रयोगे जुह्वादिपात्राण्यपेक्षितानि सत्रिभिः ।

( ३ ) तत्र सन्देहः—किं यस्य कस्यापि सत्रिणः तस्याग्निहोत्रसम्बन्धीनि पात्राण्यासाद्य तैरेव सर्वे व्यवहरेयुरुत सत्रार्थे पृथगेव सकलयजमानसाधारणानि पात्राणि सम्पादनीयानीति ।

( ४ ) पूर्वपक्षः—पूर्वमग्निहोत्रसम्बन्धेनासादितानि पात्राणि तत्र स्थितान्येव । तैरेव च प्रयोगः सर्वैरपि सम्भवति । तथा सति इतरेषां नवीनानां पात्राणां सम्पादने यत्नो वृथैव । तस्मात् यस्य कस्यापि यजमानस्य पात्राणि गृहीत्वा सर्वेऽपि व्यवहरेयुरिति ।

( ५ ) सिद्धान्तः—साग्निकस्य मरणे तदीयानि यज्ञपात्राणि सर्वाणि तेन सहैव दाह्यन्ते । तथा च सत्रिणाम्मध्ये यस्यैकस्य पात्राणि गृहीतानि स यदि मध्य एव म्रियेत तर्हि पात्राण्यपि दह्येरन् । पात्रदाहे चावशिष्टः प्रयोगो विगुणः स्यात् । तस्मात् सत्रिणां स्वस्वपात्रेभ्यः पृथगेव सत्रार्थं साधारणानि पात्राणि सम्पादनीयानीति ।

एतदभिप्रेत्याह जुह्विति । 'अत्र' सत्रे--'जुह्वादि' 'पात्रम्'--'पृथक्' यजमानानां स्वस्वाग्निसम्बन्धीनि यानि पात्राणि तेभ्यो भिन्नं-"सर्वयजमानसाधारणम--'कार्यम्' सम्पादनीयमित्यर्थः ॥ ६ ॥

( ७ ) ६।६।३६-३६ भवेद्‌ विशामेव न साप्तदश्यम्

( १ ) अधिकारविचारोऽनुवर्तते ।

( २ ) अध्वरकल्पादिष्विष्टिविकृतिषु श्रूयते—'सप्तदश सामिधेनीरनुब्रूयात्' इति ।

( ३ ) तत्र सन्देहः—यदेतत् सामधेनीनां साप्तदश्यं तत्र वैश्यानामेवाधिकार उत त्रयाणां वर्णानामिति ।

( ४ ) पूर्वपक्षः—प्रकृतौ 'सप्तदशानुब्रूयाद्वैश्यस्य' इति वैश्यस्य पृथगभिधाय साप्तदश्यमुच्यते । तस्माद्वैश्य एवात्राधिकृतो न क्षत्रियो ब्राह्मणो वेति ।

( ५ ) सिद्धान्तः—प्रकृतौ 'पञ्चदश सामिधेनीरन्वाह' इति वर्णत्रयसाधारण्येन पाञ्चदश्यमुक्त्वा पश्चाद्‌ वैश्यमात्रं निमित्तीकृत्य साप्तदश्यं विहितम् । एवं च प्रकृतिसम्बन्धेन यत्साप्तदश्यमुक्तं तस्य प्रकृतावेवान्वयो न विकृतिषु । विकृतिषु च प्रकृतिगतपाञ्चदश्यवत् साप्तदश्यं वर्णत्रयसाधारण्येन विहितम् । तस्मात् वर्णत्रयस्याप्यधिकारः साप्तदश्ये तत्साध्ये चाध्वरकल्पादौ कर्मणीति ।

एतदभिप्रेत्याह भवेदिति । 'साप्तदश्यं' सामिधेनीनां सप्तदशसङ्ख्यकत्वम्—'विशामेव' वैश्यानां केवलं—'न भवेत्' अपि तु त्रयाणामेव वर्णानामित्याशयः ॥ ७ ॥

न्यायास्तु सप्तैव भवन्ति पादे ।

स्पष्टम् ।

इति षष्ठस्य षष्ठः ।



# अथ षष्ठस्य सप्तमः पादः ।

( यज्ञे किं देयं किं न देयमिति विचारः )

(१) ६।७।१-२ सर्वस्वे ज्ञातयो न स्युः

( १ ) देयविचारः प्रस्तूयते ।

( २ ) 'विश्वजिति सर्वस्वं ददाति' इति सर्वस्वदानं विहितम् ।

( ३ ) तत्र सन्देहः—यावत् किञ्चित् 'स्व'शब्देन व्यपदिश्यते-माता पितेत्येवमादि-किमेतत् सर्वमपि देयमुत यत्र प्रभुत्वयोगेन 'स्व'-शब्दस्तदेवेति ।

( ४ ) पूर्वपक्षः—पित्रादिष्वपि स्वशब्दव्यपदेशस्य तुल्यत्वात् तेषामपि दानम् धनादीनामिवेति ।

( ५ ) सिद्धान्तः—आत्मसम्बन्धत्यागपूर्वकं परकीयस्वत्वापादनं दानमित्युच्यते। दीयमाने च पितरि न भवति दातुः स्वकीयपितृत्वसम्बन्धत्यागः परकीयपितृत्वापादनं वा । स्वशब्दस्य च चत्वारोऽर्थाः—आत्मा ज्ञातिः आत्मीयं धनं चेति । एतेषु चैक एवार्थ एकस्मिन् वाक्ये ग्राह्यः । प्रकृते च गवादिधनस्यैव दक्षिणात्वादिहापि तद्वाचित्वमेव स्व-शब्दस्य युज्यते । तस्मात् धनस्यैव दानं न पित्रादीनां ज्ञातीनामिति ।

एतदभिप्रेत्याह सर्वस्व इति। 'सर्वस्वे' विश्वजिति देयत्वेन विहिते-'ज्ञातयः' पित्रादयः—'न स्युः'—अपि तु गवादिधनमेवेत्याशयः ॥ १ ॥

(२) ६।७।३ देयं भूगोलकं न तु ।

( १ ) देयविचारो वर्तते ।

( २ ) उक्ते एव सर्वस्वदाने—

( ३ ) सन्देहः—किं कृत्स्नं भूमण्डलं देयं न वेति ।

( ४ ) पूर्वपक्षः—यस्य स्वत्वं भूमण्डले तस्य समस्तं भूमण्डलं गवादीव धनमेव । तस्मात् तेन देयमिति ।

( ५ ) सिद्धान्तः—समस्तभूमण्डले न कस्यापि स्वत्वम् । तत्तु सकलानां प्राणिनां कर्मफलोपभोगभूमिः । अत एव सर्वसाधारणम् । तस्मात् भूखण्डस्य देयत्वेऽपि भूगोलकस्य न देयतेति ।

एतदभिप्रेत्याह:देयमिति । 'भूगोलकं' समस्तं भूमण्डलम्-'तु' 'न देयम्'-यद्यपि भूखण्डम्भवति देयमिति तुना सूचितम् ॥ २ ॥

(३) ६।७।४ नाश्वा देयाः पर्युदासात्

( १ ) देयविचारः ।

( २ ) उक्ते सर्वस्वदाने एव पुनः—

( ३ ) सन्देहः—किमश्वा देया उत नेति ।

( ४ ) पूर्वपक्षः—'न केसरिणो ददाति' इति विश्वजिति श्रूयते, सर्वस्वदानं च विहितम्। एवं च वाक्यद्वयपर्यालोचनयाऽश्वस्य दानं वैकल्पिकमित्यभ्युपगन्तव्यमिति ।

( ५ ) सिद्धान्तः—'न केसरिणो ददाती'ति न प्रतिषेधोऽपि तु पर्युदास एव। ततश्च अश्वस्य पर्युदासे सत्यश्वव्यतिरिक्तमेव सर्वस्वं देयमित्येव विधिनिषेधवाक्यद्वयपर्यालोचनया लभ्यतेऽर्थः। तस्मादश्वा नैव देया इति।

एतदभिप्रेत्याह नेति । 'अश्वाः' 'न' 'देयाः'—विश्वजिति—कस्मात्—'पर्युदासात्' केसरिणो न ददातीत्यनेन वाक्येनाश्वस्य पर्युदस्तत्वादित्यर्थः ॥ ३ ॥

(४) ६।७।५ स्थितमेव च दीयते ।

( १ ) देयविचारो वर्तते ।

( २ ) सर्वस्वदाने प्राप्ते—

( ३ ) सन्देहः—किं यावन्ति मनुष्यस्य भोगोपकरणानि तेषामसत्त्वे तानि सर्वाण्यर्जयित्वा देयानि—उत यान्येव आत्मनो वर्तन्ते तान्येव देयानि—नाविद्यमानान्यर्जनीयानीति ।

( ४ ) पूर्वपक्षः—सर्वस्वदानं प्रकृत्य श्रूयते—'पुरुषेण भोग्यं शय्यासनादि यत्सर्वं तद्दातव्यम्' इति। तस्मादेतेषु यन्नास्ति तत् सर्वमर्जयित्वापि देयमिति ।

( ५ ) सिद्धान्तः—चोदकप्राप्तं दानमुद्दिश्यैव सर्वस्वविधानम्। सर्वस्वशब्दश्च दातुर्विद्यमानधनवाच्येव। तस्माद् यदस्ति तदेव देयमिति।

एतदभिप्रेत्याह स्थितमिति। 'स्थितम्' दातुर्विद्यमानं यद् धनं तत् 'एव' 'च' 'दीयते'—न त्वपरमर्जयित्वेति भावः ॥ ४ ॥

(५) ६।७।६ न धर्मोपनतो देयः

( १ ) सर्वस्वदेयविचारो वर्तते ।

( २ ) विश्वजिति देयस्य सर्वस्वस्य प्रसङ्गेन—

( ३ ) सन्देहः—यः शूद्रो ब्राह्मणं धर्मज्ञानार्थम्परिचरति स परिचारकः शूद्रो देयो न वेति ।

( ४ ) पूर्वपक्षः— सर्वाणि स्वानि देयानि । परिचारकोऽपि स्वम् । तस्मात् सोऽपि देय इति ।

( ५ ) सिद्धान्तः—धर्मं जिज्ञासमान एवायं ब्राह्मणं शुश्रूषते। न चैवंरूपः परिचारकः क्रीतदासवत् ब्राह्मणस्य स्वं भवति । तस्मात् स न देय इति ।

एतदभिप्रेत्याह नेति–'धर्माय' धर्मज्ञानसम्पादनाय 'उपनतः' ब्राह्मणं सेवमानः—शूद्रः—'न देयः'—सर्वस्वदक्षिणायामिति शेषः ॥ ५ ॥

(६) ६।७।७ तत्कालं तु प्रदीयते ।

( १ ) सर्वस्वदेयविचारो वर्तते ।

( २ ) सर्वस्वे देये—

( ३ ) सन्देहः—किं यद् धनं दक्षिणाकाले वर्तते तदेव देयमुत भूतमनागतञ्चापीति ।

( ४ ) पूर्वपक्षः—भूतं—वर्तमानं—भावि यत् किञ्चिद् धनं तत्सर्वं सर्वस्वपदेन विवक्षितम् । तस्मात् सर्वस्वे देये यद् भावि तदपि देयमिति ।

( ५ ) सिद्धान्तः—भूतं विनष्टं भावि च नास्त्येव । तस्माद् दानकाले तदुभयं नास्त्येव । अविद्यमानस्य दानासम्भवः । तस्माद् यद् दानकाले विद्यमानं तन्मात्रमेव देयमिति ।

एतदभिप्रेत्याह तदिति । 'तत्कालं'-'स' दानकालः 'कालो' यस्य तत्, दानकाले विद्यमानं यद् धनम् तदेव—'प्रदीयते' सर्वस्वदाने—न तु भूतं भावि वेत्याशयः ॥ ६ ॥

(७) ६।७।८–१२ क्रत्वर्थं नैव दातव्यम्

( १ ) सर्वस्वदेयविचारो वर्तते ।

( २ ) विश्वजिति सर्वस्वं देयमिति विहितम् ।

( ३ ) तत्र सन्देहः—दक्षिणायां यदा सर्वस्वं प्रदत्तं तदनन्तरमेवावशिष्टेऽपीतिकर्तव्यतांशे कर्म त्यक्तव्यमुतावशिष्टं कर्म समापनीयं तदर्थं च धनमवशेषणीयमिति ।

( ४ ) पूर्वपक्षः—प्रदत्ते सर्वस्वे द्रव्याभावादेवावशिष्टकर्मानुष्ठानासम्भवः । तस्मादवशिष्टस्येतिकर्तव्यतांशस्य त्याग एव प्राप्त इति ।

( ५ ) सिद्धान्तः—दक्षिणा हि माध्यन्दिनसवने दीयते । तदनन्तरं यदि द्रव्याभावात् कर्मणो विराम एव प्राप्तस्तर्हि तदूर्ध्वभाविनः तृतीयसवनमारभ्योदवसानीयान्तस्य क्रतुभागस्य विधानं सर्वथा व्यर्थमेव स्यात् । न चाङ्गभूतया दक्षिणया प्रधानस्य क्रतोर्बाधो युक्तः । तस्मात् साङ्गक्रतुसम्पादनाय यावद्धनमपेक्षितं तावदवस्थाप्यैव सर्वस्वं दक्षिणायां देयमिति ।

एतदभिप्रेत्याह क्रत्विति। 'क्रत्वर्थम्' यत् धनं साङ्गस्य क्रतोः सम्पादनायापेक्षितं तत्—'नैव दातव्यम्' दक्षिणायामिति शेषः ॥ ७ ॥

(८) ६।७।१४–१७ देयं सर्वगणेऽपि तत् ।

( १ ) सर्वस्वदक्षिणाविषयको विचारो वर्तते।

( २ ) अस्त्यहर्गणोऽष्टरात्रः। तत्र आदौ विश्वजित्-मध्ये ज्योतिः-अन्ते अभिजित् इति कर्मानुष्ठानक्रमः। एवमत्र विश्वजिदङ्गत्वेन विहितम्।

( ३ ) तत्र सन्देहः—अहर्गणाङ्गभूते विश्वजिति अपि किं सर्वस्वं दक्षिणा उत द्वादशाधिकशतमेवेति।

( ४ ) पूर्वपक्षः—अहर्गणो द्वादशाहस्य विकृतिः—द्वादशाहश्च ज्योतिष्टोमस्य विकृतिः-ज्योतिष्टोमे च द्वादशाधिकं शतं दक्षिणा। तस्मात् परम्परया तद्विकृतावहर्गणेऽपि तदेव दक्षिणा। तस्मादहर्गणस्य प्रथमेऽहनि कृते विश्वजित्यपि तावदेव न सर्वस्वमिति।

( ५ ) सिद्धान्तः—एकाहो विश्वजित् स्वतन्त्रमेव कर्म। अहर्गणाद्यदिनकर्तव्यस्य कर्मणोऽपि तेनैव नाम्ना विहितत्वात् तस्यैव धर्मा अतिदिश्यन्ते। तस्मात् अहर्गणे प्रथमेऽहनि कृते विश्वजिति सर्वस्वमेव दक्षिणेति।

एतदभिप्रेत्याह—देयमिति। 'सर्वगणे' अहर्गणेऽपि यो विश्वजित् क्रियते तस्मिन् 'अपि'—'तत्' सर्वस्वं—'देयम्' दक्षिणात्वेनेति शेषः।

वार्तिककारमतेन तु द्वादशशतं देयमित्येव सिद्धान्तः॥ ८॥

## (९) ६।७।१८-२० तद्‌ द्वादशशतादूर्ध्वम्

( १ ) सर्वस्वदक्षिणाविचारप्रसङ्गेन तस्येयत्ताविचारः।

( २ ) विश्वजिति सर्वस्वं देयमिति स्थितम्।

( ३ ) तत्र सन्देहः—यस्य द्वादशशतपरिमितं तदल्पं वा धनं सर्वस्वं वर्तते—किं तस्यापि विश्वजित्यधिकारः—उत यस्य द्वादशशतादधिकं तस्यैवेति।

( ४ ) पूर्वपक्षः— सर्वं धनं सर्वस्वपदवाच्यम्। यस्य द्वादशशतं तदल्पं वा धनं वर्तते तस्य तदेव सर्वस्वम्। तस्मात्तस्यापि विश्वजित्यधिकारोऽस्त्येवेति।

( ५ ) सिद्धान्तः—ज्योतिष्टोमप्रकरणे द्वादशशतं दक्षिणेति विधानान्तरं श्रूयते—'यद्येतावता नानमेयुरपि सर्वस्वेन' इति। तेन द्वादशशतादधिकपरिमाणमेव सर्वस्वपदेन विवक्षितमिति सूचितम्। तस्मात् विश्वजित्यपि तथैवाभ्युपगन्तव्यम्। एवं च यस्य द्वादशशतादधिकं धनं तस्यैव सर्वस्वदानसम्भवात् तस्यैव विश्वजित्यधिकारो नाल्पधनस्येति।

एतदभिप्रेत्याह तदिति। 'तत्' सर्वस्वपदवाच्यम्—'द्वादशशतात्' 'ऊर्ध्वम्' अधिकमेव विवक्षितम्—न ततोऽल्पतरमित्याशयः॥ ९॥

(१०) ६।७।२१-२२ देयं कल्पान्तरं बहु ।

(१) विश्वजिति देयं विचार्य आधाने देयं विचार्यते ।

(२) आधाने श्रूयते-'एका देया-षड् देयाः-द्वादश देयाः-चतुर्विंशतिर्देयाः-शतं देयम्—सहस्रं देयम्-अपरिमितं देयम्' इति ।

(३) तत्र सन्देहः-अपरिमितमित्यनेन किं विधीयते-किमेकादिसङ्ख्यया यत् परिमितं तन्न दातव्यमिति प्रतिषेधः-उत अपरिमितं नाम किञ्चित्तेभ्योऽन्यत् तद् देयमिति विधिरिति ।

(४) पूर्वपक्षः-अपरिमितशब्दगतेन नञा परिमाणं निषिध्यते । तस्मात् यत् परिमितं तन्न देयमिति प्रतिषेध एव तस्यार्थ इति ।

(५) सिद्धान्तः—रूढ्या अपरिमितशब्दस्य बहुत्वमेवार्थः । तस्मान्नैकादिसङ्ख्या निषिध्यतेऽपितु तेभ्यः कल्पान्तरमेव विधीयते इति ।

एतदभिप्रेत्याह—देयमिति । 'बहु' अपरिमितशब्दवाच्यम्—'देयम्' इति 'कल्पान्तरम्' । यथा एका देयेति बहवः सङ्ख्याकल्पास्तथैव बहु देयमित्यपि एकः कल्पः 'अपरिमितं देयम्' इत्यनेन विहित इत्याशयः ॥ १० ॥

(११) ६।७।२३-२५ सहस्रादधिकं तच्च

(१) पूर्वाधिकरणशेषः ।

(२) बहु देयमिति स्थितम् ।

(३) तत्र सन्देहः—बहुपदेनात्र किं सहस्रादधिकमेव विवक्षितमुत ततो न्यूनमपीति ।

(४) पूर्वपक्षः—रूढ्या अपरिमितशब्दः सहस्रादधिके तन्न्यूने चोभयत्रापि तुल्यमेव वर्तते । तस्मात् सहस्रादधिकं ततो न्यूनमपि देयत्वेनात्र विवक्षितमिति ।

(५) सिद्धान्तः—एकादिपक्षेषूत्तरोत्तराभिवृद्धिर्दृश्यते । सहस्रपक्षमुक्त्वा तदनन्तरञ्च अपरिमितशब्दप्रयोगः । तस्मात् अपरिमितशब्दः सहस्रादधिके एव पर्यवस्यतीति ।

एतदभिप्रेत्याह—सहस्रादिति । 'तत्' अपरिमितशब्दवाच्यं-'च' 'सहस्रादधिकम्'—न ततो न्यूनमित्यर्थः ॥ ११ ॥

(१२) ६।७।२६-३० माषपाकवचः स्तुतिः ।

(१) अधिकारविचारः ।

(२) इदं श्रूयते—'इति ह स्माह बर्कुर्वार्ष्णिः माषानेव मह्यं पचत' इति ।

( ३ ) तत्र सन्देहः—किमयं वृष्णिगोत्रोत्पन्नानां माषपाकविधिरुतार्थवाद इति ।

( ४ ) पूर्वपक्षः—वार्ष्णिरिति नामग्रहणात्-पचत इति विधिश्रवणाच्च वार्ष्णीनामत्र माषपाको विधीयत इति ।

( ५ ) सिद्धान्तः—नायं विधिरपि त्वर्थवाद एव-'तस्मादारण्यमेवाश्नीयात्' इत्यस्यारण्याशनविधेः शेषत्वात्तत्स्तावकत्वेनैवान्वयादिति।

एतदभिप्रेत्याह माषेति । 'माषपाकवचः' माषान् पचतेति वाक्यम्-'स्तुतिः' अर्थवादः-न तु विधिरिति शेषः ॥ १२ ॥

## (१३) ६।७।३१-४० अह्नां सहस्रसङ्ख्या स्यात्

( १ ) अधिकारविचार एव ।

( २ ) अस्ति सहस्रसंवत्सरसत्रम्-'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः-पञ्चपञ्चाशतः पञ्चदशाः-पञ्चपञ्चाशतः सप्तदशाः-पञ्चपञ्चाशदेकविंशाः-विश्वसृजामयनं सहस्रसंवत्सरम्' इति ।

( ३ ) तत्र सन्देहः-किं ये सहस्रसंवत्सरायुषस्तेषामेवात्राधिकार उत मनुष्याणाम्-तत्र च संवत्सरशब्दस्य कोऽर्थ इति ।

( ४ ) पूर्वपक्षः—गन्धर्वादीनां देवगणानामेवात्राधिकारः—तेषामेव सहस्रसंवत्सरायुस्सम्भवादिति । अथवा रसायनादिना येषां मनुष्याणामतिदीर्घायुराप्तं तेषामेवात्राधिकार इति। अथवा संवत्सरशब्देनात्र मासा अभिप्रेताः तथा चेदं सत्रं सहस्रमासव्यापि । अथवा संवत्सरशब्दो द्वादशरात्रिपरः—इत्येवमादयो बहवः पूर्वपक्षकल्पाः ॥

( ५ ) सिद्धान्तः—संवत्सरशब्देनात्र दिनमेवाभिप्रेतम् । तस्मात् सहस्रदिनव्यापीदं सत्रमिति ।

एतदभिप्रेत्याह अह्नामिति । 'सहस्रसङ्ख्या' सहस्रसंवत्सरमित्यत्रोक्ता—'अह्नाम्' दिनानामेव-'स्यात्' न पुनर्वर्षाणामिति शेषः ॥ १३ ॥

न्यायाः पादे त्रयोदश ।

स्पष्टम् ।

इति षष्ठस्य सप्तमः ।

# अथ षष्ठस्याष्टमः ।

[ अग्निविचारात्मकः ]

## (१) ६।८।१-१० चातुर्होत्रेऽनग्निरेवाधिकारी।

( १ ) अधिकारविचारे साग्निनिरग्निविवेकः ।

( २ ) 'प्रजाकामं चतुर्होत्रा याजयेत्' इति चातुर्होत्रं विहितम् । 'इन्द्रो होता द्यौरध्वर्युः' इत्यादिको मन्त्रश्चतुर्होता—तेन प्रजाकामं याजयेदिति विध्यर्थः ।

( ३ ) तत्र सन्देहः—अस्मिन् होमे किमाहिताग्निरेवाधिकृत उतानाहिताग्निरेवेति ।

( ४ ) पूर्वपक्षः—अग्निहोत्रादिकतुहोमाः संस्कृत एवाग्नौ क्रियन्ते । तस्मादयमपि होमस्तत्रैव कर्तव्य इति । तस्मात्साग्नेरेवात्राधिकारः । अथवा संस्कृतेऽसंस्कृते च कर्तव्यः । तस्मात् साग्नेर्निरग्नेश्चाधिकार इति ।

( ५ ) सिद्धान्तः—'एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतार' इति श्रुत्या स्पष्टमभिधीयते । तस्माच्छ्रुतिवचनबलादनाहिताग्नेरेवात्राधिकारः । तस्य च संस्कृताग्नेरभावात् लौकिकाग्नावेवायं होम इति ।

एतदभिप्रेत्याह चातुर्होत्र इति । 'चातुर्होत्रे' चातुर्होत्रनामके होमे—'अनग्निः' अनाहिताग्निः—'एव' 'अधिकारी'न चाहिताग्निरित्याशयः ॥१॥

## (२) ६।८।५ क्रत्वर्थेऽस्मिन्नग्निमानेव कर्ता ।

[ पञ्चमसूत्रस्वरसादिदमधिकरणान्तरमत्र धृतं भाष्ये न्यायमालायाञ्च न विद्यते ]

( १ ) पूर्वाधिकरणापवादः ।

( २ ) सन्ति चातुर्होत्रहोमाः क्रतुशेषा अक्रतुशेषाश्च ।

( ३ ) तत्र सन्देहः—किमुभयविधौ चातुर्होत्रेऽनग्नेरेवाधिकार उत अक्रतुशेषेष्वेवेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणप्रदर्शितश्रुतिबलात् सर्वेषु चातुर्होत्रेषु-क्रतुशेषेष्वक्रतुशेषेषु च—अनग्नेरेवाधिकारः इति ।

( ५ ) सिद्धान्तः—नानग्नेः क्रतवः सन्ति । न च क्रत्वङ्गं क्रत्वाधारभूतादग्नेरन्यत्र प्रयुज्यते । तस्मात् क्रतुशेषे चातुर्होत्रे साग्नेरेवाधिकार इति ।

एतदभिप्रेत्याह—क्रत्विति । 'क्रत्वर्थे' क्रतुशेषे-'अस्मिन्' चातुर्होत्रे—'अग्निमान्' साग्निः—'एव कर्ता' कर्तृत्वेनाधिकृत इत्यर्थः ॥ २ ॥

## (३) ६।८।११-१९ होमं कुर्यान्नोपयन् श्रौतवह्नौ

( १ ) अधिकारविचारोऽनुवर्तते ।

( २ ) इदमामनन्ति—'उपनयंस्तिसृभिर्जुहुयात्' इति ।

( ३ ) तत्र सन्देहः—अयं होमः किमाधानसंस्कृतेऽग्नौ—उत असंस्कृते इति ।

( ४ ) पूर्वपक्षः—चातुर्होमवदुपनयनहोमानां लौकिकाग्नौ कर्तव्यताविधायकं वचनं नास्ति । तस्मात् संस्कृते एवाग्नौ अयं होम इति ।

( ५ ) सिद्धान्तः—विद्वानेवाधानेऽधिकारी । न चानुपनीतस्य विद्वत्ता । विद्याभावेन चाधानाभावस्ततश्च संस्कृताग्नेरभावः । तस्मात् असंस्कृत एवाग्नौ उपनयनहोम इति ।

एतदभिप्रेत्याह होममिति । 'उपयन्' उपनीयमानः—'श्रौते' आधानसंस्कृते 'वह्नौ' अग्नौ—'होमं'—'न कुर्यात्'-अपि त्वसंस्कृते एवेत्यर्थः ॥३॥

## (४) ६।८।२०-२१ यागं कुर्याल्लौकिकेऽग्नौ निषादः ।

( १ ) अधिकारविचारः ।

( २ ) अस्ति स्थपतीष्टिः—'एतया निषादस्थपतिं याजयेत्' इति ।

( ३ ) तत्र सन्देहः—इयं इष्टिः किमाधानसंस्कृतेऽग्नौ स्यात् उत लौकिके इति ।

( ४ ) पूर्वपक्षः—इष्टिरियं इष्टिप्रकृतिवत्कर्तव्या । इष्टिप्रकृतिश्च संस्कृत एवाग्नौ भवति । तस्मादियमपीष्टिर्वैदिक एवाग्नौ कर्तव्येति ।

( ५ ) सिद्धान्तः—निषादस्यात्रैवर्णिकत्वात् त्रैवर्णिकस्यैव वेदाध्ययनाधिकारात् वेदरहितस्य चाधानेऽनधिकारात् निषादस्य वैदिकाग्निर्न सम्भवति । तस्माल्लौकिकाग्नावेव स्थपतीष्टिरिति ।

एतदभिप्रेत्याह यागमिति । 'निषादः' स्थपतिः—'लौकिके' असंस्कृते एव—'अग्नौ' 'यागं' स्थपतीष्टिं-'कुर्यात्'-न श्रौताग्नावित्याशयः ॥४॥

## (५) ६।८।२२ श्रौते वह्नौ नावकीर्णीष्टिरिष्टा

( १ ) अधिकारविचारः ।

( २ ) अस्त्यवकीर्णीष्टिः-'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इति।

( ३ ) तत्र सन्देहः—इयमिष्टिर्लौकिकेऽग्नावुत वैदिके इति ।

( ४ ) पूर्वपक्षः—ब्रह्मचारिणस्त्रैवर्णिकत्वात् आधानसम्भवाच्च वैदिकेऽग्नावियमिष्टिरिति ।

( ५ ) सिद्धान्तः—'जायापती अग्नीनादधीयाताम्' इति वचनात्

ब्रह्मचारिण आधानं न सम्भवति। एवं च वैदिकाग्नेरभावाल्लौकिक एवाग्नाविष्टिरिति।

एतदभिप्रेत्याह श्रौत इति। 'अवकीर्णीष्टिः' ब्रह्मचारिणो रेतस्सेकनिमित्तकप्रायश्चित्तरूपा इष्टिः—'श्रौते' वैदिके संस्कृते—'वह्नौ' अग्नौ—'न' 'इष्टा' उचितेत्यर्थः ॥ ५ ॥

(६) ६।८।२२-२४ पूर्वाह्णादौ देवकार्याणि कुर्यात्।

(१) अधिकारविचारे कालविचारः।

(२) सन्त्युपनयनादीनि दैविकानि कर्माणि।

(३) तत्र सन्देहः—किमेतेषां कर्मणामनुष्ठानेऽस्ति कालनियमो न वेति।

(४) पूर्वपक्षः—एतत्सम्बन्धेन तिथ्यादिकालनियमस्य श्रुतिष्वश्रवणात् नास्ति कालनियमः। तथाच यथारुचि कार्याणीति।

(५) सिद्धान्तः—श्रौतनियमाभावेऽपि स्मार्ता नियमा उपलभ्यन्ते। तदनुसारेण च पूर्वाह्णे एव—शुभतिथावेव—शुक्लपक्षे एव—उत्तरायणे एव—दैविकानि कर्माणि कर्तव्यानीति।

एतदभिप्रेत्याह पूर्वेति। पूर्वाह्णादौ पूर्वाह्णे शुभतिथौ इत्यादिनियमिते एव काले—'देवकार्याणि' उपनयनादीनि—'कुर्यात्' इति सम्बन्धः ॥६॥

(७) ६।८।२५ पित्र्यं कर्माथापराह्णादिकाले

[ एतदधिकरणं न्यायमालायां नैव धृतम्। ]

(१) पूर्वाधिकरणापवादः।

(२) सन्ति श्राद्धादीनि पैतृकाणि कार्याणि।

(३) तत्र सन्देहः—अत्रास्ति कालनियमो न वेति।

(४) पूर्वपक्षः—श्रुतिषु कालादिनियमानुपलम्भात् नास्ति नियम इति।

(५) सिद्धान्तः—स्मार्तनियमानुसारेणास्ति कालनियमः—अपराह्णे एव पित्र्यं कार्यम्—कृष्णपक्षे एवेत्यादिकः इति।

एतदभिप्रेत्याह पित्र्यमिति। 'अथ' किन्तु—'पित्र्यं कर्म' श्राद्धादि—'अपराह्णादिकाले' अपराह्णे कृष्णपक्षे इत्यादौ नियते काले—कर्तव्यमिति शेषः ॥ ७ ॥

(८) ६।८।२६-२७ याच्ञाक्रीती द्रव्यभावेऽपि कार्ये।

(१) अधिकारे विचारविशेषः।

(२) ज्योतिष्टोमे धनभिक्षणमाम्नातम्—'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' इति—सोमक्रयश्चाम्नातः—'सोमं क्रीणाति' इति।

( ३ ) तत्र सन्देहः---इदं भिक्षणं क्रयणं च-किं यस्य धनं सोमश्च नास्ति तेनैव कर्तव्यमुत यस्यास्ति तेनापीति ।

(४) पूर्वपक्षः---भिक्षणक्रयणे द्रव्यलाभार्थमेवाम्नाते । यस्यास्त्येव द्रव्यं तस्य प्रयोजनाभावान्नैव कर्तव्ये भिक्षणक्रयणे इति ।

( ५ ) सिद्धान्तः---उभयमप्येतत् क्रत्वङ्गत्वेन नित्यवदेवाम्नातम् । तस्मात् द्रव्यस्य सत्त्वेऽपि नित्यस्याकरणे प्रत्यवायसम्भवात् कर्तव्ये एव भिक्षणक्रयणे इति ।

एतदभिप्रेत्याह याच्ञेति । 'द्रव्यभावे' धनसोमरूपस्य द्रव्यस्य सत्त्वेऽपि-'याचञाकृती'-'याच्ञा' धनभिक्षणं 'क्रीतिः' सोमक्रयणं च— 'कार्ये' कर्तव्ये एवेति सम्बन्धः ॥ ८ ॥

## (६) ६।८।२८ भक्षप्रैषाच्छादनाद्यश्च नित्यम् ।

( १ ) अधिकारविचारः पूर्वाधिकरणशेषः ।

( २ ) सन्ति विधानानि (अ) भक्षस्य (क) प्रैषस्य (च) वाससः (ट) संज्ञप्तहोमस्य (त) मन्त्रोच्चारणस्य च—यथा (अ) 'पयोव्रतं ब्राह्मणस्य' इति—(क), 'प्रोक्षणीरासादय' इति—(च) 'दर्भमयं वासो भवति' इति—(ट) 'यत् पशुर्मायुकृतोर' इति—(त) 'योऽस्मान् द्वेष्टि यं च वयं द्विष्म' इति ।

( ३ ) तत्र सन्देहः—(अ) किं यस्यान्यत् भोजनं न विद्यते तस्यैव पयोभक्षणम् उत सत्यपि भोजनद्रव्यान्तरे—(क) यः प्रैषं विना कर्तव्यं नावबुध्यते तस्यैव प्रैषोच्चारणमुत अवबुध्यमानं प्रत्यपि—(च) यस्य सूत्रमयं वासो नास्ति स एव दर्भमयं परिदधीत उत यस्य सूत्रमयमस्ति सोऽपि—(ट) यस्य पशुर्मायुं कुर्यात् किं तस्यैव संज्ञप्तहोम उत तदभावेऽपि—(त) यस्यास्ति द्वेषी स एव मन्त्रमिममुच्चारयेत् उत तदभावेऽपीत्यादि ।

( ४ ) पूर्वपक्षः—निमित्ते सत्येव नैमित्तिकस्यानुष्ठेयत्वात् सर्वत्रोक्तस्य निमित्तस्य सत्त्वे एव नैमित्तिकं कर्तव्यं नान्यथेति ।

( ५ ) सिद्धान्तः—नह्यत्र किञ्चिन्निमित्तमुपात्तमुपलभ्यते वाक्येषु—तस्मात् नित्यवदेवैतानि कर्तव्यानीति । एवं च (अ) सत्यपि भोजने पय एव भक्षणीयम्-(क) सत्यपि कार्यज्ञाने प्रैष उच्चारणीयः—(च) सत्यपि वस्त्रान्तरे दर्भमयं परिधातव्यम्—(ट) पशुनाऽकृतेऽपि शब्दे संज्ञप्तहोमः कर्तव्यः—(ज) द्वेषिणोऽभावेऽपि योऽस्मान् द्वेष्टीति मन्त्रपाठः कर्तव्य इति ।

एतदभिप्रेत्याह भक्षेति । 'भक्षः' पयोरूपः,'प्रैषः' प्रोक्षणीरासादयेत्ये-

वमादिरूपः, 'आच्छादनम्' दर्भमयं वासः–एतानि आद्यानि यस्य कर्मजातस्य तत् कर्मजातम्—'नित्यम्' अवश्यकर्तव्यम्—निमित्तानामभावेऽपीत्याशयः ॥ ९ ॥

(१०) ६।८।२६ न स्यान्नित्यं रात्रिशेषाशनादि ।

( १ ) पूर्वाधिकरणद्वयापवादः ।

( २ ) ज्योतिष्टोमे श्रूयते—'मध्यन्दिनेऽपररात्रे वा व्रतं व्रतयति' इति ।

( ३ ) तत्र सन्देहः—इदमपररात्रभोजनं नित्यमुत नेति ।

( ४ ) पूर्वपक्षः—विहितत्वान्नित्यमेव, पूर्वाधिकरणन्यायेनेति ।

( ५ ) सिद्धान्तः—क्षुधाभावे भोजने कृते रोगोत्पत्त्या प्रधानानुष्ठाने हानिप्रसङ्गः । तस्मात् तादृश्यामवस्थायां न भक्षणीयम् । तस्मादिदं रात्रिशेषभोजनमनित्यमेवेति ।

एतदभिप्रेत्याह नेति । 'रात्रिशेषे' 'अशनं' भोजनं 'आदि' यस्य तत् कर्मजातं 'नित्यं' अवश्यकर्तव्यं—'न स्यात्'—अपि तु क्षुधारूपे निमित्ते सत्येव कर्तव्यमित्याशयः ॥ १० ॥

(११) ६।८।३०–४२ छागो मन्त्राद्द दीक्षितोक्तः पशुः स्यात्

( १ ) अधिकारे विचारविशेषः ।

( २ ) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः—'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इति ।

( ३ ) तत्र सन्देहः—किं यः कश्चित् पशुरालम्भनीय उत छाग एवेति।

( ४ ) पूर्वपक्षः—विधिवाक्ये पशौ विशेषस्याश्रवणात् यः कश्चित् पशुरालम्भनीय इति ।

( ५ ) सिद्धान्तः—अस्ति विशेषणम्मन्त्रे—'छागस्य वपाया मेदसोऽनुब्रूहि' इति । तस्माच्छाग एव पशुरालम्भनीय इति ।

एतदभिप्रेत्याह छाग इति । 'मन्त्रात्' मन्त्रे विशेषस्य उक्तत्वात्—'दीक्षितोक्तः पशुः' 'दीक्षितस्य' आलम्भनीयत्वेन 'उक्तः' विहितः—'पशुः' 'छाग' एव 'स्यात्' इति सम्बन्धः ॥ ११ ॥

न्यायाः पादे नूनमेकादशास्मिन् ।

स्पष्टम् ।

इति षष्ठस्याष्टमः ।

इति षष्ठोऽध्यायः ॥

# अथ सप्तमोऽध्यायः ।

[ अतिदेशसामान्यनिरूपणपरः ]

## प्रथमः पादः

[ प्रत्यक्षोक्त्याऽतिदेशनिरूपणपरः ]

### (१) ७।१।१-१२ व्यवस्था स्यात् प्रयाजादौ

( १ ) प्रमाणाद्यधिकारान्तैः षड्विचारैर्निरूपिते ।
उपदेशे—ऽतिदेशोऽथ तत्सापेक्षो निरूप्यते ॥

अतिदेशश्च—

अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसन्ततेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ॥

पूर्वेणाध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तिता । उत्तरेणेदानीमविहितेतिकर्तव्यताकाणामपि धर्माः सन्त्युत न-यदि सन्ति तर्हि के ते कथं च तेऽनुष्ठेयाः कियन्तश्च ते इति यथाक्रमं सप्तमाद्यध्यायेषु चिन्त्यते । तत्रादावतिदेशस्यावश्यकत्वं विचार्यते ।

( २ ) दर्शपूर्णमासप्रकरणे प्रयाजादय उपदिष्टाः—ज्योतिष्टोमप्रकरणे च दीक्षणीयादयः ।

( ३ ) तत्र सन्देहः—एते प्रयाजादयः किं यागार्थाः—यागो गुणवान् स्यादित्युद्देशेनैवानुष्ठेयाः—उत अपूर्वार्थाः—तज्जन्यापूर्वसम्पादनायेति । तथा च किं सकलयागान्विताः सकलयागसाधारणाः उत प्रकृतयागापूर्वसम्बद्धास्तन्मात्रे व्यवस्थिताः इति ।

( ४ ) पूर्वपक्षः—यागार्थत्वेनैवानुष्ठेयाः प्रयाजादयः । तथैव तेषां यागेनान्वयात् । यागः करणं प्रयाजादयस्तस्येतिकर्तव्यता स्वर्गादि फलमिति एषां परस्परसम्बन्ध इत्यविवादम् । यथाऽवघातपेषणादीन्यङ्गानि यागनिष्पादकानि नापूर्वसाधकानि तथैवाङ्गत्वसामान्यात् प्रयाजादयोऽपि यागस्यैव निष्पादकानि नापूर्वस्येति [ एवं च प्रयाजादीनां न केवलं प्रकृतियागनिष्पादकत्वमपि तु यागमात्रस्य—तथाच सति विकृतियागेष्वप्येषामन्वये लब्धे तत्राप्युपदेशादेव लब्धा गुणास्ततश्च नावसरोऽतिदेशस्येति पूर्वपक्षहृदयम् । ]

( ५ ) सिद्धान्तः—अत्र यागो न मुख्यः, तस्य साक्षात्फलासाधक-

त्वात्—अपूर्वमेव मुख्यं तस्य साक्षात्फलसाधकत्वात् । फलवतः मुख्यस्यैव कृते प्रयाजादिविधानम् । एवं च करणभूतस्य यागस्य इतिकर्तव्यतारूपस्य प्रयाजादेश्चोभयोरपि प्रथममपूर्वेणैवान्वयः । पश्चात्तयोः परस्परं गुणप्रधानभावेनान्वयः । एवं च प्रयाजादयोऽपूर्वविशेषेण तत्करणभूतयागविशेषेण चान्विताः यस्मिन् प्रकरणे उपदिष्टास्तत्रैव व्यवतिष्ठन्ते । एवमेव च प्रकरणमर्थवद् भवति । [एवं च प्रकृतदर्शपूर्णमासयागमात्रेणान्विताः प्रयाजादयो यागान्तरेषु साक्षादुपदेशेनाप्राप्ताः तैस्सम्बन्धार्थमतिदेशमपेक्षन्ते ] इति ॥

एतदभिप्रेत्याह—व्यवस्थेति । 'प्रयाजादौ' अङ्गजाते—'व्यवस्था' 'स्यात्'—यस्य यागस्य प्रकरणे ते उपदिष्टास्तत्रैव व्यवतिष्ठन्ते—यागान्तरान्वयाय चातिदेशमपेक्षन्त इत्याशयः ॥ १ ॥

## (२) ७।१।१३-१६ इषौ श्येनसमो विधिः ।

( १ ) अतिदेशविशेषविचारः ।

( २ ) श्येननामक इषुनामकश्च द्वावेकाहौ ज्योतिष्टोमविकारौ । तस्मादुभयोरपि ज्योतिष्टोमधर्माश्चोदकेन प्राप्ताः । तत्रैषौ कांश्चिद्धर्मानभिधायाम्नातम्—'समानमितरच्छ्येनेन' इति ।

( ३ ) तत्र सन्देहः—किमयं विधिरुतानुवादः । [ यद विधिस्तर्हि श्येनधर्मानिषावतिदिशति—यद्यनुवादस्तर्हि नातिदेशः ] ।

( ४ ) पूर्वपक्षः—अनुवाद एवायं चोदकप्राप्तस्य धर्मजातस्य । तथा च 'ये धर्मा इषौ विशिष्टा उक्तास्तदतिरिक्ताः श्येनगता ये प्रकृतितश्चोदकप्राप्तास्त एवान्विता भवन्तीति' वाक्यस्यार्थः । तस्मादनुवाद एवायं न विधिः ।

( ५ ) सिद्धान्तः—इषौ ये विशिष्टा धर्माश्चोदिताः तत्सजातीया विशिष्टा एव धर्मा इतरशब्देन व्यपदिश्यन्ते । ते च श्येनगता विशिष्टा धर्माः । न चैते प्रकृतियागे वर्तन्ते—तथा च न चोदकप्राप्ताः न चानुवादार्हास्तस्मादेव कारणात् । तस्मात् इषौ विशिष्य विहितेभ्यो विशिष्टधर्मेभ्योऽतिरिक्ता ये विशिष्टा धर्मास्तत्रापेक्षितास्ते श्येनादेवानेतव्या इति विधिरेवात्र नानुवादः । एवं च भवत्येवात्रातिदेशः श्येनगतविशिष्टधर्माणामिति ।

एतदभिप्रेत्याह इषाविति । 'इषौ' इषुयागे—'श्येनसमो विधिः'—समानमितरच्छ्येनेनेति यत् श्येनसमत्वमुक्तं तत् विधिरेव श्येनविशिष्टधर्माणां, न त्वनुवादश्चोदकप्राप्तधर्माणामित्याशयः ॥ २ ॥

## (३) ७।१।१७ २१ अतिदेशो विधेरिष्टः

( १ ) अतिदेशविशेषोदाहरणम् ।

( २ ) चातुर्मास्येषु वैश्वदेव—वरुणप्रघास—साकमेध—सुनासीरीय—नामकानि चत्वारि पर्वाणि । ( अ ) तत्र वैश्वदेवेष्टौ हवींषि विहितानि—आग्नेयमष्टाकपालमित्यादीन्यष्टौ । ( क ) तेषां हविषां चार्थवादो ब्राह्मणे—'वार्त्रघ्नानि वा एतानि हवींषि' इति । (च) अङ्गविधयोऽपि तत्राम्नाताः—'त्रेधा सन्नद्धं बर्हिर्भवति' 'त्रेधा सन्नद्ध इध्मः'—इत्येवमादयः। एवं वैश्वदेवे विधानम्। तदनन्तरं वरुणप्रघासेषु पूर्वोक्तानामष्टानां हविषां पञ्चैव विधाय पूर्वोक्तमर्थवादब्राह्मणं तेषु पञ्चस्वतिदिष्टम्—'यद्ब्राह्मणानीतराणि तद्ब्राह्मणान्येव पञ्च हवींषि' इति ।

( ३ ) तत्र सन्देहः—किमयमर्थवादमात्रस्यातिदेश उत सार्थवादानामङ्गविधीनामिति ।

( ४ ) पूर्वपक्षः—अर्थवादमात्रस्यातिदेशो न्याय्यः—तस्यैव हविर्विधिभिः स्तुत्यस्तावकभावेनान्वयसम्भवात् अङ्गविधीनां तदसम्भवादिति ।

( ५ ) सिद्धान्तः—सम्भवति ह्यन्वयोऽङ्गविधीनामुपकार्योपकारकभावेन । तस्मादर्थवादसहितानामङ्गविधीनामतिदेश इति ।

एतदभिप्रेत्याह अतीति । 'विधेः' न केवलमर्थवादस्य—'अतिदेशः'—'इष्टः' बोधितुमुचित इत्यर्थः ॥ ३ ॥

## (४) ७।१।२२ तद्वदेककपालके ।

( १ ) अतिदेशोदाहरणम् ।

( २ ) वैश्वदेवे वरुणप्रघासेषु च एककपाल आम्नातः—ऐन्द्राग्नो द्वादशकपालस्तु वरुणप्रघासेष्वेव । साकमेधीये च एककपाल ऐन्द्राग्नश्चेत्युभयमेवाम्नातम् । अनयोश्च कपालयोर्ब्राह्मणातिदेशः श्रुतः—'एतद्ब्राह्मण ऐन्द्राग्नः एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतर इतरश्च' इति ।

( ३ ) तत्र सन्देहः—किमर्थवादमात्रस्यातिदेशोऽयमुत विधेरपीति ।

( ४ ) पूर्वपक्षः—अर्थवादमात्रस्यातिदेश इति ।

( ५ ) सिद्धान्तः—पूर्वन्यायेन समस्तस्य विधिकाण्डस्याप्यतिदेश इति ।

एतदभिप्रेत्याह तदिति । 'एककपालके' एककपालविषयकब्राह्मणातिदेशवाक्येऽपि—'तद्वत्' पूर्वाधिकरणवत्—विधेरप्यतिदेश इष्ट इति भावः ॥ ४ ॥

(५) ७।१।२३ प्राघासिकातिदेशः स्यात्

( १ ) अतिदेशोदाहरणम् ।

( २ ) वैश्वदेवे द्यावापृथिव्य एककपालः वरुणप्रघासेषु काय एककपालः तयोश्च ब्राह्मणं पृथक् समाम्नातम्---साकमेधेषु वैश्वकर्मण एककपालः । अस्मिन् साकमेधीयैककपाले ब्राह्मणातिदेशे प्राप्ते--

( ३ ) सन्देहः--कस्य ब्राह्मणस्यात्रातिदेशः--किं वैश्वदेवैककपालब्राह्मणस्य उत वारुणप्राघासिकैककपालब्राह्मणस्येति ।

( ४ ) पूर्वपक्षः--वैश्वदेविकमेवैककपालब्राह्मणमत्रातिदेष्टव्यम् । वैश्वदेवस्य प्रकृतिभूतत्वात्तत्रैव प्राचुर्येण धर्मविशेषा उपदिष्टाः । बह्वनुग्रहश्च न्याय्यो नाल्पीयोनुग्रह इति ।

( ५ ) सिद्धान्तः--वरुणप्राघासिकस्य ब्राह्मणस्यासन्नतरत्वात् तस्यैवातिदेशो युक्तः । ऐन्द्राग्नब्राह्मणं च साकमेधीये वरुणप्रघासे चोभयत्र लभ्यते। तस्मादपि साहचर्यादेककपालब्राह्मणमपि वरुणप्राघासिकमेव साकमेधीयेऽतिदेष्टव्यमिति ।

एतदभिप्रेत्याह-प्राघासिकेति । 'प्राघासिकस्य' वरुणप्रघासगतैककपालब्राह्मणस्य--'अतिदेशः' स्यात्--'साकमेधीये' इति शेषः ॥ ५ ॥

पादे पञ्च नयाः स्मृताः ।

स्पष्टम् ।

इति सप्तमस्य प्रथमः ।

---

# अथ सप्तमस्य द्वितीय पादः ।

[ अतिदेशविशेषविचारपरः ]

(१) ७।२।१-२१ गीतिरेवातिदिश्येत

( १ ) अतिदेशविचारविशेषः ।

( २ ) इदमाम्नायते--'कवतीषु रथन्तरं गायति' इति । 'कयानश्चित्र'इत्यादि ऋक्त्रयं 'कवती' नाम्ना प्रसिद्धम् । तास्वध्ययनप्राप्तं वामदेव्यं साम । तद्बाधितुमुदाहृतवाक्ये रथन्तरमतिदिष्टम् ।

( ३ ) तत्र सन्देहः--रथन्तरनाम्नाऽत्र किमतिदिश्यते--किं गीतिमात्रमुत गीतिविशिष्टा ऋगिति ।

( ४ ) पूर्वपक्षः--गीतिविशेषयुक्ता 'अभित्वा शूर नोनुम' इत्याद्या

ऋक् रथन्तरमित्युच्यतेऽध्येतृभिः । तस्मात् गीतिविशिष्टेयमृगतिदिश्यत इति ।

( ५ ) सिद्धान्तः--'अभित्वेति' ऋगक्षराणि न शक्यन्ते प्रयोक्तुं 'कयानश्चित्र' इति ऋगक्षरैस्सह । न च सम्भवत्यनयोर्ऋगक्षरसमूहयोः परस्परमाधाराधेयभावः । तस्माद् ऋगक्षराणामतिदेशासम्भवाद् गीतेरेवातिदेश इति ।

एतदभिप्रेत्याह गीतिरिति । 'गीतिः' 'एव' 'अतिदिश्येत'--न ऋगक्षराणीति भावः । तस्माद् रथन्तरादिनाम्ना गानमेवोच्यते इति भावः१॥

मुनिना तत्त्ववेदिना ।<br>
एकमेवाधिकरणम्<br>
पादेऽत्र परिकीर्तितम् ॥

स्पष्टम् ।

इति सप्तमस्य द्वितीयः ।

---

# अथ सप्तमस्य तृतीय पादः ।

[ नामातिदेशनिरूपणपरः ]

## (१) ७।३।१–४ धर्मातिदेशे पदमग्निहोत्रम्

( १ ) नामातिदेशविचारः ।

( २ ) कौण्डपायिनामयने श्रूयते—'मासमग्निहोत्रं जुहोति' इति । इदं च मासाग्निहोत्रं नित्यादग्निहोत्रात् कर्मान्तरम् ।

( ३ ) तत्र सन्देहः—अस्मिन् वाक्ये अग्निहोत्रशब्देन किं नित्यस्याग्निहोत्रस्य धर्माणामतिदेशो मासाग्निहोत्रे भवति न वेति ।

( ४ ) पूर्वपक्षः—अग्निहोत्रमिति नाम यथा नित्याग्निहोत्रस्य 'तथैव मासाग्निहोत्रस्याप्युपदिष्टम् । एवं चोभयोरपि नामसम्बन्धे साधारणे नास्ति प्रमाणमेकस्य धर्माणामन्यस्मिन्नतिदेशे इति ।

( ५ ) सिद्धान्तः—अग्निहोत्रशब्दो नित्ये एवाग्निहोत्रे मुख्यः—अग्नये होत्रमस्मिन्नित्यर्थस्य तत्रैव सम्भवात् । न चोभयत्र मुख्यत्वं सम्भवति—अनेकार्थत्वस्यान्याय्यत्वात् । मुख्यस्यासम्भवेन च मासाग्निहोत्रेऽस्य नाम्नः प्रवृत्तिर्गुणयोगादेव भवितुमर्हति । तस्मात् अग्निहोत्रनाम्ना मासाग्निहोत्रे नित्याग्निहोत्रस्य धर्मा अतिदिश्यन्ते इति ।

एतदभिप्रेत्याह—धर्मेति । मासमग्निहोत्रमित्यत्र वाक्ये—'अग्निहोत्रम्' इति 'पदम्' नाम—'धर्माणाम्' नित्याग्निहोत्रगतानाम्—'अतिदेशे' मासाग्निहोत्रे अतिदेशार्थं—प्रयुज्यते इति शेषः ॥ १ ॥

(२) ७।३।५ न प्रायणीयेत्यतिदेष्टृ नाम ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) द्वादशाहे प्रथमस्याह्नः 'प्रायणीयम्' इति नाम—तथैव गवामयनेऽपि ।

( ३ ) तत्र सन्देहः—अत्रापि नाम्ना धर्माणामतिदेशो न वेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेनात्रापि नाम्ना धर्माणामेवातिदेश इति ।

( ५ ) सिद्धान्तः—प्रायणीयशब्दः प्राथम्यमभिधत्ते । प्राथम्यस्य च द्वयोरपि कर्मणोस्तुल्यत्वेनोभयत्र मुख्यत्वम् । तस्मादत्र गौणमुख्यभावाभावात् न भवति नामातिदेशकमेकस्य धर्माणामन्यतरत्रेति ।

एतदभिप्रेत्याह नेति । 'प्रायणीयेति' 'नाम'—अतिदेष्टृ धर्मातिदेशकम्—'न'—भवतीति शेषः ॥ २ ॥

(३) ७।३।६-११ स्यात् सर्वपृष्ठे षडहोक्तपृष्ठम्

( १ ) अतिदेशविशेषोदाहरणम् ।

( २ ) 'विश्वजित् सर्वपृष्ठो भवति' इति श्रूयते ।

( ३ ) तत्र सन्देहः—सर्वपृष्ठशब्दोऽत्र विधायकोऽतिदेशकः उतानुवाद इति ।

( ४ ) पूर्वपक्षः—विश्वजिति ज्योतिष्टोमिकानां चतुर्णां स्तोत्राणामाप्तत्वात् तेषु च पृष्ठशब्दप्रयोगात् सिद्धमेव सर्वपृष्ठत्वम्, न च सिद्धस्य विधिः । तस्मादनुवादश्चोदकप्राप्तानां चतुर्णां पृष्ठानामिति ।

( ५ ) सिद्धान्तः—सर्वपृष्ठशब्देनात्र षट्सङ्ख्यकानि पृष्ठान्यतिदिश्यन्ते । षडहे प्रतिदिनमेकैकं पृष्ठं विहितम् । तानि च षट्—रथन्तर—बृहद्—वैरूप—वैराज—शाक्वर—रैवतसामभिर्निष्पाद्यानि भवन्ति । यद्यपि विश्वजिन्न षडहविकृतिस्तथापि उदाहृतवाक्येनैव षडहगतानां पृष्ठानां रथन्तरादीनामतिदेशो विश्वजिति सिध्यतीति ।

एतदभिप्रेत्याह स्यादिति । 'सर्वपृष्ठे' इति नामनि प्रयुक्ते—'षडहे' 'उक्तम्' यत् 'पृष्ठम्' रथन्तरादिपृष्ठषट्कम् तत्—'स्यात्' अतिदिष्टमिति शेषः ॥ ३ ॥

(४) ७।३।१२-१५ धर्माश्च सोमावभृथात् मघासे ।

( १ ) अतिदेशोदाहरणम् ।

( २ ) वरुणप्रघासेषु श्रूयते—'वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति' इति । ['निष्कासः' आमिक्षाया लेपः] । दर्शपूर्णमासयोश्च सर्वासु दिक्षु जलमुत्सिच्यते 'प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्' इत्यादिमन्त्रैः ।

( ३ ) तत्र सन्देहः—पूर्वस्मिन् यागे योऽवभृथशब्दस्तेन किं दार्शपौर्णमासिकोत्सेकोऽनूद्यते निष्कासद्रव्यविधानार्थम्—उत सौमिकादवभृथात् धर्मातिदेशस्ततश्च सौमिकधर्मोपेतकर्मान्तरं विधीयते अवभृथशब्देनेति ।

( ४ ) पूर्वपक्षः—व्युत्सेक एवानूद्यते निष्कासविधानार्थम् । व्युत्सेकस्यावभृथत्वं श्रुतम्—'एष वै दर्शपूर्णमासयोरवभृथ' इति ।

( ५ ) सिद्धान्तः—सौमिके कर्मणि अवभृथशब्दो मुख्यः—व्युत्सेके तु जलसम्बन्धात् स शब्द उपचर्यते । तस्मात् सौमिककर्मवाचिनमवभृथशब्दं वरुणप्रघासप्रकरणे प्रयुञ्जान आम्नायो मासाग्निहोत्रन्यायेन तत्र प्रघासे सौमिकधर्मानतिदिशन् तद्धर्मसंयुक्तं कर्मान्तरमेव विधत्ते—इत्यभ्युपगन्तव्यमिति ।

एतदभिप्रेत्याह धर्मा इति । 'सोमावभृथात्' सौमिकादवभृथात्—'धर्माः'—'प्रघासे' वरुणप्रघासे—'अतिदिश्यन्ते' इति शेषः ॥ ४ ॥

## (५) ७।३।१६ साक्षाच्छ्रुतं द्रव्यमिह प्रदेयम्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) वरुणप्रघासे सौमिकावभृथधर्मा अतिदिश्यन्ते इति स्थितम् ।

( ३ ) तत्र सन्देहः—किमयं सौमिकवत् पुरोडाशद्रव्यकः उत तुषनिष्कासद्रव्यक इति ।

( ४ ) पूर्वपक्षः—सौमिकानां धर्माणामतिदेशे तदीयद्रव्यस्याप्यतिदेशः । तस्मात् पुरोडाशद्रव्यक एवायमिति ।

( ५ ) सिद्धान्तः—अतिदेशात् पुरोडाशः—साक्षादुपदेशात्तु तुषनिष्कासः प्राप्तः—'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति । अतिदेशश्चोपदेशाद् दुर्बलः । तस्मात् तुषनिष्कासद्रव्यक एवायमिति ।

एतदभिप्रेत्याह साक्षादिति । 'साक्षात् श्रुतम्' उपदिष्टम्—'द्रव्यम्' तुषनिष्कासरूपम्—'इह' वरुणप्रघासिकावभृथे—'प्रदेयम्'—न तु सौमिकादतिदेशात् प्राप्तं पुरोडाशद्रव्यमिति शेषः ॥ ५ ॥

## (६) ७।३।१७ न वैष्णवोक्त्यापि गुणातिदेशः ।

( १ ) अतिदेशापवादोदाहरणम् ।

( २ ) आतिथ्येष्टौ वैष्णवो नवकपालो विहितः—'वैष्णवो नवक-पालो भवति' इति—तथा राजसूयेऽपि 'पूर्वस्मिन्नग्निसंयुक्ते वैष्णवस्त्रिक-पाल' इति ।

( ३ ) तत्र सन्देहः—वैष्णवशब्दो राजसूयगते त्रिकपाले प्रयुक्तः किमातिथ्यधर्मानतिदिशति उत नेति ।

( ४ ) पूर्वपक्षः—अग्निहोत्रन्यायेनास्त्येवातिदेश इति ।

( ५ ) सिद्धान्तः—'वैष्णवशब्दे विष्णुर्देवता अस्य' इति विग्रहे विहितस्तद्धितप्रत्ययो देवतामभिधत्ते न तु धर्मान् । तस्मात् न धर्मा-तिदेश इति ।

एतदभिप्रेत्याह नेति । 'वैष्णवोक्त्या' वैष्णवशब्दप्रयोगेण—'अपि' यद्यपि वैष्णवशब्दः प्रयुक्तस्तथाऽपि-'गुणानाम्' आतिथ्येष्टिगतानां ध-र्माणाम्—'अतिदेशः' राजसूये—'न' भवतीति शेषः ॥ ६ ॥

## (७) ७।३।१८ निर्मन्थ्यशब्दोऽप्यातिदेशको न

( १ ) अतिदेशापवादोदाहरणम् ।

( २ ) अग्नीषोमीयपशौ धर्मवान् निर्मन्थ्योऽग्निराम्नातः । स एव नि-र्मन्थ्यशब्दोऽग्निचयने इष्टकापाके प्रयुक्तः 'निर्मन्थ्येनेष्टकाः पचन्ति' इति ।

( ३ ) तत्र सन्देहः—निर्मन्थ्यशब्देनेष्टकापाकेऽग्नीषोमीयाग्निधर्माणा-मतिदेशो न वेति ।

( ४ ) पूर्वपक्षः—निर्मन्थ्यत्वसिद्ध्यर्थमावश्यकोऽतिदेश इति ।

( ५ ) सिद्धान्तः—वैष्णवशब्दन्यायेन मुख्यया वृत्त्या विधिसम्भवे धर्मातिदेशोऽन्याय्यः । अग्निमन्थनस्य च लोकसिद्धत्वेन शास्त्रीयधर्माभा-वेऽपि लौकिकैरपि धर्मैर्निर्मन्थ्यत्वं निष्पद्यत एव । तस्मान्नास्त्यतिदेश इति।

एतदभिप्रेत्याह निर्मन्थ्येति । 'निर्मन्थ्यशब्दः' 'अपि'—'अतिदेशकः' धर्माणां—'न' भवतीति शेषः ॥ ७ ॥

## (८) ७।३।१९-२० द्वयोः प्रणीतिर्न हि सौमिकी स्यात् ।

( १ ) अतिदेशापवादोदाहरणम् ।

( २ ) चातुर्मास्येषु श्रूयते—'द्वयोः प्रणयन्ति—तस्माद् द्वाभ्यामेति' इति । अस्ति च सौमिकं प्रणयनं धर्मवत् ,दार्शपौर्णमासिकं तु धर्मरहितम्।

( ३ ) तत्र सन्देहः—चातुर्मास्ये यद् द्वयोः प्रणयनं तत्र किं सौमि-कप्रणयनधर्माणामतिदेशो न वेति ।

( ४ ) पूर्वपक्षः—सौमिकप्रणयनधर्माणां भवत्यतिदेशः । सोमो न भवति चातुर्मास्यस्य प्रकृतिः । तस्मात्सौमिकस्य प्रणयनस्यात्र विध्य-

र्हता । दर्शपूर्णमासस्तु भवति चातुर्म्मास्यस्य प्रकृतिः । तस्मात् तदीयप्रणयनस्य चोदकप्राप्तत्वान्न विध्यर्हता । तस्मात् प्रणयनशब्देनात्र सौमिकप्रणयनधर्मा अतिदिश्यन्ते इति ।

( ५ ) सिद्धान्तः—नायं प्रणयनशब्दः सौमिकप्रणयनकर्मणो नामधेयम्—अपि तु निर्मन्थ्यशब्दवल्लौकिक एव । ततो न धर्मातिदेश इति ॥

एतदभिप्रेत्याह द्वयोरिति । 'द्वयोः' 'प्रणीतिः' प्रणयनम्—'सौमिकी' सौमिकप्रणयनधर्मवती—'न हि' स्यात्—अतिदेशेनेति शेषः ॥ ८ ॥

## (९) ७।३।२१-२५ गतिस्तुतेर्मध्यमपर्वणोः सा

( १ ) पूर्वाधिकरणशेषः ।

( २ ) चातुर्मास्ये 'द्वयोः प्रणयन्ति' इति श्रुतम् । तत्र च चत्वारि पर्वाणि वैश्वदेव—वरुणप्रघास—साकमेध—सुनासीरीयनामकानि ।

( ३ ) तत्र सन्देहः—कतरयोर्द्वयोरिदं प्रणयनमिति ।

( ४ ) पूर्वपक्षः—आद्यन्तयोर्वैश्वदेवसुनासीरीययोरिदं प्रणयनम् । 'न वैश्वदेव उत्तरवेदिमुपयन्ति न सुनासीरीये' इति प्रतिषेधस्तयोरेव प्रणयनस्य प्राप्तिं सूचयति ।

( ५ ) सिद्धान्तः—'ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासः शाकमेधश्च' इति गमनसाधनत्वमूरुत्वं मध्यमयोरेव पर्वणोरुक्तम् । तत्सन्निधौ 'द्वयोः प्रणयन्ति' इति चोदकप्राप्तमग्निप्रणयनं पुनर्विधाय 'द्वाभ्यामेति' इत्यर्थवादेनोरुत्वकल्पनायुक्ताभ्यां पर्वभ्यां गमनमुपन्यस्यते । तस्मात् मध्यमयोरेव प्रणयनमिति ।

एतदभिप्रेत्याह गतीति । 'गतिस्तुतेः' द्वाभ्यामेतीत्यर्थवादवाक्यात्—'सा' प्रणीतिः प्रणयनम्—'मध्यमपर्वणोः' वरुणप्रघाससाकमेधयोरेव—भवतीति शेषः ॥ ९ ॥

## (१०) ७।३।२६-२७ धर्मातिदेशी स्वरसामशब्दः ।

( १ ) अतिदेशोदाहरणम् ।

( २ ) गवामयने द्वयोर्मासषट्कयोर्मध्ये वर्तमानं विषुवन्नामकं प्रधानभूतमेकमहर्विद्यते—तच्च दिवाकीर्त्यम् । तस्मात् प्राचीनास्त्रयः स्वरसामनामका अहर्विशेषाः—तथोपरिष्टादपि त्रयः स्वरसामानः । तदेतत्त्रिकद्वयमभिलक्ष्य श्रूयते—'अभितो दिवाकीर्त्यं त्रयः स्वरसामानः' इति—तेषु च सामदृश्य—सातत्यादयो धर्मा आम्नाताः । अन्यत्र पुनः श्रूयते—'षष्ठ्यः षडहः द्वौ स्वरसामानौ' इति ।

( ३ ) तत्र सन्देहः—उत्तरस्मिन् वाक्ये यः स्वरसामशब्दः प्रयुक्तस्तेन किं गवामयनिकस्वरसामधर्मा अतिदिश्यन्ते न वेति ।

(४) पूर्वपक्षः—षष्ठवैष्णवाधिकरणन्यायेन नात्रातिदेशः—अपि तु सामविशेषरूपगुणविधिरेवेति ।

(५) सिद्धान्तः—षडहं प्रति श्रूयते—'अथ तृतीयं सप्तदशमहः' इति। अत्र च त्रिषु चरमेष्वहस्सु सप्तदशस्तोमनैरन्तर्यमनूद्यते । एतच्च नैरन्तर्यं तदैवोपपद्यते यदि स्वरसामशब्दः सप्तदशस्तोममतिदिशति—नान्यथा । तस्मात् धर्माणामतिदेशकः स्वरसामशब्द इत्यभ्युपगन्तव्यमिति।

एतदभिप्रेत्याह—धर्मेति । 'स्वरसामशब्दः'-'धर्माणाम्' गवामयनिकानाम्-'अतिदेशी' अतिदेशकः इति सम्बन्धः ॥ १० ॥

## (११) ७।३।२८-२९ नोत्पादयेद्व वस्त्रमनश्च यज्ञे

(१) अतिदेशापवादोदाहरणम् ।

(२) 'वासो ददाति' 'अनो ददाति' इति श्रूयते । वासो वानक्रियया निष्पद्यते अनश्च वर्धकिकृतदारुतक्षणक्रियया ।

(३) तत्र सन्देहः—वासःशब्दः अनःशब्दश्च किं क्रियानिमित्तौ सन्तौ क्रियामतिदिशतः—उत आकृतिनिमित्तौ न क्रियातिदेशकाविति ।

(४) पूर्वपक्षः—यथा यूपशब्दस्य शास्त्रीयच्छेदनतक्षणादिक्रिया प्रवृत्तिनिमित्तं—तथा वासःशब्दस्य लौकिकी तन्तुवानक्रिया, अनःशब्दस्य च वर्धकिकृतदारुतक्षणादिक्रिया । तस्मात् वासःशब्दोऽनःशब्दश्च क्रियातिदेशकौ—तथाच वानक्रियां तक्षणक्रियां च कारयित्वा वस्त्रं शकटं चोत्पाद्य दातव्यमिति ।

(५) सिद्धान्तः—गवादिशब्दवदाकृतिवाचकावेतौ वासोऽनःशब्दौ। वस्त्रे शकटे च तत्तत्क्रियामनुपलभ्यापि आकृतिमात्रमुपलभ्य वासःशब्दमनःशब्दं च प्रयुञ्जते । तस्माद् वासःशब्दोऽनःशब्दश्च न क्रियामतिदिशतः। तस्माद्वानेन तक्षणेन च वस्त्रशकटयोरुत्पादनं दानकाले नावश्यकमिति ।

एतदभिप्रेत्याह नेति । 'वस्त्रम्' 'अनः' शकटं-'च'-'यज्ञे' यज्ञाङ्गभूतदानकाले-'न' 'उत्पादयेत्' तत्कालीनवानतक्षणक्रियाभ्याम्, अपि तु यथोपलब्धे एव दातव्ये वासःशकटे इत्याशयः ॥ ११ ॥

## (१२) ७।३।३०-३२ स्तोत्रे त्वसौ लौकिक एव वह्निः ।

(१) अतिदेशापवादोदाहरणम् ।

(२) गर्गत्रिरात्रे आज्यदोहसामानि प्रकृत्य श्रूयते—'अग्निमुपनिधाय स्तुवीत' इति ।

(३) तत्र सन्देहः—किमत्रोक्तोऽग्निर्वैदिकोऽभिप्रेतस्तथा चाधानादिक्रियामतिदिशति—उत लौकिक एवेति ।

( ४ ) पूर्वपक्षः—वैदिक एवायमग्निः—आधानाद्यग्निसंस्कारस्य सकलवैदिककर्मशेषभूतत्वात् । ततश्चाधानादिसंस्कारोऽतिदिश्यते इति ।

( ५ ) सिद्धान्तः—आहवनीयशब्दवन्नाग्निशब्दः संस्कारनिमित्तः- अपि तु जातिनिमित्तो वासःशब्दवत् । तथासति लौकिकत्वान्नाधानादिसंस्कारमतिदिशति ।

एतदभिप्रेत्याह स्तोत्र इति । 'स्तोत्रे' अग्निमुपनिधाय स्तुवीतेति विहिते स्तवने—'असौ' अत्रोक्तः—'वह्निः' अग्निः—'लौकिक एव' न तु वैदिकः—तनश्च नाधानादिसंस्कारातिदेशक इत्याशयः ॥ १२ ॥

## (१३) ७।३।३३-३४ यूपस्य नैवोपशयेऽङ्गजातम्

( १ ) अतिदेशापवादोदाहरणम् ।

( २ ) एकादशानां यूपानां समूहे दक्षिणतोऽवस्थापितो यूपः 'उपशयः' श्रुतः-'उपशयो यूपो भवति' इति । पुनः श्रूयते 'यद्दक्षिण उपशय' इति ।

( ३ ) तत्र सन्देहः—किं यूप इति नाम उपशये परिव्याणादियूपसंस्कारमतिदिशति न वेति ।

( ४ ) पूर्वपक्षः—संस्कारनिमित्तको हि यूपशब्दः । प्रयुज्यते चायमुपशये । तस्मात् उपशये संस्काराणामतिदेश इति ।

( ५ ) सिद्धान्तः—नास्त्युपशये संस्कारस्य प्रयोजनम् । पशुं नियोक्तुमेव यूपः संस्क्रियते । पशुश्च दशस्वेव यूपेषु नियोजितो नैकादशे उपशये । तथा चोक्तम्-'सर्वे वाऽन्ये यूपाः पशुमन्तः अथोपशय एवापशुः' इति । तस्मान्न यूपशब्दः संस्कारधर्मानतिदिशतीति ।

एतदभिप्रेत्याह यूपस्येति । 'उपशये' उपशयनामके एकादशे यूपे- 'यूपस्य' परिव्याणादिसंस्कृतस्य—'अङ्गजातम्' परिव्याणादिसंस्कारकलापः—'न'-अतिदिश्यते इति शेषः ॥ १३ ॥

## (१४) ७।३।३५-३६ धर्मातिदेष्टा न च पृष्ठशब्दः ।

( १ ) अतिदेशापवादोदाहरणम् ।

( २ ) अग्निचयने श्रूयते—'पृष्ठैरुपतिष्ठते' इति । पृष्ठशब्दश्च ज्योतिष्टोमे माध्यन्दिनसवनगतस्य स्तोत्रस्य कर्मणो नामेति स्थितम् (१।४।३)।

( ३ ) तत्र सन्देहः—पृष्ठशब्दश्चयने प्रयुज्यमानः किं पृष्ठधर्मानुपस्थानेऽतिदिशति न वेति ।

( ४ ) पूर्वपक्षः-अग्निहोत्रशब्दवत् पृष्ठशब्दः पृष्ठधर्मानतिदिशतीति

( ५ ) सिद्धान्तः—पृष्ठशब्दो मन्त्रपरः, न कर्मपरः । यद्यपि स्तोत्रवाची पृष्ठशब्दस्तथाऽप्यत्र तत्साधनभूतान् रथन्तरादिसामोपेतान् 'अभि

त्वा शूर' इत्यादि मन्त्रानुपलक्षयति । एवं च न पृष्ठधर्मानतिदिशतीति ।

एतदभिप्रेत्याह धर्मेति । 'पृष्ठशब्दः'-'धर्माणाम्' पृष्ठधर्माणाम् 'अतिदेष्टा' अतिदेशको-'न'-भवतीति शेषः ॥ १४ ॥

पादे तृतीये खलु सप्तमस्य
न्याया इहोक्तास्तु चतुर्दशैव ।

स्पष्टम् ॥

इति सप्तमस्य तृतीयः ।

---

# अथ सप्तमस्य चतुर्थः पादः ।

आनुमानिकातिदेशनिरूपणपरः

## (१) ७।४।१ सौर्येऽनुमेयान्यङ्गानि

( १ ) प्रत्यक्षश्रुत्या नाम्ना चातिदेशे विचारिते आनुमानिकोऽतिदेशोऽधुना विचार्यते ।

( २ ) 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इति श्रूयते ।

( ३ ) तत्र सन्देहः—किमस्मिन् सौर्ये कर्मणि केऽपि धर्मा अतिदिश्यन्ते न वेति ।

( ४ ) पूर्वपक्षः—सौर्येऽवघातादयो धर्मा न प्राप्नुवन्ति—प्रापकप्रमाणानां श्रुतिलिङ्गादीनामभावात् इति ।

( ५ ) सिद्धान्तः—सौर्यो यागः उपकरणापेक्षः करणत्वात् लौकिकभोजनवत् वैदिकदर्शपूर्णमासवच्चेति ।

एतदभिप्रेत्याह—सौर्य इति । 'सौर्ये' तन्नामके कर्मणि—'अङ्गानि' 'अनुमेयानि' अनुमानेन प्रापणीयानीत्यर्थः ॥ १ ॥

## (२) ७।४।२-१२ वैदिकान्येव तानि तु ।

(१) पूर्वाधिकरणशेषः ।

(२) आनुमानिकान्यङ्गानि सौर्ये प्राप्तानीति स्थितम् ।

(३) तत्र सन्देहः—इमानि अङ्गानि किं वैदिकानि, उत लौकिकानि इति ।

(४) पूर्वपक्षः—सौर्ये चरावपेक्षितोऽङ्गकलापो लौकिक एव ग्रहीतव्यः । लौकिकस्यैव केनापि कर्मविशेषेण सह निबद्धत्वाभावात् । वै-

दिकस्तु प्रकरणेन तत्तत्कर्मविशेषे एव निबद्धो न तस्माद् वियोजयितुं शक्य इति ।

(५) सिद्धान्तः—सौर्यं कर्म वैदिकम् । वैदिके च कर्मणि वैदिकस्यैवेतिकर्तव्यताकलापस्य बुद्धिसन्निकृष्टता । किञ्च 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति सौर्ययागविशेषे कृष्णलहोमविधानाय सिद्धवत् प्रयाजोऽनूद्यते । इदं च वैदिकेतिकर्तव्यतायाः प्रापणे लिङ्गम्भवति । तस्माद्वैदिकान्यङ्गानीति ।

एतदभिप्रेत्याह वैदिकानीति । 'तानि' सौर्ये ऽनुमेयान्यङ्गानि-'वैदिकानि एव' न लौकिकानीत्याशयः ॥ २ ॥

## (३) ७।४।१३-२० सत्रैकाहाङ्गमेवात्र

(१) पूर्वाधिकरणापवादः ।

(२) 'प्रजाकामा गवामयनमुपेयुः' इति गवामयनसत्रं विधायोक्ताः 'ज्योतिर्गौरायुः' इति त्रयो यागाः ।

(३) तत्र सन्देहः—एतेषु त्रिषु यागेषु किं द्वादशाहिका धर्मा अनुष्ठेयाः—उत ऐकाहिका इति ।

(४) पूर्वपक्षः—गवामयनं हि द्वादशाहविकृतिः । अतस्तत्सम्बन्धिस्वलिङ्गेन तदीयधर्मप्रापकश्चोदकोऽनुमीयते । तस्माद् द्वादशाहिका एव धर्मा ज्योतिरादिषु त्रिषु यागेष्विति ।

(५) सिद्धान्तः—उक्तयागत्रयाद् भिन्नास्तन्नामका एवान्ये त्रयो यागास्सन्त्येकाहाः । तेषामेवैकाहानां धर्मा विचार्यमाणयागेषु प्राप्ताः । प्रापकं च नाम अनुमिताच्चोदकाद् बलवत्तरम्, प्रत्यक्षश्रुतत्वात् । तस्मादानुमानिकस्य द्वादशाहिकधर्मप्रापकस्य चोदकस्य बाधितत्वादैकाहिकीतिकर्तव्यता ग्राह्येति ।

एतदभिप्रेत्याह सत्रेति । 'अत्र' गवामयनिकज्योतिरादियागेषु-'सत्रेषु' ये 'एकाहाः' तेषां यत् 'अङ्गम्' धर्मजातम् तदेव-ग्राह्यमिति शेषः॥३॥

### पादेऽधिकरणत्रयम् ।

स्पष्टम् ।

इति सप्तमस्य चतुर्थः ।

## इति सप्तमाध्यायः ।

# अथाष्टमोऽध्यायः ।

[ अतिदेशविशेषनिरूपणपरः ]

## प्रथमः पादः ।

[ स्पष्टेन लिङ्गेनातिदेशपरः ]

(१-२) ८।१।१–२ सौर्ये चरावङ्गविशेष इष्टः
स चोदना लिङ्गसमानभावात् ।

(१) सामान्येनातिदेशो योऽनुमानात् स निरूपितः ।
विशेषेणातिदेशो यः सोऽष्टमेऽथ निरूप्यते ॥

(२) अविहितधर्मकेषु कर्मसु विहितधर्मकेभ्यो धर्मा अतिदिश्यन्ते इति सप्तमेऽध्याये स्थितम् । यथा दर्शपूर्णमासधर्माणां सौर्ये ।

(३) तत्रेदानीं सन्देहः—एकस्मिन् कर्मणि ये धर्माः समाम्नायन्ते ते किं सर्वे अविहितधर्मकेऽतिदिश्यन्ते उत केचिदेव । यथा किं सर्वेषां दर्शपूर्णमासधर्माणां सौर्येऽतिदेश उत केषाञ्चिदेवेति । [ यदि सर्वे प्राप्तास्तर्हि अतिदेशविशेषचिन्ता नैव कार्या–यदि न सर्वे तर्हि विशेषचिन्ता आवश्यकी ] ।

(४) पूर्वपक्षः—सर्वेऽतिदिश्यन्ते–अविशेषात् । निर्वपतीति साधारणशब्दरूपेण लिङ्गेन दार्शपौर्णमासिकधर्मसम्बन्धिना सकला दर्शपूर्णमासेतिकर्तव्यता सौर्ये प्राप्नोतीति––अतिदेशविषये विशेषचिन्ता नैव कार्येति ।

(५) सिद्धान्तः—शास्त्रार्थव्यवस्थाऽस्ति नियामिका । यथा दर्शपूर्णमासधर्माणां मध्ये ये आग्नेयस्य धर्मास्ते एव समानदेवतात्वरूपेण लिङ्गविशेषेण सौर्येऽतिदिश्यन्ते—नान्ये दर्शपूर्णमासधर्माः । एवं सति अस्त्येव प्रयोजनमतिदेशविशेषचिन्ताया इति ।

एतदौपोद्घातिकाधिकरणमभिप्रेत्याह सौर्य इति । 'सौर्ये चरौ' सौर्यचरुनिर्वापरूपे कर्मणि–'अङ्गविशेषः' दर्शपूर्णमासाङ्गानाम्मध्ये कतिपयान्येवाङ्गानि, न सर्वाणि–'इष्टः' अतिदेष्टुमिति शेषः । यथा चैवं तथा प्रतिदृष्टान्तमतिदेशे विशेषचिन्ता कर्तव्येत्याशयः ॥ १ ॥

उक्ते सिद्धान्ते पूर्वपक्षिण आक्षेपः—आग्नेययागसम्बन्धीनि यानि

लिङ्गानि तेषां धर्मातिदेशं नियन्तुं सामर्थ्यन्नास्ति—तेषामशब्दरूपत्वेन शब्दैकसमधिगम्येऽर्थे प्रामाण्यायोगादिति ॥ अस्याक्षेपस्योत्तरमाह स चोदनेति। अङ्गविशेषस्यैवातिदेश इति यो नियमः 'स'-'चोदना' श्रुतिप्रमाणक एव-कस्मात्—'लिङ्गसमानभावात्' 'लिङ्गस्य' श्रुत्या 'समानभावात्' तुल्यप्रामाण्यात्, साक्षाच्छ्रुत्यभावदशायां लिङ्गस्य श्रुतौ प्रवेशादित्यर्थः ॥ २ ॥

[अत्राधिकरणद्वयस्वरूपं यद्यपि भाष्यादिधृतस्वरूपाद् भिन्नमिव प्रतिभाति तथापि तात्पर्यतो नास्ति भेद इत्यवधेयम्।]

## (३) ८।१।३–१० न सोमयागो भवतीष्टिधर्मा

(१) अतिदेशविशेषविचारः प्रस्तूयते।

(२) 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रूयते।

(३) तत्र सन्देहः—अस्मिन् यज्ञे के धर्माः-किमैष्टिका एव उत स्वतन्त्रा इति।

(४) पूर्वपक्षः—सोमयागे प्रधानयागात् प्राक् चतस्र इष्टयः–दीक्षणीया आतिथ्या प्रायणीया पशुश्चेति। एतासु सर्वासु इष्टिषु इष्टिप्रकृतेर्दर्शपूर्णमासस्य धर्मा अनुष्ठीयन्ते। तदनन्तरं च कर्तव्ये सोमयागे ते एव धर्माः सान्निध्येनोपस्थिताः। तस्मात् सोमयागेऽपि ऐष्टिका एव धर्माः।

(५) सिद्धान्तः—सोमयागस्य सकलोऽङ्गकलापः प्रत्यक्षाभिरेव श्रुतिभिरुपदिष्टः। तेनैव च निराकाङ्क्षत्वाद् यागस्य नात्रैष्टिकधर्मातिदेशस्यावसर इति।

एतदभिप्रेत्याह नेति। 'सोमयागः'-'इष्टिधर्मा' इष्टेर्धर्मा एव धर्माः यस्य स तथाभूतः—'न भवति'-अपि तु स्वतन्त्रा एवास्योपदिष्टा धर्मा इत्याशयः ॥ ३ ॥

## (४) ८।१।११ दर्शेष्टिधर्मः सकलेष्टिगामी।

(१) अतिदेशविशेषविचारः।

(२) इष्टय उदाहरणम्।

(३) तत्र सन्देहः—इष्टिषु किं दार्शपौर्णमासिका एव धर्मा इति नियमः-उत दार्शपौर्णमासिकाः सौमिका वेति अनियम इति।

(४) पूर्वपक्षः—दार्शपौर्णमासिकसौमिकयोरन्यतरो ग्राह्यः। उभयोरप्यतिदेष्टुमर्हत्वादिति।

(५) सिद्धान्तः—कपालनिर्वापादिभिर्लिङ्गैर्दार्शपौर्णिकानामेव धर्माणामतिदेश इति नियम एवेति।

एतदभिप्रेत्याह दर्शेति। 'दर्शेष्टिधर्मः' दार्शपौणमासिकैष्टिको यो धर्मः स एव—'सकलासु' सर्वासु 'इष्टिषु' गच्छति प्राप्नोत्यतिदेशेनेति भावः ॥ ४ ॥

## (५) ८।१।१२ इष्टेर्भवेद् दैक्षपशुर्विकारः

(१) अतिदेशविशेषविचारः।

(२) अस्त्यग्नीषोमीयः पशुः।

(३) तत्र सन्देहः—अत्र किमैष्टिका धर्मा उत सौमिका इति।

(४) पूर्वपक्षः—पूर्ववदत्र निर्वापादिलिङ्गाभावात् नातिदेश ऐष्टिकानां धर्माणामिति।

(५) सिद्धान्तः—'आग्नेयमष्टाकपालम्' इत्यत्रोत्पत्तिवाक्ये यथा द्रव्यदेवते सुव्यक्तमुपदिष्टे तथव 'अग्नीषोमीयं पशुम्' इत्यत्रापि। तदेवं व्यक्तद्रव्यदेवतत्वमेकं लिङ्गम्। 'एकादश प्रयाजान् यजति' इति प्रयाजवत्त्वं द्वितीयं लिङ्गम्। एवं बहूनां लिङ्गानां सद्भावात् ऐष्टिकधर्माणामतिदेशः पशाविति।

एतदभिप्रेत्याह इष्टेरिति। 'दैक्षपशुः' अग्नीषोमीयः पशुः-'इष्टः' विकारः' विकृतिः—'भवेत्'-तथाच प्रकृतिधर्माणां विकृतौ प्राप्तत्वात्-भवति ऐष्टिकधर्माणां पशौ प्राप्तिरित्याशयः ॥ ५ ॥

## (६) दैक्षस्य चान्ये पशवो विकाराः।

( १ ) अतिदेशविशेषविचारः।

( २ ) सन्ति सवनीयादयः पशुबन्धाः।

( ३ ) तत्र सन्देहः—तेषु दर्शपूर्णमासस्य धर्मा उत दैक्षस्याग्नीषोमीयस्येति।

( ४ ) पूर्वपक्षः—दर्शपूर्णमासधर्मा एवात्र निविशन्ते। दर्श एव ह्येतेषां प्रकृतिः। अग्नीषोमीयस्तु न प्रकृतिः। तस्मात्तस्य धर्मा नातिदेशार्हा इति।

( ५ ) सिद्धान्तः—आलम्भनमग्नीषोमीयपशोर्लिङ्गम्—तच्च सवनीयादिष्वप्यस्ति। तथा प्रातःसवनीयादिषु वपाप्रचारोऽपरं लिङ्गम्। दर्शम्प्रति विकृतित्वेऽप्यग्नीषोमीयस्यान्यत्र सवनीयादौ प्रकृतित्वं न विरुध्यते। तस्मादुक्तैर्लिङ्गैरग्नीषोमीयस्य दैक्षस्यैव धर्माः सवनीयादिष्वतिदिश्यन्ते इति।

एतदभिप्रेत्याह—दैक्षस्येति। 'अन्ये पशवः' सवनीयानुबन्ध्यनिरूढादिपशुयागाः—'दैक्षस्य' अग्नीषोमीयस्य—'विकाराः' विकृतयः—अतोऽग्नीषोमीयस्यैव धर्मान् गृह्णन्तीत्याशयः ॥ ६ ॥

## (७) ८।१।१४ सौत्यस्य चैकादशिनेषु धर्माः

(१) अतिदेशविशेषः ।

(२) सन्त्येकादशिनाः पशवः—'आग्नेयः कृष्णग्रीवः–सारस्वती मेषी–बभ्रुः सौम्यः––पौष्णः श्यामः—शितिपृष्ठो बार्हस्पत्यः—शिल्पो वैश्वदेवः–ऐन्द्रोऽरुणः–मारुतः कल्माषः–ऐन्द्राग्नः संहितः–अधोरामः सावित्रः–वारुणः कृष्णः'–इति–अश्वमेधप्रकरणे पठिताः विहिताश्च ज्योतिष्टोमप्रकरणेऽपि ।

(३) तत्र सन्देहः—एतेषु कुतस्त्या धर्माः—किमग्नीषोमीयस्योत सवनीयस्येति ।

(४) पूर्वपक्षः—अग्नीषोमीयः पशूनाम्प्रकृतिरिति पूर्वाधिकरणे स्थितम् । तस्माद् पशुविकृतिभतेष्वैकादशिनेषु तस्यैव धर्मा अतिदिश्यन्त इति ।

(५) सिद्धान्तः—सवनीयपशौ रशनाद्वयम्–तथैवैकादशिनेष्वपीत्येकं लिङ्गम् । सुत्याकालीनत्वं च यथा सवनीयस्य तथैकादशिनां चेति द्वितीयम् । एवं लिङ्गद्वयेन सवनीयस्यैव धर्मा एकादशिनेष्वतिदिश्यन्त इति ।

एतदभिप्रेत्याह सौत्यस्येति । 'एकादशिनेषु' पशुयागेषु–'सौत्यस्य' सुत्याकालीनस्य सवनीयस्यैव पशोः–'धर्माः'–अतिदिश्यन्ते इति शेषः॥७॥

## (८) ८।१।१५ गणेषु चैकादशिनस्य धर्माः ।

(१) अतिदेशविशेषः ।

(२) काम्यपशुगणाः श्रूयन्ते—'वसन्ते ललामांस्त्रीन् वृषभानालभेत' इत्यादयः ।

(३) तत्र सन्देहः—एतेषु गणेषु किमग्नीषोमीयस्य धर्मा उतैकादशिनानामिति ।

(४) पूर्वपक्षः—नात्र रशनाद्वयादि लिङ्गमुपलभ्यते । प्रकृतिश्च पशूनामग्नीषोमीयः । तस्मादग्नीषोमीयस्यैव धर्माः पशुगणेष्वतिदिश्यन्त इति ।

(५) सिद्धान्तः—अस्ति गणत्वं लिङ्गं पशुगणेषु एकादशिनेषु च । तस्माल्लिङ्गात् एकादशिनाः गणप्रकृतय इति सिद्धम् । तस्मात् पशुगणेष्वैकादशिनानामेव धर्मा अतिदिश्यन्ते इति ।

एतदभिप्रत्याह गणेष्विति । 'गणेषु –'च'—'एकादशिनस्य' 'धर्माः' अतिदिश्यन्त इति शेषः—न त्वग्नीषोमीयस्येत्याशयः ॥ ८ ॥

### (९) ८।१।१६ अव्यक्तयागेषु तु सोमधर्माः

( १ ) अतिदेशविशेषः ।

( २ ) 'विश्वजिता यजेत'—'अभिजिता यजेत'—'द्वादशाहेन यजेत'—इत्येवञ्जातीयका अकथितद्रव्यदेवताका अव्यक्ता यागाः ।

( ३ ) तेषु सन्देहः—अत्र के धर्माः—ऐष्टिका एव उत सौमिका एव उत विकल्पः इति ।

( ४ ) पूर्वपक्षः—नियमे प्रमाणाभावादैच्छिको विकल्प इति ।

( ५ ) सिद्धान्तः—अस्ति सोमसाम्यमव्यक्तलिङ्गत्वेन । 'ज्योतिष्टोमेन यजेत' इत्यत्र सोमस्योत्पत्तिवाक्ये यथा द्रव्यदेवते नोक्ते तथैव विश्वजिदादावपि । अनेन च साम्येन सौमिका एव धर्मा अत्रातिदिश्यन्ते इति ।

एतदभिप्रेत्याह—अव्यक्तेति । 'अव्यक्तेषु' अकथितद्रव्यदेवतेषु-'तु'-'सोमस्य' सोमयागस्य—'धर्माः'—अतिदिश्यन्ते इति शेषः ॥ ९ ॥

### (१०) ८।१।१७ स्याद्वा द्वादशाहोक्तमहर्गणेषु ।

( १ ) अतिदेशविशेषः ।

( २ ) सन्त्यहर्गणाः द्विरात्रादयः शतरात्रपर्यन्ताः ।

( ३ ) तत्र सन्देहः—अत्र सौमिका धर्मा उत द्वादशाहिक इति ।

( ४ ) पूर्वपक्षः—पूर्ववदव्यक्तत्वलिङ्गेन सौमिकानामेवात्रातिदेश इति ।

( ५ ) सिद्धान्तः-द्विरात्रपदान्तर्गतो रात्रिशब्दः षष्ठिघटिकात्मककालपरः—तादृश एव द्वादशाहपदान्तर्गतोऽहःशब्दः । इदमेकं विशेषलिङ्गम्-अहस्सङ्घत्वं द्वितीयम्—द्वादशदीक्षत्वं तृतीयम् । एभिर्लिङ्गैर्द्वादशाहधर्माणामेवातिदेशोऽहर्गणेषु इति ।

एतदभिप्रेत्याह स्यादिति । 'अहर्गणेषु' द्विरात्रादिषु—'द्वादशाहोक्तम्' द्वादशाहसम्बद्धमेव धर्मजातं—'स्यात्' अतिदिष्टमिति शेषः ॥ १० ॥

### (११) ८।१।१८ गव्यस्य सांवत्सरिका विकाराः

( १ ) अतिदेशविशेषः ।

( २ ) सन्ति संवत्सरसत्राणि—आदित्यानामयनं तपस्विनामयनमित्यादीनि ।

( ३ ) तत्र सन्देहः—अत्र किं गवामयनिका धर्मा उत द्वादशाहिका इति ।

( ४ ) पूर्वपक्षः—अहर्गणत्वादिलिङ्गेन द्वादशाहधर्मा एवात्र प्राप्ता इति ।

(५) सिद्धान्तः—अस्त्यत्र विशेषलिङ्गम्—संवत्सरसाध्यत्वं गवामयनेषु संवत्सरसत्रेषु चेत्येकम्। 'यतय उपगायन्ति' इति महाव्रतिकस्योभयत्र दर्शनमित्यपरम्। अनेन च लिङ्गद्वयेन गवामयनिकानामेव धर्माणामत्रातिदेश इति।

एतदभिप्रेत्याह गव्यस्येति। 'सांवत्सरिकाः' संवत्सरसत्रयागाः—'गव्यस्य' गवामयनस्य—'विकाराः' विकृतयः—तस्मात्तस्यैव धर्मान् गृह्णन्तीत्याशयः॥ ११॥

## (१२) ८।१।१९ निकायिनां पूर्ववदुत्तरेषु।

(१) अतिदेशविशेषः।

(२) साद्यस्का इत्येकनामका एकसङ्घवर्तिनः वहवो यागाः श्रुताः। एतेषु प्रथमः साद्यस्को धर्मसंयुक्त आम्नातः इतरे तु धर्मरहिता एव।

(३) तत्र सन्देहः—एतेषु धर्मरहितेषु के धर्माः—किं सौमिका उत प्रथमसाद्यस्कोक्ता इति।

(४) पूर्वपक्षः—अव्यक्तत्वसाम्यात् सौमिका इति।

(५) सिद्धान्तः—एकनामत्वमेकसङ्घवर्तित्वमिति लिङ्गद्वयेन प्रथमसाद्यस्कगता एव धर्मा द्वितीयादिषु साद्यस्केष्वतिदिश्यन्ते इति।

एतदभिप्रेत्याह निकायिनामिति। 'निकायिनां'—'निकायः' सङ्घः सोऽस्ति येषां ते 'निकायिनः' एकसङ्घवर्तिनो यागाः, साद्यस्का साहस्रा इत्यादयः, तेषां मध्ये—'उत्तरेषु' द्वितीयादिषु—'पूर्ववत्'—'पूर्वः' प्रथमो यागस्तदनुसारी एव—'धर्म' इति शेषः॥ १२॥

## (१३) ८।१।२०-२२ फलादयोऽप्यत्र न चातिदेश्याः

(१) अतिदेशापवादः।

(२) दर्शपूर्णमासेष्टौ फलं (स्वर्गः)—नियमः (यावज्जीवकत्वम्)—कर्ता (स्वर्गकामः)—सङ्घः (आग्नेयादीनां षण्णां साहित्यम्) इति चत्वारः॥ सन्ति च सौर्यादय इष्टिविकृतयः।

(३) तत्र सन्देहः—सौर्यादिषु विकृतिषु एते फलादयोऽप्यतिदिश्यन्ते न वेति।

(४) पूर्वपक्षः—यथा प्रयाजादिधर्माः सौर्यादिष्वतिदिश्यन्ते तथा फलादयोऽप्यतिदेष्टव्या इति।

(५) सिद्धान्तः—कर्मसु भवति विध्यादिः विध्यन्तश्च। कर्म तत्सम्बन्धि फलादिकं च 'विध्यादिः' इतिकर्तव्यतादिधर्माश्च 'विध्यन्तः'। सौर्यस्य 'विध्यादिः' प्रत्यक्षश्रुतः 'सौर्यं चरुं निर्वपेद्' इत्यत्र। अतो विध्यादेर्नास्त्याकाङ्क्षा सौर्ये। धर्माणान्त्वनुक्तत्वात् विध्यन्ताकाङ्क्षाऽ-

स्त्येव । तस्मादाकाङ्क्षितस्य धर्ममात्रस्यातिदेशो नानाकाङ्क्षितस्य कर्मणस्तत्सम्बन्धिफलादेर्वा इति ।

एतदभिप्रेत्याह फलेति । 'अत्र' सौर्यादौ विकृतियागे—'फलादयः' 'न अतिदेश्याः'—प्रकृतिगताः फलादयो विकृतौ नातिदेष्टव्याः—अनाकाङ्क्षितत्वादित्याशयः ॥ १३ ॥

## (१४) ८।१।२३–२५ न चातिदेश्यो गुणकाम इष्टः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) दर्शपूर्णमासयोः श्रूयते 'गुणकामः—चमसेनापः प्रणयेत्—गोदोहनेन पशुकामस्य' इति । एवमन्यत्रापि गुणकामाः ।

( ३ ) तत्र सन्देहः—अत्र श्रुतो गुणकामो गोदोहनरूपः किं विकृतौ सौर्ये अतिदिश्यते न वेति ।

( ४ ) पूर्वपक्षः—अस्त्यतिदेशो गोदोहनस्य—तदाश्रयस्यापःप्रणयनस्य सौर्ये सद्भावादिति ।

( ५ ) सिद्धान्तः—बाढमस्त्यपःप्रणयनम् । किन्तु तत्प्रणयनसाधनतया प्रकृतिगतः क्रत्वर्थश्चमस एव सौर्येऽपेक्षितः—न तु पुरुषार्थो गुणकामो गोदोहनरूपः । तस्मान्नास्ति गुणकामस्यातिदेशः इति ।

एतदभिप्रेत्याह न चेति । 'गुणकामः' काम्या गुणाः—'अतिदेश्यो न इष्टः'—गुणकामानां न भवत्यतिदेश इति भावः ॥ १४ ॥

## (१५) ८।१।२६ सौर्ये विकल्पादाभिमर्शमन्त्राः

( १ ) अतिदेशविशेषः ।

( २ ) 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इति श्रूयते । अस्ति च तत्प्रकृतौ दर्शपूर्णमासयागेऽभिमर्शनद्वयम्—'चतुर्होत्रा पौर्णमासीमभिमृशेत्—पञ्चहोत्राऽमावास्याम्' इति । तदेतदभिमर्शनद्वयं चोदकबलेन सौर्ये प्राप्नोति ।

( ३ ) तत्र सन्देहः—किं सौर्यो यदा पौर्णमास्यां प्रयुज्यते तदा चतुर्होत्राऽभिमर्शनम्, यदाऽमावस्यायां तदा पञ्चहोत्रा इति नियमः—उत उभयत्र विकल्प इति ।

( ४ ) पूर्वपक्षः—कालभेदेन नियम एव—प्रकृतौ तथैव व्यवस्थितत्वात् इति ।

(५) सिद्धान्तः—एकैवैषा चोदना 'सौर्यं चरु निर्वपेत्' इति । तत्रोभे अप्यभिमर्शने प्राप्येते । तयोरेकार्थत्वात् समुच्चयो न सम्भवति । तस्माद् विकल्पः । प्रकृते च यो नियमः स न कालकृतोऽपि तु समुदायकृतः—न च सौर्ये समुदायः इति ।

एतदभिप्रेत्याह—सौर्य इति । 'सौर्ये' यागे—'अभिमर्शमन्त्राः' पौर्णमासिकाश्चतुर्होतृनामकाः पृथिवीहोतेत्यादिकाः, तथा च दार्शिकाः पञ्चहोतृसंज्ञका अग्निर्होतेत्यादिका मन्त्राः—'विकल्पात्' विकल्पमाश्रित्य—प्रयोज्या इति शेषः ॥ १५ ॥

## (१६) ८।१।२७-३१ आग्नेयविध्यन्तमुपैति सौर्यः ।

( १ ) अतिदेशविशेषः ।

( २ ) सौर्ये दर्शपूर्णमासधर्माणामतिदेश इति स्थितं चतुर्थेऽधिकरणे । सन्ति तु दर्शपूर्णमासयागे अनेकानि कर्माण्याग्नेयादीनि ।

( ३ ) तत्र सन्देहः—किं दार्शपौर्णमासिकस्य यस्य कस्यचित् कर्मणो धर्माः सौर्येऽतिदिश्यन्ते उत आग्नेयस्यैवेति ।

( ४ ) पूर्वपक्षः—यस्य कस्यापि धर्माः सौर्ये कर्तव्याः—विशेषनियामकस्याभावादिति ।

( ५ ) सिद्धान्तः—अस्ति देवतैक्यं नियामकम् । यथा आग्नेये सूर्यो देवता तथैव सौर्येऽपीति 'अमुमेवादित्यम्' इत्यर्थवादेन सूचितम् । तस्मादाग्नेयस्यैव धर्माः सौर्ये इति ।

एतदभिप्रेत्याह आग्नेयेति । 'सौर्यः' यागः—'आग्नेयस्य' यागस्य 'विध्यन्तं' धर्मजातम्—'उपैति' प्राप्नोति । इतिकर्तव्यतादिधर्मा विध्यन्तशब्देन व्यपदिश्यन्ते, कर्म स्वयं तु विध्यादिशब्देनेति ध्येयम् ॥ १६ ॥

## (१७) ८।१।३२-३४ भवेद्बलीयो हविषः सदृक्त्वम्

( १ ) अतिदेशे बलाबलम् ।

( २ ) अस्त्यैन्द्रः—'ऐन्द्रमेकादशकपालं निर्वपेत्' इति ।

( ३ ) तत्र सन्देहः—ऐन्द्रे किं देवतासाम्येन सान्नाय्यधर्मोऽतिदिश्यते—उत हविस्साम्येन पुरोडाशधर्म इति ।

( ४ ) पूर्वपक्षः—प्रथमोपात्तत्वात मुख्यभूतो देव एव बली । तथाच देवतासाम्येन सान्नाय्यस्यैव धर्मोऽतिदिश्यते इति ।

( ५ ) सिद्धान्तः—यागो हि त्यागरूपः । तत्र च त्यज्यमानतया हविरेव अन्तरङ्गम् । देवता तु मनसैवोद्दिश्यमानतया त्यागक्रियायां बहिरङ्गम् । तस्मात् अन्तरङ्गत्वेन हविस्सामान्यस्यैव बलवत्त्वात् पुरोडाशधर्मस्यैवातिदेश इति ।

एतदभिप्रेत्याह भवेदिति । 'हविषः' त्यज्यमानस्य द्रव्यस्य—'सदृक्त्वम्' सामान्यम्—'बलीयः' बलवत्तरम्—'भवेत्'—देवतासामान्यापेक्षयेति भावः ॥ १७ ॥

(१८) ८।१।३५-३६ चरौ हिरण्ये विधिरौषधः स्यात् ।

( १ ) अतिदेशविशेषः ।

( २ ) 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुःकाम' इति कृष्णलं श्रुतम् ।

( ३ ) तत्र सन्देहः—अस्मिन् कृष्णले किमाज्यस्य धर्मा उत व्रीहेरिति ।

( ४ ) पूर्वपक्षः—घृतस्यैव धर्मा कृष्णले अतिदिश्यन्ते—तेजस्वित्वसाम्यादिति ।

( ५ ) सिद्धान्तः—व्रीहिकृष्णलयोर्यादृशं वैशद्यसाम्यं न तादृशं घृतकृष्णलयोः । अथ च चरुशब्दः ओषधद्रव्यविशेषः कृष्णलेषु प्रयुज्यमानः औषधधर्मानेवातिदिशति । तस्माद् व्रीहिधर्मा एव कृष्णले कर्तव्या इति ।

एतदभिप्रेत्याह चराविति । 'हिरण्ये' कृष्णले 'चरौ'—'औषधः' व्रीहिसम्बन्धी—'विधिः' धर्मः 'स्यात्'—न त्वाज्यस्येति शेषः ॥ १८ ॥

(१९) ८।१।४०-४३ आज्यस्य धर्मो मधुनीरयोः स्यात्

( १ ) अतिदेशविशेषः ।

( २ ) चित्रायामिष्टौ श्रूयते—'दधि मधु घृतं धाना उदकं तण्डुलाः, तत्संसृष्टं प्राजापत्यं भवति' इति ।

( ३ ) तत्र सन्देहः—अत्र मधुनि उदके च किं पयसो धर्मा उत आज्यस्येति ।

( ४ ) पूर्वपक्षः—द्रवत्वसामान्यात् पयस एव धर्मा ग्राह्या इति ।

( ५ ) सिद्धान्तः—आज्येऽपि वह्निसंयोगाद् द्रवत्वं भवत्येव । मधु उदकं च घृतेन समानवर्णे । आज्यधर्माश्च उत्पवनादय बहवः शक्यन्ते मधूदकयोः कर्तुम्, नतु पयोधर्मा दोहनादयः । तस्मात् आज्यस्यैव धर्मा ग्राह्या इति ।

एतदभिप्रेत्याह आज्यस्येति । 'मधुनीरयोः' मधुनि उदके च—'आज्यस्य' घृतस्य—'धर्मः' 'स्यात्' न तु पयस इत्याशयः ॥ १९ ॥

न्यायास्तु पादे नव वै दशापि ॥

स्पष्टम् ॥

इत्यष्टमस्य प्रथमः ।

# अथाष्टमस्य द्वितीयः पादः ।

[ अस्पष्टलिङ्गैरतिदेशः । ]

## (१) ८।२।१-९ न वाजिने सोमधर्मः

( १ ) अतिदेशविशेषविचारोऽनुवर्तते ।

( २ ) चातुर्मास्येषु वाजिनेज्याः श्रुताः—'वाजिभ्यो वाजिनम्' इति।

( ३ ) तत्र सन्देहः—किं वाजिने सौमिको विध्यन्तः उतैष्टिक इति ।

( ४ ) पूर्वपक्षः—'सोमो वै वाजिनम्' इति वाजिने सोमशब्दः प्रयुक्तः । सोमशब्दश्चाग्निहोत्रशब्दवत् धर्मानतिदिशति । तस्मात् सौमिका एव धर्मा वाजिने इति ।

( ५ ) सिद्धान्तः—वाजिनं सान्नाय्यविकृतम् । एवं च वाजिने ऐष्टिकहविस्साम्यम् । तस्मादैष्टिक एव विध्यन्तः इति ।

एतदभिप्रेत्याह नेति । 'वाजिने' यागे—'सोमधर्मः' सौमिको विध्यन्तः—'न' अतिदिश्यते इति शेषः ॥ १ ॥

## (२) ८।२।१०-१४ पशुः सान्नाय्यधर्मकः ।

( १ ) अतिदेशविशेषः ।

( २ ) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः—'अग्नीषोमीयं पशुमालभेत' इति ।

( ३ ) तत्र सन्देहः—अस्मिन् पशौ किम्पुरोडाशस्य धर्मा उत सान्नाय्यस्येति ।

( ४ ) पूर्वपक्षः—अग्नीषोमीये पशौ अग्नीषोमीयपुरोडाशस्य धर्माः कार्याः देवतैक्यात् इति ।

( ५ ) सिद्धान्तः—सान्नाय्यं पशोरुत्पद्यते, पशुरपि पशोरुत्पद्यते । देवतासाम्यापेक्षया हविस्साम्यं बलीय इति स्थितं प्रथमपादीयसप्तदशाधिकरणे । तस्मात् सान्नाय्यस्यैव धर्मा इति ।

एतदभिप्रेत्याह । पशुरिति ।'पशुः' अग्नीषोमीयः—'सान्नाय्यधर्मकः' सान्नाय्यस्य धर्मा एव धर्मा यस्य स एवंभूत इति ॥ २ ॥

## (३) ८।२।१५-१८ पयोधर्मा स तु भवेत्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अग्नीषामीयः पशुः सान्नाय्यधर्मक इति स्थितम् ।

( ३ ) तत्रापि सन्देहः—पशौ किं दध्नो धर्मा उत पयस इति ।

( ४ ) पूर्वपक्षः—मूर्तत्वघनत्वसामान्यात् दध्न एव धर्माः पशाविति ।

( ५ ) सिद्धान्तः--'द्रवति गच्छति' इत्यस्मिन् अर्थे द्रवत्वं पशौ अस्ति। पयसि च द्रवत्वं स्पष्टम्। साक्षात्पशुप्रभवत्वाच्च पयः प्रत्यासन्नतरम्--दधि तु पयसा व्यवहितम्। एकाहकालीने च पशुपयसी, द्व्यहकालीनं तु दधि। तस्मादुक्तैर्लिङ्गैः पयस एव धर्माः पशावतिदिश्यन्ते इति।

एतदभिप्रेत्याह पय इति। 'स' पशुः—'पयोधर्मा' पयसो धर्मा एव धर्माः यस्य स एवंभूतः—'भवेत्' ॥ ३ ॥

(४) ८।२।१६-२३ आमिक्षायां पयोगताः ।

( १ ) अतिदेशविशेषः।

( २ ) भवति वैश्वदेवी आमिक्षा—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति।

( ३ ) तत्र सन्देहः—आमिक्षायां किं दधिपयसोरुभयोर्धर्माः उतैकस्य—यद्येकस्य तर्हि कस्येति।

( ४ ) पूर्वपक्षः—सान्नाय्यगतयोर्दधिपयसोरुभयोरपि जन्यते आमिक्षा। तस्मादुभयोर्धर्मास्तस्यामिति। अथवा घनत्वसाम्यात् दधिमात्रस्येति।

( ५ ) सिद्धान्तः—पयसि आमिक्षामुत्पादयितुमेव दध्यानीयते। तस्मात् पयसः एव मुख्यमामिक्षाजनकत्वम्। तस्मात् पयस एव धर्मा आमिक्षायामिति।

एतदभिप्रेत्याह आमिक्षायामिति। 'आमिक्षायाम्' 'पयोगताः' पयसि वर्तमाना एव—'धर्मा अतिदिश्यन्ते' इति शेषः ॥ ४ ॥

(५) धर्मो व्यवस्थयाऽङ्गं स्यात्

( १ ) अतिदेशविशेषः।

( २ ) भवति प्रायणीयाद्यहर्गणो द्वादशाहः। स द्विविधः सत्रम् अहीनश्चेति। द्वयोश्चानयोः पृथग् धर्मा आम्नाताः 'एको द्वौ बहवो वाऽहीनेन यजेरन्'–'गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुः' इति।

( ३ ) तत्र सन्देहः—द्वादशाहे किं द्वयोरपि सत्राहीनयोर्विध्यन्तोऽव्यवस्थया प्राप्त उत क्वचिदहीनस्य क्वचित्सत्रस्येति व्यवस्थेति।

( ४ ) पूर्वपक्षः—द्वादशाहस्य द्विविधो विध्यन्तः–सत्रस्य अहीनस्य च। द्वादशाहोऽहर्गणानां प्रकृतिः—अहर्गणेषु च केचित् अहीनाः केचित् सत्राणि। तस्माद् व्यवस्थापकप्रमाणाभावादुभयोरप्यतिदेशः इति।

( ५ ) सिद्धान्तः—उपलभ्यते च व्यवस्थापकं तत्तल्लिङ्गम्। तथाहि

'आसीरन्' 'उपेयुः' इति चोदनास्वरूपम्—यजमानबहुत्वनियमः—ऋत्विग्यजमानैक्यं चेत्येतानि सत्रलिङ्गम्। 'यजति' इति चोदनास्वरूपम्-यजमानबहुत्वविकल्पः—ऋत्विग्यजमानभेदश्चेत्येतानि अहीनस्य लिङ्गम्। [इति दशमीयषष्ठपादीयषोडशाधिकरणे स्पष्टम् भविष्यति]। उपलभ्यते चोभयमप्येतल्लिङ्गं द्वादशाहे-'द्वादशाहेन प्रजाकामं याजयेत्' 'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहमृद्धिकामा आसीरन्' इति च। द्विरात्रादिषु तु अहीनलिङ्गं यजतिचोदनैव-'द्विरात्रेण यजेत' इत्यादि। त्रयोदशरात्रादिषु च सत्रलिङ्गमेव—'त्रयोदशरात्रमृद्धिकामा उपेयुः' 'चतुर्दशरात्रेण प्रतिष्ठाकामा आसीरन्' इति। तस्मात् यथालिङ्गं धर्मव्यवस्थेति।

एतदभिप्रेत्याह धर्म इति। 'अह्नां' अहर्गणस्य—'धर्मः'—'व्यवस्थया' 'स्यात्'—यथालिङ्गं व्यवस्थितमेव स्यादिति॥ ५॥

(६अ) ८।२।२९-३२ सत्रं पञ्चदशाहकः।

(१) अतिदेशविशेषः।

(२) अस्ति पञ्चदशरात्रः एवंविधः—'अग्निष्टोमस्त्रिरात्रो—दशरात्रः—उदयनीयः—अतिरात्र' इति।

(३) तत्र सन्देहः—किमयमहीन उत सत्रमिति।

(४) पूर्वपक्षः—अहीन एवायम्। सत्रे आदावन्ते चातिरात्रः, अत्र च अन्त एव अतिरात्रः। एकत्रातिरात्रत्वं चाहीनलिङ्गं दर्शितम्—'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति। एवं च सत्रलिङ्गस्योभयतोऽतिरात्रत्वस्याभावात् अहीनलिङ्गस्य चैकतोऽतिरात्रत्वस्य सत्वादहीन एवायमिति।

(५) सिद्धान्तः—'उपेयुः' इति चोदनास्वरूपं सत्रलिङ्गम्। तच्चोपलभ्यते पञ्चदशरात्रविधौ—'पञ्चदशरात्रमुपेयुः' इति। एतच्च लिङ्गं विधिवाक्यगतत्वात् प्रबलम्। तस्मात् सत्रमेव पञ्चदशरात्रस्ततश्चास्मिन् सत्रधर्मा एवातिदिश्यन्ते इति।

एतदभिप्रेत्याह सत्रमिति। 'पञ्चदशाहकः' पञ्चदशरात्रो यागः—'सत्रम्' एव—न त्वहीनः—तस्मादत्र सत्रधर्मा एव अतिदेष्टव्या इत्याशयः॥ ६॥

पादेऽस्मिन् भाष्यकारेण
षण्न्यायाः समुदीरिताः।

स्पष्टम्।

इत्यष्टमस्य द्वितीयः।

# अथाष्टमस्य तृतीयः पादः ।

[ प्रबलेन लिङ्गेनातिदेशः ]

## (१) ८।३।१-२ हविर्गणे देवतयाऽतिदेशः

( १ ) अतिदेशविशेषविचारोऽनुवर्तते ।

( २ ) अस्ति हविर्गणद्वयम्—'अग्नावैष्णवमेकादशकपालं निर्वपेत्' इत्यादिः प्रथमो हविर्गणः—'अग्नये शुचयेऽष्टाकपालम्' इति द्वितीयः। प्रकृतियागे चास्ति प्रथम आग्नेयो द्वितीयश्चाग्नीषोमीय इति ।

( ३ ) तत्र सन्देहः—द्वयोर्हविर्गणयोः कुत्र कस्य विध्यन्तः—किमग्नावैष्णवे आग्नेयस्य—शुचिदैवते चाग्नीषोमीयस्य—उत विपर्यय इति।

( ४ ) पूर्वपक्षः—यथा हविर्गणयोरग्नावैष्णवः प्रथमस्तथा प्रकृतावाग्नेयः प्रथमः । तस्मात् स्थानप्रामाण्यादग्नावैष्णवे आग्नेयस्य विध्यन्तः। एवमेव द्वितीये शुचिदैवते प्रकृतियागे द्वितीयस्थानस्थितस्याग्नीषोमीयस्य विध्यन्त इति ।

( ५ ) सिद्धान्तः—अग्नावैष्णवाग्नीषोमीययोरस्ति श्रूयमाणं साम्यं द्विदेवत्वरूपम् । तथा च शुचिदैवताग्नेययोरेकदेवतत्वं साम्यम्। एवमनेन श्रूयमाणेन साम्येन द्विदेवते अग्नावैष्णवे द्विदेवतस्याग्नीषोमीयस्य-एकदेवते च शुचिदेवते कर्मण्येकदेवतस्याग्नेयस्य धर्मा अतिदिश्यन्ते। कर्मचोदनायां साक्षाच्छ्रुता देवता अर्थाल्लिखितात् स्थानात् बलवत्तरा। तस्मात् देवताप्रामाण्यं मुख्यम् स्थानप्रामाण्यं च जघन्यमिति।

एतदभिप्रेत्याह हविर्गण इति। 'हविर्गणे'—धर्माणाम् 'अतिदेशः'—'देवतया' श्रूयमाणदेवतालिङ्गेन भवति—न तु क्रमलिङ्गेनेत्याशयः ॥ १ ॥

## (२) ८।३।३-५ नानाहिकानां विहिता त्रिवृत्ता ।

( १ ) अतिदेशविशेषः ।

( २ ) जनकसप्तरात्रे श्रूयते—'चत्वारि त्रिवृन्ति अहानि भवन्ति'—पुनश्च'नव त्रिवृन्ति अहानि भवन्ति' इति ।

( ३ ) तत्र सन्देहः—यद् द्वितीयवाक्ये श्रूयते तत् किं प्रथमवाक्योपात्तस्यैवाभ्यासेन सम्पाद्यते—उत नानाह्नां द्वादशाहिकानां तद् विधीयते। एवं च किं तस्मिन् प्रथमोपात्तस्य धर्माणामतिदेश उत द्वादशाहिकानामिति ।

( ४ ) पूर्वपक्षः—त्रिवृत्सोमविशिष्टं यत् प्रथममुक्तं तस्यैव धर्मा-स्त्रिष्वहस्सु अभ्यसनीयाः—पूर्वाधिकरणन्यायेन त्रिवृत्त्वसामान्यस्य श्रूयमाणत्वादिति ।

( ५ ) सिद्धान्तः—चतुर्णामह्नां पृथग्भूतानां सङ्घात एव 'चत्वारि'-पदेन विवक्षितः । न चैकस्यैवावृत्त्या चतुस्सङ्घातः सम्पद्यते । सन्ति तु एवंभूताः सङ्घाताः द्वादशाहे । तस्माद् द्वादशाहस्यैव धर्मा अत्रा-तिदेष्टव्या इति ।

एतदभिप्रेत्याह नानेति।'नानाहिकानां' द्वादशाहिकादीनि यानि चत्वारि अहानि तेषां–तान्येवानूद्य–'त्रिवृत्ता' त्रिवृत्त्वं–'विहिता' इति सम्बन्धः ॥२॥

## (३) ८।३।६–७ अभ्यस्य धर्मः षडहस्य कार्यः

( १ ) अतिदेशविशेषः । पूर्वाधिकरणापवादः ।

( २ ) षट्त्रिंशद्रात्रे श्रूयते—'षडहा भवन्ति चत्वारो भवन्ति' इति ।

( ३ ) तत्र सन्देहः—किमत्र द्वादशाहिकानां धर्माणामतिदेश उत षडहस्येति ।

( ४ ) पूर्वपक्षः—अहःसंज्ञकानां सोमयागानां सङ्ख्याविशेषः षड-हशब्दान्तर्गतेन षट्शब्देनाभिधीयते । सा च सङ्ख्या पुनश्चतुस्सङ्ख्यया विशिष्यमाणा चतुर्विंशतिसङ्ख्यकानामह्नां सङ्घे पर्यवस्यति । अहःसङ्घस्य च प्रकृतिर्द्वादशाहः । अतस्तल्लिङ्गस्य सङ्घत्वस्य दर्शनात् द्वादशाहस्यैव धर्माः प्रवर्तन्ते । द्वादशाहस्य च द्विरावृत्त्या चतुर्विंशतिसङ्ख्या पूर्यत इति।

( ५ ) सिद्धान्तः—षड्भिरहोभिर्निष्पाद्यं कर्म षडहशब्दवाच्यम् । ते च कर्मविशेषाश्चत्वार इत्युदाहृतवाक्ये उक्तम् । एवञ्च चतुर्षु षडह-यागेषु षडहस्यैव धर्माः प्राप्नुवन्ति । यदि च चत्वारः षडहाः परस्पर-विलक्षणा न स्युस्तर्ह्येक एव चतुर्वारमभ्यसनीयः । एवं च षडहत्व-विशेषलिङ्गेन षडहस्यैव धर्मा अतिदेश्या इति ।

एतदभिप्रेत्याह—अभ्यस्येति । 'षडहस्य' षडहयागस्यैव—'धर्मः'—'अभ्यस्य' चतुर्वारमावर्त्य—'कार्यः' अनुष्ठेयः—'षट्त्रिंशद्रात्रनामके कर्मविशेषे इति शेषः ॥ ३ ॥

## (४) ८।३।८–९ संस्थादिनानां ग्रहणं दिनेभ्यः ।

( १ ) अतिदेशविशेषः ।

( २ ) भवन्ति संस्थागणाः—'अग्निष्टोमः—पञ्चोक्थ्यः—शता-ग्निष्टोमं भवति—शतातिरात्रं भवति' इत्येवमादयः ।

( ३ ) तत्र सन्देहः—एतेषु किं ज्योतिष्टोमस्य धर्मा उत द्वादशाहस्येति ।

( ४ ) पूर्वपक्षः—'उक्थ्यः—षोडशी—अतिरात्रः—अग्निष्टोमः' इत्यादीनि भवन्ति ज्योतिष्टोमस्य नामानि । तस्मात् नामसांस्थलिङ्गेन संस्थागणेषु ज्योतिष्टोमस्यैव धर्मा अतिदेष्टव्या इति ।

( ५ ) सिद्धान्तः—संस्थागणः सङ्घात्मकः । सङ्घात्मनां च कर्मणां द्वादशाह एव प्रकृतिः। तस्मात् सङ्घत्वसाम्येन द्वादशाहस्यैव धर्मा अतिदेष्टव्याः । उक्थ्यादीनि च स्तोत्रनामानि । तथा च यस्य यस्य कर्मणः समाप्तिर्येन स्तोत्रेण क्रियते तस्मिन् कर्मणि उक्थ्यादिशब्दो वर्तते। एवं च द्वादशगेष्वपि अहःसु उक्थ्यादिसम्भवः। तथा सति उक्थ्यादि न केवलं ज्योतिष्टोमस्यैव नामापि तु तत्तत्संस्थाविशिष्टस्य कर्मणः इति।

एतदभिप्रेत्याह—संस्थेति । 'संस्थादिनानां' गणचोदनया प्राप्तानां संस्थाविशिष्टानां दिनानां—'ग्रहणं' प्राप्तिरतिदेशः—'दिनेभ्यः' द्वादशाहेभ्यो भवतीत्यर्थः ॥ ४ ॥

## (५) ८।३।१०-११ अहर्गणान्नोपचयो विधेयः

( १ ) पूर्वाधिकरणशेषः ।

( २ ) पूर्वोक्तेषु शतोक्थ्यशतातिरात्रादिषु कर्मसु स्तोत्रवृद्धिरपेक्ष्यते ।

( ३ ) तत्र सन्देहः—इयं स्तोत्रवृद्धिः किं द्वादशाहादुत ज्योतिष्टोमादिति ।

( ४ ) पूर्वपक्षः—शतोक्थ्यादीनि सङ्घात्मकानि । सङ्घात्मकानां च द्वादशाहः प्रकृतिः । तस्मात् द्वादशाहादेव स्तोत्रवृद्धिरिति ।

( ५ ) सिद्धान्तः—उक्थ्यादिस्तोत्राणि एकाहज्योतिष्टोमे उत्पद्यन्ते। तस्मादेव च द्वादशाहेऽतिदिश्यन्ते । यथा च द्वादशाहे एकाहज्योतिष्टोमादेवातिदिश्यन्ते तथैव शतोक्थ्यादिष्वपि तस्मादेवातिदेष्टव्यानि-इति।

एतदभिप्रेत्याह—अहर्गणेति । 'उपचयः' स्तोत्रवृद्धिः—यः शतोक्थ्यादिषु अपेक्ष्यते स—'अहर्गणात्' द्वादशाहात्—'न विधेयः' अतिदेष्टव्यः—अपि तु एकाहाज्ज्योतिष्टोमादेवेति शेषः ॥ ५ ॥

## (६) ८।३।१२-३६ गायत्रता नाक्षरलोपने स्यात् ।

( १ ) अतिदेशविशेषः। उपचयश्चिन्तितः । अपचय इदानीं चिन्त्यते।

( २ ) इदं श्रूयते—'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति । तत्र चेदं समाम्नातम्—'गायत्रमेतदहर्भवति' इति ।

( ३ ) तत्र सन्देहः—किं प्रकृतिभूतज्योतिष्टोमीयानां त्रिष्टुब्जगत्यादीनामक्षरलोपनेन गायत्रत्वं सम्पादनीयम्—उत उत्पत्त्यैव गायत्रीणां दाशतयीभ्य आगमं कृत्वेति ।

( ४ ) पूर्वपक्षः--एकाहे बृहस्पतिसवे ज्योतिष्टोमान्तानां छन्दांसि त्रिष्टुबादीन्यतिदिष्टानि । तेष्वधिकाक्षराणि विलोप्य चतुर्विंशत्यक्षराणि परिशेष्य गायत्रीत्वं सम्पादनीयमिति ।

( ५ ) सिद्धान्तः--वेदाक्षरविलोपनमन्याय्यम् । तस्मात् दाशतय्यामुत्पन्नास्वेव चतुर्विंशत्यक्षरासु ऋक्षु वर्तमानः यः कश्चिदवान्तरजातिविशेषस्तद्द्वारैव गायत्रता । एवं च तासामेव ऋचामागमः कर्तव्य इति ।

एतदभिप्रेत्याह--गायत्रतेति । 'अक्षरलोपने' ज्योतिष्टोमीयत्रिष्टुबादिछन्दसामक्षरविलोपने सति, तन्निमित्तका--'गायत्रता' 'न स्यात्'--अपि तु उत्पत्त्यैव गायत्रीणामागमेन गायत्रता सम्पादनीयेत्याशयः ॥ ६ ॥

पादे तृतीये ध्रुवमष्टमस्य
न्यायाः षडेवात्र सुधीभिरुक्ताः ।

स्पष्टम् ।

इत्यष्टमस्य तृतीयः ।

---

# अथाष्टमस्य चतुर्थः पादः ।

[ अतिदेशापवादनिरूपणपरः ]

## (१) ८।४।१;१–९ दर्विहोमपदनाम

( १ ) दर्विहोमेऽतिदेशापवादे प्रदर्शयिष्यमाणे दर्विहोमस्वरूपमेवादौ चिन्त्यते ।

( २ ) इदमाम्नायते—'यदेकया जुहुयाद् दर्विहोमं कुर्यात्' इति ।

( ३ ) तत्र सन्देहः—अत्र किं दर्विरूपस्य होमगुणस्य विधिरुत दर्विहोम इति कर्मनामेति ।

( ४ ) पूर्वपक्षः—'दर्व्यां होमः' इति व्युत्पत्त्या होमानुवादेन दर्व्याख्यो गुणो विधीयत इति ।

( ५ ) सिद्धान्तः—लौकिके स्थालीपाकाष्टकादिहोमे शिष्टाचारात् होमस्य साधनान्तरमेव प्राप्तम् । तथाच तत्र नावकाशो दर्विरूपसाधनस्य विधेः । वैदिके चाग्निहोत्रादौ जुह्वादेरेव होमसाधनस्य विहितत्वात् तत्रापि दर्वीं विधातुं न शक्यते । तस्मान्नायं दर्विहोमशब्दो गुणविधिरपि तु कर्मनामधेयमेवेति ।

एतदभिप्रेत्याह—दर्वीति । 'दर्विहोम' इति 'पदम्'—'नाम'—कर्मणो नामधेयम्—न तु गुणविधिरिति शेषः ॥

[ दर्विहोमवाक्यं न गुणविधिरित्यधिकरणान्तरमेव भाष्ये पञ्चममारभ्य नवमसूत्रपर्यन्तं धृतम् । एतच्च प्रथमाधिकरणान्तर्गतमेवात्र न्यायमालायाञ्च ] ॥ १ ॥

## (२) ८।४।२—३ लौकिके वैदिके च तत् ।

( १ ) दर्विहोमस्वरूपविचारोऽनुवर्तते ।

( २ ) दर्विहोमपदन्नामेति स्थितम् ।

( ३ ) तत्र सन्देहः—किमयं शब्दो लौकिकानां स्मार्तानामष्टकादीनां नाम उत सर्वेषां वैदिकानां लौकिकानाञ्चेति ।

( ४ ) पूर्वपक्षः—'अम्बष्ठानां दार्विहोमिको ब्राह्मण' इति स्मृतौ अम्बष्ठस्वामिके स्मार्तहोमे दर्विहोमशब्दस्य प्रयोगो दृश्यते । तस्मात् लौकिकस्यैव कर्मणः नामायं शब्द इति ।

( ५ ) सिद्धान्तः—'दर्व्या होमो दर्विहोमः' इति प्रवृत्तिनिमित्तं लौकिकवैदिकोभयसाधारणम् । तस्मात् सर्वस्यैव कर्मणो नामेदमिति ।

एतदभिप्रेत्याह—लौकिक इति । 'तत्' दर्विहोम इति नाम 'लौकिके' 'वैदिके' 'च' कर्मणि प्रवर्तते इति शेषः ॥ २ ॥

## (३) ८।४।४ जुहोतेरेव नामैतत्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) लौकिकस्य वैदिकस्य च कर्मणो नाम दर्विहोमशब्द इति स्थितम् ।

( ३ ) तत्र सन्देहः—किं यजतेर्जुहोतेश्च सर्वेषां नामधेयमिदमुत जुहोतेरेव केवलमिति ।

( ४ ) पूर्वपक्षः—सर्वेषां भवितुमर्हति—विशेषाश्रवणात् इति ।

( ५ ) सिद्धान्तः—जुहोतावेव होमशब्दो मुख्यः । यजतेश्च तन्नामत्वं लक्षणयैव स्यात् । तस्मात् जुहोतेरेवेदन्नामेति ।

एतदभिप्रेत्याह—जुहोतेरिति । 'एतत्' दर्विहोम—'नाम'—'जुहोतेः' होमशब्दवाच्यस्यैव कर्मणः-न यजतिशब्दवाच्यस्येत्याशयः ॥ ३ ॥

## (४) ८।४।१०-२८ दर्विहोमास्त्वपूर्वकाः।

( १ ) दर्विहोमे प्रकृतो विचारः प्रस्तूयते।

( २ ) दर्विहोमनामकं कर्म स्थितम्।

( ३ ) किमेते दर्विहोमा अपूर्वा उत कस्माच्चित्कर्मान्तराद् धर्मग्राहिण इति।

( ४ ) पूर्वपक्षः—दर्विहोमेषूत्पत्तिवाक्ये देवताया अश्रवणात् अव्यक्तिलिङ्गेन सोमधर्मा एवातिदेष्टव्याः अष्टमाध्यायप्रथमपादनवमाधिकरणन्यायेनेति।

( ५ ) सिद्धान्तः—सोमे श्रुतं यजतिलिङ्गमत्र नास्ति। किंच 'पृथिव्यै स्वाहा' इति दर्विहोममन्त्रेषु स्वाहाकार आम्नातः। स च सौमिकधर्मातिदेशे विरुध्येत--सोमे स्वाहाकारविरोधिनो वषट्कारस्य श्रवणात्। उक्तमन्त्रेषु च पृथिव्यादिदेवतानाम्प्राप्तत्वान्नास्ति दवताया अभावः। तस्माद् दर्विहोमा अपूर्वकर्माणि न कुतश्चिदतिदेशेन धर्मान् गृह्णन्तीत ॥ ४ ॥

## (५) ८।४।२८ (अन्त्यभागः) वाक्याद्व धर्मातिदेशः स्यात्

( १ ) पूर्वविचारशेषः।

( २ ) दर्विहोमेषु नातिदेश इति स्थितम्।

( ३ ) एवंसति सन्देहः—किं सर्वत्रैवमेवातिदेशाभाव एव उत नेति।

( ५ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सर्वत्रैवमेवातिदेशाभावः इति।

( ५ ) सिद्धान्तः—यत्र साक्षाद् वचनं श्रूयते तत्र भवत्येवातिदेशो धर्मस्य।

एतदभिप्रेत्याह—वाक्यादिति। 'वाक्यात' प्रत्यक्षश्रुतिबलात्—'धर्माणाम्' 'अतिदेशः' एवेति सम्बन्धः॥

[ नेदमधिकरणं धृतं न्यायमालायाम्। नापि भाष्ये। अष्टाविंशतिसूत्रस्य भाष्यस्य अन्ते तु अयं विषयो व्याख्यातो वर्तते। तन्मूलकतयैवात्र मण्डनेनाधिकरणान्तरमेव कृतमिति ध्येयम् ] ॥ ५ ॥

न्यायाः पञ्चात्र कीर्तिताः।

स्पष्टम्।

इत्यष्टमस्य चतुर्थः।

इत्यष्टमोऽध्यायः।

---

# अथ नवमाध्यायस्य प्रथमः पादः ।

( ऊहारम्भपरः )

## (१) ९।१।१ धर्मास्त्वपूर्वेण खलु प्रयुक्ताः

( १ ) अतिदेशोऽष्टमेऽध्याये समाप्तो–नवमे पुनः ।
अतिदिष्टपदार्थानामूहानूहविचारणा ॥

ऊहश्च—

प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगो विकृते ऊह्यमानतयोदितः ॥ इति ।

अतिदिष्टपदार्थस्य कार्यवशाद् रूपान्तरकरणमूहनमित्यर्थः । ऊहश्च त्रिविधः—मन्त्रोहः सामोहः संस्कारोहश्च । स इहाध्याये प्राधान्यतो वक्ष्यते–-अन्यदपि किञ्चिदुपोद्धातेन प्रसङ्गेन च लक्षणसिद्ध्यर्थमुच्यते ॥

( २ ) अग्निहोत्रं ज्योतिष्टोमदर्शपूर्णमासौ चात्रोदाहरणम् । तत्र पृथक् धर्मा आम्नाताः ।

( ३ ) तत्र सन्देहः—किमेते धर्मा अपूर्वप्रयुक्ता उत यजिप्रयुक्ता इति ।

( ४ ) पूर्वपक्षः—सप्तमाध्यायस्य प्रथमाधिकरणे यः पूर्वपक्षः स इहानुसन्धेयः ।

( ५ ) सिद्धान्तः—सप्तमाद्याधिकरणसिद्धान्त एवात्रानुसन्धेयः । एतत्सर्वमभिप्रेत्याह धर्मा इति । 'धर्माः' 'अपूर्वेण' एव 'प्रयुक्ताः'—न यजिनेति भावः ।

[ यद्यपूर्वप्रयुक्तास्तर्हि ऊहः सिध्यति—यदि यजिप्रयुक्तास्तर्हि ऊहो न सिध्यति—सङ्करो हि तथासति स्यात् । सर्वाणि कर्माणि प्रायशो यजतावन्तर्भूतानि । एवंसति यदि यजतिप्रयुक्ताः धर्मास्तदा सर्वत्र स्युः । अपूर्वप्रयुक्तत्वे तु तदीयविशेषे एव प्राप्ता न सर्वत्र । ततश्चोहः सिध्यति । अतिदिष्टपदार्थे एवोहः । अतोऽतिदेशारम्भे यो विचारः सप्तमादौ कृतः स एवात्रोहारम्भकाले स्मार्यते ] ॥ १ ॥

## (२) ९।१।२-३ न प्रोक्षणं हन्ति पिषिप्रयुक्तम् ।

( १ ) सामान्यतो धर्माणामपूर्वप्रयुक्तत्वं स्थितम् । तस्यैव विशेषाश्चिन्त्यन्ते ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति–-दृषदुपलाभ्यां पिनष्टि' इति ।

( ३ ) तत्र सन्देहः—किं प्रोक्षणं अवहननपेषणाभ्यामप्रयुक्तमुतापूर्वप्रयुक्तमिति ।

( ४ ) पूर्वपक्षः—उलुखलमुसलद्वारा प्रोक्षणमवहननपेषणार्थम्—वाक्येन तच्छेषताप्रतीतेरिति ।

( ५ ) सिद्धान्तः—पूर्वपक्षे यत्रैवावघातः पेषणं वा तत्रैव प्रोक्षणं स्यात् । तथाच सति यत्र नखेन तुषविमोक आम्नायते—यथा नैर्ऋतचरौ 'कृष्णानां व्रीहीणां नखनिर्भिन्नानाम्' इति—तत्र प्रोक्षणं नोह्येत—तथा संस्कारो हीयेत । तस्मात् अपूर्वप्रयुक्तत्वमेव प्रोक्षणस्य । तथैव हि प्रकरणेन सिध्यति। एवं च नैर्ऋतचरावपि भवत्येवोहोऽपूर्वसिद्ध्यर्थमिति

एतदभिप्रेत्याह–'प्रोक्षणं'—'हन्तिः' अवघातः 'पिषिः' पेषणं–ताभ्याम 'प्रयुक्तं' न भवति—अपि त्वपूर्वप्रयुक्तमेवेति शेषः ॥ २ ॥

(३) ६।१।३ ( वर्णकान्तरेण ) वाचां स्वरस्त्वङ्गविधिप्रयुक्तः ।

( १ ) ऊहनिर्णायकप्रयोज्यप्रयोजकभावविचारोऽनुवर्तते ।

( २ ) ज्योतिष्टोमे श्रूयते—'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्–मन्द्रं प्रायणीयायाम्–मन्द्रतरमातिथ्यायाम्–उपांशूपसत्सु–उच्चैरग्नीषोमीय' इति ।

( ३ ) तत्र सन्देहः—किं ज्योतिष्टोमापूर्वप्रयुक्ता स्वरस्योच्चत्वादिधर्माः–उत दीक्षणीयाद्यवान्तरापूर्वप्रयुक्ता इति ।

( ४ ) पूर्वपक्षः—उच्चैस्त्वादयो धर्माः परमापूर्वप्रयुक्ताः—तस्यैव फलसाधनत्वादिति ।

( ५ ) सिद्धान्तः—अवान्तरापूर्वेष्वप्यस्त्येव फलसाधनत्वम्–परमापूर्वद्वारा । एवं च समाने फलसाधनत्वे सन्निकृष्टलक्षणया निर्णयः कार्यः । तथाहि दीक्षणीयादिशब्दा अङ्गकर्मवाचिनः—उच्चैस्त्वादिधर्माणां च न कर्मप्रयुक्तत्वमपि त्वपूर्वप्रयुक्तत्वमेवेति निर्णीतम्प्रथमेऽधिकरणे । तत्र वाक्यगतमवान्तरअपूर्वं प्रकरणगतपरमापूर्वापेक्षया सन्निकृष्टतरम् । तस्मादवान्तरापूर्वप्रयुक्ता एवैते धर्माः ।

एतदभिप्रेत्याह वाचामिति । 'वाचां' शब्दानां—'स्वरः' मन्द्रत्वादिः–'अङ्गविधिप्रयुक्तः' अङ्गापूर्वप्रयुक्तः–न परमापूर्वप्रयुक्त इति भावः।

अनेन सिद्धान्तेनाश्वमेधगतत्रैधातवीयायामूहाभावः । तथाहि–अश्वमेधे समाम्नायते—'त्रैधातवीया दीक्षणीया भवति' इति । यद्येवञ्जातीयको धर्मः परमापूर्वप्रयुक्तः तर्हि तस्योपकारविशेषे निबद्धः—इति तत्कार्यापन्नायां त्रैधातवीयायामूहो भविष्यति । अथाग्नावैष्णवाद्यङ्गापूर्व-

प्रयुक्तस्तर्हि त्रैधातवीयायामेतदपूर्वं न भवत्यपि त्वन्यदेवेति न भवत्यूह इति ध्येयम् ॥ ३ ॥

## (४) ९।१।४-५ स्वर्गस्तथाऽग्निश्च न हि प्रयोक्ता ।

( १ ) ऊहनिर्णायकप्रयोज्यप्रयोजकभावविचारोऽनुवर्तते ।

( २ ) स्तो दर्शपूर्णमासौ । तत्र मन्त्ररूपो धर्मः फलसम्बद्धः श्रूयते- यथा 'अगन्म स्वः सं ज्योतिषा भूमा' इति--देवतासम्बद्धश्च-यथा 'अ- ग्नेरहमुज्जितिमनूज्जेषम्' इति ।

( ३ ) तत्र सन्देहः--स्वर्गरूपफलसम्बद्धस्य धर्मस्य स्वर्ग एव प्रयो- जकः--अग्न्यादिदेवतासम्बद्धस्य च अग्न्यादिदेवता एव-उतोभयत्रा- पूर्वमेव प्रयोजकमिति ।

( ४ ) पूर्वपक्षः--फलसम्बद्धस्य फलं देवतासम्बद्धस्य च देवतैव प्रयोजकम् । तथैव मन्त्रलिङ्गात् । अगन्म इत्यादिमन्त्रो हि स्वर्गाग्न्यादीनां वाचकः--तस्मात् फलदेवतमेव धर्माणाम्प्रयोजकमिति ।

( ५ ) सिद्धान्तः—अपूर्वं यच्चोदितं तस्यैव फलवत्त्वेनानुष्ठेयतया भवतीतिकर्तव्यताकाङ्क्षा । तथा सति अपूर्वमेव प्रयोजकम्मन्त्रयोरिति ।

एतदभिप्रेत्याह स्वर्ग इति । 'स्वर्गः'—दर्शपूर्णमासफलरूपः अगन्म स्वरित्यादिमन्त्रोक्तः—'अग्निः' देवतारूपः अग्नेरहमित्यादिमन्त्रोक्तः— 'प्रयोक्ता' प्रयोजको मन्त्ररूपस्य धर्मस्य—'न' भवत इति शेषः—अपि त्व- पूर्वमेव प्रयोजकमित्याशयः ।

अत्र च पूर्वपक्षे 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इत्यत्र विकृति- यागे स्वर्गस्याग्नेश्चाभावान्न भवेदूहः—सिद्धान्ते तु मन्त्रयोरपूर्वस्य प्र- योजकत्वात् तस्य च विकृतावपि सत्त्वात् भवत्येवोहः। तथाच सति सौर्ये अगन्मस्वरित्यस्य स्थाने अगन्म ब्रह्मवर्चसमित्यूहनीयम्--'अग्नेरह- मुज्जितिमि'त्यस्य च स्थाने सूर्यस्याहमुज्जितिमिति ॥ ४ ॥

## (५) ९।१।६-१० न देवता कर्मणि तु प्रधानम्

( १ ) पूर्वाधिकरणे यो विचारविशेषस्तस्यैव सामान्यन्तोभावपरो विचारो वर्तते ।

( २ ) 'आग्नेयोऽष्टाकपाल' इत्यादीनि कर्माणि ।

( ३ ) तत्र सन्देहः--एतेषु कर्मसु धर्माणाम्प्रयोजकं किं दैवतमुता- पूर्वमिति ।

( ४ ) अग्न्यादि दैवतमेवात्र प्रयोजकम् । यागेन तोषिता देवता एव फलं ददाति । मन्त्रार्थवादादिभ्यो देवतायां विग्रहादिपञ्चकं श्रूयते विग्रहः हविःस्वीकारः हविर्भोजनम् तृप्तिः प्रसादश्चेति । तद्यथा--'सह-

स्यात्त्वो गोत्रभिद् वज्रबाहुरिति' विग्रहः--'अग्निरिदं हविरजुषतेति' हविःस्वीकारः--'अद्धीन्द्र पिबस्वेति' हविर्भोजनम्--'तृप्त एवैनमिन्द्रः प्रजः पशुभिस्तर्पयतीति' तृप्तिप्रसादौ । एवम्भूतायाश्च देवतायाः फलप्रदत्वं सिध्यति । फलप्रदत्वाच्च प्राधान्याद्देवतायाः सैव प्रयोजिका धर्माणामिति ।

( ५ ) सिद्धान्तः--देवतायाः फलप्रदत्वरूपं प्राधान्यं न शब्दाद् गम्यते नापि वस्तुसामर्थ्यात् सिद्ध्यति । तत्त्वतस्तु विधेयं प्रति यथा द्रव्यस्य गुणत्वं तथव देवताया अपि। देवताया विग्रहादिपञ्चकप्रतिपादकानाम्मन्त्रार्थवादानां न स्वार्थे तात्पर्यम् । तथा सति 'वनस्पतिभ्यः स्वाहे'त्यादौ मन्त्रे वनस्पत्यादीनामपि विग्रहादिपञ्चकं कल्प्येत--तच्च प्रत्यक्षविरुद्धम् । ततो न देवतायाः फलप्रदत्वं सम्भवति । देवताविग्रहादिवाद्यपि विना कर्मणा फलसिद्धिं नाभ्युपैति । तस्मादुभयवाद्यभिमतं यागादिकर्मैव फलप्रदमभ्युपगन्तव्यम् । कर्मणां चापूर्वमेव साक्षात्फलप्रदम् । तस्मादपूर्वमेव फलप्रदम्-फलप्रदत्वेन च धर्माणाम्प्रयोजकमिति ।

एतदभिप्रेत्याह न देवतेति । 'कर्मणि' यागादौ-'तु'--'देवता' 'न प्रधानम्' फलप्रदं धर्मप्रयोजकं च न भवतीति शेषः ॥

अत्र पूर्वपक्षे--सौर्यादावग्नेरभावात् अग्निदेवताप्रयुक्ता धर्मा नैवातिदिष्टा भवेयुस्तथा चोहस्य नैव स्यादवसरः । सिद्धान्ते तु अग्नेरभावेऽपि अपूर्वप्रयुक्तधर्माणामतिदेशो भवति-ततश्चोहस्याप्यवसर इति ध्येयम् ॥ ५ ॥

## (६) ९।१।११-१६ न द्रव्यसङ्ख्यादिरपि प्रयोक्ता ।

( १ ) प्रयोज्यप्रयोजकभावविचार एव वर्तते ।

( २ ) दर्शपूर्णमासयोरामनन्ति—(अ) 'व्रीहीन् प्रोक्षतीति' द्रव्यम्—(क) 'त्रीन् परिधीनिति' सङ्ख्याम्—(च) 'चतुर्होत्रा पौर्णमासीमिति' समुदायम्—(ट)चातुर्मास्ये च सूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति हेतुम् ।

( ३ ) तत्र सन्देहः—अत्रोक्ता प्रोक्षणादयो धर्माः किं द्रव्यसङ्ख्यासमुदायहेतुभिः प्रयुक्ताः—उत अपूर्वेणेति ।

( ४ ) द्वितीयादिश्रुत्या द्रव्याद्येव प्रोक्षणादेः प्रयोजकमिति ।

( ५ ) सिद्धान्तः—फलवत्त्वेन कर्तव्यतया चोदितस्यापूर्वस्य इतिकर्तव्यतायामाकाङ्क्षा भवति । व्रीह्यादिस्वरूपं तु सिद्धत्वान्न कर्तव्यतया चोद्यते--किन्तु गुणत्वेन--ततो द्रव्यस्वरूपस्य नेतिकर्तव्यताकाङ्क्षा । तस्मात् प्रकरणबलेनापूर्वस्यैव प्रयोजकत्वमेतद्व्यमिति ।

एतदभिप्रेत्याह नेति। 'द्रव्य-सङ्ख्यादिः' द्रव्यं सङ्ख्या समुदायो हेतुरिति--'अपि' 'प्रयोक्ता' धर्माणां प्रयोजको--'न' भवतीति शेषः॥

इह यथा न पुनरुक्तिस्तथा न्यायमालाविस्तरेऽनुसन्धेयम्॥ ६

## (७) ९।१।२०-२५ उपांशुता प्राच्ययजिप्रयुक्ता

( १ ) प्रयोजकताविचारोऽनुवर्तते ।

( २ ) ज्योतिष्टोमे श्रूयते—'त्सरा वा एषा यज्ञस्य—तस्माद् यत् किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति' इति ।

( ३ ) तत्र सन्देहः—किं प्रागग्नीषोमीयात् यानि अङ्गापूर्वाणि तत्प्रयुक्तमुपांशुत्वमुत परमापूर्वप्रयुक्तमिति ।

( ४ ) पूर्वपक्षः—यज्ञस्य सम्बन्धि यत्किञ्चिदग्नीषोमीयात् प्राचीनम् आरादुपकारकं प्रधानहविःसंस्कारकं च तस्य सर्वस्योपांशुत्वं विधीयते। यज्ञश्च नाम परमापूर्वम् । तथाच परमापूर्वसाधनायैवोपांशुत्वमनुष्ठीयते। तस्मात् परमापूर्वप्रयुक्तमेवोपांशुत्वमिति ।

( ५ ) सिद्धान्तः—'अग्नीषोमीयात् यत्किञ्चित् प्राचीनम्' इत्यत्र मर्यादया देशलक्षिता ये पदार्थास्ते एव श्रूयमाणेन वाक्येनोपांशुत्वसम्बद्धाः प्रतीयन्ते। तस्मात् मर्यादावच्छिन्नपदार्थजन्यावान्तरापूर्वप्रयुक्तमेवोपांशुत्वमिति ।

एतदभिप्रेत्याह उपांशुतेति। 'उपांशुता' उपांशुत्वरूपो धर्मः—'प्राच्या' अग्नीषोमीयात् प्राचीना या 'यजिः' अङ्गकर्म—तया तज्जन्यावान्तरापूर्वेण—'प्रयुक्ता' इति ।

अत्र पूर्वपक्षेण कुण्डपायिनामयनेऽप्यग्नीषोमीयपशोः प्राचीनेषूपांशुत्वस्योहः। सिद्धान्तेन तु न तत्रोह इति ध्येयम्॥ ७॥

## (८) ९।१।२६-२८ द्रव्यैकभावात् सकृदग्निधर्माः ।

( १ ) प्रयोजकविचारः।

( २ ) अस्त्यग्निः—'अग्निं चिनुते' इति । तत्रैवं समाम्नायते—'हिरण्यशकलसहस्रेणाग्निं प्रोक्षति—दधिना मधुमिश्रेणाग्निं प्रोक्षति—वेतसशाखयाऽवकाभिश्चाग्निं विप्रकर्षति-मण्डूकेनाग्निं विप्रकर्षति' इति। शाखायां मण्डूकं बद्ध्वा तेन विप्रकर्षतीत्यर्थः ।

( ३ ) तत्र संशयः--अत्रोक्तेऽग्नेः प्रोक्षणविकर्षणे किं प्रतीष्टकमभ्यसनीये उत सकृदेव कार्ये इति । प्रोक्षणविकर्षणयोः किमिष्टकाः प्रयोजिका उताग्निरिति ।

( ४ ) पूर्वपक्षः--प्रतीष्टकं कर्तव्ये। अग्निं प्रोक्षतीत्यादेरुक्तत्वात्--इष्टकाव्यतिरिक्तस्य च कस्यचिदग्निपदार्थस्याभावात् इति ।

(५) सिद्धान्तः—उपहिताभिरिष्टकाभिः संयुक्तः प्रदेशः अत्रावयविद्रव्यमिष्टिकाभ्यो व्यतिरिक्तम् । स एव प्रदेशोऽग्न्याधारत्वादत्राग्निशब्दार्थः । अग्निश्चैक एव । तस्मात् तस्य प्रोक्षणादिकं सकृदेव कार्यमिति ।

एतदभिप्रेत्याह—द्रव्येति । 'द्रव्यस्य' अग्निरूपस्य—'एकभावात्' एकत्वात्—'अग्नेः' 'धर्माः' प्रोक्षणं विकर्षणमित्येवमादयः—'सकृत्' एकवारमेवानुष्ठेया इत्यर्थः ॥ ८ ॥

## (९) ९।१।२९-३२ नान्त्ये हि पत्नीयजनान्तसंस्था-

(१) प्रयोजकविचारः ।

(२) द्वादशाहे—'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते' इति पत्नीसंयाजान्तत्वं श्रूयते ।

(३) तत्र संशयः—किमिदं पत्नीसंयाजान्तत्वं सर्वेषामह्नामुतोत्तमादह्नो यान्यहानि तेषामेवेति ।

(४) पूर्वपक्षः—द्वादशसङ्ख्याकेषु सर्वेष्वहस्सु पत्नीसंयाजान्तत्वम् । 'एतेषु पत्नीसंयाजेन परिसमाप्तिर्नेतरेषु' इति नियामकाभावात् सर्वेषु पत्नीसंयाजान्तं कर्मानुष्ठाय तदनन्तरभावीनि हारियोजनादीनि त्याज्यानीति ।

(५) सिद्धान्तः—'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते' इत्यस्य विधेः शेषे श्रूयते 'न बर्हिरनुप्रहरति असंस्थितो हि तर्हि यज्ञः' इति । यदि पत्नीसंयाजेनैव परिसमाप्तिः सर्वेषामह्नां स्यात्तर्हि अत्रोक्तस्यासंस्थितत्वस्य असमाप्तत्वस्य उक्तिर्व्याहन्येत । अस्मिंश्च वाक्ये यस्मिन्नहनि असंस्थितो यज्ञस्तस्मिन्नेवाहनि पत्नीसंयाजान्तता दर्श्यते । यज्ञस्य संस्थितिः (समाप्तिः) च चरमेऽह्नि । तस्मात् चरमाद् अह्नः प्रागेव यानि अहानि तेष्वेव पत्नीसंयाजान्तता । एवं च प्रथममहः पत्नीसंयाजान्तमनुष्ठाय हारियोजनादिकं बर्हिःप्रहरणान्तमकृत्वा कर्तव्यत्वेन व्यवस्थाप्य द्वितीयमहः प्रक्रमेत । एवं द्वितीयादिष्वपि । अवशेषितं तु कर्मजातं हारियोजनादि बर्हिःप्रहरणान्तं चरमेऽहन्यनुष्ठातव्यमिति ।

एतदभिप्रेत्याह नान्त्ये इति । 'पत्नीयजनान्तसंस्था' पत्नीसंयाजान्तमेव कर्मजातमिति नियमः—'अन्त्ये' चरमेऽहनि—'न'—अपि तु चरमाद् प्राग यान्यहानि तेष्वेवेत्यर्थः ॥ ९ ॥

## (१०) ९।१।३३ ऽभ्यासक्रिया स्यात् प्रथमोत्तमान्ते ।

(१) प्रयोजकविचारः ।

( २ ) दर्शपूर्णमासयोः सामधेनीः प्रकृत्य श्रूयते--'त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह' इति ।

( ३ ) तत्र संशयः--अयं त्रिरभ्यासः किमृचो ( या ऋक्संहितापाठे प्रथमा अन्त्या च तस्या यत्र कुत्रापि प्रयुक्तायाः ) धर्मः--उत या काचिदृक् प्रथमस्थाने अन्त्यस्थाने च पठ्यते तस्या इति ।

( ४ ) पूर्वपक्षः--संहितापाठे या ऋगादावुपलभ्यते--या चान्ते--तयोरेव--प्रयोगकाले यत्र कुत्रापि पठितयोः--अभ्यासः कर्तव्यः । प्रथमामित्यत्र स्त्रीलिङ्गस्य ऋक्परत्वं स्पष्टम् इति ।

( ५ ) सिद्धान्तः--प्रयोगकाले यस्या ऋचः प्रथमस्थाने-अन्त्यस्थाने च--प्रयोगस्तस्या एवाभ्यासः । संहितापाठे आदावुपलब्धाऽपि ऋक् यदि प्रयोगकाले स्थानान्तरे प्रयुज्यते तदा तस्या अभ्यासो न भवति-इति।

एतदभिप्रेत्याह अभ्यासेति । 'अभ्यासक्रिया' त्रिरभ्यासः--'प्रथमोत्तमान्ते' प्रथमस्थाने प्रयुक्ताया अथ चान्त्यस्थाने प्रयुक्ताया एव ऋचो 'अन्ते' स्यात् । या प्रथमस्थाने प्रयुज्यते तस्या या चान्त्यस्थाने प्रयुज्यते तस्याश्च ऋचः एकैकवारं प्रयोगं कृत्वा तदनन्तरं प्रत्येकं त्रिरभ्यासः कार्य इति भावः ॥ १० ॥

## (११) ६।१।३४-३५ आरम्भणीया सकृदादितः स्यात्

( १ ) प्रयोजकविचारः ।

( २ ) दर्शपूर्णमासयोरारम्भणीया इष्टिः समाम्नाता--'अग्नावैष्णवमेकादशकपालं निर्वपेत्' इत्यादि । दर्शपूर्णमासयोश्च यावज्जीवं कर्तव्यतया आवृत्तिरुक्ता--'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति ।

( ३ ) तत्र संशयः--आरम्भणीयेष्टिः किं दर्शपूर्णमासयागोपकारिणी प्रतिदर्शपूर्णमासानुष्ठानमावर्तनीया--उत पुरुषस्य संस्कारिणी दर्शपूर्णमासस्याद्य एवानुष्ठाने सकृदनुष्ठेयेति ।

( ४ ) पूर्वपक्षः--दर्शपूर्णमासयोरारम्भप्रयुक्तेयमारम्भणीयेष्टिरन्वाधानस्याङ्गम् । तथा च सति यागफलेनैव सा फलवती स्यात् । तस्मात् प्रतिप्रयोगमन्वाधानावृत्ताविममप्यावर्तनीयेति ।

( ५ ) सिद्धान्तः--आरम्भो नाम पुरुषस्य प्रथमा प्रवृत्तिः--न त्वन्वाधानपदार्थः । ततश्च आरम्भणीयेष्टिर्नान्वाधानस्याङ्गम्--किन्तु आरिप्समानेन पुरुषेणेयमनुष्ठेयेति पुरुषसंयोगात् तत्संस्कारोऽयम् । प्रधानकर्मारम्भयोग्यतासम्पादनमेव चास्य फलम् । दर्शपूर्णमासस्य चारम्भः सकृदेव भवति--तस्मात्तद्योग्यतासम्पादनार्थाया आरम्भणीयेष्टेरपि सकृदेवानुष्ठानम्--नावृत्तिरिति ।

एतदभिप्रेत्याह आरम्भणीयेति । 'आरम्भणीया' इष्टिः--'सकृत्' एकवारमेव--'स्यात्' अनुष्ठितेति शेषः। तच्चानुष्ठानम् 'आदितः' दर्शपूर्णमासस्य आद्य एवारम्भे स्यादिति ॥ ११ ॥

## (१२) ९।१।३६–३७ नोहः सवित्रादिपदेषु कार्यः।

( १ ) ऊहविचारः प्रवर्तते ।

( २ ) दर्शपूर्णमासयोर्निर्वापमन्त्र आम्नातः--'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति ।

( ३ ) तत्र सन्देहः--सौर्यादिरूपायां विकृतौ यदाऽयम्मन्त्रः प्रयुज्यते तदा किं सवित्रश्विपूषशब्दानामूहः कर्तव्य उत नेति । तथाच एते शब्दाः किं कर्मसमवेतमर्थमभिदधति उतासमवेतम् [यदि समवेतं तदोहः यद्यसमवेतं तदा नोहः]।

( ४ ) पूर्वपक्षः--एतद्धि मन्त्रपदानां दृष्टं प्रयोजनं यत् कर्मसमवेतमर्थं प्रकाशयन्तीति । अग्निश्च प्रकृतिकर्मसमवेता देवता । ततः सवित्रादिशब्दा अपि कयाचिद्‌ व्युत्पत्त्याऽग्नेरेवाभिधायका इति कल्पनीयम् । एवं च सति यदाऽयम्मन्त्रो विकृतावतिदिश्यते तदा सवित्रादिशब्दस्थाने विकृतियागगतदेवतावाचकानां पदानामूहः कर्तव्य इति ।

( ५ ) सिद्धान्तः--प्रकृतौ सवित्रादिदैवतं कर्म किमपि न चोदितम् । याश्च देवतास्तत्र चोदिता अग्न्यादयस्तेषामर्थे सवित्रादिशब्दा न प्रसिद्धाः । तस्मान्न सवित्रादिशब्दाः कर्मसमवेतार्थप्रकाशकाः । अथ च अविकृतस्यैव मन्त्रस्य निर्वापशेषत्वेनान्वयः । तस्मान्नास्त्यूह इति ।

एतदभिप्रेत्याह नोह इति । 'सवित्रादिपदेषु' सवित्रश्विपूषशब्देषु विकृत्यतिदिष्टमन्त्रस्थितेषु--'ऊहः' विकृतौ प्रयोगकाले विकृतदेवतानामप्रवेशनरूपः--'न कार्यः' अपि तु यथाश्रुताविकृत एव मन्त्रः प्रयोक्तव्य इत्याशयः ॥ १२ ॥

## (१३) ९।१।३८-३९ अग्न्यादिशब्दो ध्रुवमुहितव्यः

( १ ) पूर्वाधिकरणशेषस्तदपवादरूपः ।

( २ ) उदाहृतस्यैव वाक्यस्यान्ते 'अग्नये जुष्टं निर्वपामी'ति श्रूयते ।

( ३ ) तत्र संशयः--विकृतावग्निशब्दे ऊहः कर्तव्यो न वेति ।

( ४ ) पूर्वपक्षः--पूर्वाधिकरणन्यायेनोहो न कार्य इति ।

( ५ ) सिद्धान्तः--नात्र पूर्वाधिकरणन्यायः प्रवर्तते । तत्र सवित्रादिशब्दा न कर्मसमवेतार्थप्रकाशकाः । इह तु अग्निर्देवता प्रकृतावस्त्यतोऽग्निशब्दस्य कर्मसमवेतार्थस्मारकत्वमस्ति । तस्मात् विकृतौ सौर्ये

यदाऽयम्मन्त्रोऽतिदिश्यते तदा तस्य सूर्यदैवतत्वात् अग्निस्थाने सूर्यं ऊहनीय इति ।

एतदभिप्रेत्याह--अग्नीति । 'अग्न्यादिशब्दः' कर्मसमवेतार्थवाचको यो भवति शब्दः सः--'ध्रुवम्' अवश्यम्--'ऊहनीयः' इति ॥ १३ ॥

## (१४) ९।१।३८-३९(वर्णकान्तरेण)ऊहं व्रजेद् धान्यमसीति वाक्यम्।

( १ ) पूर्वाधिकरणे देवतावाचकशब्दस्योहः प्रदर्शितः। अत्र द्रव्य-वाचकशब्दस्योहश्चिन्त्यते ।

( २ ) दर्शपूर्णमासयोर्दृषदि पेषणाय तण्डुलावापे मन्त्रो विहितः--'धान्यमसि धिनुहि देवान्' इति ।

( ३ ) तत्र सन्देहः--धान्यमसीति स्थाने विकृतौ शाक्यानामयने षट्त्रिंशत्संवत्सरे ऊहः कार्यो न वेति

( ४ ) पूर्वपक्षः—द्वादशाधिकरणन्यायेन नात्रोह–इति ।

( ५ ) सिद्धान्तः—धान्यशब्दोऽत्र कर्मसमवेतस्यैव तण्डुलस्य प्रकाशकः। तस्मात् विकृतौ–यत्र तण्डुलस्थाने मृगतरसमयाः पुरोडाशा द्रव्यत्वेन विहिताः--धान्यशब्दस्य स्थाने मांसशब्दोऽवश्यमूहनीय इति।

एतदभिप्रेत्याह ऊहमिति । 'धान्यमसि इति' मन्त्रस्थं–'वाक्यम्'--'ऊहं व्रजेत्' विकृतिगतद्रव्यानुसारेण परिवर्तनीयं भवेत्--धान्यमसीत्यस्य स्थाने मांसमसीति प्रयोक्तव्यमित्याशयः ॥ १४ ॥

## (१५) ९।१।४० नहि व्रजेद् यज्ञपतिस्त्विडायाम्

( १ ) देवताद्रव्योहो विचारितः--यजमानोह इदानीं चिन्त्यते।

( २ ) अस्ति दर्शपूर्णमासयोरिडानिगदः--'इडोपहूता' इत्येवमादिः ! तत्रेदमाम्नायते--'दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः, इमं यज्ञमवान्., ये च यज्ञपतिं वर्धान्' इति । अस्यार्थः--ये दैव्या अध्वर्यवो यज्ञमवन्ति, ये च मनुष्या यज्ञपतिं वर्धयन्ति, ते सर्वेऽप्यत्रोपहूताः इति।

( ३ ) तत्र संशयः--बहुयजमानके यज्ञे किं यज्ञपतिमितिशब्दे ऊहः कार्यो न वेति ।

( ४ ) पूवपक्षः--अत्र मन्त्रे यज्ञपतेरभिवृद्धिकथनेनोत्साहजननेन कर्मसमवेतोऽर्थः प्रतीयते । ततोऽयम्मन्त्रांशः इडोपाह्वानात् पृथक् कृत्याभिवृद्ध्यर्थे जपे लिङ्गेन विनियोगार्हः । तथा सति सत्रे यजमानानां बहुत्वात् यज्ञपतिमिति शब्दो बहुवचनान्ततयोहनीय इति ।

( ५ ) सिद्धान्तः--प्रत्यक्षश्रुत्या कृत्स्नोऽयम्मन्त्र इडोपाह्वाने विनियुक्तः । एकवाक्यत्वं च कृत्स्ने मन्त्रे उपलभ्यते। प्रकरणं चेदमिडाया एव। एवं च श्रुतिवाक्यप्रकरणानां विरोधान्न लिङ्गेन पृथक् विनियोगो युक्तः

कस्यापि मन्त्रांशस्य । तथाच यज्ञपत्यभिवृद्धिवाक्यमपि इडाप्रतिपादकेन महावाक्येनैवैकवाक्यतामापन्नमिडाप्रशंसनपरत्वेनैव नेयम् । इदं च प्रशंसनमेकवचनान्तेनापि यज्ञपतिशब्देन सिध्यति । तस्मात् सत्रेऽपि नास्ति बहुवचनोह इति ।

एतदभिप्रेत्याह—नहीति । 'इडायाम्' इडोपाह्वानमन्त्रे—'यज्ञपतिः' यज्ञपतिशब्द 'ऊहं' बहुवचनान्तत्वेन 'न व्रजेत्'—बहुयजमानकेऽपि सत्रे इति शेषः ॥ १५ ॥

## (१६) ६।१।४१. सूक्तोक्त ऊह्यो यजमानशब्दः ।

( १ ) यजमानोहविचारो वर्तते पूर्वाधिकरणापवादरूपः ।

( २ ) दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरन्ति' इति प्रस्तरप्रहरणकरणत्वेन विनियुक्ते सूक्तवाकमन्त्रे इदमाम्नायते—'अयं यजमान आयुराशास्ते' इति ।

( ३ ) तत्र सन्देहः—बहुकर्तृके विकृतियागे यजमानशब्दे बहुवचनत्वमूहितव्यं न वेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेनोहो नैव कार्यं इति ।

( ५ ) सिद्धान्तः—पूर्वाधिकरणन्यायो नात्र प्रवर्तते । सर्वत्र प्रकरणे द्विविधो मन्त्रः—क्रियाप्रकाशकः फलप्रकाशकश्चेति । पूर्वाधिकरणोदाहृतः इडोपाह्वानरूपक्रियाप्रकाशकः । सूक्तवाकमन्त्रस्तु फलप्रकाशकः । अत्र सर्वैरप्यवान्तरवाक्यैः फलप्रकाशनमेव क्रियते । तस्मादनेन मन्त्रेण विवक्षितं फलम् । मन्त्रे च सर्वे यजमानाः फलिनः । ततः सर्वेषां फलसिद्ध्यै यजमानशब्दो बहुवचनान्तत्वेन सर्वेषु सत्रेषूहनीय इति ।

एतदभिप्रेत्याह सूक्तोक्त इति । 'सूक्तोक्तः' सूक्तवाकसम्बन्धेन उक्तः—'यजमानशब्दः'—'ऊह्यः' बहुवचनान्तत्वेन सत्रेष्विति भावः ॥ १६ ॥

## (१७) ६।१।४२-४४ नोहस्तु कार्यो हरिवत्पदादौ

( १ ) ऊहविचारो वर्तते ।

( २ ) ज्योतिष्टोमे सुब्रह्मण्याह्वानार्थे निगदे पठ्यते—'इन्द्र आगच्छ हरिवत् आगच्छ अहल्यायै जार' इति । सोऽयं निगदो विकृतावग्निष्टुति चोदकेनातिदिष्टः । तत्र त्वग्निष्टुति 'आग्नेयी सुब्रह्मण्या भवति' इत्यग्निसम्बन्धान्निगदे इन्द्रशब्दं परित्यज्य तस्य स्थाने अग्निशब्द ऊहितः ।

( ३ ) एवंकृते भवति संशयः—इन्द्रशब्दे परित्यक्ते किमिन्द्रस्य यावन्ति विशेषणानि निगदे श्रूयन्ते हरिवदादीनि तेषामपि स्थानेऽग्निविशेषणान्यूहितव्यानि न वेति ।

( ४ ) पूर्वपक्षः—विशेष्ये ऊहिते विशेषणान्यूहनीयानि । यानि वि-

शेषणान्युपात्तानि तानि इन्द्रे एवान्वितानि भवन्ति नाग्नावन्वेतुं योग्यानि। तस्मात्तेषां स्थाने अग्नेरुक्तानि विशेषणान्यूहनीयानीति।

(५) सिद्धान्तः—इन्द्रशब्दस्य कर्मसमवेतदेवताप्रकाशकत्वान्न स्तावकत्वमिति तस्योह उचितः। हरिवदादिशब्दास्तु ब्राह्मणव्याख्यातगुणाभिधानद्वारेणेन्द्रस्य स्तावकाः। स्तुतिश्चाविद्यमानेनापि कर्तुं युज्यते। तस्मादग्नाववर्तमाना अपि गुणास्तस्य स्तुतौ युज्यन्ते वर्णयितुम्। तस्मादग्नावप्यन्वयसम्भवान्नोहनीयानि विशेषणानीति।

एतदभिप्रेत्याह नोह इति। 'हरिवत्पदादौ' इन्द्रविशेषणत्वेन उक्ते—'ऊहः' अग्निपरकतया परिवर्तनं—'न कार्यः' अग्निदेवताकायामग्निष्टुतीति शेषः॥ १७॥

## (१८) ९।१।४२-४४(वर्णकान्तरेण) तस्यै-शृतादौ न भवेत्तथोहः।

(१) ऊहविचारः।

(२) ज्योतिष्टोमे सोमक्रयण्या एकहायन्या मन्त्र आम्नायते—'इयं गौः सोमक्रयणी, तया ते क्रीणामि—तस्यै शृतम्—तस्यै शरः—तस्यै दधि-तस्यै वाजिनम्' इति। ज्योतिष्टोमविकृतौ साद्यस्के च एवमाम्नातः—'त्रिवत्सः साण्डः सोमक्रयणः' इति। एतस्मिंश्च काण्डे पूर्वोक्तो मन्त्रश्चोदकेनातिदिष्टः। तत्र च मन्त्रपूर्वभागस्य कर्मसमवेतद्रव्यप्रकाशकत्वात् अस्यूहः—'अयं साण्डः सोमक्रयणः तेन ते क्रीणामी'ति।

(३) अवशिष्टे तु मन्त्रभागे तस्यै शृतमित्यादावस्ति संशयः—किमत्राप्यूहो न वेति।

(४) पूर्वपक्षः—यथैकहायनी कालान्तरेण वृषभसंसर्गाद् वत्समुत्पाद्य दुग्धवती भूत्वा शृतादिसम्बन्धयोग्या भवति तथैव वत्सोऽपि कालान्तरेण गोसंसर्गद्वारा वत्सोत्पादनं दुग्धोत्पादनं च कृत्वा भवत्येव शृतादिसम्बन्धयोग्यः। तस्मादुत्तरभागेऽपि कर्मसमवेतार्थस्योक्तत्वात् तत्राप्यूहः कर्तव्यः—स्त्रीलिङ्गस्थाने पुल्लिङ्गस्येति।

(५) सिद्धान्तः—एकहायन्यामपि कर्मकाले शृतादिसम्बन्धस्याभावात् न भवति मुख्यया वृत्त्या कर्मसमवेतार्थत्वम्मन्त्रोत्तरभागस्य। तथा च स्तावकत्वे सिद्धे तत्रोहो नैव प्राप्नोतीति।

एतदभिप्रेत्याह तस्यै इति। 'तथा'—यथा पूर्वोक्ते हरिवत्पदादौ तथैव—'तस्यै—शृतादौ' मन्त्रस्योत्तरभागे—'ऊहः' स्त्रीलिङ्गस्य पुंलिङ्गे परिवर्तनरूपः—'न भवेत्'—साद्यस्के वत्सेन सोमक्रयणे इति शेषः॥ १८॥

## (१९) ९।१।४५-४९ सामानविध्येऽध्रिगुयुङ् न मेषी

(१) ऊहविचारः।

(२) ज्योतिष्टोमे पशवः समाम्नाताः—'आग्नेयः पशुरग्निष्टोमे आलब्धव्यः—ऐन्द्राग्नः पशुरुक्थ्ये—ऐन्द्रावृष्णिः षोडशिनि—सारस्वती मेषी अतिरात्रे' इति। भवति चात्र 'अध्रिगु'नामा शमिता। तस्य च अग्नीषोमीये प्रैषमन्त्रः—'दैव्याः शमितार आरभध्वम्........प्रास्मा अग्निं भरता' इति।

(३) तत्र सन्देहः—किमयं अध्रिगुप्रैषः सारस्वत्यास्मेष्यामपि प्रयोक्तव्यो न वेति।

(४) पूर्वपक्षः—पशुधर्मविधेः सर्वपशुसाधारण्येनाग्नीषोमीयपशाविव सारस्वत्यास्मेष्यामपि तस्य सम्बन्धः इति।

(५) सिद्धान्तः—पशुशब्दो मन्त्रे नोपलभ्यते—उपलभ्यते तु 'अस्मै' इतिशब्दः। स च पुरोवर्तिनीमेव व्यक्तिमाचष्टे। व्यक्तिविशेषश्च पुमात्मकोऽग्नीषोमीये। तस्माल्लिङ्गस्य विवक्षितत्वान्न सम्बन्धो मन्त्रस्य मेष्यामिति।

एतदभिप्रेत्याह सामानेति। 'सामानविध्ये' पशूनां समानविधानत्वेऽपि—'मेषी' सारस्वती पशुभूता—'अध्रिगुयुक्' अध्रिगुप्रैषमन्त्रान्वयिनी—'न' भवति—तस्मात्तस्यां स मन्त्रो नैव प्रयोक्तव्यः—तथासति 'अस्मै' स्थाने 'अस्यै' इत्यस्योहस्यावसर एव न भवतीत्याशयः॥ १९॥

## (२०) ९।१।५०—५३ प्रयोज्यता नित्यमिरापदस्य।

(१ ऊहविचारः।

(२) ज्योतिष्टोमे श्रूयते—'यज्ञायज्ञीयेन स्तुवीत' इति। 'यज्ञायज्ञ' इत्यनेन शब्देन युक्तायामृचि उत्पन्नं साम यज्ञायज्ञीयम्। तस्यामृचि 'गिरा'शब्दः पठ्यते—'यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे' इति। तत्र सामगा योनिगानमधीयानाः सदैव गकारयुक्तम् 'गिरा'इत्येवंरूपमेव गायन्ति। ब्राह्मणे तु गकारलोपपूर्वकं गानं विधीयते—'ऐरं कृत्वोद्गेयम्' इति। [ गिराशब्दे गकारलोपे इराशब्दो भवति—इरायाश्च सम्बन्धिगानम् 'ऐरम्' इति ]।

(३) एवंसति सन्देहः—किमत्र प्रयोगे गिरापदेरापदयोर्विकल्पः उत इरापदमेव प्रयोक्तव्यमिति।

(४) पूर्वपक्षः—योनिगानब्राह्मणयोः समानबलत्वेन विशेषकाभावाद् विकल्पेन प्रयोग इति।

(५) सिद्धान्तः—गिराशब्दगाने निषेधः श्रूयते—'न गिरागिरेति ब्रूयात्—यद् गिरागिरेति ब्रूयात् आत्मानमेव तदुद्गाता गिरेत्' इति।

तदनन्तरं च साक्षाद् विधीयते इरापदप्रयोगः। तस्मात् इरापदमेव सर्वत्र प्रयोक्तव्यमिति नियम इति।

एतदभिप्रेत्याह प्रयोज्यतेति। 'नित्यं' सर्वत्र—'इरापदस्य'—गिरापदस्थाने—'प्रयोज्यता'—सर्वत्र इरापदमेव प्रयोक्तव्यं गाने इत्यर्थः॥२०॥

## (२१) ९।१।५४-५८ गीत्या समेतं तदिरापदं स्यात्

(१) पूर्वाधिकरणशेषः।

(२) ज्योतिष्टोमे यज्ञायज्ञीयसामनि गिरापदस्य स्थाने इरापदं कर्तव्यमिति समधिगतम्।

(३) तत्र पुनः सन्देहः—किमिदमिरापदं गातव्यमुत नेति।

(४) पूर्वपक्षः—ब्राह्मणविधौ 'ऐरं कृत्वा' इति पठ्यते। ऐरमित्यस्य च इरापदोपेतमित्येतावानेवार्थः। यदि इरापदस्य गानं विवक्षितमभविष्यत्तर्हि 'आयीरा' इति पञ्चवर्णनिष्पन्नं गेयस्वरूपमेवापठिष्यत्। तथाच 'आयीरीयं कृत्वा' इत्येव विधिस्वरूपमभविष्यत्। तस्याभावात् न गेयमिरापदमिति।

(५) सिद्धान्तः–गीयमानस्यैव स्थाने इरापदं विधीयते इति निषेधवाक्येन स्पष्टम्। निषिध्यते च गिरापदमेव, न गानम्। ऐरमित्यत्र च छप्रत्ययः सामत्वादेव प्राप्तः। सामत्वं च गीतिसाध्यम्। तस्मात् इरापदं गेयमेवेति।

एतदभिप्रेत्याह गीत्येति। 'तत्' पूर्वाधिकरणोक्तम्—'इरापदं'—'गीत्या' गानेन—'समेतं' संयुक्तमेव—'स्यात्' प्रयोज्यमिति शेषः॥ २१॥

## न्यायाः स्थिरा विंशतिरेकयुक्ताः

एकविंशतिर्न्याया अस्मिन् पादे इत्यर्थः।

इति नवमस्य प्रथमः।

---

# अथ नवमस्य द्वितीयः पादः।

[ सपरिकरसामोहसंस्कारोहविचारपरः। ]

## (१) ९।२।१-२ गीतिमात्रं भवेत् साम

(१) सामोहविचारप्रस्तावे सामस्वरूपमादौ स्मार्यते।

(२) सन्ति सामानि–'रथन्तरं-बृहत्-वैरूपं-वैराजं-शाक्वरं-रैवतम्' इति 'अभि त्वा शूर नो नुम' इत्यादिमन्त्रसम्बन्धीनि।

( ३ ) तत्र सन्देहः—किं प्रगीता एते मन्त्राः सामानि–उत गीति-मात्रं सामेति ।

( ४ ) पूर्वपक्षः—प्रगीता मन्त्रा एव सामानि इति ।

( ५ ) सिद्धान्तः—गीतिमात्रं सामेति ।

एतदभिप्रेत्याह—गीतीति । 'गीतिमात्रम्'–न तु गीतियुक्तो मन्त्रः–'साम' सामनामधेयो–'भवेत्' ।

यद्यप्ययमर्थः सप्तमेऽध्याये द्वितीयपादे सिद्धस्तथाऽप्यत्र वक्ष्यमाण-विचारोपयोगितया स्मार्यते–इति ध्येयम् ॥ १ ॥

## (२) ९।२।१-२(वर्णकान्तरेण) सामोहः क्रियते नृभिः ।

( १ ) सामोहविचारः प्रस्तूयते ।

( २ ) सामोह उदाहरणम् । यस्मिन् ग्रन्थे सामगास्तृचे तृचे साम एकैकं गायन्ति सोऽयं सामोहग्रन्थः ।

( ३ ) तत्र संशयः किं सामोहग्रन्थ आर्षो नित्य उत पौरुषेयोऽनित्य इति।

( ४ ) पूर्वपक्षः—नित्य एवोहग्रन्थो न पौरुषेयः–अनध्यायवर्जनेन कर्तुरस्मरणेन अध्यापकानां वेदत्वप्रसिद्ध्या च सामवेदनामकयोनिग्र-न्थसदृशत्वात् इति ।

( ५ ) सिद्धान्तः—श्रूयते हि विधिः–'यद्योन्यां तदुत्तरयोर्गायति' इति । अस्य चार्थः—अपौरुषेयत्वेन सम्प्रतिपन्ने सामवेदग्रन्थे साम्नां योनिभूते 'कयानश्चित्र' इति मन्त्रे यद् वामदेव्यं सामोपदिष्टं तदेव साम उत्तरयोॠचोः ('कस्त्वा सत्यो मदानामिति' 'अभीषुणः सखीनामि'त्य-नयोः ) द्वितीयतृतीययोर्गातव्यम्' इति ॥ ऊहग्रन्थस्य वेदत्वे अयं विधि-र्व्यर्थः स्यात् सामवेदवदध्ययनादेव तत्सिद्धेः । उपरितने ऋग्द्वये सा-मोहस्य पौरुषेयत्वेऽपि तदाधारभूतानामृचां वेदत्वादनध्याया वर्ज-नीयाः । कर्तुरस्मरणं च चिरकालव्यवधानादुपपन्नम् । तस्मात् सा-मोहः पौरुषेयोऽनित्यश्चेति ।

एतदभिप्रेत्याह सामेति । 'सामोहः' 'नृभिः' पुरुषैः–'क्रियते'–त-स्मात् पौरुषेयो न नित्य इत्यर्थः ॥ २ ॥

## (३) ९।२।३-१२ ऋचः संस्कारकं साम

( १ ) सामोहविचारो वर्तते ।

( २ ) गीतिः सामशब्देनोच्यते इति समधिगतम् ।

( ३ ) तत्र सन्देहः—सा गीतिः किमृचं प्रति प्रधानभूता उत गुणभूतेति ।

(४) पूर्वपक्षः—यागप्रयोगाद् बहिरपि अध्ययनकाले गानमनुष्ठीयते। यागाङ्गत्वे तु व्रीहिप्रोक्षणवद् यागानुष्ठानमध्य एवानुष्ठीयेत। बहिर्गानस्य च विश्वजिन्न्यायेन फलं कल्पनीयम्। यागमध्यकालीनगानं च प्रयाजादिवदाराादुपकारकं भविष्यति। तस्माद् गानमृचं प्रति मुख्यमेवेति।

(५) सिद्धान्तः—न तावद्बहिरनुष्ठानम्प्रधानकर्मत्वं कल्पयितुं शक्नोति। यागकालीनप्रयोगपाटवसम्पादनायैव बहिरनुष्ठानम्भवति गानस्य। तत्रतस्तु ऋगक्षराणि गानेन संस्क्रियन्ते। संस्कारश्च स्वरविशिष्टाकाराभिव्यक्तिरूपो दृष्टम्प्रयोजनम्। तथाच नादृष्टफलं कल्पनीयं भवति। तस्मात् ऋचः संस्कारकं गुणकर्मैव गानमिति।

एतदभिप्रेत्याह ऋच इति। 'साम' गीतिः—'ऋचः' ऋगक्षराणां-'संस्कारकम्' अत एव तम्प्रति गुणभूतमित्यर्थः॥ ३॥

## (४) ९।२।१३-२० प्रत्यृचं साम पूरयेत्।

(१) गानविषयो विचारः।

(२) ज्योतिष्टोमे श्रूयते-'तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति।

(३) तत्र सन्देहः—किं त्रेधा विभक्तेषु सामांशेषु एकैकोंशः एकैकस्यामृचि गातव्यः-उत कृत्स्नं साम प्रत्यृचं पूर्णतया गातव्यमिति।

(४) पूर्वपक्षः—साम त्रेधा विभजनीयम्-एकोंश एकस्यामृचि द्वितीयायां द्वितीयस्तृतीयस्तृतीयायामेवमेकं साम व्यासज्य तिसृषु ऋक्षु समापनीयम्। तिसृभिः ऋग्भिरेकस्य साम्नः समापनं कर्तव्यमित्यस्मिन्नेवार्थे उदाहृतवाक्यस्य तात्पर्यात् इति।

(५) सिद्धान्तः—स्तोत्रीयमिति नाम्ना कृत्स्नस्य साम्नः स्तुतिनिष्पादकत्वं विधीयते न तु सामांशानाम्। स्तुतिर्नाम गुणकथनपरमेकं वाक्यम्। तच्च वाक्यमेकस्यामृचि सम्पूर्णम्। कृत्स्नेन च साम्ना तद्वाक्यं संस्करणीयम्भवति। तस्मात् प्रत्यृचमेव कृत्स्नं सामाभ्यसनीयम्। एवं च प्रत्यृचं कृत्स्नं समापनीयमिति।

एतदभिप्रेत्याह प्रतीति। 'प्रत्यृचं' तिसृषु एकैकाम् ऋचं प्रति-'साम' गानं 'पूरयेत्' सम्पूर्णं गातव्यम्-नांशत इति भावः॥ ४॥

## (५) ९।२।२१-२२ समासु गानं कर्तव्यम्

(१) गानविचारः पूर्वाधिकरणशेषः।

(२) प्रत्यृचं साम समापनीयमिति स्थितम्।

(३) तत्र पुनः संशयः—गानं किं समच्छन्दस्कास्वेव तिसृषु ऋक्षु गेयमुत विषमच्छन्दस्कास्वेव-उत अनियम इति।

( ४ ) पूर्वपक्षः—इत्थमेव गेयमिति नियामकस्याभावादनियम इति।

( ५ ) सिद्धान्तः—यद्यधिकच्छन्दस्कायां योनिभूतायामृच्युत्पन्नं साम न्यूनच्छन्दस्कयोरुत्तरयोर्गायेत् तदा सामस्यांशमात्रेण तत्पूर्तेरवशिष्टः सामांश आश्रयाभावाद् विनश्येत्। यदि च योनिभूताया ऋचोऽधिकच्छन्दस्कयोरुत्तरयोर्गायेत् तदा साम्नोऽल्पीयस्त्वात् अवशिष्ट ऋग्भागः सामरहित एव स्यात्। तस्मादेतद्दोषवर्जनाय समच्छन्दस्कास्वेव गेयमिति।

एतदभिप्रेत्याह समास्विति। 'गानं' साम्नः—'समासु' समच्छन्दस्कास्वेव ऋक्षु–'कर्तव्यम्'–न विषमच्छन्दस्कास्वित्यर्थः॥ ५॥

## (६) ६।२।२३–२४ उत्तराग्रन्थगोत्तरा।

( १ ) गानविशेषविचारः पूर्वाधिकरणशेषः।

( २ ) सामगानां ऋक्पाठाय द्वौ ग्रन्थौ–छन्दः उत्तरा चेति। तत्र छन्दोनामके ग्रन्थे नानाविधानां साम्नां योनिभूता एव ऋचः पठिताः। उत्तराग्रन्थे तृचात्मकानि सूक्तानि पठितानि। एकस्मिन् तृचे छन्दोगता योनिभूता ऋक् प्रथमा, इतरे द्वे 'उत्तरे'। एवं स्थिते समाम्नायते 'रथन्तरमुत्तरयोर्गायति–यद् योन्यां तदुत्तरयोर्गायति' इति। अत्र च 'उत्तरा'संज्ञके ऋचौ द्वे सम्भाविते। रथन्तरस्य छन्दोग्रन्थे 'अभि त्वा शूर नो नुम' इतीयं ऋक् योनित्वेन पठिता। तदनन्तरं छन्दोग्रन्थे अन्येषां साम्नां योनिभूता ऋचः 'त्वामिद्धि हवामहे' इत्याद्याः पठिताः [ अनेन च अभि त्वा शूरेत्यस्या ऋचः समनन्तरं ये द्वे ऋचौ सामान्तरयोनी पठिते ते रथन्तरस्य 'उत्तरे' भवतः ]। अथ च उत्तराग्रन्थे 'अभि त्वा शूर' इति सूक्ते तस्या ऋचोऽनन्तरं 'न त्वा वां अन्ये' इत्येषा ऋक् पठिता तदनन्तरमन्या [ अनेन च उत्तराग्रन्थानुसारेण न त्वेत्यादि ऋचौ रथन्तरस्य 'उत्तरे' भवतः ]।

( ३ ) एवं स्थिते 'रथन्तरमुत्तरयोर्गायति' इत्यत्र सन्देहः—सम्भावितयोर्द्वयोरुत्तरयोः कस्यामुत्तरायामृचि रथन्तरं गेयमिति।

( ४ ) पूर्वपक्षः—नियामकशास्त्राभावात् ययोः कयोश्चिदुत्तरयोर्गानं कर्तव्यमिति।

( ५ ) सिद्धान्तः—तृचे प्रथमापेक्षया द्वितीयतृतीययोरुत्तरात्वं संज्ञया वर्तते। अतस्तयोरेव गानम्। एवमेव च समासु गेयमिति पूर्वाधिकरणन्यायोऽनुगृहीतो भवति। तस्मात् उत्तराग्रन्थस्थयोस्तृचगतयोर्द्वितीयतृतीययोर्गानमूहनीयमिति।

एतदभिप्रेत्याह उत्तरेति। या ऋक् 'उत्तराग्रन्थगा' उत्तराग्रन्थे तृचे पश्चात् पठिता सा एव 'उत्तरा' रथन्तरमुत्तरयोर्गायतीत्यत्र

वर्तमानोत्तराशब्देन विवक्षिता—न तु च्छन्दोग्रन्थवर्तिनीति भावः ॥ ६ ॥

## (७) ९।२।२१-२४ (वर्णकान्तरेण) अभ्यासे नातिजगती

( १ ) पञ्चमाधिकरणापवादः ।

( २ ) द्वादशाहे चतुर्थेऽहनि त्रैशोकनामकं साम विहितम् । तच्च 'विश्वाः पृतनाः' इत्येतस्यामतिजगत्यामुत्पन्नम् । तस्मिंश्च तृचे तस्या योनिभूताया ऋच उत्तरे बृहत्यौ—'नेमिं नमन्ति' इति, 'समीं रेभासो अस्वदन्' इत्याम्नाते ।

( ३ ) तत्र सन्देहः—आद्यायामतिजगत्यां गानं कृत्वा किमन्ये द्वे अतिजगत्यौ एव उपादाय आद्यसमच्छन्दस्कयोस्तयोर्गानं कर्तव्यमुत यथोक्ते विषमच्छन्दस्के एवोपादाय विषमास्वेव गेयमिति ।

( ४ ) पूर्वपक्षः—पञ्चमाधिकरणन्यायेन समास्वेव गेयमिति कृत्वा अतिजगती एव द्वे उपादाय समच्छन्दस्कास्वेव गेयमिति । 'अतिजगतीषु स्तुवन्ति' इत्यपि श्रूयते । इदं चातिजगतीबहुत्वमतिजगतीद्वयमन्यत उपाद यैव सम्भवतीति ।

( ५ ) उत्तरयोर्गायति इति विधावुक्तस्य उत्तराशब्दस्य उत्तराग्रन्थे पठितयोरेव ऋचोर्मुख्यत्वम् । बृहत्यावेव चात्र पठिते । श्रुतिश्च 'समासु गेयमिति' न्यायाद् बलीयसी । तस्माद् बृहत्योरेवोत्तरयोर्गेयमिति । यच्चातिजगत्या बहुत्वमुक्तम्—तद्बृहत्योरुपादानेऽपि सम्भवति । एकविंशतिस्तोमस्यात्र विहितत्वेन तत्सिद्धये प्रथमोपात्ताया अतिजगत्याः सप्तकृत्व आवर्तनीयत्वात् । तस्मात् त्रैशोकं साम बृहत्योरेवोहनीयमिति।

एतदभिप्रेत्याह अभ्यास इति । 'अतिजगती' योनिभूता अतिजगतीच्छन्दस्का ऋक्—'अभ्यासे' 'न' उपादीयते-द्वितीयतृतीयस्थानेऽपि अतिजगतीद्वयमन्यतो नोपादातव्यमित्यर्थः । अथवा'अतिजगती' अतिजगतीगतं यद् बहुत्वमाम्नातं तत् आद्या एव ऋचः 'अभ्यासेन' सम्पद्यते इत्यर्थः । द्वयोरप्यर्थयोः सम्मेलनेन सिद्धान्तः तद्गतदोषपरिहारश्चेत्युभयं सिद्धं भवति ॥ ७ ॥

## (८) ९।२।२५-२८ प्रग्रन्थेनोत्तरा ककुप् ।

( १ ) सामोहविचारः ।

( २ ) इदमाम्नायते—'न वै बृहद्रथन्तरमेकच्छन्दः-यत् तयोः पूर्वा बृहती ककुभावुत्तरे' इति । अस्यार्थः—बृहत् रथन्तरम् इति सामद्वयं इतरसामवत् एकच्छन्दस्कं न भवति । यस्मात् कारणात् तयोः साम्नोराश्रयभूतासु ऋक्षु पूर्वा बृहतीच्छन्दस्का उत्तरे तु द्वे ऋचौ ककुप्छन्दस्के । इतरेषां वामदेव्यादिसाम्नामाश्रये तृचेऽवस्थितास्तिस्र ऋच एकच्छन्द-

स्का उत्तराग्रन्थे आम्नाताः 'समासु गायेत्' इति न्यायेन निर्णीताश्च । इह तु रथन्तरे बृहति च वाचनिकमेव विषमच्छन्दस्कासु गानम्' इति । पुनश्च रथन्तरस्याश्रयभूताः तृचः नोत्तराग्रन्थे समाम्नाताः–किन्तर्हि प्रगाथ एव तदाश्रयत्वेनाम्नातः । प्रगाथश्च द्वाभ्यामेव ऋग्भ्यां निष्पन्नत्वात् तृचो न भवति । प्रगाथे च द्वयोर्ऋचोः—'अभि त्वा शूर' इत्येषा प्रथमा––सा च बृहती––'नत्वा वा अन्यो दिव्यः' इति द्वितीया––सा च पङ्क्तिच्छन्दस्का ।

( ३ ) तत्र सन्देहः—'ककुभावुत्तरे' इति यदुक्तम् तत्र किमुत्पत्त्यैव ककुप्छन्दस्के ऋचौ अन्यतोऽवगमय्य तृचं सम्पाद्य गानं कार्यम्–उत यासौ प्रगाथे पठिता प्रथमा बृहती द्वितीया पङ्क्तिस्तयोः प्रग्रथनेन द्वे उत्तरे ककुभे सम्पाद्य तत्र गानं कर्तव्यमिति ।

( ४ ) पूर्वपक्षः––प्रगाथगतां बृहतीच्छन्दस्कां गृहीत्वा तदनन्तरभाविनीं पङ्क्तिच्छन्दस्कां परित्यज्य तस्याः स्थाने दाशतयीगते द्व ककुभौ गृहीत्वा तृचं सम्पादनीयम् । एवमेव ककुबुत्तरत्वोक्तिरर्थवती स्यात् । यथाश्रुतस्यैव प्रगाथस्य ग्रहणे तु तृचो न सम्पद्यते––नापि ककुबुत्तरत्वं सिध्यति । तस्माद् रथन्तरसाम्नि आद्या बृहती (प्रगाथपठिता) अन्ये च द्वे ककुभावन्यतो गृहीतव्ये इति ।

( ५ ) सिद्धान्तः––आम्नातयोरेव बृहतीपङ्क्त्योः प्रग्रथनेन ककुप् सम्पादनीया । तथाहि 'अभि त्वा शूर' इत्येषा बृहती प्रथमा स्तोत्रीया । तस्यामविकृतायामेव रथन्तरं गातव्यम् । ततः तस्यामेव ऋचि चतुर्थं पादं पुनरुपादाय उत्तरस्याः पङ्क्तेः पूर्वार्धेन सह ग्रथनेनाष्टाविंशत्यक्षरा त्रिपदा द्वितीया स्तोत्रीया कर्तव्या । इयं चैका ककुप् भवति । तस्यामेव ककुभि चरमं पादं पङ्क्तेरुत्तरार्धेन सह सङ्ग्रथ्य तृतीया स्तोत्रीया कर्तव्या । सा च द्वितीया ककुप् । अनेन प्रग्रथनप्रकारेण प्रगाथाम्नातयोरेव द्वयोर्ऋचोस्तृचनिष्पत्तेस्सर्वं समञ्जसं भवति । तस्मात् आम्नातयोर्ऋचोः प्रग्रथनेन द्वे उत्तरे ककुभौ सम्पाद्य–आद्यया बृहत्या सह––तृचे रथन्तरं गातव्यमिति ।

एतदभिप्रेत्याह प्रग्रन्थेनेति । 'उत्तरा' बृहत्या उत्तरवर्तिनी या ककुप्छन्दस्का ऋक् रथन्तरे गेयत्वेनोक्ता सा––'प्रग्रन्थेन' प्रगाथपठितयोर्बृहतीपङ्क्त्योः प्रग्रथनेन––सम्पादनीयेति शेषः ॥ ८ ॥

## (६) ९।२।२५–२८(द्वितीयवर्णकम्) नोत्तरोत्पत्तिबृहती

( १ ) सामोहविचारः ।

( २ ) ज्योतिष्टोमे श्रूयते—'रौरव—यौधाजये बार्हते तृचे भवतः'

इति । अस्यार्थः--'रौरवं नाम किंचित् साम-तथा यौधाजयनामकम-परम् । तयोर्द्वयोः साम्नोः बृहतीच्छन्दस्कस्तृच आश्रयः' इति ॥ उत्तराग्रन्थे तु तस्य सामद्वयस्याश्रय एकः प्रगाथ आम्नातः--तस्य प्रगाथस्य 'पुनानः सोम' इत्यसावृक् प्रथमा--सा च बृहती--'दुहान ऊधर्दिव्यम्' इति द्वितीया—सा च विष्टारपङ्क्तिः ।

( ३ ) तत्र सन्देहः—किमत्र प्रगाथपठितां विष्टारपङ्क्तिमपनीय तस्याः स्थाने द्वे उत्पत्तिबृहती अन्यत आनीय तृचं सम्पाद्य समासु गानम्—उत प्रगाथपठितयोर्बृहतीविष्टारपङ्क्त्योर्ग्रथनविशेषेण द्वे बृहत्यावेवोत्तरे सम्पाद्य तृचं कृत्वा गानमिति ।

( ४ ) पूर्वपक्षः-विष्टारपङ्क्तिमपनीय तस्याः स्थाने उत्पत्तिबृहतीद्वयमन्यत आनेतव्यमिति ।

( ५ ) सिद्धान्तः—उत्पत्तिबृहत्यावन्यतो नानेतव्ये—अपितु प्रगाथपठितयोरेव बृहतीविष्टारपङ्क्त्योः प्रग्रथनविशेषेण द्वे उत्तरे बृहत्यौ सम्पादनीये—पूर्वाधिकरणप्रदर्शितयुक्तिभिरिति ।

एतदभिप्रेत्याह नेति । 'उत्पत्तिबृहती' विष्टारपङ्क्तिमपनीय उत्पत्तिबृहतीच्छन्दस्का ऋगन्यत आनीय—'उत्तरा' 'न' कर्तव्या-अपि तु पठितयोरेव प्रग्रथनेन बृहती सम्पादनीयेत्याशयः ॥ ९ ॥

## (१०) ९।२।२५-२८ ( तृतीयवर्णकम् ) नान्याऽनुष्टुविहोत्तरा ।

( १ ) पूर्वविचारसदृश एव विचारः ।

( २ ) इदमाम्नायते—'पञ्चच्छन्दा आवापः आर्भवः पवमानः सप्तसामा—गायत्रसंहिते गायत्रे तृचे भवतः—श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवतः—उष्णिहि शफम्—ककुभि पौष्कलम्—कावमन्त्यं जगतीषु' इति । अस्यार्थः—"अस्ति तृतीयसवने पवमान आर्भवसंज्ञकः । तस्मिन् पञ्च सूक्तानि सप्त सामानि—'स्वादिष्ठया मदिष्ठया' इत्याद्येकं सूक्तम्—तस्मिन् गायत्र्यस्तिस्र ऋचः—तासु गायत्रं संहितं चेति द्वे सामनी । 'पुरोजिती वो अन्धस' इति द्वितीयं सूक्तम्—तत्रैकाऽनुष्टुप् उत्तरे द्वे गायत्र्यौ—तासु श्यावाश्वम् आन्धीगवं चेति द्वे सामनी । 'इन्द्रमच्छ सुता इमे' इति तृतीयं सूक्तम्-तस्मिन् उष्णिहस्तिस्रः-तासु सफं साम । 'पवस्व मधुमत्तमः' इति प्रगाथश्चतुर्थः--तस्मिन् उष्णिहस्तिस्रः--तत्र पौष्कलं साम । 'अभिप्रियाणि पवते च नो हित' इति अन्त्यं सूक्तम्--तत्र तिस्रो जगत्यः--तासु कावं साम ॥ एतेषां पञ्चानां सूक्तानां मध्ये यद्यपि 'पुरोजिती' इति 'पवस्व' इति चानयोः द्वे द्वे छन्दसी तथापि समासु गानं सम्पादयितुं प्रग्रथनेनैकैकमेव छन्दः सम्पद्यते । एवं च

गायत्र्यनुष्टुबुष्णिक्ककुब्जगतीभिः पञ्चछन्दाः पवमानोऽस्मिन् सवने आवपनीयः" इति ।

(३) तत्र सन्देहः—'पुरोजिती' इत्यस्मिन् सूक्ते समच्छन्दस्कं गानं सम्पादयितुं द्वे गायत्र्यौ अपनीय द्वे उत्पत्त्यनुष्टुभौ आनेतव्ये—उत द्वयोर्गायत्र्योः प्रग्रथनेन अनुष्टुब्द्वयं सम्पादनीयमिति ।

(४) पूर्वपक्षः—गायत्रीद्वयमपनीय तत्स्थाने उत्पत्त्यनुष्टुब्द्वयमन्यत आनेतव्यमिति ।

(५) सिद्धान्तः—चतुर्थं पादम्पुनरादाय द्वे अनुष्टुभौ ग्रथनीये इति । पूर्ववद्ध युक्तिः ।

एतदभिप्रेत्याह नान्येति । 'इह' पुरोजितीये सूक्ते—'अन्या' अन्यत आनीता—'अनुष्टुब्' उत्पत्त्या अनुष्टुप्छन्दस्का ऋक्—'उत्तरा' 'न' भवति—अपि तु गायत्रद्वयग्रथनेनैवानुष्टुब्द्वयं सम्पादनीयमित्यर्थः॥१०॥

## (११) ६।२।२५–२८ (चतुर्थं वर्णकम्) द्वयोः प्रगाथे गातव्यम्

(१) पूर्वसदृशएव विचारः ॥

(२) गवामयने ब्रह्मसाम विहितम्—'अभीवर्तो ब्रह्मसाम भवति' । तत् प्रकृत्य श्रूयते—'चतुःशतमैन्द्रा बार्हताः प्रगाथाः' इति । 'चतुरधिकशतसङ्ख्यकाः इन्द्रदेवताकाः बृहतीच्छन्दस्काः प्रगाथा' इत्यर्थः । ते च प्रगाथा ऋग्द्वयात्मकाः ।

(३) अत्र सन्देहः—किमेकप्रगाथगते द्वे ऋचौ द्वितीयप्रगाथगतामेकमृचं च सङ्ग्रथ्य तृचं सम्पाद्य तिसृषु ऋक्षु गानम्—उत द्वयोर्द्वयोर्ऋचोः प्रगाथं कृत्वा गानमिति ।

(४) पूर्वपक्षः—एकप्रगाथगते द्वे ऋचौ द्वितीयप्रगाथगतया ऋचा संग्रथ्य तृचं सम्पाद्य तस्मिन् तृचे अभीवर्तनामकं साम गातव्यमिति ।

(५) सिद्धान्तः—'अन्यथा अन्य ऋचो भवन्ति तदेव साम' इत्यस्मिन् प्रकरणे ऋचामन्यत्वं वर्ण्यते । तच्च पादग्रथनेनैव भवति—न ऋग्ग्रथनेन । तस्मात् द्वयोर्ऋचोः पादग्रथनेनैव तृचं सम्पाद्य गातव्यमिति ।

एतदभिप्रेत्याह द्वयोरिति । 'द्वयोः' ऋचोः पादग्रथनेन सम्पादिते 'प्रगाथे' एव—'गातव्यम्' गानं कर्तव्यमित्यर्थः ॥ ११ ॥

## (१२) ६।२।२६ गीत्युपाया विकल्पिताः ।

(१) गीतिप्रकारविचारः ।

(२) गीतिर्नामाभ्यन्तरप्रयत्नजनितस्वरविशेषाभिव्यञ्जिका सामशब्दाभिलप्या । सा नियतपरिमाणायामृचि गीयते । तत्सम्पादनार्थः

ऋक्षु अक्षरविकारो विश्लेषो विकर्षणम् अभ्यासो विरामः स्तोभ इत्येवमादयः समधिगताः समाम्नायन्ते गीत्युपायाः सहस्रशः सामवेदे।

( ३ ) तत्र सन्देहः—कर्मानुष्ठाने एतेषां गीत्युपायानां किं समुच्चय उत विकल्प इति ।

( ४ ) पूर्वपक्षः—समुच्चेतव्या उपायाः—प्रयोगवचनेन सर्वेषां परिगृहीतत्वादिति ।

( ५ ) सिद्धान्तः—एकैकशाखोक्तैरेवाक्षरविकारादिभिर्गीतिस्वरूपं निष्पद्यते । तन्निष्पत्तिलक्षणस्य च प्रयोजनस्यैकत्वात् प्रयोगवचनपरिगृहीता अपि अन्ये उपाया विकल्प्यन्ते इति ।

एतदभिप्रेत्याह गीतीति । 'गीत्युपायाः' ये सहस्रश उक्तास्ते—'विकल्पिताः' विकल्पेन प्रयोक्तव्याः—न समुच्चेतव्या इति शेषः ॥ १२ ॥

## (१३) ९.२।३०-३१ साम्नैव क्रियते स्तोत्रम्

( १ ) सामस्तोत्रसम्बन्धविचारः ।

( २ ) कर्मविशेषे श्रूयते—'ऋचा स्तुवते—साम्ना स्तुवते' इति ।

( ३ ) तत्र संशयः—किं स्तवनकर्मणि ऋक्साम्नोः समुच्चय उत विकल्प इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन विकल्प इति ।

( ५ ) सिद्धान्तः—वाक्यशेषे ऋचो निन्दा साम्नश्च प्रशंसा श्रूयते—'यदृचा स्तुवते तदसुरा अन्ववायन्—यत् साम्ना स्तुवते तदसुरा नान्ववायन्—य एवं विद्वान् साम्ना स्तुवीत' इति । अत ऋचं निन्दित्वा साम प्रशस्य साम विधीयते । तस्मात् साम्नैव स्तवनमिति ।

एतदभिप्रेत्याह साम्नेति—'स्तोत्रम्' स्तवनं—'साम्ना' 'एव' 'क्रियते' कर्तव्यम्—न तु ऋचेति शेषः ॥ १३ ॥

## (१४) ९।२।३०-३१ ( द्वितीयं वर्णकम् ) उपस्थानं प्रगीतया ।

( १ ) गानविचारः ।

( २ ) क्वचित् कर्मविशेषे श्रूयते—'अयं सहस्रमानव इत्येतया आहवनीयमुपतिष्ठते' इति । इयं च ऋक् अप्रगीता समाम्नाता संहिताग्रन्थे, प्रगीता तु गानग्रन्थे ।

( ३ ) तत्र सन्देहः—किमप्रगीतयैव उपस्थातव्यमुत प्रगीतयैव उत यथारुचि इति ।

( ४ ) पूर्वपक्षः—नियामकाभावात् विकल्प इति गीतयाऽगीतया वोपस्थातव्यमिति ।

( ५ ) सिद्धान्तः—अस्त्येव नियमो गाने—सामवेदे गानस्यैव प्रकृत-

त्वात् । अत्र ऋचां संहितापाठो गानार्थैव । तस्मात् प्रगीतयैवोपस्था-
तव्यमिति ।

एतदभिप्रेत्याह उपस्थानमिति । 'प्रगीतया' एव 'अयं सहस्रमानव' इत्यनया ऋचा–'उपस्थानम्' आहवनीयस्य–कर्तव्यमिति शेषः ॥ १४ ॥

(१५) ९।२।३०–३१ ( तृतीयवर्णकम् ) कर्मस्वेकश्रुतिर्मन्त्रे ।

[ 'त्रैस्वर्याद्यविकल्पः स्यात्' इति वा पाठः । ]

( १ ) प्रसङ्गेन याज्यादयो मन्त्रा विचार्यन्ते ।

( २ ) 'अग्निर्मूर्धा दिव' इत्यादयो याज्यापुरोनुवाक्यादयो मन्त्राः कस्याञ्चिच्छाखायां त्रैस्वर्येणाधीयन्ते कस्याञ्चिच्चातुःस्वर्येण [ उदात्तानुदात्तस्वरितेभ्यो व्यतिरिक्तश्चतुर्थः स्वरः एकश्रुतिरिति तान इति चाभिधीयते ] ।

( ३ ) तत्र सन्देहः–प्रयोगे किं त्रैस्वर्यादीनां विकल्प उत समुच्चयः उतैकश्रुतिरेव ग्राह्या इति ।

( ४ ) पूर्वपक्षः–प्रयोगवचनस्य सर्वाङ्गोपसंहारित्वात् समुच्चयः । अथवा अध्ययननिर्वृत्तिलक्षणस्य प्रयोजनस्यैकत्वाद् विकल्प इति ॥

( ५ ) सिद्धान्तः–व्याकरणस्मृतावेकश्रुतिरेव विहिता । जपसामव्यतिरिक्तानां मन्त्राणां यज्ञकर्मण्येकश्रुतिर्भवतीति पाणिनीयस्मृतिः ( १।२।३४ ) । जपादिषु तु यथाध्ययनं स्वरः प्रयोक्तव्यः । त्रैस्वर्यादयश्चार्थविशेषज्ञापनायार्थवन्तः । तस्मात् कर्मस्वेकश्रुतिरेव प्रयोक्तव्येति ।

एतदभिप्रेत्याह कर्मस्विति । 'कर्मसु' यज्ञानुष्ठानेषु–'मन्त्रे' मन्त्रोच्चारणे जपसामादिभ्योऽन्यत्र–'एकश्रुतिः' तानाख्यः उदात्तानुदात्तस्वरितेभ्योऽतिरिक्तः स्वरः–प्रयोक्तव्य इति शेषः ॥

[ त्रैस्वर्याद्यविकल्पः स्यादिति पाठे तु त्रैस्वर्यादिर्विकल्पेन प्रयोगो नेष्टः–अपि तु तेभ्यो व्यतिरिक्तः एकश्रुतिनामक एव स्वरः प्रयोक्तव्य इत्येवं योजना ] ॥ १५ ॥

(१६) ९।२।३२–३३ योनिवर्णक्रमो न हि ।

( १ ) गानविचारोऽनुवर्तते ।

( २ ) 'यद् योन्यां तदुत्तरयोर्गायति' इति श्रूयते ।

( ३ ) तत्र सन्देहः–किमत्र उत्तरावर्णवशेन गातव्यमुत योनिवर्णवशेनेति । [ योनौ यस्मिन् भागे 'आई' भावस्तस्मिन्नेव भागे यद्युत्तरासु 'आइ' भावः क्रियते तदा योनिवर्णवशेन गीतं भवति । यदा तु भागान्तरे 'आई' भावः क्रियते तदा उत्तरावर्णवशेन गीतं भवति ] ।

( ४ ) पूर्वपक्षः-योनिवर्णवशेनैव गीतं भवति । तथाहि 'कयानश्चित्र आभुवत्' इति ऋग्योनिः । तस्यामृचि 'कया' इति अक्षरद्वयमाद्यो भागः- 'नश्चित्र आभुवत्'इत्यक्षरषट्कं द्वितीयो भागः। तस्मिन् द्वितीये भागे द्वितीयाक्षरे चकारस्योपरितनमिकारं विलोप्य तस्य स्थाने 'आई' भावमाम्नाय गीतिर्निष्पादिता । उक्ताया ऋच उत्तरा ऋक् यथा 'कस्त्वा सत्यो मदानाम्' इति । तस्यां योनिन्यायेन चतुर्थाक्षरे तकारस्योपरितनं यकारमोकारं च लोपयित्वा तयोः स्थाने 'आई' भावः । एवं 'अभीषुणः' इत्यसावृक् अपरा उत्तरा । तस्यामपि चतुर्थाक्षरे णकारस्योपरितनमकारं लोपयित्वा तस्य स्थाने 'आई' भावः कर्तव्यः । इत्थमेव योनिवर्णवशेन गीतिः कर्तव्येति ।

( ५ ) सिद्धान्तः—उपरितना प्रक्रिया न तथ्या । नात्र योनौ एकस्य वर्णस्य लोपोऽन्यस्य वागमः कृतः-किन्तर्हि विद्यमान एव चकारस्योपरितन इकारः सामप्रसिद्धया प्रक्रियया वृद्धः सन् एकारो भवति— तस्य च सन्ध्यक्षरत्वात् अकारः पूर्वभागः इकार उत्तरभागः । तावुभौ विश्लेषेण गीयमानौ 'आ-ई' भावं प्रतिपद्येते । 'अभीषुणः सखीनामविता जरितणाम्' इत्येतस्यामुत्तरायां द्वादशाक्षरगतस्य रेफस्योपरितन इकारः पूर्वदर्शितरीत्या 'आइ' भवति । सोऽयमाईभावः वर्णाभिव्यञ्जकत्वात् उत्तरागतवर्णवशेन कर्तव्यः । गीत्यर्थत्वाभावेन योनिक्रमे तेन विनाऽपि न गीतिर्विनश्यति इति ।

एतदभिप्रेत्याह—योनीति । गाने-'योनिवर्णक्रमः' योनिवर्णवशेन 'आई' भावादिकं 'न' भवति—अपि तु उत्तरावर्णवशेनैवेत्याशयः ॥१६॥

## (१७) ६।२।३५-३८ स्तोभस्य चातिदेशोऽस्ति

( १ ) गानविशेषविचारः ।

( २ ) 'कवतीषु रथन्तरं गायतीति' श्रुतम् । तत्रोत्तरावर्णवशेन गातव्यमिति स्थितम् ।

( ३ ) तत्रापरः सन्देहः—किमत्र स्तोभा उत्तरयोरतिदिश्यन्ते उत नेति । [ वामदेव्यसाम्नो योनौ द्वयोरर्धयोर्मध्ये ओकारद्वयेन 'हो'शब्देन 'होई'शब्देन च निष्पन्नः स्तोभ एवमाम्नातः—'ओ ओ हो हाई' इति ]।

( ४ ) पूर्वपक्षः—सोऽयं स्तोभो नोत्तरयोरतिदिश्यते-अगीतित्वात् । 'यद् योन्यां तदुत्तरयोर्गायति' इत्यनेन गीतिमात्रमुत्तरयोरतिदिश्यते । तत्र प्रथमाया ऋचो वर्णा यथा नातिदिश्यन्ते तथा स्तोभा अपीति ।

( ५ ) सिद्धान्तः—स्वरो-वर्णविशेषो-विराम इत्येते गीत्युपयोगित-

या यथाऽतिदिश्यन्ते। तथा स्तोभा अपि कालपरिच्छेदकतया गीत्युपयोगित्वेन अतिदेष्टव्या इति।

एतदभिप्रेत्याह स्तोभस्येति। 'स्तोभस्य' 'च' 'अतिदेशः' उत्तरयोः ऋचोः-'अस्ति' एवेति सम्बन्धः ॥ १७ ॥

## (१८) ६।२।३९ विवर्णश्चाधिकश्च सः।

( १ ) स्तोभलक्षणविचारः।

( २ ) स्तोभा अतिदेष्टव्या इति स्थितम्।

( ३ ) तत्र सन्देहः--स्तोभस्य लक्षणं सम्भवति न वा-सम्भवति चेत् किं तदिति।

( ४ ) पूर्वपक्षः—न सम्भवति निर्दुष्टं लक्षणमिति।

( ५ ) सिद्धान्तः—'य ऋगक्षरेभ्योऽधिकः,न च तैः सवर्णः स स्तोभ' इति निर्दुष्टं स्तोभलक्षणम्,

एतदभिप्रेत्याह विवर्ण इति। 'सः' स्तोभः-'विवर्णः' ऋगक्षरैरसमानवर्णः—'अधिकः' ऋगक्षरेभ्योऽतिरिक्तः भवति। एवं च ऋगधिकत्वे सति ऋग्विलक्षणवर्णत्वं स्तोभत्वमिति पर्यवसितं लक्षणमित्याशयः ॥१८॥

## (१९) ६।२।४० नीवारे व्रीहिधर्माः स्युः

( १ ) पर्यवसितः सामोहविचारः, संस्कारोह इदानीं चिन्त्यते।

( २ ) अस्ति दर्शपूर्णमासविकृतिर्वाजपेयः। तत्र प्राकृतव्रीहिस्थाने नैवारश्चरुः श्रुतः।

( ३ ) तत्र सन्देहः-ये व्रीहिषु कर्तव्याः संस्काराः प्रोक्षणावहननादयस्ते किं नीवारेषु भवन्ति उत नेति।

( ४ ) पूर्वपक्षः-नीवाराणां व्रीहिस्थानपाते प्रमाणाभावात् नैव कर्तव्या इति।

( ५ ) सिद्धान्तः—'नैवार' इत्यत्र विकारार्थस्तद्धितप्रत्ययो नीवारस्य व्रीहिस्थानीयत्वं प्रमाणयति। तस्मात् कर्तव्याः प्रोक्षणादयो नीवारेष्विति।

एतदभिप्रेत्याह नीवारेति। 'व्रीहिधर्माः' प्रोक्षणावघातादयः संस्कारा ये दर्शपूर्णमासे व्रीहिषु कर्तव्यत्वेन चोदितास्ते-'नीवारे' विकृतियागे वाजपेये चरुद्रव्यत्वेन विहिते-'स्युः' कर्तव्या इति शेषः ॥१९॥

## (२०) ६।२।४१-४३ परिधिर्यूपधर्मभाक्।

( १ ) संस्कारोहो वर्तते।

( २ ) चातुर्मास्येषु-'मध्यमे पर्वणि परिधौ पशुं नियुञ्जति' इति यूपकार्यं पशुनियोजनं परिधावाम्नातम्।

( ३ ) तत्र संशयः-परिधौ यूपधर्माः कर्तव्या न वेति।

( ४ ) पूर्वपक्षः—अग्निपरिधानार्थं हि परिधिरुत्पन्नः। तस्य स्वयमेव धर्मान्तराणि सन्ति। तस्मात् यूपस्थानीयेऽपि तस्मिन् यूपधर्मा न कार्या इति।

( ५ ) सिद्धान्तः—कार्यान्तरायोत्पन्नस्यापि परिधेर्वचनात् पशुनियोजनसाधनत्वमुपपद्यते। पशुनियोजनार्थमेव च यूपोऽपि संस्क्रियते। तथा च पशुनियोजनरूपे उपकारका यूपसंस्कारा इत्यवगन्तव्यम्। एवं च सति यदा परिधिरपि तस्मिन्नेव पशुनियोजनकार्ये उपयुज्यते तदा ते संस्कारास्तत्रापि कर्तव्या एव। यद्यपि तक्षणरूपो यूपसंस्कारः परिधौ न सम्भवति तथाऽप्यञ्जनादिसंस्काराणां तत्रापि सम्भवात् ते एव कर्तव्याः। एवं च प्रैषमन्त्रे 'यूपायाज्यमानायानुब्रूहि' इत्यत्र—'परिधयेऽज्यमानाय' इत्यूहः कर्तव्य इति।

एतदभिप्रेत्याह परिधिरिति। 'परिधिः' यदा पशुनियोजनायोपयुक्तः तदा-'यूपधर्मभाक्' यूपस्य धर्मान् संस्कारान् अञ्जनादीन् भजते। परिधावप्येते धर्मा अनुष्ठेया इत्यर्थः ॥ २० ॥

## (२१) ९।२।४४–४५ दध्नः प्रणीताधर्माः स्युः

( १ ) संस्कारोहः।

( २ ) अभ्युदयेष्ट्यां 'दधनि चरुम्' इति दधि श्रुतम्।

( ३ ) अत्र संशयः—दधनि प्रणीताधर्माः कर्तव्या उत नेति।

(४) पूर्वपक्षः—हविःश्रपणार्थमुत्पन्ना उत्पवनादिधर्मसंस्कृता आपः 'प्रणीताः'। दधि तु श्रपणार्थं नोत्पन्नम् किन्तु हविष्ट्वेन प्रदानार्थमुत्पन्नम्। एवं च प्रणीतया तस्या न किमपि साम्यम्। तस्मात् प्रणीताधर्मा दधनि नैव कर्तव्या इति।

( ५ ) सिद्धान्तः—कार्यान्तरार्थमुत्पन्नस्यापि दध्नः वचनेन चरुश्रपणार्थत्वमुक्तम्। तेन च प्रणीतासमानत्वात् कर्तव्या एव दधनि प्रणीताधर्मा इति।

एतदभिप्रेत्याह दध्न इति। 'दध्नः' चरुश्रपणार्थं चोदितस्य—'प्रणीताधर्माः' उत्पवनादयः—'स्युः' कर्तव्या इति शेषः ॥ २१ ॥

## (२२) ९।२।४६–४७ साम्नो धर्मा व्यवस्थिताः।

( १ ) धर्मोहो वर्तते।

( २ ) ज्योतिष्टोमे पृष्ठस्तोत्रद्वयं विकल्पेन विहितम्—'बृहत् पृष्ठं भवति—रथन्तरं पृष्ठं भवति' इति। सन्ति चोभयोः पृष्ठस्तोत्रयोर्धर्माः—'बृहति स्तूयमाने मनसा समुद्रं ध्यायेत्—रथन्तरे प्रस्तूयमाने सम्मीलयेत्' इत्येवमादयः।

( ३ ) तत्र संशयः—किमेते धर्मा उभयत्र मिलिता अनुष्ठेया उत व्यवस्थया इति ।

( ४ ) पूर्वपक्षः—पृष्ठस्तोत्रसिद्धिलक्षणस्य कार्यस्योभयत्र समानत्वात् उभयत्र सङ्कीर्णा एव धर्मा इति ।

( ५ ) सिद्धान्तः—धर्मसङ्करे बृहदिति रथन्तरमिति च नामद्वयनिर्देशो नोपपद्यते । किञ्चोभयधर्मसाहित्यं विरुद्धम्—'उच्चैर्गेयं—बलवद् गेयमिति' बृहतो धर्माः—'नोच्चैर्गेयम्—न बलवद् गेयमिति' रथन्तरस्य । तस्मादुभयोर्धर्माः पृथक् पृथक् व्यवस्थिता एवेति ।

एतदभिप्रेत्याह साम्न इति । 'साम्नः' बृहतः रथन्तरस्य च-'धर्माः' समुद्रध्यानसम्मीलनादयः—'व्यवस्थिताः' उभयत्र पृथक् पृथक् व्यवस्थया कार्या न मिलिता उभयत्रेति भावः ॥ २२ ॥

## (२३) ६।२।४८ कण्वरथन्तरे सर्वे

( १ ) पूर्वाधिकरणापवादः ।

( २ ) वैश्वस्तोमे 'कण्वरथन्तरं पृष्ठं भवति' इति कण्वरथन्तरं श्रुतम् ।

( ३ ) तत्र सन्देहः—अस्मिन् कण्वरथन्तरे किमन्यतरस्य एकस्यैव-रथन्तरस्य बृहतो वा-धर्माः कर्तव्या उतोभयोरपि समुच्चेतव्या इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन रथन्तरे राथन्तरा एव धर्मा बृहति बार्हता एवेति उभयोर्धर्माणां सहानुष्ठाने प्रमाणाभावात् एकस्यैव अन्यतरस्य धर्मा अनुष्ठेया इति ।

( ५ ) सिद्धान्तः—अत्र हि उभयोः प्राकृतयोः बृहद्रथन्तरयोः स्थाने कण्वरथन्तरं चोदितम् । तथा चास्मिन्नुभयोर्धर्माः समुच्चेतव्याः । ये विरुद्धा धर्माः उच्चैर्गेयं नोच्चैर्गेयमित्यादयस्ते विकल्प्यन्ताम्—ये तु न विरुद्धाः—समुद्रध्यानसम्मीलनादयः—तेषां समुच्चय एवेति ।

एतदभिप्रेत्याह कण्वेति । 'कण्वरथन्तरे' पृष्ठे—'सर्वे' धर्माः-रथन्तरस्य बृहतश्च-समुच्चयेनानुष्ठेया इति शेषः ।

[ वार्तिकमतेन त्वत्र विकल्प एवेति सिद्धान्तः ] ॥ २३ ॥

## (२४) ६।२।४९–५० व्यवस्थोभयसामके ।

( १ ) सामधर्मविचारो वर्तते ।

( २ ) 'गोसवे उभे कुर्यात्' इति गोसवादौ बृहद्रथन्तरसामद्वयसाध्यं पृष्ठस्तोत्रं विहितम् ।

( ३ ) तत्र सन्देहः—किमुभयोर्धर्मा उभयत्र सङ्करेणानुष्ठेया उत व्यवस्थयाऽनुष्ठानमिति ।

( ४ ) पूर्वपक्षः—द्वाविंशाधिकरणवदत्र पृष्ठद्वयं नास्ति—अपि त्वेक-

मेवात्र पृष्ठम् । एवं च धर्मव्यवस्थाया असम्भवात् बृहत्यप्युभयधर्मा इति सङ्करेणैवानुष्ठानम् इति ।

(५) सिद्धान्तः-- नैते धर्माः पृष्ठस्तोत्रप्रयुक्ताः येन पृष्ठस्यैकत्वात्सङ्करः स्यात्-अपि तु सामप्रयुक्ताः । पृष्ठस्य चैकत्वेऽपि सामद्वयमस्त्येव । तस्मात् व्यवस्थयैव धर्मानुष्ठानम्-रथन्तरे राथन्तराणामेव बृहति च बार्हतानामेवेति ॥

एतदभिप्रेत्याह व्यवस्थेति । 'उभयसामके' बृहद्रथन्तरसामसाध्ये एकस्मिन्नपि पृष्ठे-'व्यवस्था' एव-धर्माणां स्यादिति शेषः ॥ २४ ॥

## (२५) ६।२।५१-५६ पार्वणौ वैकृते न स्तः

(१) ऊहप्रसङ्गेन धर्मातिदेशविचारः ।

(२) दर्शपूर्णमासयोः श्रूयते--'स्रुवेण पार्वणौ जुहोति' इति-पार्वणहोमौ ।

(३) तत्र संशयः—किमेतौ पार्वणहोमौ सौर्यादौ विकृतावपि कर्तव्यौ उत नेति ।

(४) पूर्वपक्षः--पर्वशब्दः कालविशेषवाची । ततश्च पर्वरूपकालदेवताकौ इमौ होमौ आरादुपकारकतया सौर्यादिविकृतिष्वप्यतिदेष्टव्याविति ।

(५) सिद्धान्तः--पर्वशब्दोऽत्र दानार्थवाचिनः पृणातेर्धातोर्निष्पन्नो न कालविशेषवाची-अपि तु आग्नेयादियागत्रिकसमूहवाची । सौर्यादिविकृतिश्च न यागत्रिकसङ्घस्यापि त्वाग्नेयमात्रस्य । तस्मात् सङ्घार्थयोः पार्वणहोमयोर्न प्राप्तिरस्ति सौर्यादाविति ।

एतदभिप्रेत्याह पार्वणाविति । 'पार्वणौ' दर्शपूर्णमासयोर्विहितौ पार्वणहोमौ—'वैकृते' सौर्यादौ विकृतियागे--'न' 'स्तः'—अनुष्ठेयाविति शेषः॥२५॥

## (२६) ६।२।५७-५८ पर्वणोस्तौ व्यवस्थितौ ।

(१) पूर्वाधिकरणशेषः ।

(२) पार्वणहोमविषये एव—

(३) पुनः सन्देहः—कुत्रैतावनुष्ठेयौ—किं दर्शे एव उत पूर्णमासे एव उत उभयत्रेति ।

(४) पूर्वपक्षः—दर्शपूर्णमासप्रकरणपठितत्वात् दर्शेऽपि पूर्णमासेऽपि होमद्वयं कर्त्तव्यमिति ।

(५) सिद्धान्तः—उपकार्ययोः सङ्घयोर्व्यवस्थितत्वात् उपकारकयोर्होमयोरपि व्यवस्थैव । तस्मात् पूर्णमासरूपपर्वसम्बन्धी होमः पूर्णमासयागे--अमावास्यारूपपर्वसम्बन्धी होमो दर्शयागे एवेति ।

एतदभिप्रेत्याह पर्वणोरिति। 'तौ' पार्वणहोमौ—'पर्वणोः' अमावास्यायाम् पौर्णमास्यां च--'व्यवस्थितौ' व्यवस्थयैव कर्तव्यौ न समुच्चयेनेति भावः॥ २६॥

(२७) ९।२।५९-६० समिदादौ यजिविधिः

( १ ) संस्कारविचारे प्रासङ्गिको विचारः।

( २ ) दर्शपूर्णमासयोः प्रयाजपञ्चकमाम्नातम्–'समिधो यजति' इत्यादिना।

( ३ ) तत्र सन्देहः--अत्र किं देवता विधीयते उत यागक्रियेति।

( ४ ) पूर्वपक्षः—यथा 'विष्णुं यजति' इत्यत्र द्वितीयया विष्णुर्देवता विधीयते तथैवात्रापि 'समिधो यजती'त्यत्र द्वितीयया समिद्देवता विधीयते। अत्र यो यजिः प्रोक्तस्तेन समिदादयो देवाः संस्क्रियन्ते–इति दृष्टार्थलाभ इति।

( ५ ) सिद्धान्तः—सर्वत्र चतुर्थ्या तद्धितेन वा देवता निर्दिश्यते। न चात्र चतुर्थी तद्धितप्रत्ययो वा। क्वचिच्च तादर्थ्यप्रतीत्यापि देवतोच्यते। न च द्वितीयया तादर्थ्यं प्रतीयते—अपि तु ईप्सिततमत्वम्। तच्च समिदादीनां कर्मनामत्व एवोपपद्यते। एवं च समिद्यागः कर्तव्य इति वाक्यार्थः पर्यवस्यति। तस्मान्नात्र देवतासंस्कारविधिरपि तु यागविधिरेवेति॥

एतदभिप्रेत्याह समिदिति। 'समिदादौ' समिधो यजतीत्यादिविधौ–'यजेः' यागक्रियाया एव 'विधिः' विधानम्–न देवतासंस्कारस्येति शेषः॥ २७॥

न्यायाः स्युः सप्तविंशतिः।

स्पष्टम्॥

इति नवमस्य द्वितीयः।

---

# अथ नवमाध्यायस्य तृतीयः पादः।

( मन्त्रोहविचारपरः )

(१) ९।३।१-२ निर्वापमन्त्रे ध्रुवमूहनं स्यात्.

( १ ) पर्यवसितः सामोहः। मन्त्रोह इदानीं चिन्त्यते।

( २ ) प्रकृतौ—'अग्नये जुष्टं निर्वपामि' इति देवताविषयो मन्त्र

आम्नातः—'व्रीहीणां मेधसुमनस्यमाना' इति च द्रव्यविषयको मन्त्रः। सन्ति च सौर्यादीनि विकृतयः।

(३) तेषु सन्देहः—यदोक्तौ मन्त्रौ सूर्यदेवताके नीवारहव्यके सौर्ये प्रयुज्यते—तदा किं मन्त्रयोः 'अग्नये' इत्यस्य स्थाने 'सूर्याय' इति-'व्रीहीणा'मित्यस्य स्थाने 'नीवाराणाम्' इत्यूहः कार्यं उत नेति।

(४) पूर्वपक्षः—प्रकृतिवद् विकृतिः कर्तव्येति चोदकेन यथावस्थितस्यैव प्राकृतमन्त्रपाठस्य विकृतावतिदिष्टत्वात् ऊहो न कार्यं इति।

(५) सिद्धान्तः—प्रकृतौ देवताद्रव्यलक्षणयोरर्थयोरेव विवक्षा। तथासत्येव हि देवताद्रव्यप्रकाशनरूपस्य दृष्टार्थस्य लाभः। अग्निव्रीह्यक्षरपाठविवक्षायां त्वदृष्टार्थो मन्त्रपाठः कल्पनीयः प्रसज्येत। तस्मात् विकृतिगतसूर्यनीवारलक्षणार्थप्रकाशनलाभायोहः कर्तव्य इति।

एतदभिप्रेत्याह निर्वापेति। 'निर्वापमन्त्रे'—'अग्नये जुष्टं···सुमनस्यमाना' इत्यत्र 'ऊहनम्' विकृतौ तद्गतदेवताद्रव्यप्रकाशकशब्दोहः—'ध्रुवम्' अवश्यम्—'स्यात्' कर्तव्यमित्यर्थः॥ १॥

(२) ९।३।३-८ ऊहस्तथा स्याद्धरितादिशब्दे।

(१) मन्त्रोहविचारो वर्तते।

(२) इदमामनन्ति—'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति-तत्र 'पौण्डरीकाणि बर्हींषि भवन्ति' इति पौण्डरीकबर्हिर्विधीयते। निर्वापमन्त्रश्च प्रकृतौ-'स्तृणीत बर्हिः···दर्भैः स्तृणीत हरितैः' इत्यादि। मन्त्रे च दर्भैरिति जातिवाचकः शब्दः हरितैरिति च गुणवाचकः। अयमेव च मन्त्रः विकृतौ मौद्गे चरौ चोदकेन प्राप्तः।

(३) तत्र सन्देहः—'दर्भैः स्तृणीत हरितैः' इत्यत्र किं दर्भैरित्यस्य हरितैरित्यस्य चेत्युभयोरपि स्थाने वैकृतद्रव्यानुसारेण ऊह उत एकस्यैव शब्दस्य स्थाने इति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन दर्भस्थाने पुण्डरीकस्योहोऽवश्यमेव कार्यः। हरितशब्दस्तु नापूर्वार्थद्रव्यवाची। तथा चासमवेतार्थे यथा प्रकृतावदृष्टार्थमेव प्रयुज्यते तथा विकृतावप्यदृष्टार्थमेव यथास्थितमनूहेनैव प्रयोक्तव्य इति।

(५) सिद्धान्तः—हरितशब्दस्यापि गुणिद्रव्यप्रकाशनेन दृष्टार्थलाभेन समवेतार्थ एव प्रयोगः। तस्मात्तस्यापि स्थाने ऊहः कार्यः। एवं च 'पुण्डरीकैः स्तृणीत रक्तैः' इत्येवमूहितो मन्त्रपाठ इति।

एतदभिप्रेत्याह ऊह इति। यथा द्रव्यदेवताप्रकाशकशब्दे ऊहः 'तथा'-गुणवाचके 'हरितादिशब्दे' अपि—'ऊहः' 'स्यात्' इति सम्बन्धः॥ २॥

## (३) ६।३।९ स्युर्लौकिके स्पर्शन एव मन्त्राः

( १ ) प्राकृतस्य मन्त्रस्य विकृतावूह इत्येतत्प्रसङ्गेन क्वचिद् विकृतार्थमेव मन्त्रो विधीयते तादृशश्चिन्त्यते ।

( २ ) ज्योतिष्टोमेऽग्नीषोमीयपशुप्रकरणे यूपस्पर्शे प्रायश्चित्तमाम्नातम्—'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्—यदि द्वावेतौ ते वायू इति--यदि बहून् एते ते वायव' इति ।

( ३ ) तत्र सन्देहः—इदं मन्त्रपाठरूपं प्रायश्चित्तं किमुच्छ्रयणाञ्जनादिवैदिककर्मानुष्ठानकालीनयूपस्पर्शनेऽनुष्ठातव्यमुत लौकिके यादृच्छिके स्पर्शने इति ।

( ४ ) पूर्वपक्षः --वैदिकस्यैव कर्मणः प्रकरणे प्रायश्चित्तस्याम्नानात् वैदिकानुष्ठानकालीने एव स्पर्शे प्रायश्चित्तमिति ।

( ५ ) सिद्धान्तः—'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते—यद् यूपमुपस्पृशेद् यज्ञस्य दुरिष्टमामुञ्चेत्—तस्माद् यूपो नोपस्पृश्यः' इति यूपस्पर्शनं प्रतिषिध्य पश्चात्प्रायश्चित्तमाम्नातम् । प्रतिषेधश्च लौकिकस्पर्शविषयः—वैदिकस्पर्शस्य कर्तव्यतया विहितत्वात् ( तद्विना विहितस्य यूपोच्छ्रयणस्य तदञ्जनस्य च कर्तुमशक्यत्वात् ) । तस्मात् लौकिके एव स्पर्शे प्रायश्चित्तमिति ।

एतदभिप्रेत्याह स्युरिति । 'लौकिके' -वैदिककर्मानुष्ठानकालातिरिक्तकाले कृते वैकृते—'एव'—'स्पर्शने' यूपस्पर्शे—'मन्त्राः' 'एष ते वायो—एतौ ते वायू--एते ते वायव' इत्येवं रूपाः—'स्युः' प्रायश्चित्तरूपेण पठिता न तु वैदिकानुष्ठानकालीने—इति भावः ॥ ३ ॥

## (४) ६।३।१०-१४ ऊह्यौ विकृत्यां खलु पाशमन्त्रौ ।

( १ ) मन्त्रोहविचारोऽनुवर्तते ।

( २ ) अस्ति पशुरग्नीषोमीयः । तत्र पाशैकत्वाभिधायी मन्त्रः—'अदितिः पाशं प्रमुमोक्त्वेतम्' इति । तथा पाशबहुत्वाभिधायी- 'अदितिः पाशान् प्रमुमोक्त्वेतान्' इति । प्रकृतौ च द्वयोरपि विकल्पेन प्रयोगो वक्ष्यतेऽग्रिमेऽधिकरणे । अस्ति च द्विपशुर्विकृतिः । तत्र चोदकेन पाशाभिधायिनौ मन्त्रौ प्राप्तौ ।

( ३ ) तत्र संशयः--किं बहुवचनान्तोऽविकारेण प्रयोक्तव्यः एकवचनान्तस्त्याज्यः--उत एकवचनान्त एव द्विवचनान्तमूहयित्वा प्रयोक्तव्यो द्विवचनान्तस्त्याज्यः—उत बहुवचनान्तोऽविकारेण प्रयोक्तव्य एकवचनान्तो द्विवचनान्तमूहयित्वा प्रयोक्तव्यः—उत द्वावपि द्विवचनान्तावूहयित्वा प्रयोक्तव्यौ इति ।

( ४ ) पूर्वपक्षः—चोदकेन द्वावपि मन्त्रौ प्राप्तावतिदेष्टव्यौ भवतः। तत्र एकवचनान्तः प्रकृतौ समवेतार्थप्रकाशकतया विकृतावूहनीयो बहुवचनान्तस्तु यथावस्थित एव पठनीय इति ।

( ५ ) सिद्धान्तः—लोके वेदे च बहुवचनस्य द्वयोरर्थयोरक्लृप्तशक्तित्वाद् बहुवचनान्तोऽपि द्विवचनान्तयोहनीयः । एवं च द्वावप्यूहनीयाविति ।

एतदभिप्रेत्याह ऊह्याविति । 'विकृत्यां' द्विपशौ विकृतियागे-'पाशमन्त्रौ' एकवचनान्तो बहुवचनान्तश्चोभावपि—'ऊह्यौ' द्विवचनान्ततया ऊहयित्वा पठनीयौ—'खलु' निश्चयेनेति सम्बन्धः ॥ ४ ॥

## (५) ९।३।१५ १६ द्वौ चापि मन्त्रौ प्रकृतौ निविष्टौ

( १ ) पूर्वोदाहरणे विचारान्तरम् ।

( २ ) अग्नीषोमीये द्वौ पाशमन्त्रावाम्नातौ । तत्र विकृतौ यत् कर्तव्यं तदवगतम् । प्रकृतौ चिन्ता प्रवर्तते ।

( ३ ) तत्र संशयः—किं एकत्वाभिधायी एव प्रकृतौ निविशते बहुवचनान्तः परित्यज्यते—उत उभयोरपि प्रकृतौ निवेश इति ।

( ४ ) पूर्वपक्षः—बहुवचनान्तः प्रकरणादुत्कृष्य यत्र पाशबहुत्वं तत्र पठनीयो न प्रकृतौ । तत्र एकस्यैव पशोः सत्त्वात् बहुवचनस्यानन्वितत्वात् । एकत्वाभिधायी मन्त्रः प्रकृतौ पठनीय इति ।

( ५ ) सिद्धान्तः—नोत्क्रष्टव्यो बहुवचनान्तः । द्वयोरप्याम्नातत्वाद् विकल्पेन द्वावपि पठनीयौ । एकपशुकायां प्रकृतौ बहुवचनविभक्तेरन्वयासम्भवेऽपि प्रातिपदिकस्यान्वयसम्भवात् । प्रातिपदिकविभक्त्योश्च प्रातिपदिकमेव प्रधानम्—धर्मिवाचकत्वात् । गुणभूते च बहुवचने लक्षणाऽप्याश्रयणीया भवति—पाशावयवबहुत्वाश्रया तदा बहुवचनविभक्तिर्भविष्यति, एवं च प्रधानानुसारेणोभयोरपि मन्त्रयोः समानत्वाद् विकल्पोऽभ्युपगन्तव्य इति ।

एतदभिप्रेत्याह द्वाविति । 'प्रकृतौ' अग्नीषोमीये पशौ—'द्वौ च' एकाभिधायी बह्वभिधायी चेति द्वावपि—'मन्त्रौ'—'निविष्टौ' पठनीयौ भवतः इत्यर्थः ॥ ५ ॥

## (६) ९।३।२० पत्नीपदे सन्नहनाय नोहः ।

( १ ) ऊहविचारो वर्तते ।

( २ ) दर्शपूर्णमासयोर्मन्त्र आम्नायते 'पत्नीं सन्नह्य' इत्यादि । सम्भवति यजमानस्यैकपत्नीकत्वं बहुपत्नीकत्वं च ।

( ३ ) तत्र संशयः—बहुपत्नीकयजमानस्य यागे किं यथावस्थित एष मन्त्रः पठनीय उत बहुवचनमूहयित्वेति ।

( ४ ) पूर्वपक्षः—एकपत्नीकस्य यजमानस्य प्रयोगे एकवचनान्तः पत्नीशब्दः समवेतार्थप्रकाशकः । तस्माद् बहुपत्नीकस्य यजमानस्य प्रयोगेऽर्थवशाद्बहुवचनान्तेनोहयित्वा प्रयोक्तव्य इति ।

( ५ ) सिद्धान्तः—पत्नीं सन्नह्येति साधारणोऽयमुपदेशः । एवं च सर्वप्रयोगसमवेतार्थप्रकाशकतया पत्नीमित्यत्र प्रातिपदिकं कर्मकारकविभक्तिश्चेत्युभयमेव पाशन्यायेन विवक्षितम्—एकवचनं तु न विवक्षितम् । तस्मात् पत्नीपदं यथावस्थितमेव सर्वप्रयोगे पठनीयमिति ।

एतदभिप्रेत्याह पत्नीपद इति—'सन्नहनाय' पत्नीं सन्नह्येति मन्त्रे—'पत्नीपदे' पत्नीमित्येकवचनान्ते पदे—'न' 'ऊहः'—द्विवचनान्तत्वं बहुवचनान्तत्वं वा नोहनीयमित्यर्थः ॥ ६ ॥

## (७) ६।३।२१ नोहः प्रयोज्यो विकृतौ च पत्न्याम्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) प्रकृतौ पत्नीशब्दस्योहश्चिन्तितः । विकृतौ द्विपत्नीकप्रयोगे चिन्त्यते ।

( ३ ) सन्देहः—किं विकृतौ अनेकपत्नीकप्रयोगे पत्नीमित्यत्र ऊह उत नेति ।

( ४ ) पूर्वपक्षः—ऊहो भवति । प्रकृतावर्थानुसारेण प्राप्तोऽप्यूहः सर्वप्रयोगसाधारणेन मन्त्रपाठेन बाधितः । विकृतौ तु बाधितस्य पाठस्याभावेन अस्मदायत्ते प्रयोगेऽर्थानुसारेणोहः कर्तव्य इति ।

( ५ ) सिद्धान्तः—पत्नीमित्येकवचनस्याविवक्षितत्वेन प्रकृतावदृष्टार्थतया यथावस्थितः पाठ इति स्थिते विकृतावप्यदृष्टार्थतया यथावस्थितमेव पठितव्यम् । तस्मान्नोह इति ।

एतदभिप्रेत्याह नोह इति । 'विकृतौ' विकृतियागस्याप्यनेकपत्नीकप्रयोगे—'पत्न्याम्' एकवचनान्ते पत्नीशब्दे 'च' अपि 'ऊहः' बहुवचनान्तोहः 'न' 'प्रयोज्यः' इति सम्बन्धः ॥ ७ ॥

## (८) ६।३।२२ नोहोऽध्रिगौ तुल्यविधानपक्षे ।

( १ ) ऊहविचारोऽनुवर्तते ।

( २ ) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्राध्रिगौ इदमाम्नायते-'प्रास्मै अग्निं भरत' इत्यादि । सन्ति च चत्वारः सवनीयाः पशवः—आग्नेयोऽग्निष्टोमे-ऐन्द्राग्न उक्थ्ये-ऐन्द्रो वृष्णिः षोडशिनि-सारस्वती मेषी अतिरात्रे इति । त एतेऽग्नीषोमीयेन समानविधाना इत्यस्त्येकः पक्षः ।

( ३ ) तत्र सन्देहः—एवं समानविधानत्वे सति किं सवनीयादिषु अध्रिगौ-'प्रास्मै' इति एकवचनान्तस्य स्थाने बहुवचनान्तस्योहः कर्तव्य उत नेति। [मेषीविषये लिङ्गस्योहो न भवतीति निर्णीतं नवमस्याद्ये पादे।]

( ४ ) पूर्वपक्षः-ऊहः कर्तव्यः } पत्न्यधिकरणयुक्तयोऽत्राप्यनुसन्धेया उभयत्र।
( ५ ) सिद्धान्तः-नोहः }

एतदभिप्रेत्याह नोह इति। 'तुल्यविधानपक्षे' सवनीयपशवोऽग्नीषामीयेन यदि तुल्यविधानास्तदा-'अध्रिगौ' प्रास्मै इत्यस्य स्थाने—'ऊहः' द्विवचन-बहुवचनान्तादेः—'न'-कार्य इति शेषः॥

[न्यायमालाकारमतेन तु पाशन्यायेनास्त्येव लिङ्गवचनयोरुभयोरूहः]॥८॥

## (९) ९।३।२३—२६ न मन्त्रमूहेत् प्रतिनिध्युपात्ते

( १ ) ऊहविचारो वर्तते।

( २ ) श्रुतस्य द्रव्यस्यापचारे तत्सदृशं द्रव्यान्तरं तस्य प्रतिनिधिर्भवतीति स्थितम्। तत्र व्रीहीणामपचारे नीवारास्तत्स्थाने निविशन्ते। तदेतत्सर्वं षष्ठे स्थितम्। व्रीहिसम्बन्धी च मन्त्र आम्नातः 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदाम ते प्रतितिष्ठ व्रीहीणाम्मेध सुमनस्यमाना' इति।

( ३ ) तत्र संशयः—व्रीहीणामपचारे यदा नीवारा उपादीयन्ते तदाऽस्मिन् मन्त्रे किं व्रीहीणामित्यस्य स्थाने नीवाराणामित्यूहनीयमुत नेति।

( ४ ) पूर्वपक्षः-अर्थानुसारादूहितव्यमिति।

( ५ ) सिद्धान्तः—नैवारचरौ नीवाराणां तत्साधनत्वेन व्रीहिस्थानीयतया विहितानां भवति मन्त्रस्योहः। इह तु न नीवाराः साधनत्वेन विहिताः-किन्तु व्रीहिसादृश्येन केवलं प्राप्यन्ते, सादृश्यं च भूयोऽवयवसामान्यम्-एवं च यथा व्रीह्यवयवानां व्रीहिशब्दवाच्यता तथैव नीवारावयवानामपीति नावसरो मन्त्रोहस्येति।

एतदभिप्रेत्याह न मन्त्रमिति। 'प्रतिनिध्युपात्ते' श्रुतद्रव्यस्य प्रतिनिधिरूपेण गृहीते तादृशे द्रव्यान्तरे—'मन्त्रम्' 'न' ऊहेत्। श्रुतद्रव्यवाचकशब्दस्थाने प्रतिनिधिद्रव्यवाचकशब्दं नोहेदित्याशयः॥९॥

## (१०) ९।३।२७—२८ नोहं विदध्यात् खलु चक्षुरादौ।

( १ ) ऊहविचारो वर्तते।

( २ ) अग्नीषोमीयपशौ अध्रिगुप्रैषे पशुसम्बन्धिनां सूर्यादिसंसर्ग आम्नायते 'सूर्यं चक्षुर्गमयतात्-वातं प्राणमन्ववसृजतात्-दिशः श्रोत्रम्' इत्यादि। अस्ति च द्विपशुयागः 'मैत्रं श्वेतमालभेत-वारुणं कृष्णम्' इति। अत्र चोक्तो मन्त्रश्चोदकप्राप्तः।

( ३ ) तत्र सन्देहः-उक्तो मन्त्रो यदा द्विपशुयागे पठ्यते तदा किं चक्षुरित्याद्येकवचनान्तस्थाने द्विवचनान्ता ऊहनीया उत नेति ।

( ४ ) पूर्वपक्षः-पशुभेदेन चक्षुरादीनि भिन्नानि। तस्मादूहनीया इति।

( ५ ) सिद्धान्तः--चक्षुःशब्देनात्र शरीरगतं गोलकं न विवक्षितम्। तद्विवक्षायामेकस्मिन्नपि पशौ चक्षुर्द्वयभावेनानन्वय एकवचनस्य स्यात्। गोलकस्य च सूर्यादिप्राप्त्यसम्भवः। यद्रु रूपदर्शनादिसामर्थ्यलक्षणं तेजोमात्रं तदेवात्र चक्षुःशब्देन विवक्षितम्। तच्च पश्वनेकत्वेऽपि एकीभूयैव सूर्यम्प्राप्तुं शक्नोति। तस्मान्नास्त्यूह इति।

एतदभिप्रत्याह—नोहमिति। 'चक्षुरादौ' चक्षुः प्राणं श्रोत्रम् इत्येकवचनान्तेषु शब्देषु-'ऊहं' द्विवचनाद्यूहं-'न' 'विदध्यात्'-द्विपशुयागे इति शेषः ॥ १० ॥

## (११) ९।३।२९-३१ अभ्यासमृच्छेत् पदमेकधेति

( १ ) पूर्वाधिकरणशेषः ।

( २ ) पूर्वोदाहृते एवाध्रिगुप्रैषे श्रूयते-'एकधाऽस्य त्वचमाच्छ्यतात्' इति। इदमपि द्विपशुयागे चोदकेन प्राप्तम्।

( ३ ) तत्र संशयः-एकधेति पदं द्विपशुयागेऽभ्यसितव्यमुत यथावस्थितमेव प्रयोक्तव्यमिति।

( ४ ) पूर्वपक्षः—यथावस्थितमेव प्रयोक्तव्यम्। एकधेत्यनेन साहित्यमात्रमुच्यते। पश्वनेकत्वेऽपि त्वगुत्पाटनस्यैककालीनत्वं बहुपुरुषकर्तृकं घटत एवेति।

( ५ ) सिद्धान्तः—प्रकृतावेकपशौ साहित्यार्थो नान्वेति। तस्मात् सकृत्त्वमेव एकधाशब्दस्यार्थः। 'त्वक् अवयवशोऽसकृत् न छेत्तव्या अपि तु सर्वाऽपि सकृत् एकप्रयत्नेनैव छेत्तव्येति' वाक्यस्यार्थः। य एव चार्थः प्रकृतौ स एव विकृतावप्युचितः। ततः बहुष्वपि पशुषु प्रतिपशु सकृत्त्वमभिधातुम् 'एकधा' इति पदमभ्यसितव्यमिति ॥

एतदभिप्रेत्याह अभ्यासमिति। 'एकधेति' 'पदम्'—'अभ्यासम्' 'ऋच्छेत्' प्राप्नुयात्—द्विपशुयागे इति शेषः ॥ ११ ॥

## (१२) ९।३।३२-४० स्यादूहनं मेधपतेर्विकृत्याम्।

( १ ) ऊहविचारः।

( २ ) अध्रिगुप्रैषनिगदस्यादाविदमाम्नायते—'दैव्याः शमितार उत च मनुष्या आरभध्वम्—उपनयत मेध्या दुर—आशासाना मेधपतिभ्यां (क्वचित् मेधपतये इति पाठः) मेधम्' इति। अस्यार्थः—"शमितारः पशुघातिनो द्विविधाः—दैव्याः मानुषाश्च—तानुभयरूपान् सम्बोध्य होता

कर्तव्यं निर्दिशति—आरम्भः कर्तव्यः—'मेधो' यज्ञः—तद्योग्यान् 'दुरः' पदार्थान् हिंसाहेतून्—इहानयत—किं कुर्वन्तः—यज्ञपतिभ्यां यज्ञमाशासानाः" इति।

( ३ ) तत्र संशयः—बहुपशुयुक्तासु विकृतिषु द्विवचनान्तस्य मेधपतिशब्दस्योहोऽनूहो वेति।

( ४ ) पूर्वपक्षः—अग्नीषोमीये पशौ यजमानः अग्नीषोमौ चेति त्रयो मेधस्य पतयः। तेष्वेकवचनस्य द्विवचनस्य वा प्रकृतौ अविवक्षितस्य विकृतावनूहः इति।

( ५ ) सिद्धान्तः—मेधस्य यजमानार्थत्वं नैवाशासनीयम्—तस्य सिद्धत्वात्। देवतार्थत्वं त्वाशासनीयम्। ततो 'मेधमाशासाना' इत्येतद् देवतायामेव समवेतार्थम्। सम्प्रदानभूताया देवताया अपि मेधपतित्वमविरुद्धम्। देवताकारेण चैकत्वादग्नित्वसोमत्वाकारेण च द्वित्वात् एकवचनद्विवचने उपपन्ने। तस्माद् देवतानुसारेण मेधपतिशब्दे विकृतावूह इति।

एतदभिप्रेत्याह स्यादिति। 'विकृत्याम्' विकृतियागे—'मेधपतेः'—मेधपतिशब्दस्य—'ऊहनम्' ऊहः—'स्यात्' कर्तव्यः—देवतानुसारेणेति शेषः ॥ १२ ॥

## (१३) ६।३।४१-४२ एकद्विवाची न खलूहितव्यः

( १ ) पूर्वाधिकरणशेषः।

( २ ) नानापशुसम्पत्तिकामस्य बहुदैवत्यः पशुराम्नातः—'यः कामयेत प्रथेय पशुभिः प्रप्रजया जायेय इति स एतामविं वशामादित्येभ्यः कामायालभेत इति [ 'वशा' वन्ध्या--'कामाय' कामुकेभ्यः ]। अत्र पूर्वोदाहृतो मन्त्रश्चोदकेन प्राप्तः।

( ३ ) तत्र संशयः—किं 'मेधपतये' इत्येकवचनान्तः 'मेधपतिभ्याम्' इति द्विवचनान्तो वा शब्दः आदित्यानां बहुत्वात बहुवचनान्तत्वेनोहनीयः उत यथास्थित एव पठनीय इति।

( ४ ) पूर्वपक्षः—बहुवचनान्तत्वेनोहनीयः—यथा मेधपतिभ्यामित्यूह्यते—यथा वा पाश इत्येकवचनान्त ऊह्यते तद्वदेवेति।

( ५ ) सिद्धान्तः—प्रकृतावेकवचनान्तः शब्दोऽग्नीषोमयोर्गणैकत्वं ब्रूते। आदित्यानामपि गणत्वं समानम्। तस्मादनूह इति।

एतदभिप्रेत्याह एकत्वेति। 'एकद्विवाची' एकवचनान्तः 'मेधपतये' इति द्विचनान्तश्च 'मेधपतिभ्याम्' इति शब्दः—'न' 'ऊहितव्यः' बहुवचनान्तत्वेन—द्वादशादित्यदैवते पशाविति शेषः ॥ १३ ॥

## (१४) ९।३ ४३ एकादशिन्यां विकृतिस्तु तस्य।

(१) पूर्वाधिकरणशेषः।

(२) यूपैकादशिन्यां अग्न्यादिदेवताका एकादश पशव आम्नाताः। ते च पशवः स्वनाम्ना अन्यत्राम्नाताः। अत्रापि मेधपतिमन्त्रश्चोदकप्राप्तः।

(३) तत्र सन्देहः—अत्र बहुवचनान्तत्वेनोहो भवत्युत नेति।

(४) पूर्वाधिकरणन्यायेन नोह इति।

(५) सिद्धान्तः—नात्र पूर्वाधिकरणन्यायः प्रवर्तते। तत्रादित्यगणस्य देवतात्वम्—अत्र तु अग्न्यादीनामेकैकस्य पृथगेव देवतात्वम्। तस्मादत्र बहुवचनान्तत्वेनोहः कार्य इति॥ १४॥

न्यायास्तृतीये नवमस्य पादे
चतुर्दशैवात्र सुधीभिरुक्ताः।

स्पष्टम्॥

इति नवमस्य तृतीयः।

# अथ नवमस्य चतुर्थः पादः।

(मन्त्रोहप्रसङ्गपतितविचारपरः)

## (१) ९।४।१-१८ समस्य वङ्क्रयो वाच्याः

(१) मन्त्रोहविचारो वर्तते।

(२) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। तत्राध्रिगुप्रैषे इदमाम्नायते—'षड्विंशतिरस्य वङ्क्रयः ता अनुष्ठ्योच्च्यावयतात्' इति। ['वङ्क्रयः' वक्राणि पार्श्वास्थीनि—तान्यस्य पशोः षड्विंशतिसङ्ख्यकानि—ताश्च वङ्क्रीः 'अनुष्ठ्य' अनुष्ठाय अनुक्रमेण गणयित्वा—'उच्च्यावयतात्' उद्धरतात्-इत्यर्थः]। सोऽयं मन्त्रः चोदकेन द्विपश्वादीन् पशुगणान् प्राप्तः। एकपशुप्रत्युक्तस्य मन्त्रस्य पशुद्वयम्प्रति प्रयोगे ऊहे कर्तव्ये—

(३) संशयः-ऊहस्य किं स्वरूपम्-किं षड्विंशतिरिति पदं द्विरभ्यसनीयमुत षड्विंशतिद्वयं समस्य (मेलयित्वा) मन्त्रः प्रयोक्तव्य इति।

(४) पूर्वपक्षः—प्रकृतावेकस्य पशोः षड्विंशतिः वङ्क्रयः उक्ताः। एवं च पशुद्वये प्रत्येकपशौ षड्विंशतिरिति यदि यथावस्थित एव मन्त्रः प्रयुञ्जीत तर्हि पशुद्वयगताः सर्वा वङ्क्रयो नोक्ताः स्युः। षड्विंशतिद्वयं

सम्मेल्य द्विपञ्चाशदिति प्रयोगे श्रौतः षड्विंशतिशब्दः परित्यक्तः स्यात्। तस्मात् षड्विंशतिशब्दोऽभ्यसनीय इति।

(५) सर्वत्र मुख्यानुसारेण पदान्तराण्यूहनीयानि। सङ्ख्येयानां वंक्रीणां चात्र मुख्यता। तस्मात्तासां इयत्ता समस्य वक्तव्या। तथा च 'द्विपञ्चाशदनयोर्वङ्क्रयः' 'अष्टसप्ततिरेषां वङ्क्रय' इत्यादि पशुद्वित्वत्रित्वाद्यनुसारेण ऊहनीयमिति।

एतदभिप्रेत्याह—'समस्येति। 'वङ्क्रयः' 'समस्य' पशुसङ्ख्यानुसारेण मेलयित्वा यथायोगं सङ्ख्यामूहयित्वा—'वाच्याः' प्रयोज्याः—द्विपश्वादाविति शेषः॥ १॥

## (२) ९।४।१७-२१ समासोऽश्वे विकल्पितः।

(१) ऊहविचारो वर्तते।

(२) अश्वमेधे सन्ति त्रयः सवनीयाः पशवः—'अश्वः—तूपरः—गोमृगः—ते प्राजापत्या' इति। तेष्वश्वस्य चतुस्त्रिंशद्वङ्क्रयः। तथाच मन्त्रः-'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति' इति। तूपरस्य गोमृगस्य च षड्विंशतिरेव। एवं सति अध्रिगुप्रैषे श्रूयते—'न चतुस्त्रिंशदिति ब्रूयात्—षड्विंशतिरित्येव ब्रूयात्' इति। प्रकृतौ चाग्नीषोमीये 'षड्विंशतिवङ्क्रय' इति वचनम्। तच्चात्र चोदकेन प्राप्तम्।

(३) तत्र संशयः—अश्वविषये कथम्प्रयोगः—किं चतुस्त्रिंशदिति विशिष्य प्रयोक्तव्यम् उत तूपरगोमृगाभ्यां समस्य त्रिगुणा षड्विंशतिर्वक्तव्येति (षड्विंशतिरित्येव ब्रूयान्न चतुस्त्रिंशदिति वाक्यानुसारेणाश्वस्यापि वङ्क्रीणां षड्विंशतिरेव सङ्ख्येति कृत्वा) इति।

(४) पूर्वपक्षः—'न चतुस्त्रिंशत्' इति निषेधात् तत्प्रयोगोऽन्याय्यः। तस्मात् 'षड्विंशतिरित्येव ब्रूयात्' इति वचनस्यानुसारेण षड्विंशतिमश्वस्यापि सङ्ख्यां धृत्वा षड्विंशतिसङ्ख्या समस्य त्रिगुणीकर्तव्येति। अथवा 'चतुस्त्रिंशद्वाजिनो देवबन्धोरि'ति वचनबलात् अश्वविषये विशिष्य 'चतुस्त्रिंशत्' इत्येव वक्तव्यमिति।

(५) सिद्धान्तः—चतुस्त्रिंशत्सङ्ख्याग्रहणं अश्ववङ्क्रीणां तत्सङ्ख्यकत्वेन 'चतुस्त्रिंशद्वाजिन' इत्यादि मन्त्रबलेन च प्राप्तम्। तन्निषेधपुरस्सरं षड्विंशतिसङ्ख्याग्रहणञ्च 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति वाक्येन प्राप्तम्। एवमनयोस्तुल्यबलत्वाद् विकल्पः—अश्वविषये 'चतुस्त्रिंशत्' तूपरगोमृगयोस्तु प्रत्येकं षड्विंशतिरित्येव वक्तव्यम्—इत्येकः कल्पः। (२) त्रिष्वपि षड्विंशतिरेवेति षड्विंशतित्रयं समस्य 'अष्टसप्तति'रित्येव वक्तव्यमित्यपरः कल्पः इति।

एतदभिप्रेत्याह समास इति । 'अश्वे'—'समासः' षड्विंशतिरयं समस्य प्रयोगः---'त्रिकल्पितः'—विकल्पेन प्रयोक्तव्यः । षड्विंशतिरयं समस्य वचनमित्येकः कल्पः—अश्वे चतुस्त्रिंशदेव वक्तव्यमित्यपरः इति भावः ॥

[ न्यायमालायामत्राधिकरणद्वयं कृतम् । भाष्यपुस्तकेऽपि तदनुसारेणैव पार्थक्यं दृश्यते । न तु भाष्ये तस्य प्रमाणं लभ्यते । भाष्ये च चरमः सिद्धान्त एवमुक्तः—'तस्मात् समस्य वचनं कर्तव्यम्---ऋचश्च विध्यन्तरेण विहितत्वात् वैशेषिकं वचनम्' इति । इदं चाधिकरणसिद्धान्तोपन्यसनं मण्डनोक्तमेवाधिकरणस्वरूपमुपोद्बलयति ] ॥ २ ॥

## (३) ६।४।२२ वनिष्ठुभावो नोलूके

( १ ) ऊहे प्रासङ्गिको विचारः ।

( २ ) ज्योतिष्टोमीयाग्नीषोमीये पशौ अध्रिगुप्रैषे वचनम्---'वनिष्ठुम् अस्य मा राविष्ट—उरूकं मन्यमानाः' इति ।

( ३ ) तत्र संशयः---उरूकशब्दोऽत्र किमुलूकवचन उत वपावचन इति [ यदि उलूकवचनस्तर्हि अनेकपशावपि विकृतौ यथास्थित एव प्रयोगः । यदि तु वपावचनस्तर्हि पशुसङ्ख्यानुसारिणी वपासङ्ख्येति उरूकमित्यत्र 'उरूके' 'उरूकाणि' इति यथायोगमूहनीयम्भवति ] ।

( ४ ) पूर्वपक्षः—रलयोरभेदादुच्चारणे उरूकशब्द उलूकवचन एव ग्राह्यः । पशोर्वपासमीपवर्ती कश्चिदङ्गविशेषः 'वनिष्ठुः' इति कथ्यते । तस्य उलूकसदृशाकारत्वात्तत्रोलूकभ्रमः सङ्गच्छते । तथाच 'तदुलूकमिति मन्यमानाः वनिष्ठुम् मा राविष्ट—तस्य लवनं मा कुरुत' इति प्रैषस्यार्थः समीचीन इति ।

( ५ ) सिद्धान्तः—पशोः शरीरे वनिष्ठुसन्निधाने वपा वर्तते । अतो वपाभ्रमेण वनिष्ठोर्लवनं सम्भवति—नोलूकपक्षिणः । सम्भवत एव भ्रान्त्या लवनं निषिध्यते । तथा च वपालवनकाले तद्भ्रान्त्या वनिष्ठुमपि मा लावीः इत्यर्थः प्रैषस्य । एवमेव च प्रैषस्य भ्रमनिवारणरूपदृष्टार्थता सम्पद्यते । तस्माद् वपावचन एव उरूकशब्दः । तथाऽनेकपशुषु यथायोगं 'उरूके' 'उरूकानि' इत्यूहनीयमिति ।

एतदभिप्रेत्याह वनिष्ठ्विति । 'उलूके' पक्षिणि—'वनिष्ठुभावः' वनिष्ठुत्वभ्रमः—'न' सम्भवति—तस्मादुरूकशब्दो नोलूकपक्षिवचनोऽपि तु वनिष्ठुसन्निहितवपावचन एवेत्यर्थः ॥ ३ ॥

## (४) ९।४।२३–२४ प्रशंसा बाहुसंस्तुतिः ।

( १ ) ऊहे प्रासङ्गिको विचारः ।

( २ ) अध्रिगुप्रैषे वाक्यान्तरम्—'प्रशसा बाहू कृणुतात् ( कर्तयेत् )' इति ।

( ३ ) तत्र सन्देहः—प्रशसाशब्दस्य कोऽर्थः—किमत्र 'प्रशस्' इति सान्तप्रातिपदिकस्य तृतीयान्तं, रूपम्—'प्रशस्' च खड्गवाचकम्—उत 'प्रशस' इत्यकारान्तप्रातिपदिकस्य द्विवचनान्तं छान्दसं रूपम्—तथा च प्रशस्तौ बाहू इत्यर्थ इति ।

( ४ ) पूर्वपक्षः-'असिं वा शास इत्याचक्षते' इति ब्राह्मणवाक्यबलात् प्रशसाशब्दः असिमेव वक्ति । एवं च असिना बाहू कर्तनीयावित्येवार्थः सम्यक् । एवं च दृष्टार्थस्य लाभात् असिरेव प्रशसाशब्दस्यार्थ इति ।

( ५ ) सिद्धान्तः—शंसु स्तुतावित्यस्माद्धतोः प्रशसाशब्द उत्पन्नः । तत्र प्रशसशब्दस्य च द्विवचनान्तं छान्दसं रूपं प्रशसा इति । तेन प्रशस्तौ इत्यस्यार्थो लभ्यते । प्रकृते च कात्स्न्यर्मेव बाह्वोः प्राशस्त्यम् । एवं च 'प्रशसा बाहू कृणुतात्'इत्यस्य 'निःशेषेण बाहू उद्धर्तव्यौ' इतीदृशो दृष्टार्थो लभ्यते । न चात्र असेः कर्तनसाधनत्वं युक्तम्—स्वधितेरेव तत्साधनत्वेन विहितत्वात् इति ।

एतदभिप्रेत्याह प्रशसेति । 'प्रशसा'इति शब्दः—'बाह्वोः''संस्तुतिः' प्रशंसेत्यर्थः । तथाच पश्वनेकत्वे बाहू इत्यस्य स्थाने बहुवचनान्तत्वाद्यूहनीयमिति भावः ॥ ४ ॥

## (५) ९।४।२५-२७ कृत्स्नोद्धृतौ श्येनवचः ।

( १ ) ऊहप्रसङ्गविचारः ।

( २ ) अध्रिगुप्रैषेऽपरं वचनम्-'श्येनमस्य वक्षः कृणुतात्' इति ।

( ३ ) तत्र संशयः—श्येनशब्दस्यात्र कोऽर्थः- श्येनपक्षिवाचकोऽयमुत कात्स्न्यर्वाचक इति ।

( ४ ) पूर्वपक्षः—'अस्य पशोः वक्षः श्येनं कुर्यात्' इत्यत्र कर्तनाद्युपायेन पक्षचञ्च्वाद्याकारं सम्पाद्य श्येनपक्षिसादृश्यं पशुवक्षसि कर्तव्यतया प्रतीयते-तथासति पशुबहुत्वे श्येनानीति बहुवचनान्तमूहनीयमिति।

( ५ ) सिद्धान्तः—वक्षसि श्येनसादृश्यं स्वभावेनैवास्ति । तस्मात् 'यथा स श्येनाकारो न नश्येत् तथा साकल्येनोद्धरणीयम्' इति साकल्यविवक्षयैव श्येनशब्दः प्रयुज्यते । तथासति हविरविकलं भवति । एवं च सति पशुबहुत्वेऽपि नोहः साकल्यस्य साधारण्यादिति ।

एतदभिप्रेत्याह कृत्स्नेति । कृत्स्नोद्धृतौ सकलस्य वक्षसः उद्धरणं यथा स्यात् तथा कर्तव्यमित्यस्मिन्नेवार्थे-'श्येनवचः' श्येनशब्दप्रयोग इत्यर्थः ॥ ५ ॥

## (६) ६।४।२८ ऽ[अ]ग्निहोत्रार्थोद्धृते याजिः।

(१) प्रासङ्गिको विचारः।

(२) अग्निहोत्रप्रकरणे ज्योतिष्मतीष्टिरूपं प्रायश्चित्तमग्निशमननिमित्तकमाम्नायते—अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेत्-यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्रे उद्वायेत्' इति। प्रतिदिनमग्निहोत्रं होतुं गार्हपत्यादुद्धृत्याग्निराहवनीये प्रक्षिप्यते—सोऽयमुद्धृतोऽग्निः कदाचिदग्निहोत्रहवनात् प्रागेव यदि शाम्येत् तदानीमियमिष्टिः प्रायश्चित्तम्' इत्यस्यार्थः।

(३) तत्र संशयः—दर्शयागार्थं गार्हपत्याद् उद्धृतोऽग्निर्यदि शाम्येत्तदाऽपीयमिष्टिः कर्तव्योत नेति।

(४) पूर्वपक्षः—अग्न्युद्वानमेव प्रायश्चितस्य निमित्तम्। तस्य अत्रापि सत्त्वात् कर्तव्येयमिष्टिरिति।

(५) सिद्धान्तः—अग्निहोत्रोद्धृतस्यैवाग्नेरुद्वानं प्रायश्चित्तस्य निमित्तमिति प्रकरणादवगम्यते। अनया चेष्ट्या योऽग्निरुत्पाद्यते सोऽग्निहोत्रायैव भवति। तथासत्यग्निहोत्रस्यैवेयमिष्टिः सामवायिकमङ्गम्भवति। अतोऽग्निहोत्रार्थमुद्धृतस्यैवाग्नेरुद्वानस्य प्रायश्चित्तनिमित्तस्याभावात् दर्शार्थोद्धृतस्योद्वाने न प्राप्नोतीयमिष्टिरिति।

एतदभिप्रेत्याह अग्नीति। 'अग्निहोत्रार्थोद्धृते' अग्निहोत्रार्थमुद्धृतो योऽग्निस्तस्यैव उद्वाने—'यजिः' ज्योतिष्मतीष्टिः—कर्तव्या—न तु दर्शाद्यर्थमुद्धृतस्याग्नेरुद्वाने इत्याशयः॥ ६॥

## (७) ६।४।२९-३० नेष्टिर्धार्याग्निशमने।

(१) पूर्वाधिकरणशेषः।

(२) इदमाम्नायते—'धार्यो गतश्रियः आहवनीय' इति। गतश्रीशब्दश्चोक्तः—'त्रयो ह वै गतश्रियः—ब्राह्मणः शुश्रुवान्, ग्रामणीः, राजन्य' इति। एतेष्वन्यतमेनाहवनीयोग्निर्धार्य इति वाक्यार्थः।

(३) तत्र संशयः—गतश्रीभिः धार्यमाणस्याग्नेर्यदोद्वानं तदा ज्योतिष्मतीष्टिर्निर्वपनीयोत नेति।

(४) पूर्वपक्षः—गतश्रीधार्यमाण आहवनीयोऽग्निः—सर्वकर्मार्थः। एवं च सोग्निहोत्रार्थोऽपि भवेदेव। तस्मात् तस्योद्वाने पूर्वाधिकरणन्यायेन प्रायश्चित्तेष्टिः प्राप्तेति।

(५) सिद्धान्तः—न ह्याहवनीयस्य धारणेऽग्निहोत्रं निमित्तम्। एवं धार्यमाणस्याग्नेः सर्वकर्मार्थताऽपि न शक्यतेऽध्यवसितुम्। तथा चास्योद्वानं न प्रायश्चित्तस्य निमित्तम्भवति। केवलमग्निहोत्रार्थमुद्धृतस्योद्वानं तन्निमित्तमिति स्थितम्। नचात्र तदस्ति। तस्मात् निमित्ताभावात्

नास्ति प्रायश्चित्तेष्टिर्धार्याग्न्युपशमे इति ।

एतदभिप्रेत्याह–नेष्टिरिति । 'धार्यस्य' गतश्रीभिर्धार्यमाणस्य अग्नेः–'गमने' उद्वाने–'इष्टिः' प्रायश्चित्तरूपा ज्योतिष्मतीष्टिः—'न'—कर्तव्येति शेषः ॥ ७ ॥

## (८) ६।४।३१ मन्त्रो दर्शोद्धृते न च ।

( १ ) प्रासङ्गिको विचारः ।

( २ ) अग्निहोत्रे अग्न्युद्धरणमन्त्र आम्नातः—'वाचा त्वा होत्रा, प्राणेनोद्गात्रा, चक्षुषाऽध्वर्युणा, मनसा ब्रह्मणा, श्रोत्रेणाग्नीधा–एतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि' इति ।

( ३ ) तत्र सन्देहः—यदा दर्शार्थमग्निरुद्ध्रियते तदाऽप्ययं मन्त्रः पठनीय उत नेति ।

( ४ ) पूर्वपक्षः—दर्शपूर्णमासार्थं योऽग्निरुद्ध्रियते तस्मिन्नग्नौ दर्शदिने सायं प्रतिपदि प्रातश्चाग्निहोत्रमनुष्ठीयते । एवं च तस्याप्यग्निहोत्रार्थता । तथाच तत्रापि मन्त्रपाठः प्राप्त एवेति ।

( ५ ) सिद्धान्तः–दर्शदिनेऽपि प्रातरग्निहोत्रहवनानन्तरमेव दर्शार्थमग्न्युद्धरणमन्वाधानं च क्रियते । अतो दर्शार्थोद्धरणकाले अग्निहोत्रार्थोद्धरणरूपनिमित्तस्याभावात् नास्ति नैमित्तिको मन्त्रपाठ इति ।

एतदभिप्रेत्याह मन्त्र इति । 'दर्शोद्धृते' दर्शार्थमग्न्युद्धरणे–'मन्त्रः' 'च' 'न' पठनीयः । यथा तदुद्वाने प्रायश्चित्तेष्टिर्न भवति तथैव तदुद्धरणे मन्त्रपाठोऽपि न भवतीति चकारार्थः ॥ ८ ॥

## (९) ६।४।३२–४० नादित्ये पयसो धर्माः ।

( १ ) प्रासङ्गिको विचारः ।

( २ ) ज्योतिष्टोमे श्रूयते–'आदित्यः प्रायणीयः पयसि चरुः' इति ।

( ३ ) तत्र संशयः—प्रदेयद्रव्यस्य ये धर्माः समन्त्रकत्वादयस्ते यथा चरौ तथा पयस्यपि–उत नेति ।

( ४ ) पूर्वपक्षः—यथा चरोस्तथा पयसोऽप्यस्ति देवतासम्बन्धः । ततश्च उभयोरपि प्रदेयद्रव्यत्वं समानम् । तस्माद् यथा चरौ निर्वापावघातादयः समन्त्रकाः प्रदेयधर्मा अनुष्ठीयन्ते तथैव पयस्यप्यनुष्ठेया इति ।

( ५ ) सिद्धान्तः–उदाहृते वाक्ये पयसीत्यत्र सप्तम्या पयः श्रपणाधाररूपेणोक्तम् न प्रदेयरूपेण । तस्मान्न तत्र प्रदेयधर्माः ।

एतदभिप्रेत्याह नेति । 'आदित्ये' आदित्यदैवते चरौ निरुप्तव्ये–'पयसः' चरुश्रपणार्थं यत् पयः तस्मिन्–'धर्माः' प्रदेयद्रव्यधर्माः–'न'–अनुष्ठेया इति शेषः ॥ ९ ॥

## (१०) ६।४।४१-४२ ते स्युरभ्युदये पुनः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्त्यभ्युदयेष्टिः । तत्रोक्तम्-'ये स्थविष्ठास्तानिन्द्राय दधनि चरुम्-येऽणिष्ठाः तान् विष्णवे शृते चरुम्' इति [अधिकञ्चास्या इष्टेः स्वरूपं षष्ठीयपञ्चमपादप्रथमाधिकरणे द्रष्टव्यम् ]।

( ३ ) तत्र सन्देहः—अत्रोक्तयोर्दधिशृतयोः प्रदेयद्रव्यधर्मा अनुष्ठेया उत नेति ।

( ४ ) पूर्वपक्षः—अत्राप्युभयत्र सप्तमीनिर्देशात् पूर्वाधिकरणन्यायेन नैवानुष्ठेया धर्मा इति ।

( ५ ) सिद्धान्तः—पूर्वाधिकरणवाक्ये पयसः प्रदेयत्वन्न श्रुतमपि त्वाधारत्वमेव । अत्र तु यथा तण्डुलानां प्रदेयत्वं तथैव दधिशृतयोरपि श्रूयते । तस्मात् प्रवृत्तयोरनयोः प्रदेयधर्माः कर्तव्या इति ।

एतदभिप्रेत्याह—'अभ्युदये' अभ्युदयेष्टौ-'पुनः' तु-'ते' प्रदेयद्रव्यधर्माः—'स्युः'—अनुष्ठेया इति शेषः ॥ १० ॥

## (११) ६।४।४३-४४ न ते स्युः पशुकामेष्टौ

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्ति पशुकामेष्टिः—'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्' इति । तत्रैव पुनराम्नातम्—'ये मध्यमाः स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्—ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुम्—येऽअणिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति ।

( ३ ) तत्र संशयः—अत्र दधिशृतयोर्देयधर्मा अनुष्ठेया उत नेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन अनुष्ठेया इति ।

( ५ ) सिद्धान्तः—नास्त्यत्राभ्युदयेष्टिसाम्यम्-पाठसाम्येऽप्यपूर्वकर्तृत्वादर्थसाम्याभावात् । तस्माद् दशमाधिकरणन्यायोऽत्र प्रवर्तते । तथाच श्रयणाधारत्वाद् दधिशृतयोस्तत्र नैवानुष्ठेया देयधर्मा इति ।

एतदभिप्रेत्याह नेति । 'ते' देयधर्माः—'पशुकामेष्टौ'—'न' 'स्युः'—अनुष्ठेया इति ॥ ११ ॥

## (१२) ६।४।४५-५० श्रयणं स्यादधर्मकम् ।

( १ ) प्रासङ्गिको विचारो वर्तते ।

( २ ) ज्योतिष्टोमे पयःप्रभृतिभिर्द्रव्यैर्ग्रहपात्रनिष्ठस्य सोमस्य मिश्रणमाम्नातम्—'पयसा मैत्रावरुणं श्रीणाति—सक्तुभिर्मन्थिनम्—'

धानाभिर्हारियोजनम्--हिरण्येन शुक्रम्--आज्येन पात्नीवतम्' इति। ['श्रयणं' मिश्रणम्]।

(३) तत्र संशयः--अत्रोक्तश्रयणार्थे पयआदौ देयधर्मा अनुष्ठेया उत नेति।

(४) पूर्वपक्षः--यदत्र सोमेन मिश्रणं तत् सहप्रदानार्थमेव। तस्मात् प्रदेये सोमे ये क्रयादयो धर्मा अनुष्ठीयन्ते ते पयःप्रभृतिषु कर्तव्या इति।

(५) सिद्धान्तः--मिश्रणं हि सोमसंस्कारार्थम्। मैत्रावरुणमित्यादौ सोमस्य प्राधान्यं गम्यते--पयसेत्यादौ च पयःप्रभृतीनां तदर्थत्वम्। संस्कारकद्रव्यस्य च न प्रदेयता। तस्मात् प्रदेयधर्मास्तत्र नानुष्ठेया इति।

एतदभिप्रेत्याह श्रयणमिति। 'श्रयणं' पयःप्रभृतिभिः सोमस्य मिश्रणम्--'अधर्मकम्' पयःप्रभृतिषु देयधर्मानुष्ठानवर्जितम्--'स्यात्' इति सम्बन्धः॥ १२॥

## (१३) ६।४।५१-५५ शेषो निषिद्ध उत्सर्गे

(१) प्रासङ्गिको विचारः।

(२) अश्वमेधे श्रूयते—'ईशानाय परस्वत आलभेत' इति--['परस्वतः' आरण्यानित्यर्थः]-तत्प्रकृत्य पुनः श्रूयते--'पर्यग्निकृतानारण्यान् उत्सृजन्ति' इति।

(३) तत्र संशयः--किं परस्वताम् (आरण्यानाम्) आलम्भः उत्सर्गार्थ एव--अनुष्ठेयं कर्म च द्रव्योत्सर्गमात्रम्--उत कर्मशेषप्रतिषेधार्थं वाक्यं--पर्यग्निसंस्कृता उत्स्रष्टव्या इतरे आलम्भनीयाः (यागे प्रदेयाः) इति।

(४) पूर्वपक्षः--पर्यग्निकृतानाम्पशूनामुत्सर्गविधानात् उत्सर्गार्थ एवालम्भः। तथा चालम्भोऽत्र स्पर्शमात्रम्। इतरथा उत्सर्गासम्भव इति।

(५) सिद्धान्तः--'ईशानाय' इति देवताविशेषनिर्देशः श्रूयते--'परस्वत' इति च द्रव्यस्य। न च यागे प्रदानमन्तरेण द्रव्यदेवतयोः सम्बन्धः सम्भवति। पर्यग्निकृतानामेव चोत्सर्गो विधीयते न सर्वेषाम्। तस्मात् पर्यग्निसंस्कृतानुत्सृज्य इतरेषामालम्भनं कर्तव्यम्, आलम्भनेन चात्र यागे प्रदानमेव विवक्षितमिति।

एतदभिप्रेत्याह शेष इति। 'उत्सर्गे' पर्यग्निकृतानुत्सृजतीत्यनेन वाक्येन विहिते—'शेषः' ईशानाय प्रदाय तदनन्तरं ये पशवोऽवशिष्यन्ते तेषु परिशिष्टानामङ्गानामनुष्ठानम् 'निषिद्धः' प्रतिषिद्धः। तथा च

ईशानाय प्रदाय अवशिष्टाः पशव उत्स्रष्टव्या इति सङ्कलितोऽर्थः पर्य-वस्यति ॥ १३ ॥

(१४) ९।४।५६-६० संस्थाज्येन पृथग् यजिः ।

( १ ) प्रासङ्गिको विचारः पूर्वविचारसदृशः ।

( २ ) 'त्वाष्ट्रम् पात्नीवतमालभेत' इति प्रकृत्य 'पर्यग्निकृतं पात्नी-वतमुत्सृजति' इति श्रुतम्—तत्र पुनः श्रूयते—'आज्येन शेषं संस्था-पयति' इति ।

( ३ ) तत्र संशयः-किमाज्यं पूर्वस्मिन् कर्मण्येवोपात्तस्य पशुद्रव्य-स्य प्रतिनिधीभूतम् उत पूर्वस्मात् कर्मणो भिन्नमेव कर्म आज्यद्रव्यकं विधीयते इति ।

( ४ ) पूर्वपक्षः—पशुद्रव्यस्य प्रतिनिधिराज्यम् । उत्सर्गशेषसंस्था-पनशब्दैरेवमेवावगमात् । पर्यग्निकरणादूर्ध्वं त्यागमभिधाय—आज्येने-ति द्रव्यान्तरं पशुस्थानीयमुपदिश्य—उत्तरकालीनमङ्गजातं तेनैव द्रव्येण समापनीयमिति विध्यर्थ इति ।

( ५ ) सिद्धान्तः—पूर्वाधिकरणन्यायेन अङ्गरीत्या पात्नीवतः पशुः समाप्तः । एवं च पशुद्रव्यके यागे मुख्येनैव पशुना समापिते नास्ति प्रति-निध्युपादानस्यावसरः । तस्मादाज्यवाक्येन कर्मान्तरमेव विधीयते—तस्य देवता च पात्नीवतशब्दस्यानुवृत्त्या लभ्यते । 'शेषम्' इति च कर्मान्तस्य शेषत्वं यदुक्तं तत्सादृश्यात् समनन्तरभावित्वाच्चोपचर्यते कर्मान्तरेऽपि । तस्मात् आज्यद्रव्यकं पात्नीवतदेवताकं पशुयागसमन-न्तरभाविकर्मान्तरं विधीयते इति ।

एतदभिप्रेत्याह—संस्थेति । 'संस्थाज्येन' आज्येन शेषं संस्थापय-तीत्यत्र विहितेन आज्येन—यो 'यजिः' यागः कर्तव्यतया विधीयते स—'पृथक्'—पात्नीवतात् पशुयागाद् भिन्न एवेत्यर्थः ॥ १४ ॥

पादे चतुर्दश न्याया भाष्यकारेण वर्णिताः ।

स्पष्टम् ॥

इति नवमस्य चतुर्थः ।

---

## इति नवमाध्यायः ।

# अथ दशमाध्यायः ।

[ बाधनिरूपकः ]

## तत्र प्रथमः पादः

[ द्वारलोपरूपबाधहेतुनिरूपणपरः ]

### (१) १०।१।१-३ लुप्तार्थकं यत् विकृतौ न तत् स्यात्

( १ ) अतिदिष्टपदार्थस्य रूपान्तरकरणमूहनम्—तद् वृत्तम् । अतिदिष्टपदार्थस्य यत् निवर्तनं तद् बाधः । स एवेदानीं चिन्त्यते ।

( २ ) 'प्रकृतिवद् विकृतिः कर्तव्या' इति सामान्यतोऽतिदेशनियमः ।

( ३ ) तत्र संशयः—किं सर्वं प्राकृतं विकृतौ कर्तव्यम्-उत किञ्चिद् बाध्यते इति ।

( ४ ) पूर्वपक्षः—यच्च यावच्च प्राकृतं धर्मजातं तत् सर्वं विकृतौ कर्तव्यम्—यत् लुप्तप्रयोजनं यच्चालुप्तप्रयोजनम् । चोदकेन हि सर्वमेतत् प्राप्यते इति ।

( ५ ) सिद्धान्तः—यस्याङ्गस्य विकृतौ प्रयोजनं नास्ति तादृशस्याङ्गस्य विकृतावनुष्ठानं न भवति । प्रकृतौ सप्रयोजनानां विकृतौ चाप्रयोजनानां विकृतावन्वयो न सम्भवति । एवं च प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतावनुष्ठीयन्ते—असति तस्मिन् प्रयोजने विकृतौ तानि न चोदितानि भवन्ति—अतो नानुष्ठेयानीति ।

एतदभिप्रेत्याह लुप्तेति । 'यत्' प्राकृतम् 'अङ्गम्—'लुप्तार्थकं' लुप्तम् अवर्तमानम् 'अर्थः' प्रयोजनं यस्य तदेवम्भूतं—'तत्' अङ्गम्—'विकृतौ' 'न' 'स्याद्'—अनुष्ठेयमिति शेषः ॥ १ ॥

### (२) १०।१।१-३ (द्वितीयवर्णकम् ) न कृष्णले स्यादवघातकर्म

( १ ) यत् लुप्तार्थकमङ्गम्प्राकृतं तद्विकृतौ नानुष्ठेयमिति सामान्यतोऽवगतम् । तत्रैव विशेषाश्चिन्त्यन्ते ।

( २ ) काम्येष्टिकाण्डे पठ्यते—'प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति । प्रकृतौ च चरुद्रव्यस्य व्रीहेरवघातो विहितः ।

(३) तत्र संशयः—प्राकृतस्याङ्गस्यावघातः कृष्णले कर्तव्य उत नेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तस्यावघातस्य परित्यागे मानाभावादनुष्ठेय एवावघात इति ।

( ५ ) सिद्धान्तः—वितुषीकरणमेवावघातस्य प्रयोजनम् । कृष्णलेषु तुषस्याभावात् नास्ति प्रयोजनमवघातस्य । तस्मात्पूर्वाधिकरणन्यायेन लुप्तार्थोऽवघातो विकृतौ न कर्तव्य इति ।

एतदभिप्रेत्याह नेति । 'कृष्णले' सुवर्णखण्डे—'अवघातकर्म' प्राकृतो धर्मोऽवहननरूपश्चोदकप्राप्तः—'न स्यात्'—अनुष्ठेयमिति शेषः ॥२॥

## (३) १०।१।१-३ (तृतीयवर्णकम्) नावाहनं कार्यमुरुक्रमस्य

( १ ) बाधविशेषोदाहरणं वर्तते ।

( २ ) काम्येष्टिषु श्रूयते—'वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान्—तं बर्हिपदं कृत्वा शम्यया स्फ्येन व्यूहेत्—इदमहममुं चामुं च व्यूहामि इति—यं द्विष्यात् तं ध्यायन्—यदधो विमृज्येद् यच्च स्फ्ये आश्लिष्येत् तद्विष्णवे उरुक्रमाय अवद्येत्' इति । वैश्वदेविकतन्त्रमध्ये च सामिधेनीप्रयाजयोर्मध्ये वैश्वदेवरूपदेवताह्वानाय निगदः पठ्यते । यद् हविषो भूमितलाश्लेषरूपं विष्णुयागस्य निमित्तं प्रोक्तं तत् तस्मिन् काले न प्राप्तम् । तस्य तदानीं सम्भविष्यमाणत्वात् । एवं सति—

( ३ ) संशयः—प्राकृतं देवताह्वानमत्र कर्तव्यमुत नेति ।

( ४ ) पूर्वपक्षः—चोदकेन प्राप्तस्य देवताह्वानस्य परित्यागे मानाभावात् कर्तव्यमनुष्ठानम् । आवाहनं विना देवतया हविःस्वीकारस्यासम्भवात् कालविशेषेऽप्रसक्तोऽपि विष्णुराह्वयितव्य इति ।

( ५ ) सिद्धान्तः—अकाले कृतमकृतमिति न्यायेन निमित्ताभावे नैमित्तिकानुष्ठानमन्याय्यम् । विष्णोराह्वानानन्तरं यदि उक्तं भूमिपतनाश्लेषादिनिमित्तं नापतति तदा विष्णुयागो नानुष्ठीयते । एवमवस्थायां विष्णोराह्वानं वृथैव कृतं स्यात्—देवता चातृप्तः क्रुध्येत् । यदि विनाप्यावाहनं यागः क्रियेत—न काऽपि हानिः । तस्मान्न कर्तव्यं विष्णोरावाहनम् इति ।

एतदभिप्रेत्याह नेति । 'उरुक्रमस्य' विष्णोः—'आवाहनम्' प्रकृतिप्राप्तम्—'न कार्यम्' इति ॥ ३ ॥

## (४) १०।१।४ नारम्भणीयेति च दीक्षणीये ।

( १ ) बाधोदाहरणम् ।

( २ ) दर्शपूर्णमासयोरारप्स्यमानपुरुषसंस्कारकतया आरम्भणीयेष्टिराम्नाता—'अग्नावैष्णवमेकादशकपालं निर्वपेद् दर्शपूर्णमासावारप्स्यमान' इति । सन्ति च दीक्षणीयादयो दर्शपूर्णमासविकृतयः सोमयागस्याङ्गानि ।

( ३ ) तत्र संशयः--दीक्षणीयादयो यदा सोमयागाङ्गतयाऽनुष्ठीयन्ते तदा आरम्भणीयेष्टिरनुष्ठेया उत नेति ।

( ४ ) पूर्वपक्षः--चोदकप्राप्तस्य प्राकृतस्य धर्मस्य विकृतिषु परित्यागे मानाभावात् सोमयागाङ्गभूतास्वपि दीक्षणीयाद्यास्वनुष्ठेया आरम्भणीयेष्टिरिति ।

( ५ ) सिद्धान्तः—सोमयागसम्बन्धेन क्रियमाणा आरम्भणीयेष्टिः कस्य संस्कारः स्यात्—किं सोमयागमारप्स्यमानस्य उत दीक्षणीयाद्यारप्स्यमानस्य । नाद्यः सोमयागस्य दर्शपूर्णमासविकृतत्वाभावेन सोमयागमारप्स्यमानस्य चोदकेनारम्भणीया नैव प्राप्ता । नापि दीक्षणीयाद्यारप्स्यमानस्य, अङ्गानां पृथगारम्भासम्भवात् । तस्मात् आरम्भाख्यद्वारलोपात् आरम्भणीयाऽपि लुप्यत एवेति ।

एतदभिप्रेत्याह नेति । 'दीक्षणीये' सोमयागाङ्गभूतदीक्षणीयायागे—'आरम्भणीया इति' आरम्भणीयानाम्नाख्याता या इष्टिः सा—'न'—कार्येति शेषः ॥ ४ ॥

## (५) १०।१।५ न राजसूयेष्टिषु सा च कार्या

( १ ) बाधोदाहरणम् ।

( २ ) राजसूयेऽपि दर्शपूर्णमासविकृतयोऽनुमत्यादय इष्टयो विहिताः—'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' इत्यादिना ।

( ३ ) तत्र संशयः—एतासु अनुमत्याद्यासु आरम्भणीया भवति न वेति ।

( ४ ) पूर्वपक्षः—अनुमत्यादयो न कस्याप्यङ्गत्वेनाम्नाताः । तथाच तेषां स्वतन्त्रारम्भसम्भवे नास्ति दीक्षणीयादिवद् बाधकं किञ्चित् । तस्मादस्त्यारम्भणीयेति ।

( ५ ) सिद्धान्तः—यद्यप्यङ्गिभूता अनुमत्यादयस्तथाऽपि एकैकस्या इष्टेः पृथगारम्भो नास्ति । तस्मादारम्भरूपद्वारस्य लोपात् नास्त्यारम्भणीयेति ।

एतदभिप्रेत्याह नेति । 'राजसूयेष्टिषु' राजसूयसम्बन्धेन या अनुमत्यादय इष्टयः क्रियन्ते तासु—'च''सा' आरम्भणीयेष्टिः—'न कार्या' इति सम्बन्धः ॥ ५५ ॥

## (६) १०।१।६–८ स्वारम्भकाले न च तामकुर्यात् ।

( १ ) बाधोदाहरणम् ।

( २ ) येयमारम्भणीयेष्टिः साऽपि दर्शपूर्णमासविकृतिः ।

( ३ ) तत्र संशयः—दर्शपूर्णमासयोरिव तस्यामप्यारभ्यमानपुरुष-संस्काराय आरम्भणीयाऽनुष्ठेया न वेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तस्य परित्यागे मानाभावादारम्भणीया-या आरम्भेऽन्या आरम्भणीया अनुष्ठेयेति ।

( ५ ) सिद्धान्तः—अङ्गभूता हि आरम्भणीया दर्शपूर्णमासयोः । अङ्गस्य च प्रधानारम्भेनैवारम्भसिद्धिः । तस्मादारम्भणीयायामन्या आ-रम्भणीया नास्तीति ।

एतदभिप्रेत्याह स्वेति । 'स्वस्य' आरम्भणीयाया 'आरम्भकाले'—'च' ताम् आरम्भणीयाम् अन्याम्—'न कुर्यात्' इति सम्बन्धः ॥ ६ ॥

## (७) १०।१।९ यूपाहुतिर्नास्ति खलस्य मेढौ

( १ ) बाधोदाहरणम् ।

( २ ) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्र यूपाहुतिरस्ति । अस्ति च ज्योतिष्टोमविकृतिः साद्यस्कयागः—तत्रापि पशवः साद्य-स्काः—तत्र समाम्नायते—'खलेवाली यूपो भवति' इति [ 'खले' बली-वर्दबन्धनाय निखातो मेढिः'खलेवाली' ] ।

( ३ ) तत्र संशयः—साद्यस्के खलेवाल्यां यूपाहुतिः कार्या न वेति ।

( ४ ) पूर्वपक्षः—प्रकृतितश्चोदकेन प्राप्ता यूपाहुतिः यूपस्थानीयायां खलेवाल्यां कर्तव्येति ।

( ५ ) सिद्धान्तः—यूपे यो होमः क्रियते स काष्ठविशेषं शास्त्रीयच्छे-दनादिभिर्यूपीकर्तुमेव शास्त्रीयच्छेदनयोग्यतायै अनुष्ठीयते । न च खले-वाल्या शास्त्रीयं छेदनमस्ति—पूर्वमेव छिन्नस्य काष्ठस्य खले निखात-त्वात् । तस्माच्छेदनरूपद्वारलोपात् नास्ति यूपाहुतिरिति ।

एतदभिप्रेत्याह यूपेति । 'खलस्य' शस्यानामेकत्रीकरणोत्पवनादि कर्तुं यत् स्थलं सम्पाद्यते तस्य—'मेढौ' निखाते काष्ठदण्डे खलेवालीना-म्ना प्रसिद्धे—'यूपाहुतिः' यूपकाष्ठसंस्कारार्थं ज्योतिष्टोमे या क्रियते सा-'नास्ति'—अनुष्ठेयेति शेषः ॥ ७ ॥

## (८) १०।१।१०-१३ स्थाण्वाहुतिश्चापि न तत्र कार्या ।

( १ ) बाधोदाहरणम् ।

( २ ) अग्नीषोमीययूपप्रकरणेऽस्ति स्थाण्वाहुतिः । यूपकाष्ठे छिन्ने सत्यवशिष्टो यो वृक्षमूलभागः स एव 'स्थाणुः' तस्मिन् आहुतिवि-शेषः श्रुतः ।

( ३ ) तत्र संशयः—इयं स्थाण्वाहुतिः खलेवाल्यां भवति न वेति ।

( ४ ) पूर्वपक्षः—स्थाणुमुपजीव्य स्थाण्वाहुतिर्विहिता । खलेवाल्या अपि स्थाणुत्वात् तस्यां सा आहुतिः कार्येति ।

( ५ ) सिद्धान्तः—स्थाण्वाहुतिवाक्ये 'आव्रश्चने जुहोति' इति श्रूयते । तेन व्रश्चनानन्तरं योऽवशिष्टो भागस्तत्रैव स्थाणुभूते आहुतिर्विधीयते—न तु स्थाणुमात्रे । ततश्चेयमाहुतिर्यूपसंस्काराय भवति । एवं च यूपसंस्कारार्थेयमाहुतिः अयूपात्मिकायां खलेवाल्यां नैव क्रियत इति ।

एतदभिप्रेत्याह—स्थाण्विति । 'तत्र' खलेवाल्याम्—'स्थाण्वाहुतिः च अपि' 'न कार्या' नानुष्ठेयेति सम्बन्धः ॥ ८ ॥

## (६) १०।१।१४–१५ संस्कारकर्मोत्तमकः प्रयाजः

( १ ) बाधविचारशेषभूता चिन्ता ।

( २ ) दर्शपूर्णमासयोरुत्तमः प्रयाज आम्नायते—'स्वाहाकारं यजति' इति ।

( ३ ) तत्र संशयः—किमयं प्रयाजः इष्टेरारादुपकारकः—उत आज्यभागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारक इति ।

( ४ ) पूर्वपक्षः—स्वाहाकारशब्देन देवतोच्यते यजत्योक्तस्य यागस्य तदाकाङ्क्षणात् । एवं च स्वाहाकाराख्यदेवतायै अनुष्ठितोऽयं प्रयाजः इष्टेरेवारादुपकारक इति ।

( ५ ) सिद्धान्तः—चतुर्थ्या तद्धितेन वा प्रायः सर्वत्र देवता विधीयते । न चात्र तौ विद्येते । न चेदं वाक्यं यागं देवतां च विधत्ते—तथा सति वाक्यभेदः स्यात् । न च देवताविशिष्टं यागम्—गौरवप्रसङ्गात् । न च देवतामात्रम्—अप्राप्तस्य यागस्यानुवाद्यत्वासम्भवात् । तस्माद् यागमात्रमत्र विधीयते इत्येव स्वीकार्यम् । एवं च स्वाहाकारमिति पदं कर्मनामधेयमेव । एतन्नामकं च कर्म उत्तमप्रयाजरूपं आज्यभागादिदेवतानामग्न्यादीनां संस्कारकम् इत्यभ्युपेयमिति ।

एतदभिप्रेत्याह संस्कारेति । 'उत्तमकः' पञ्चमः—'प्रयाजः'—'संस्कारकर्म' आज्यभागादिदेवतानां संस्कारकं कर्मेति भावः । एवं च सति विप्रतिपन्नदेवताकासु सौर्यादिविकृतिषु उत्तमप्रयाजमन्त्रे प्राकृतदेवतावाचिनाम् अग्न्यादिपदानां बाधो भवतीति ध्येयम् ॥ ९ ॥

## (१०) १०।१।१६–१८ न देवतासंस्करणाय यागः ।

[ 'न त्वाज्यभागः स्मरणाय यागः' इति पाठान्तरम् । ]

( १ ) बाधापवादः ।

( २ ) दर्शपूर्णमासयोराम्नायते—'आज्यभागौ अग्नीषोमाभ्यां यजति' इति । तत्र प्रथम आग्नेयो द्वितीयः सौम्यः ।

( ३ ) तत्र सन्देहः—योऽयमग्नये आज्यभागः स किं पुरोडाशदेवताभूतस्य अग्नेः संस्कारकः—उत दर्शपूर्णमासेष्टेराराद्दुपकारक इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन प्रधानदेवतासंस्कारक एवेति ।

( ५ ) सिद्धान्तः—आज्यभागविधौ हि अग्नीषोमरूपं देवताद्वयं समस्तेनैकेन पदेनोच्यते । एवं च सोमस्येवाग्नेरपि यागगुणत्वम् । ततश्च न संस्कार्यत्वम्—प्रधानस्यैव संस्कारसम्भवात् । तस्मात् संस्कारकत्वाभावात् प्रथमाज्यभाग इष्टेराराद्दुपकारक इत्येवाभ्युपगन्तव्यमिति।

एतदभिप्रेत्याह नेति । 'यागः' आज्यभागरूपः—'देवतायाः' प्रधानदेवताया अग्नेः-'संस्करणाय'—न क्रियते इति शेषः-अपि तु प्रधानयागस्याराद्दुपकारकतयैवेत्याशयः । एवं च सति सौर्ययागेऽपि प्रथमाज्यभागे न भवत्यग्नेर्बाध इति ध्येयम् ॥

पाठान्तरे त्वेवं योजनीयम्-'आज्यभागः' 'यागः' 'न' 'स्मरणाय' संस्कार्यत्वेन देवतां स्मारयितुं न प्रभवतीति ॥ १० ॥

## (११) १०।१।१६-३३ पशोः पुरोडाश उपस्करोति

( १ ) बाधोदाहरणम् ।

( २ ) ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशौ श्रूयते-'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति ।

( ३ ) तत्र सन्देहः—पशावुक्तः पुरोडाशः किम्पशोराराद्दुपकारकः-उत पशुदेवतासंस्कारक इति ।

( ४ ) पूर्वपक्षः—'अग्नीषोमीयं पशुमालभेत' इत्यत्र पशुविधौ तद्धितेनाग्नीषोमदेवता यथा गुणत्वेन पशौ विधीयते-तथा पशुपुरोडाशेऽपि । तथा सति विधिभेदेन विधेयदेवताभेदात् संस्कारो न युक्तः । तस्मात् पशोराराद्दुपकारकः पुरोडाश इति ।

( ५ ) सिद्धान्तः—पशुवाक्ये गुणत्वेन प्रतीयमानाऽपि देवता पुरोडाशवाक्ये प्रधानत्वेनावगम्यते । प्रधानस्य च संस्कार्यत्वमविरुद्धम् । तस्मात् पशुदेवतासंस्कारकः पुरोडाश इति ॥

एतदभिप्रेत्याह पशाविति । 'पुरोडाशः' एकादशकपालः—'पशोः' पशुदेवतायाः-'उपस्करोति' संस्करोतीति सम्बन्धः । एवं च सति अग्नीषोमीयपशुविकृतौ वायव्यपशौ अग्नीषोमीयदेवतायां बाधितायां तदीयपशुपुरोडाशेऽपि सा बाधिता भवतीति ध्येयम् ॥ ११ ॥

## (१२) १०।१।३४-४४ सौर्ये हविः स्याच्चरुरोदनस्तु ।

( १ ) बाधे प्रासङ्गिको विचारः ।

( २ ) 'सौर्यं चरुं निर्वपेत्' इत्यादौ—

( ३ ) संशयः—चरुशब्दः किं स्थालीं वक्ति उत ओदनमिति।

( ४ ) पूर्वपक्षः—सर्वत्र देशे चरुशब्दः ताम्रादिमये पाकपात्रे प्रयुज्यते। हविर्विकृतित्वाभावे स्थाल्याः कपालविकृतित्वमस्त्येव। तस्मात् चरुशब्दः स्थालीमेव वक्तीति।

( ५ ) सिद्धान्तः—अन्नमेव चरुशब्देनोच्यते। 'आदित्यः प्रायणीयश्चरुः' इति तद्वाक्यशेषे श्रूयते—'अदितिमोदनेन' इत्यत्र श्रुतौ ओदनशब्देन चरुरनूद्यते। विद्वांसश्च उष्णपक्वे तण्डुले विशदसिद्धे ओदने एव चरुशब्दं प्रयुञ्जते। ओदनवाचित्वे सत्येव च सौर्यमित्यत्र तद्धितोऽप्युपपद्यते। तस्मात् चरुशब्द ओदनवाचीति।

एतदभिप्रेत्याह सौर्ये इति। 'सौर्ये' सौर्ययागे-यत् 'हविः' 'चरुः' इति नाम्ना उक्तम् तत्-'ओदनः'—न तु स्थालीवाचकश्चरुशब्द इत्याशयः। ओदने च पेषणाद्यसम्भवात् पेषणादीनां बाध इति ध्येयम् ॥१२॥

## (१३) १०।१।४५-४८ स्थाल्यां चरोः पाकविधिं प्रकुर्यात्

( १ ) बाधे चिन्ता।

( २ ) अस्ति चरोः पाकः।

( ३ ) तत्र संशयः—चरुः किं स्थाल्यामेव पच्यते उत कपाले उत यत्र कुत्राप्युदकधारणयोग्ये पात्रे इति।

( ४ ) पूर्वपक्षः—यथा प्रकृतौ पुरोडाशस्य कपाले पाकस्तथैवात्र विकृतौ चरोरपि कपाले एव पाक इति। अथवा अनपूपस्य चरोः कपाले पाकासम्भवात् यत्र कुत्रापि पात्रे पाक इति।

( ५ ) सिद्धान्तः—निरुप्तानां मुष्टिचतुष्टयपरिमितानां तण्डुलानामल्पेनैव पात्रेण पक्तुं योग्यत्वात् चरोः स्थाल्यामेव पाक इति॥

एतदभिप्रेत्याह स्थाल्यामिति। 'चरोः' 'पाकविधिं' पचनक्रियाम्-'स्थाल्याम्' एव-'प्रकुर्यात्'-इति नियम इत्याशयः। तथा च सति प्राकृतस्य कपालस्यात्र बाध इत्याशयः॥ १३॥

## (१४) १०।१।४९-५० न पेषणं चोदकतश्चरौ स्यात्।

( १ ) बाधोदाहरणम्।

( २ ) अस्ति चरुरोदनः पक्तव्यः।

( ३ ) तत्रौदने संशयः—किं चरौ पेषणं कर्तव्यं न वेति।

( ४ ) पूर्वपक्षः—शक्यते हि तण्डुलेषु पेषणं कर्तुम्। तस्माद् भवति पेषणमिति।

( ५ ) सिद्धान्तः—यद्यपि शक्यते ओदने पेषणं कर्तुम्-तथापि न क्रियते। अपूपो हि पेषणेन विना न सम्पद्यते। तस्मात् प्रकृतौ पुरो-

डाशे भवति पेषणम्। ओदनस्तु विनैव पेषणं सम्पद्यते-प्रत्युत पेषणेन व्याहन्यते एवौदनत्वम्। तस्माच्चरौ पेषणस्य बाधः।

एतदभिप्रेत्याह नेति। 'चरौ' ओदने-'पेषणं' 'चोदकतः' चोदकेन-'न स्यात्'-अतिदिष्टमिति शेषः॥ १४॥

## (१५) १०।१।५१ तथा चरौ संयवनं न कार्यम्

( १ ) बाधोदाहरणम्।

( २ ) प्रकृतौ श्रूयते संयवनं हविषः-'प्रणीताभिर्हवींषि संयौति' इति। विकृतौ चास्ति हविश्चरुः।

( ३ ) तत्र सन्देहः-किं चरावपि संयवनं भवति न वेति।

( ४ ) पूर्वपक्षः—प्राकृतस्य धर्मस्य चोदकप्राप्तस्य त्यागे मानाभावाद्भवति संयवनमिति।

( ५ ) सिद्धान्तः—पिण्डीकरणार्थं च संयवनम्। तच्चापूपेऽपेक्षितं न चरौ। तस्मान्न चरौ संयवनमिति।

एतदभिप्रेत्याह—तथेति। 'तथा' यथा पेषणं तथैव-'संयवनम्' पिष्टे उदकमिश्रणम् 'चरौ' 'न कार्यम्'। तस्मात् प्राकृतस्य संयवनस्य बाध इत्यर्थः॥ १५॥

## (१६) १०।१।५२ ततश्चरौ संवपनञ्च न स्यात्।

( १ ) बाधोदाहरणम्।

( २ ) प्रकृतौ श्रूयते—'एनं देवताभिः संवपति'-उदकमिश्रणाय पिष्टं पात्रे प्रक्षिपतीत्यर्थः।

( ३ ) तत्र संशयः—वैकृते चरौ संवपनं कर्तव्यमुत नेति।

( ४ ) पूर्वपक्षः—चोदकानुग्रहाय कर्तव्यमिति।

( ५ ) सिद्धान्तः—प्रकृतौ हि संयवनार्थमेव संवपनं क्रियते। चरौ संयवनस्य नास्ति प्रयोजनम्। तस्मादत्र संवपनमपि न भवतीति।

एतदभिप्रेत्याह तत इति। 'ततः' यतः संयवनं न भवति तस्मादेव कारणात्-'संवपनं' 'च' अपि-'न स्यात् चराविति शेषः। तस्मात् संवपनस्य बाध इत्याशयः॥ १६॥

## (१७) १०।१।५३ सन्तापनञ्चेह तथाऽर्थलोपात्

( १ ) बाधोदाहरणम्।

( २ ) प्रकृतौ पुरोडाशे कपालानां सन्तापनं विहितम्।

( ३ ) तत्र सन्देहः-वैकृते चरौ सन्तापनं भवति न वेति।

( ४ ) पूर्वपक्षः—चोदकानुग्रहाय भवतीति।

( ५ ) सिद्धान्तः—अपूपीकरणाय हि कपालानां सन्तापनमपेक्ष्यते। चरौ तस्य प्रयोजनाभावान्न भवति सन्तापनमिति।

एतदभिप्रेत्याह सन्तापनमिति। 'तथा' यथा संयवनादिकं न भवति तथैव-'इह' चरौ-'सन्तापनम्'-'अर्थलोपात्' प्रयोजनाभावात् न भवतीति शेषः। तस्माद्बाधः सन्तापनस्येत्याशयः॥ १७॥

## (१८) १०।१।५४ तथोपधानन्न विधेयमत्र।

( १ ) बाधोदाहरणम्।

( २ ) प्रकृतावुपधानमग्नौ कपालानां विहितम्।

( ३ ) वैकृते चरौ सन्देहः—किमत्रोपधानं कर्तव्यं न वेति।

( ४ ) पूर्वपक्षः—अधःपाकार्थम्भवत्युपधानम्। चरौ तस्याभावान्नोपधानं भवतीति।

एतदभिप्रेत्याह तथेति। 'तथा'-'अत्र' चरौ-'उपधानम्' कपालानामग्नौ स्थापनम्-'न' 'विधेयम्' कर्तव्यम्। तथा चोपधानस्य बाध इत्याशयः॥ १८॥

## (१९) १०।१।५५ श्लक्ष्णं पृथुं चापि चरुन्न कुर्यात्

( १ ) बाधोदाहरणम्।

( २ ) प्रकृतौ प्रथनं (कपालेषु प्रसारणम्) श्लक्ष्णीकरणं च विहितम्।

( ३ ) वैकृते चरौ संशयः—किमत्रापि प्रथनं श्लक्ष्णीकरणं च भवति न वेति।

( ४ ) पूर्वपक्षः—चोदकानुग्रहाय कर्तव्यमिति।

( ५ ) सिद्धान्तः—चरोरनपूपत्वात् उभयमपि निवर्तते इति।

एतदभिप्रेत्याह—श्लक्ष्णमिति। 'चरुं'-'श्लक्ष्णं' मार्जनेन चिक्कणम्-'पृथुम्' प्रसारितं-'च' 'न कुर्यात्'-अत्रानपेक्षितत्वात्तयोरिति भावः। तथा चानयोरत्र बाध इत्याशयः॥ १९॥

## (२०) १०।१।५६ अभ्यूहनं चापि निवर्ततेऽत्र।

( १ ) बाधोदाहरणम्।

( २ ) प्रकृतौ पुराडाशे अभ्यूहनं विहितम्।[भस्मनाच्छादनमित्यर्थः।]

( ३ ) वैकृते चरौ सन्देहः—अत्रापि अभ्यूहनं कर्तव्यं न वेति।

( ४ ) पूर्वपक्षः—चोदकानुग्रहाय कर्तव्यमिति।

( ५ ) सिद्धान्तः—पुरोडाशस्योपरिभागपाकार्थमिदमपेक्षितम्। चरौ तु तस्यानपेक्षितत्वान्न कर्तव्यमभ्यूहनमिति।

एतदभिप्रेत्याह अभ्यूहनमिति। 'अत्र' चरौ-'अभ्यूहनम्' भस्मनाच्छादनम् 'चापि'-'निवर्तते' बाधितं भवतीत्यर्थः॥ २०॥

## (२१) १०।१।५७ दर्भैरिहावज्वलनं न कुर्यात्

( १ ) बाधोदाहरणम् ।

( २ ) प्रकृतौ पुरोडाशस्य दर्भपिञ्जलैरवज्वलनं विहितम् ।

( ३ ) वैकृते चरौ सन्देहः—अवज्वलनं कर्तव्यन्न वेति ।

( ४ ) पूर्वपक्षः—चोदकानुग्रहाय कर्तव्यमिति ।

( ५ ) सिद्धान्तः—पुरोडाशस्योपरिपाकार्थमिदं क्रियते । चरौ तन्नापेक्षितम् । तस्माच्चरौ नावज्वलनमिति ।

एतदभिप्रेत्याह दर्भैरिति । 'इह' चरौ–'दर्भैः' दर्भपिञ्जलैः–'अवज्वलनम्' प्रज्वालनम्–'न कुर्यात्'–अस्य बाध एवेत्याशयः ॥ २१ ॥

## (२२) १०।१।५८ उद्धृत्य चासादनमत्र नास्ति ।

( १ ) बाधोदाहरणम् ।

( २ ) प्रकृतौ श्रूयते—'अन्तर्वेद्यां हवींषि आसादयति' इति पुरोडाशस्य उद्धृत्यान्तर्वेद्यामासादनम् ।

( ३ ) वैकृते चरौ संशयः–किं स्थाल्या उद्धृत्य चरुरासादयितव्य उत उद्धरणं न कर्तव्यमिति ।

( ४ ) पूर्वपक्षः—चोदकानुग्रहाय कर्तव्यमिति ।

( ५ ) सिद्धान्तः—पुरोडाशेऽपि कपालेभ्य उत्थापनं न श्रुतम् । यच्च न श्रुतं तन्न चोदकप्राप्तम् । तस्माच्चरौ नोद्धरणमिति ।

एतदभिप्रेत्याह उद्धृत्येति । 'उद्धृत्य' पात्रादुत्थाप्य—'आसादनम्' अन्तर्वेद्यां स्थापनम्–'अत्र' चरौ–'नास्ति' । अयं बाधस्तूद्धरणमात्रस्य । तथाच चरोर्न्युद्धृत्यासादनं न कर्तव्यमित्यर्थः ॥ २२ ॥

न्याया इहाद्ये दशमस्य पादे
द्वाविंशतिर्भाष्यकृतोपदिष्टाः ।

स्पष्टम् ।

इति दशमस्य प्रथमः ।

# अथ दशमस्य द्वितीयः पादः ।

[ द्वारलोपेन बाधस्य विस्तरेणोदाहरणात्मकः ]

## (१) १०।२।१–२ वचनात् कृष्णले पाकः

( १ ) बाधचिन्ता प्रवर्तते ।

( २ ) 'प्राजापत्यं चरुं निर्वपेत् घृते शतकृष्णलमायुष्कामः' इति कृष्णलरूपश्चरुर्विहितः । प्रकृतौ च पुरोडाशस्य पाको विहितः ।

( ३ ) तत्र सन्देहः—किं कृष्णलेष्वपि पाको भवति न वेति ।

( ४ ) पूर्वपक्षः—प्रकृतौ पुरोडाशार्थः पाको विहितः-पाकं विना तस्यासम्भवात् । इह तु पाकं विनापि कृष्णलानि कृष्णलान्येव भवन्ति-न च तेषु विक्लेदनादि सम्भवति । तस्मात् पाको न कर्तव्य इति ।

( ५ ) सिद्धान्तः—दृष्टार्थस्य विक्लेदनादेरसम्भवेऽपि अदृष्टार्थः पाकः कर्तव्यः । अन्यथा 'घृते श्रपयति' इति वचनस्य वैयर्थ्यापत्तिः इति ।

एतदभिप्रेत्याह वचनादिति । 'वचनात्' घृते श्रपयतीति साक्षाद्विधिबलेन-'कृष्णले'-'पाकः' कर्तव्य एवेति शेषः । अतो न पाकस्य बाध इत्याशयः ॥ १ ॥

## (२) १०।२।३-१२ नोपस्तृत्यभिघारणे ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) प्राकृते पुरोडाशे उपस्तरणमभिघारणं चोक्तम् ।

( ३ ) कृष्णले सन्देहः—किमुपस्तरणाभिघारणे भवतो न वेति ।

( ४ ) पूर्वपक्षः—यथा पाकोऽनपेक्षितोऽप्यदृष्टार्थः क्रियते तथैवोपस्तरणाभिघारणे अपि कर्तव्ये इति ।

( ५ ) सिद्धान्तः—पाकवदत्र प्रत्यक्षविधिर्नास्ति । चोदकस्तु दृष्टं द्वारमपेक्षते-प्रकृतौ चोपस्तरणाभिघारणे दृष्टार्थे-सूक्ष्माणां पुरोडाशावयवानां स्रुचि संसक्तिं निवारयितुमेव ते क्रियेते । कृष्णलानां तु संसक्तिप्रसङ्ग एव नास्ति । अतस्तन्निवारणरूपद्वारस्याभावादुपस्तरणाभिघारणयोर्बाध इति ।

एतदभिप्रेत्याह नेति । 'उपस्तृतिः' 'अभिघारणं' चेत्युभयं—'न'—'भवतः कृष्णले' इति शेषः ॥ २ ॥

## (३) १०।२।१३-१६ भक्षोऽस्ति कृष्णलचरोः

( १ ) कृष्णले बाधचिन्ताऽनुवर्तते ।

( २ ) अस्ति प्रकृतौ पुरोडाशस्य भक्षणम् ।

( ३ ) तत्र सन्देहः—कृष्णलेऽपि भक्षणं भवति न वेति ।

( ४ ) पूर्वपक्षः—तृप्तिरूपस्य दृष्टद्वारस्यासम्भवान्नास्ति कृष्णलेषु भक्षणमिति ।

( ५ ) सिद्धान्तः—उपलभ्यतेऽत्र प्रत्यक्षविधानम्—'चुश्चुषाकारं भक्षयन्ति' इति । यथा इक्ष्वादिरसः चूष्यते तथैव घृते पक्वेषु कृष्णलेषु संसक्तं घृतं चूषयन्तीत्यर्थः । एवं च प्रत्यक्षवचनबलादस्ति भक्षणमिति ।

एतदभिप्रेत्याह—भक्ष इति । 'कृष्णलचरोः' कृष्णलरूपस्य चरोः—'भक्षः'भक्षणम्'अस्ति'—वचनबलादित्यर्थः ॥ ३ ॥

## (४) १०।२।१७ एकधेति सहार्थकम्।

(१) पूर्वाधिकरणशेषः।

(२) उक्ते एव कृष्णलभक्षणे श्रूयते-'एकधा ब्रह्मण उपहरति'इति। ['उपहारो' भक्षणाय समर्पणम्]।

(३) तत्र संशयः—एकधेत्यनेन किं विवक्षितम्—एकवारमिति सकृत्त्वम्—उत बहूनां सहभाव इति सहत्वम्।

(४) पूर्वपक्षः—नियामकाभावादुभयोर्मध्ये यत् किञ्चिदिति।

(५) सिद्धान्तः—प्रकृतौ इडा-प्राशित्र—चतुर्धाकरण—संयुवाक—कालेषु चतुर्धा भक्षणसिद्धये चत्वार उपहारा उपदिष्टाः। अत्रापि ते चोदकप्राप्ताः। तत्र सकृत्त्वपक्षे उपरितनास्त्रय उपहारास्तत्कालविशेषाश्च बाध्येरन्। सहत्वपक्षे तु कालविशेषा एव बाध्यन्ते न त्रय उपहाराः। एवं चात्राबाधस्यैव नियामकत्वात् सहत्वमेव विवक्षितमिति।

एतदभिप्रेत्याह एकेति। 'एकधा'इति' पदं—'सहार्थकम्' सहत्वबोधकम्—न सकृत्त्वबोधकमित्याशयः॥ ४॥

## (५) १०।२।१८-१९ ब्रह्मणे सर्वभक्षाः स्युः

(१) बाधविचार एव वर्तते।

(२) कृष्णलभक्षणे इदमपरं श्रूयते—'सर्वं ब्रह्मणे परिहरति' इति। [परिहारः समर्पणम्।] ब्रह्मसहितानामृत्विजामेकैकस्य चतुर्षु कालेषु चत्वारो भक्षभागाश्चोदकप्राप्ताः।

(३) तत्र 'सर्वम्'इति पदस्यार्थे संशयः—सर्वता किं ब्रह्मसम्बन्धिभागचतुष्टयविषया—उत इतरसम्बन्धिभागचतुष्टयविषयाऽपि इति। अर्थात् किं सर्वेषां भागा ब्रह्मणेऽर्पणीया उत ब्रह्मणो ये सर्वे भागास्ते तस्मै समर्पणीया इति।

(४) पूर्वपक्षः—एवं हि वाक्यं नेयम्—'यद् ब्रह्मणे सर्वं तत्परिहरति'इति—अथवा 'यद् ब्रह्मणे परिहरति तत् सर्वम्'इति। उभयथाऽपि ब्रह्मभागमात्रे विधेः पर्यवसानात् चोदकप्राप्ता अन्यभागा अबाधिता भविष्यन्ति इति।

(५) सिद्धान्तः—एषाऽत्र वचनव्यक्तिः—'यत् सर्वं परिहर्तव्यं तद्ब्रह्मणे परिहरति'। एवं च ब्रह्मभागानामितरभागानां च यत् 'सर्वं' तस्य ब्रह्मसम्बन्धे विहिते इतरभागानामपि ब्रह्मणे एव समर्पणीयत्वम्। तथाच अन्येषां भक्षणं बाध्यते इति।

एतदभिप्रेत्याह ब्रह्मण इति। 'सर्वभक्षा'-ब्रह्मणः इतरेषां च सर्वेषां ये 'भक्षाः' ते 'ब्रह्मणे' 'स्युः' समर्पिता इति शेषः॥ ५॥

## (६) १०।२।२० यथाकालन्तु भक्षणम् ।

( १ ) पूर्वाधिकरणद्वयशेषः ।

( २ ) 'सर्वं भक्षणं ब्रह्मणे समर्पयेत्' इति स्थितम् ।

( ३ ) तत्र सन्देहः—किं सर्वे एव भागा एकस्मिन्नेव काले युगपद् भक्षणीया उत स्वस्मिन् स्वस्मिन् काले इति ।

( ४ ) पूर्वपक्षः—समर्पणं सर्वस्य युगपदेव भवति । समर्पितस्य च भक्षणे विलम्बकारणाभावात् भक्षणमपि सर्वस्य युगपदेवेति ।

( ५ ) सिद्धान्तः—प्रकृतौ भक्षाणां कालभेदः । चोदकप्राप्तस्य च तस्य परित्यागे मानाभावात् विलम्ब आवश्यकः । तस्मात् स्वस्वकाले एव भक्षणं भागानामिति ।

एतदभिप्रेत्याह यथेति । 'भक्षणं' 'तु' सर्वेषां भागानां ब्रह्मणे समर्पितानाम्—'यथाकालं' प्रत्येकभक्षस्य चोदकप्राप्तं कालमनतिक्रम्यैव—भवतीति शेषः । यद्यपि समर्पणं युगपत्तथाऽपि भक्षणं न युगपदिति तुना सूच्यते ॥ ६ ॥

## (७) १०।२।२१ न कृष्णलेषु व्यादेशः

( १ ) बाधचिन्ता ।

( २ ) प्रकृतौ पुरोडाशस्य भक्षभागनिर्देशो भवति—'इदं ब्रह्मणः इदं होतुः इदमध्वर्योः इदमग्नीधः' इति ।

( ३ ) तत्र कृष्णलपक्षे संशयः—अत्राप्ययं निर्देशो भवति न वेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तस्य निर्देशस्य परित्यागे मानाभावाद् भवत्येव निर्देश इति ।

( ५ ) सिद्धान्तः—प्रकृतौ निर्देशः भागानामसाङ्कर्यार्थं एव । अत्र तु सर्वस्य भक्षस्य ब्रह्मार्थत्वात् साङ्कर्यशङ्कैव नास्ति । ततो न निर्देशः—तस्मात्तस्य बाध इति ।

एतदभिप्रेत्याह नेति । 'कृष्णले' कृष्णभक्षे—'व्यादेशः' इदम्ब्रह्मणः इदमध्वर्योरित्यादिनिर्देशः—'न स्यात्'—साङ्कर्यासम्भवादित्यर्थः ॥७॥

## (८) १०।२।२२–३८ दक्षिणा स्यात् परिक्रयः ।

( १ ) बाधसम्बन्धी विचारः ।

( २ ) 'ऋत्विग्भ्यो दक्षिणां ददाति' इति श्रूयते ।

( ३ ) तत्र संशयः—इदं दानं किं धर्मार्थमुत ऋत्विजामानत्यर्थमिति । [ धनं दत्वा कार्यं कर्तुं स्वीकारणम् 'आनतिः' ] ।

( ४ ) पूर्वपक्षः—अन्नहिरण्यादीनां धर्मार्थे त्यागे दानशब्दः प्रसिद्धः । यदि भृत्यर्थं स्यात्तर्हि कार्याल्पत्वमहत्त्वाभ्यां दक्षिणाल्पमहत्वे ति-

यमिते स्याताम् । तथा तु न दृश्यते । स्वल्पकर्मणि त्रैधातवीये सहस्रं दक्षिणा—अधिककर्मणि ऋतपेये तु सोमचमसमात्रमिति । तस्मात् धर्मार्थमेव दक्षिणादानमिति ।

( ५ ) सिद्धान्तः—दानशब्द आनत्यर्थभृत्यर्पणेऽपि प्रयुज्यते । भवति च आनतिर्दृष्टार्थप्रयोजनं दानस्य । अल्पत्वमहत्त्वव्यतिक्रमस्तु वचनप्राप्तत्वादेव नासमञ्जसः । दक्षिणायाः भृतिरूपत्वं परिक्रयसाधनत्वं च श्रुतावप्युक्तम्—'दीक्षितमदीक्षिता दक्षिणा परिक्रीता ऋत्विजो याजयेयुः' इति । तस्माद् दक्षिणादानं ऋत्विजामानत्यर्थमिति ।

एतदभिप्रेत्याह दक्षिणेति । 'दक्षिणा' दक्षिणादानमृत्विग्भ्यः—'परिक्रयः' आनतिसाधनमेव—'स्यात्'—न तु धर्मार्थमिति । एवं च सति यस्मिन् कर्मणि आनतिर्नापेक्षिता तत्र दक्षिणाया बाधः । यथा सत्रे [ इत्येकादशेऽधिकरणे स्थास्यति ] ॥ ८ ॥

## (९) १०।२।२९-३३ परिक्रयो न भक्षः स्यात्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्ति यागेषु भक्षः ।

( ३ ) तत्र संशयः—किमयं भक्षो धर्मार्थं उतानत्यर्थं इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेनानत्यर्थं इति ।

( ५ ) सिद्धान्तः—यागदेवतायै यत् सङ्कल्पितं हविस्तस्य शेषस्यैव भक्षो भवति । तस्मिन् हविषि यजमानस्य स्वत्वाभावात् तेन ऋत्विजां परिक्रयो न सम्भवति । किञ्च यजमानस्याप्यस्ति भक्षः । न च तस्य परिक्रयः । तस्माद् भक्षो न परिक्रयार्थः—अपि तु प्रतिपत्त्यर्थ एवेति ।

एतदभिप्रेत्याह परिक्रय इति । 'भक्षः' हविःशेषभक्षणम्—'परिक्रयः' ऋत्विजामानतिसाधनं—'न स्यात्'—अपि तु प्रतिपत्त्यर्थ एव । एवं च सति यत्र परिक्रयो नास्ति—यथा सत्रे—तत्रापि भक्षो न बाध्यते ॥९॥

## (१०) १०।२।३४ न सत्रे वरणम्भवेत् ।

( १ ) बाधविचारो वर्तते ।

( २ ) प्रकृतौ सोमे होत्रादीनामृत्विजां वरणमाम्नातम् ।

( ३ ) विकृतौ सत्रे संशयः—अत्र वरणम्भवति न वेति ।

( ४ ) पूर्वपक्षः—वरणरहितानामृत्विक्त्वाभावात् ऋत्विजामभावे च यागसम्पादनासम्भवात् वरणं सत्रेऽपि कर्तव्यमिति ।

( ५ ) सिद्धान्तः—वरणं हि भविष्यद्दानसूचनेनर्त्विजामुत्साहं जनयति । सत्रे च यजमानाः स्वयमेव ऋत्विक्कार्यं कुर्वन्त उत्साहजनकमन्यत् नापेक्षन्ते । ऋत्विक्त्वं च यागकर्तृत्वमेव । अतोऽवृतानामपि याग-

कर्तॄणां यजमानानां सिध्यत्येव ऋत्विक्त्वम् । तस्मात् सत्रे दक्षिणावत् वरणस्यापि बाध एवेति ।

एतदभिप्रेत्याह--नेति । 'सत्रे' यत्र ये यजमानास्त एवर्त्विजस्तत्र यागे--'वरणं' ऋत्विजां--'न भवेत्' इति सम्बन्धः ॥ १० ॥

## (११) १०।२।३५-३८ सत्रेषु दक्षिणा न स्यात्

( १ ) बाधविचारः ।

( २ ) सत्रे वरणं नास्ति इति स्थितम् ।

( ३ ) इदमिदानीं सन्दिह्यते--सत्रे दक्षिणादानमस्ति न वेति ।

( ४ ) पूर्वपक्षः--सत्रं प्रकृत्य श्रूयते--'नह्यत्र गौर्दीयते न वासो न हिरण्यम्' इति । प्रसक्ते एव दक्षिणादानेऽयं निषेध उपपद्येत । ततो यानि द्रव्याणि सोमे दीयन्ते तेषां दानं सत्रे प्रसक्तमित्यभ्युपगन्तव्यम् । सोमे देयानि च—गौः अश्वः अश्वतरः गर्दभः अजयः व्रीहयः यवाः तिलाः माषाः द्वादशशतं हिरण्यं चेति । एतेषु गौर्वासो हिरण्यमिति प्रतिषिद्धानि । तदतिरिक्तानां च चोदकप्राप्तानां दानमवश्यं कर्तव्यम्-इदमेव च दक्षिणेति ।

( ५ ) सिद्धान्तः—'नह्यत्र गौर्दीयते' इत्यस्मात् पूर्वमेवमाम्नातम्-'अदक्षिणानि सत्राणीत्याहुः' इति । तस्मात् यथा यजमानानामेव ऋत्विक्त्वे वरणं सत्रे बाधितम्भवति तथैव दक्षिणापीति ।

एतदभिप्रेत्याह सत्रेष्विति । 'सत्रेषु' 'दक्षिणा' 'न' 'स्यात्'—परिक्रयाभावादिति भावः ॥ ११ ॥

## (१२) १०।२।३९-४० सत्राङ्गनोत्तरो यजिः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्त्युदवसानीयः—'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति ।

( ३ ) तत्र संशयः—अयमुदवसानीयः किं सत्रस्याङ्गमुत नेति ।

( ४ ) पूर्वपक्षः—'उदवसाय' इत्यत्र ल्यप्प्रत्ययेन सत्रसमाप्तेः पूर्वकालत्वम् उदवसानीयसत्रयोरेककर्तृकत्वं च द्योत्यते । तथा च यथा 'अग्निं चित्वा सौत्रामण्या यजेत' इत्यादौ सौत्रामण्यादीनां चयनाङ्गत्वं तथैव उदवसानीयस्यापि सत्राङ्गता युक्तेति ।

( ५ ) सिद्धान्तः—'सत्रादुदवसाय' इत्यस्यार्थः 'सत्रं समाप्य' इति । तथा सत्रादूर्ध्वं विधीयमानो यागः कथं सत्राङ्गं भविष्यति । सत्रानङ्गत्वे तु दक्षिणाया अप्यत्र परिक्रयार्थतैवेति ।

एतदभिप्रेत्याह सत्रेति । 'उत्तरः' सत्रादुत्तरकालभावी—'यजिः'

याग उद्वसानीयः—'सत्राङ्गं' सत्रस्य अङ्गम्-'न'भवति । ततश्चात्र परिक्रयार्थायाः दक्षिणाया न बाध इति ॥ १२ ॥

(१३) १०।२।४१-४३ तमेकैकः प्रकुर्वीत

( १ ) पूर्वाधिकरणशेषः ।

( २ ) उद्वसानीयो न सत्राङ्गमित्यवगतम् ।

( ३ ) इदमिदानीं सन्दिह्यते—अथमुद्वसानीयः किं सम्भूय सर्वैः सत्रिभिः कर्तव्य उत एकैकमिति ।

( ४ ) पूर्वपक्षः—'यजेरन्'इति बहुवचनश्रुत्या बहूनां कर्तृत्वन्नैकस्य । ततश्च सर्वे सत्रिणः सम्भूयामुं यज्ञं कुर्युरिति ।

( ५ ) सिद्धान्तः—उद्वसानीयो हि सोमस्य विकृतिः । सोमे चैकैकशः कर्तृत्वं न सम्भूय । सत्रे च 'सप्तदशावराः सत्रमासीरन्' इति प्रतिपदोक्त्या बहूनां यजमानता । तस्मादेकैकश एवोद्वसानीयं कुर्यादिति ।

एतदभिप्रेत्याह तमिति । 'तम्' उद्वसानीयम्—'एकैकः''प्रकुर्वीत'—न तु सम्भूयेत्याशयः ॥ १३ ॥

(१४) १०।२।४१-४२ ततोऽन्ये स्युरिहार्त्विजः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) एकैकश उद्वसानीयं कुर्यादित्यवगतम् ।

( ३ ) इदमिदानीं सन्दिह्यते—उद्वसानीये किं सत्रिण एव ऋत्विज उत तेभ्योऽन्ये वरीतव्या इति ।

( ४ ) पूर्वपक्षः—उद्वसायेति समानकर्तृकत्वे उक्ते सत्रिणामेवार्त्विज्यमिति ।

( ५ ) सिद्धान्तः—ये सत्रादुद्वसातारस्त एव उद्वसानीयकर्तार इति न विध्यर्थः । सन्ति च अन्ये ऋत्विजश्चोदकप्राप्ताः । तस्मादत्रान्ये ऋत्विजो वरीतव्या इति ।

एतदभिप्रेत्याह तत इति । 'इह' उद्वसानीये—'ततः' तेभ्यः सत्रानुष्ठातृभ्यः—'अन्ये'भिन्नाः—'ऋत्विजः' परिक्रीताः वरणीयाः—'स्युः' इति सम्बन्धः । अतो नात्र चोदकप्राप्तानामृत्विजां बाध इत्याशयः ।

त्रयोदशचतुर्दशाधिकरणयोः स्थानव्यतिक्रमो न्यायमालायां दृश्यते॥१४॥

(१५) १०।२।४४-४५ धेनुका दक्षिणा नेष्टौ

( १ ) दक्षिणाविषय एव विचारः—अष्टमाधिकरणापवादः ।

( २ ) सारस्वतसत्रे कामेष्टौ—'अश्वां पुरुषीं धेनुके दत्वा' इति दानं श्रुतम् ।

( ३ ) तत्र सन्देहः—इदं दक्षिणादानमानत्यर्थमुत धर्मार्थमिति ।

(४) पूर्वपक्षः—इष्टेरसत्रत्वादष्टमाधिकरणन्यायेनानत्यर्थमेवेदं दानमिति ।

(५) सिद्धान्तः—यद्यपीयमिष्टिः स्वरूपेणासत्रं तथाऽपि सत्राङ्गत्वेन समप्रयोगान्तःपातित्वेन चास्यां यजमानानामेवार्त्विज्यम् । अत आनतेरनपेक्षितत्वाद् धर्मार्थतैव दानस्येति ।

एतदभिप्रेत्याह धेनुकेति । 'इष्टौ' सारस्वतसत्राङ्गभूतायां कामेष्टौ—या 'धेनुका' देयत्वेनोक्ता सा—'दक्षिणा' आनतिसाधिका—'न'भवति—अपि तु धर्मसाधिकैवेत्याशयः । अतः सत्राङ्गत्वेऽपि न दानस्य बाध इति भावः ॥ १५ ॥

## (१६) १०।२।४६ दानं द्वेष्याय नानतिः ।

(१) दक्षिणादानविषयो विचारो वर्तते ।

(२) दर्शपूर्णमासयोः श्रूयते—'यदि पत्नीः संयाजयन् कपालमभिजुहुयात्' वैश्वानरं द्वादशकपालं निर्वपेत्—तस्यैकहायनी गौर्दक्षिणा—तां द्वेष्याय दद्यात्' इति ।

(३) तत्र सन्देहः—इदं द्वेष्याय दानं किमानत्यर्थमुतादृष्टार्थमिति ।

(४) पूर्वपक्षः—दक्षिणाशब्देन यस्य निर्देशस्तस्यानत्यर्थता अष्टमाधिकरणन्यायेन सिद्धा । तस्मादानत्यर्थमिदं दानमिति ।

(५) सिद्धान्तः—न तावदृत्विजो द्वेष्यत्वं युक्तम् । यो द्वेष्यो न स आर्त्विज्येन वरयितुं योग्यः । न च द्वेष्ये आनतिसम्भावना । तस्माददृष्टार्थमेवेदं दानमिति ।

एतदभिप्रेत्याह दानमिति । 'द्वेष्याय' 'दानम्' दक्षिणारूपेण-यत श्रुतं तत्-'न आनतिः' आनतिसाधनम्-अपि त्वदृष्टार्थमेवेत्याशयः ॥१६॥

## (१७) १०।२।४७-४८ जीवतामस्थियज्ञः स्यात्

(१) प्रसङ्गेनास्थियज्ञविचारः ।

(२) इदमाम्नायते—'यदि सत्राय सन्दीक्षितानां प्रमीयेत-अथ तं दग्ध्वा तस्य कृष्णाजिनेऽस्थीन्युपसन्नह्य योऽस्य नेदिष्ठः स्यात् तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन्-ततः संवत्सरेऽस्थीनि याजयेयुः' इति संवत्सरेऽतीते यज्ञ आम्नातः ।

(३) तत्र संशयः—अस्मिन् यज्ञे कस्य कर्तृत्वम् ? मृतस्य अस्थ्नामुत जीवताम्पुरुषाणामिति ।

(४) पूर्वपक्षः—मृतस्य अस्थीन्येवात्र कर्तॄणि-'अस्थीनि याजयेयुः' इत्यनेन तथैव स्पष्टमुक्तत्वादिति ।

(५) सिद्धान्तः—अस्थीन्यचेतनानि यष्टुमनर्हाणि अतोऽस्थिय-

ब्देनात्र पुरुषो लक्ष्यते । कृष्णाजिनसन्नद्धास्थिसम्बन्धिपुरुषेण सह ये सत्रे यष्टार आसन् त एव 'अस्थीनि' इत्येतत्पदेन लक्ष्यन्ते-ते च जीविता एव सत्रिणः । तस्माद् जीवतामेवायं याग इति ।

एतदभिप्रेत्याह जीवतामिति । 'अस्थियज्ञः' अस्थीनि याजयेयुरित्येवं विहितो यागः-'जीवताम्' एव सत्रिणाम्-'स्यात्'-कर्तव्य इति शेषः॥१७॥

## (१८) १०।२।४९ अस्थ्नां चेन्न जपादिकम् ।

( १ ) अस्थियज्ञविचारो वर्तते-कृत्वाचिन्तारूपः ।

( २ ) अस्थियज्ञे अस्थीन्येव कर्तॄणीत्यभ्युपगम्य—

( ३ ) संशयः—प्रकृतौ यत् यजमानकर्तृकं जपादिकमस्ति तदस्थियज्ञे कर्तव्यमुत नेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तस्य परित्यागे मानाभावात् कर्तव्यमिति।

( ५ ) सिद्धान्तः—अस्थिषु जपकार्यासम्भवात् न भवति जपादिकमिति ।

एतदभिप्रेत्याह अस्थ्नामिति । 'अस्थ्नाम्' कार्यो याग इति 'चेत्' पक्षोऽभ्युपगम्यते तर्हि-'जपादिकं' यजमानकर्तृकं न स्यात्-तस्य बाध एव स्यादित्यर्थः ॥ १८ ॥

## (१९) १०।२।४९ (वर्णकान्तरम्) न दीक्षणीयाऽप्यस्थ्नां चेत्

( १ ) पूर्वविचारशेषः ।

( २ ) प्रकृतावस्ति यजमानस्य दीक्षणीयेष्टिः ।

( ३ ) तत्र संशयः-अस्थिकर्तृके यज्ञे इयं दीक्षणीयेष्टिर्भवति न वेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तत्वादस्ति दीक्षणीयेति ।

( ५ ) सिद्धान्तः—अचेतनानामस्थ्नां दीक्षासम्भवान्नास्ति दीक्षणीयेति ।

एतदभिप्रेत्याह नेति । 'अस्थ्नां' कार्यो याग इति 'चेत्' पक्षः तर्हि-'दीक्षणीया अपि न' स्यादिति शेषः । तस्या बाध एवेत्यर्थः ॥ १९ ॥

## (२०) १०।२।५० क्रत्वर्थे त्वास्थिकर्तृकम् ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) प्रकृतौ औदुम्बर्याः शाखाया यजमानप्रमाणत्वम् शुक्रग्रहस्य च यजमानेन स्पर्श इत्यादि ।

( ३ ) तदेतत् अस्थिकर्तृके यागे भवति न वेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन न भवतीति ।

( ५ ) सिद्धान्तः—अचेतनैरपि दण्डादिभिर्यथा मानं क्रियते तथाऽ-

चेतनैरप्यस्थिभिः शाखामानं सम्भवति । एवमेवाचेतनानां शुक्रग्रहस्पर्शोऽपि । तस्मादेतद् द्वयमप्यस्ति इति ।

एतदभिप्रेत्याह क्रत्वर्थमिति । 'क्रत्वर्थं' यदङ्गजातं शाखामानादिकं क्रत्वर्थमेव भवति न पुरुषार्थम् तत्–'अस्थिकर्तृकम्' अपि स्यादेव-अस्थीन्येव कर्तॄणि यस्मिन् तत् । अस्थिकर्तृकेऽपि यागे क्रत्वर्थमङ्गजातं यजमानकर्तृकन्न बाध्यत इत्याशयः ॥ २० ॥

## (२१) १०।२।५१ अस्थियज्ञे न काम्यानि

( १ ) अस्थियज्ञविचारोऽनुवर्तते ।

( २ ) 'यदि कामयेत् वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात्' इत्यादीनि सन्ति काम्यानि कर्माणि प्रकृतौ ज्योतिष्टोमे ।

( ३ ) तत्र सन्दिह्यते—विकृतौ अस्थियागे एतानि काम्यानि सन्ति न वेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सन्ति इति ।

( ५ ) सिद्धान्तः—कामस्य चेतनधर्मत्वान्न सन्ति काम्यानि अस्थिकर्तृके यागे इति ।

एतदभिप्रेत्याह अस्थीति । 'अस्थियज्ञे' अस्थिकर्तृके यज्ञे–'काम्यानि कर्म्माणि 'न'–स्युरिति शेषः ॥ २१ ॥

## (२२) १०।२।५२–५४ सूक्तवागाशिषोऽत्र न ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) प्रकृतौ—'इदं द्यावापृथिवी भद्रमभूत्' इत्यादि सूक्तवाक् होत्रा पठ्यते । तत्रैवमाशासनं श्रूयते–'आशास्तेऽयं यजमानोऽसौ आयुराशास्ते सुप्रजास्त्वमाशास्ते' इत्यादि ।

( ३ ) तत्र सन्देहः—योऽयं सूक्तवाकगतो यजमानाशीःप्रतिपादको मन्त्रः सोऽस्थियज्ञे पठनीयो न वेति ।

( ४ ) पूर्वपक्षः—अस्थियज्ञगतायाः प्रायणीयादेरिष्टेः प्रस्तरप्रहरणमङ्गम् । तच्च नित्यम् । तस्मात् तद्गतस्य सूक्तवाकमन्त्रस्यापि नित्यत्वात् स मन्त्रः पठनीय एवास्थियज्ञे इति ।

( ५ ) सिद्धान्तः—आशासनयोगादत्रायुरादिशब्दैः फलं निर्दिश्यते । फलेच्छा चाचेतनानामस्थ्नां न सम्भवति । तस्मान्मन्त्रस्य स भागो बाध्यते इति ।

एतदभिप्रेत्याह सूक्तेति । 'अत्र' अस्थिकर्तृकयज्ञे–'सूक्तवागाशिषः' सूक्तवाकगतायुराद्याशासननिर्देशको मन्त्रभागः—'न'–पठनीय इति शेषः ॥ २२ ॥

## (२३) १०।२।५५–५६ न होतृकामो यज्ञेऽस्थ्नाम्।

( १ ) पूर्वाधिकरणशेषः।

( २ ) प्रकृतावस्ति होतृकामः—'यं कामयेत वसीयान् स्यात् इति उच्चैस्तरां तस्य वषट् कुर्यात्' इति।

( ३ ) तत्र संशयः—अस्थियज्ञे अयं होतृकामः कर्तव्यो न वेति।

( ४ ) पूर्वपक्षः—यद्यप्यस्थीन्यचेतनानि तथाऽपि होतुश्चेतनत्वात् तस्य च कामनायाः सम्भवात्-कर्तव्यो होतृकाम इति।

( ५ ) सिद्धान्तः—'यां वै कांचन यज्ञे ऋत्विजः आशिषमाशासते यजमानायैव तामाशिषमाशासते' इति श्रुतेः होत्राऽपि यत् काम्यते तदपि यजमानस्यैवेष्टम्। अचेतनानि चास्थीनि एष्टुं न शक्नुवन्ति। तस्मान्नात्र होतृकाम इति।

एतदभिप्रेत्याह नेति। 'अस्थ्नां यज्ञे' अस्थिकर्तृके यज्ञे-'होतृकामः' होतृकर्तृकाशीःशंसनम्-'न'-भवतीति शेषः। तस्य बाध एव भवतीत्याशयः॥

[ तदेतदधिकरणपञ्चकं जीवतामयं यज्ञ इति सप्तदशाधिकरणसिद्धान्तेन विरुद्धम्-अस्थ्नां कर्तृत्वमभ्युपगम्य कृत्वाचिन्तारूपम्। सप्तदशाधिकरणन्यायेन तु पञ्चस्वप्येतेषु अधिकरणेषु चोदकप्राप्तानां धर्माणां नास्ति बाधः, यज्ञस्य जीवत्कर्तृकत्वात् इति ध्येयम् ] ॥ २३ ॥

## (२४) १०।२।५७–५८ सर्वस्वारः समाप्यते।

( १ ) बाधप्रसङ्गेन सर्वस्वारविचारः।

( २ ) अस्ति यज्ञः सर्वस्वाराख्यः—'मरणकामो ह्यनेन यजेत-यः कामयेत अनामयः स्वर्गं लोकमियाम्' इति। अस्य च यज्ञस्य तृतीयसवने यजमानस्याग्निप्रवेश आम्नातः।

( ३ ) तत्र संशयः—एवं मृते यजमानेऽवशिष्टं कर्म समापनीयमुत त्याज्यमिति।

( ४ ) पूर्वपक्षः—यजमानस्य मृतत्वात् कर्तुरभावात परित्याज्यमेवावशिष्टं कर्मेति।

( ५ ) सिद्धान्तः—यजमाने गतेऽपि ऋत्विग्भिः कर्म समापनीयम्। मरणकाले यजमानो ऋत्विजः प्रति एवं प्रैषमुच्चारयति-'ब्राह्मणाः समापयत मे यज्ञम्' इति। तदेतत्प्रैषबलात् कर्म समापनीयं न तस्य बाध इति।

एतदभिप्रेत्याह सर्वस्वार इति। 'सर्वस्वारः'-यजमानमरणानन्तरमपि-'समाप्यते' समापनीयो भवति-ऋत्विग्भिरिति शेषः। यथा अस्थियज्ञः एकस्मिन् यजमाने मृते जीवद्भिः क्रियते तथैव यजमाने मृतेऽपि जी-

वह्निस्तत्सहायकैश्र्चर्त्विग्भिः कर्म समापनीयमित्यर्थः ॥ [ ५६ सूत्र भाष्ये न्यायमालायां चाधिकरणान्तरेण गृहीतम्-तत्र वर्णितस्य त्वर्थस्य विंशाधिकरणेऽन्तर्भूतत्वात्तदुपेक्षितम्मण्डनेनेति प्रतिभाति। अतस्तत्सूत्रोक्तो विषयोऽस्यैव चतुर्विंशाधिकरणस्य शेषत्वेन व्याख्यातोऽस्माभिरिति ध्येयम् ] ॥ २४ ॥

(२५) १०।२।६०-६१ जीवत्यायुरिहाशास्यम्

( १ ) सर्वस्वारविचारो वर्तते।

( २ ) होत्रा पठनीये सूक्तवाके योऽयं 'आयुराशास्ते' इति भागो वर्तते—

( ३ ) तत्र संशयः-सर्वस्वारेऽयं पठनीयो न वेति।

( ४ ) पूर्वपक्षः—मरणकामस्य यजमानस्यायुर्निरपेक्षत्वात् तदाशासनं तस्य बाध्यते-अर्थलोपादिति।

( ५ ) सिद्धान्तः—तृतीयसवनमेव यजमानस्य मरणकालः। तस्मात्पूर्वं तु जिजीविषुरेवायम्। तस्मात् पठनीयमायुराशासनमिति।

एतदभिप्रेत्याह जीवतीति। 'इह' सर्वस्वारे—यजमाने 'जीवति' सति तृतीयसवनात् प्राक् यावद् यजमानो जीवति तावत्—'आयुः' 'आशास्यम्' आयुराशासनरूपो मन्त्रभागः पठनीय एव—अतो न तस्य बाध इत्यर्थः ॥ २५ ॥

(२६) १०।२।६२ सत्रे दानमदृष्टकृत्।

( १ ) बाधविचारो वर्तते।

( २ ) प्रकृतौ 'हिरण्यमात्रेयाय ददाति' इति हिरण्यदानं श्रुतम्।

( ३ ) वैकृते सत्रे संशयः—इदं दानं भवति न वेति।

( ४ ) पूर्वपक्षः—आनत्यर्थं दानमिति स्थितम्—सत्रे आनतिप्रयोजनं नास्तीत्यप्यवगतम्। तस्मात् सत्रे इदं हिरण्यदानं नास्तीति।

( ५ ) सिद्धान्तः—उक्तस्य हिरण्यदानस्य सम्प्रदानत्वेन श्रुत आत्रेयो न ऋत्विक्—ऋत्विग्भ्योऽन्य एव यागे सहायकः। ऋत्विज एव यजमानाः सत्रे। अत आत्रेयस्य न यजमानता। तस्मादस्ति दानस्यानतिः प्रयोजनम्। परं सा आनतिः सर्वेषां कार्यकराणां कार्यारम्भात् पूर्वमेव स्वीकृतया भृत्या सम्पादिता। तस्मात् कार्यमध्ये यदिदमात्रेयाय दानं तन्नानत्यर्थं भवत्यपि त्वदृष्टार्थमेवेति।

एतदभिप्रेत्याह सत्र इति। 'सत्रे'—'दानम्' हिरण्यस्य आत्रेयाय यत्कृतं तत्—'अदृष्टकृत्' धर्ममेव सम्पादयति—न कार्यकरस्यानतिरूपं दृष्टं प्रयोजनमिति। एवं च नास्त्यस्य बाधः सत्रे इत्याशयः ॥ २६ ॥

## (२७) १०।२।६३ गुणलोपे च मुख्यं स्यात्

( १ ) बाधचिन्ता वर्तते ।

( २ ) सन्त्यग्न्याधाने पवमानेष्टयः । तत्र चोदकेन प्राप्तं निर्वापसाधनम्—'अग्निहोत्रहवण्या हवींषि निर्वपति' इति । पवमानेष्टिकाले चाग्निहोत्रं नास्ति तस्याधानोत्तरकालीनत्वात् । तस्मान्नास्त्यग्निहोत्रहवणी तत्र ।

( ३ ) एवं सति संशयः—पवमानेष्टौ निर्वापो भवति उत निवर्तते इति।

( ४ ) पूर्वपक्षः—अग्निहोत्रहवणीरूपस्य निर्वापसाधनस्यासत्त्वात् न भवति निर्वापः । तस्मात्तस्य बाध इति ।

( ५ ) सिद्धान्तः—मुख्योऽत्र निर्वापः । तम्प्रति गुणभूतैवाग्निहोत्रहवणी । न च गुणलोपेन मुख्यो लुप्यते । तस्मान्न निर्वापस्य बाध इति।

एतदभिप्रेत्याह गुणेति । 'गुणस्य' अग्निहोत्रहवण्याः 'लोपे' अभावे-'मुख्यं' निर्वापकर्म-'स्यात्'-अनुष्ठेयमिति शेषः ॥ २७ ॥

## (२८) १०।२।६४–६७ सङ्ख्या स्यान्मुष्टिलोपनम् ।

( १ ) बाधचिन्ता वर्त्तते ।

( २ ) अस्ति वाजपेयविकृतिः सप्तदशशरावश्चरुर्नैवारः, अस्ति च प्रकृतौ सङ्ख्या मुष्टिश्च-'चतुरो मुष्टीर्निर्वपति' इति ।

( ३ ) तत्र संशयः—विकृतौ किं सङ्ख्या गृह्यते मुष्टिर्लुप्यते–उत मुष्टिर्गृह्यते सङ्ख्या लुप्यते–उत उभयोर्लोपः–उत सङ्ख्याया वा मुष्टेरित्यनियमः इति ।

( ४ ) पूर्वपक्षः—नियमे प्रमाणाभावादन्यतरस्य लोपः–नास्ति नियम इति । अथवा विकृतौ सप्तदशसङ्ख्या श्रुता शरावश्च–तथाच सप्तदशसङ्ख्यया प्राकृतचतुःसङ्ख्याया बाधः शरावेण च प्राकृतमुष्टेर्बाध-इत्युभयोर्लोप इति ।

( ५ ) सिद्धान्तः—'चतुरो मुष्टीर्निर्वपति' इत्यत्र निर्वापः चतुस्सङ्ख्यागुणकः मुष्टिगुणकश्च विधीयते । सङ्ख्यामुष्ट्योश्च निर्वापक्रियया सम्बन्धे समाने सत्यपि प्रथमश्रुतत्वात् सङ्ख्यैवानुगृह्यते दुर्बलो मुष्टिर्बाध्यते । चतुर्मुष्टिभिश्च कृतनिर्वापं द्रव्यं न भवति सप्तदशशरावम् । तस्मात् अन्यतरस्य बाधः । न्याय्यतरश्च मुष्टेरेव बाध इति ।

एतदभिप्रेत्याह सङ्ख्येति । 'सङ्ख्या' सप्तदशसङ्ख्या-'मुष्टेः' एव 'लोपनम्' बाधकं-'स्यात्' । वैकृतया सप्तदशसङ्ख्यया प्राकृतायाः चतुःसङ्ख्याया न भवति बाधः—वैकृतेन शरावेण तु प्राकृतस्य मुष्टेर्भवति बाध इत्यर्थः ॥ २८ ॥

## (२९) १०।२।६८ नाजो धेन्वादिषु ग्राह्यः

( १ ) बाधचिन्ता वर्तते ।

( २ ) पशुविकृतिषु श्रूयते–'द्यावापृथिव्यां धेनुमालभेत–मारुतं वत्सम्–ऐन्द्रमृषभम्' इति, प्रकृतौ चास्ति अजः पशुः ।

( ३ ) तत्र संशयः—धेनुवत्सर्षभशब्दाः किमजवाचिन उत गोवाचिन इति ।

( ४ ) पूर्वपक्षः—धेनुशब्दो नवप्रसूतामाचष्टे–वत्सशब्दो बालम्–ऋषभशब्दः प्रौढं पुमांसम् । चोदकप्राप्तश्चाजः । तस्य परित्यागे मानाभावात् नवप्रसूता अजा–बालोऽजः–प्रौढश्चाजः इत्येते अत्र विवक्षिताः । गौस्तु न प्रत्यक्षं श्रूयते न चातिदेशेन प्राप्यते–प्रकृतावनुपदिष्टत्वात् इति ।

( ५ ) सिद्धान्तः—धेन्वादिशब्दा न सामान्यगुणमात्रवाचिनः–क्वचिदपि तथाप्रयोगाभावात् । गोगतानेवोक्तान् गुणानभिदधति ते शब्दाः–अतो प्रयोगबलादजेष्वनुपपन्ना अनुपदिष्टमनतिदिष्टमपि गामेव मुख्यया वृत्त्या विशिंषन्तश्चोदकातिदिष्टं छागं बाधन्त इति ।

एतदभिप्रेत्याह नाज इति । 'धेन्वादिषु' धेनुवत्सर्षभशब्देषु–'अजः' 'न' 'ग्राह्यः' विशेष्यतयेति शेषः । तस्मात् छागस्य बाध इत्यर्थः ॥ २९ ॥

## (३०) १०।२।६९ श्वेतोऽजो वायुदैवतः ।

( १ ) बाधविचिन्ता वर्तते ।

( २ ) 'वायव्यं श्वेतमालभेत' इति श्रूयते ।

( ३ ) तत्र संशयः—श्वेतशब्दोऽत्र किमतिदेशप्राप्तमजं वक्ति–उत यं कंचित् पशुम् इति ।

( ४ ) पूर्वपक्षः—श्वेतशब्दः श्वेतगुणमात्रमभिदधाति न तु धेन्वादिशब्दवत्पशुजातिविशेषम् । तस्मात् यं कंचिच्छ्वेतगुणकं पशुं वक्तीति अभ्युपेयमिति ।

( ५ ) सिद्धान्तः—चोदकप्राप्तस्याजस्य परित्यागे कारणाभावात् अज एव प्राप्नोति इति ।

एतदभिप्रेत्याह श्वेत इति । यो 'वायुदैवतः श्वेतः' आलम्भनीयत्वेन विहितः स 'अज' एव न यः कश्चित् पशुः । तस्मादजस्य न बाध इति भावः ॥ ३० ॥

## (३१) १०।२।७० न खादिरी खलेवाली

( १ ) बाधचिन्ता ।

( २ ) साद्यस्के 'खलेवाली यूपो भवतीति' श्रुतम् । प्रकृतौ च यूपस्य खादिरत्वमुक्तम् ।

( ३ ) तत्र सन्देहः—खलेवाल्यां चोदकप्राप्तं खादिरत्वं भवत्युत नेति ।

( ४ ) पूर्वपक्षः—यूपकार्यकरणे नियोजितायाः खलेवाल्याः यूपधर्मता युक्तिसिद्धा । तस्मात् चोदकप्राप्तं खादिरत्वं प्राप्नोत्येवेति ।

( ५ ) सिद्धान्तः—खलेवाल्यां पशुनियोजनादि कार्यमित्येव वाक्यार्थः । एवं च खलेवाल्याः यूपत्वे प्रमाणाभावात् न यूपगुणानां खादिरत्वादीनां प्राप्तिः । तस्मान्न नियमेन खादिरत्वमेव खलेवाल्याः इति ।

एतदभिप्रेत्याह नेति । 'खलेवाली' 'खादिरी' खदिरकाष्ठनिर्मिता एव भवेत् इति 'न' अस्ति नियम इत्याशयः ॥ ३१ ॥

## (३२) १०।२।७१-७२ नास्यां स्यात् तक्षणादिकम् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) खलेवाल्यां यूपधर्मः खादिरत्वं न नियमतो भवतीति स्थितम् । सन्ति च यूपे तक्षणादयो धर्माः ।

( ३ ) तत्र संशयः—किं तक्षणादयः खलेवाल्यां भवन्ति न वेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तानां धर्माणां त्यागे मानाभावाद् भवन्त्येवेति ।

( ५ ) सिद्धान्तः—यूपे तक्षणादयः काष्ठसंस्कारार्थं क्रियन्ते । खलेवाल्यां तु तादृशसंस्कारस्यानपेक्षितत्वात् अतिदिष्टा अपि तक्षणादयो न प्राप्नुवन्ति । तस्माद्बाध एव तक्षणादीनामिति ।

एतदभिप्रेत्याह नास्यामिति । 'अस्यां' खलेवाल्याम्-'तक्षणादिकम्' तक्षणम्-ओषणम्-उच्छ्रयणमित्येवमादि यूपधर्मजातम्-'न स्यात्' कर्तव्यम्-तस्मादेतेषां बाध एवेत्याशयः ॥ ३२ ॥

## (३३) १०।२।७३ अञ्जनादि भवेत् तस्याम्

( १ ) पूर्वाधिकरणापवादः ।

( २ ) यूपे सन्ति अञ्जनादयो धर्माः ।

( ३ ) तत्र संशयः—अञ्जनादयः खलेवाल्यां भवन्ति न वेति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन न भवन्ति इति ।

( ५ ) सिद्धान्तः—दृष्टार्थानां तक्षणादीनामप्रयोजकतया बाधः । अञ्जनादिकं तु यूपेऽप्यदृष्टार्थमेव । तस्मान्न बाधे कारणम् । तस्मात् यूपवत् खलेवाल्यामप्यदृष्टार्थमञ्जनादि कर्तव्यमेवेति ।

एतदभिप्रेत्याह अञ्जनादीति । 'तस्याम्' खलेवाल्याम्-'अञ्जनादि' अञ्जनम्-पर्यूहणमित्येवमादि-'भवेत्'-अदृष्टार्थमिति शेषः ॥ ३३ ॥

## (३४) १०।२।७४ धानार्थमवहन्यते ।

( २ ) महापितृयज्ञे हविः श्रूयते-'पितृभ्यो बर्हिषद्भ्यो धानाः' इति । [ 'धानाः' भृष्टधान्यम् ] । प्रकृतौ चावघातो विहितः ।

( ३ ) तत्र संशयः—धानास्ववघातो भवति न वेति ।

( ४ ) पूर्वपक्षः—धानानामवघाते सक्तुभावः प्रसज्यते-ततश्च धानास्वनाशे विधिव्याकोपः स्यात् । तस्मादवघातस्य बाध इति ।

( ५ ) सिद्धान्तः—धान्यानां भर्जनेन धानाभावः ततोऽवघात इत्येवं क्रमे स्याद् विधिव्याकोपः । तद्वारणाय धानानामादावेवावघातः पश्चात् भर्जनमित्येवं क्रमे न स्यात् सक्तुत्वम्--भृष्टधान्यरूपं धानात्वं तु स्यादेव । चोदकप्राप्तावघातबाधाद्वरं क्रमबाध एवेति कर्तव्य एवावघातो धानास्विति ।

एतदभिप्रेत्याह धानार्थमिति । 'धानार्थम्' धानासम्पादनायैव-'अवहन्यते' धान्यमिति शेषः । एवं च सति पूर्वमवघातः पश्चाद् भर्जनेन धानात्वमिति न सक्तुभावप्रसङ्ग इत्याशयः ॥ ३४ ॥

[ वार्तिकमतेनान्यथा व्याख्यातमिदमधिकरणं न्यायमालायां द्रष्टव्यम्]

उदिता भाष्यकारेण चतुर्स्त्रिंशत्तु नीतयः ।

स्पष्टम् ।

इति दशमस्य द्वितीयः ।

---

# अथ दशमस्य तृतीयः पादः ।

[बाधकारणस्य कार्यैकत्वस्य विचारः]

## (१) १०।३।१-१२ पशौ प्रयाजेषु विधिर्गुणस्य

( १ ) बाधचिन्ताऽनुवर्तते ।

( २ ) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्रेदं समाम्नायते—'एकादश प्रयाजान् यजति एकादशानुयाजान् यजति' इति ।

( ३ ) तत्र संशयः—किमेकादशादिगुणविशिष्टे पशौ प्राकृतेतिकर्तव्यता प्राप्नोति एकादशादिवाक्ये गुणविधिः—उत प्राकृतेतिकर्तव्यता न प्राप्नोति एकादशादिवाक्ये कर्मान्तरविधिरिति ।

( ४ ) पूर्वपक्षः—एकादशसङ्ख्यारूपगुणविशिष्टस्य प्रयाजस्य प्रत्यक्षविधौ सति उपदिष्टनैवाङ्गेन निराकाङ्क्षे पशौ चोदकेनातिदेशस्यावसरो नास्ति । तस्मात् न प्राप्नोति प्राकृतेतिकर्तव्यतेति ।

( ५ ) सिद्धान्तः—पशुविधिरितिकर्तव्यतामाकाङ्क्षति । तदाकाङ्क्षापूरणं द्वेधा सम्भवति—प्राकृतानामङ्गानामतिदेशेन विधास्यमानाङ्गान्तराणामुपदेशेन वेति । अनयोरौचित्यविवेके क्लृप्तोपकारतया प्राकृताङ्गातिदेश एव न्याय्यः । ततश्चातिदेशप्राप्तप्रयाजरूपमनूद्य एकादशसङ्ख्यारूपगुणविधिरेवेदं वाक्यम् । तस्मात् अत्र विहितया सङ्ख्यया यद्यपि प्राकृतस्य सङ्ख्याया बाधस्तथापि प्रयाजादीतिकर्तव्यता प्रकृतितोऽतिदेशेन प्राप्नोत्येवेति ।

एतदभिप्रेत्याह पशाविति । 'पशौ' अग्नीषोमीयपशुविषये ये प्रयाजा विहिताः—तेषु 'प्रयाजेषु' तान् प्रयाजाननूद्य—'गुणस्य' एकादशसङ्ख्यारूपस्य—'विधिः' एकादशप्रयाजानित्यस्मिन् वाक्ये इत्यर्थः । तस्मात्प्राकृतेतिकर्तव्यताया नास्ति बाध इत्याशयः ॥ १ ॥

## (२) १०।३।१३–१७ हिरण्यगर्भः प्रथमे न मन्त्रः ।

( १ ) बाधचिन्ता ।

( २ ) वायव्यपशावाम्नायते—'हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति' इति । तत्र प्रकृतितः प्राप्ते एवाघारे गुणविधिरिदमिति पूर्वाधिकरणन्यायेन स्थितम् ।

( ३ ) इदमिदानीं सन्दिह्यते—अयम्मन्त्रविधिः किम्पूर्वस्मिन्नाघारे उतान्तिमे इति ।

( ४ ) पूर्वपक्षः- प्रकृतौ पूर्वाघारः प्राजापत्यः । अस्मिंश्च मन्त्रे प्रजापतिरेव हिरण्यगर्भशब्देनोच्यते । तस्मान्मन्त्रलिङ्गात् पूर्वस्मिन्नेवाघारे मन्त्रः प्राप्नोतीति ।

( ५ ) सिद्धान्तः—प्रकृतौ प्रथमाघारोऽमन्त्रक एवेति 'प्रजापतिम्मनसा ध्यायन्नाघारयति' इत्यनेन वाक्येनावगम्यते । 'तूष्णीमाघारयति' इति प्रत्यक्षमपि श्रुतम् । द्वितीये चाघारे 'ऊर्ध्वोऽध्वर' इत्याद्यैन्द्रो मन्त्रो विहितः । स एव च विकृतौ चोदकेन प्राप्तः । तस्य बाधायैव हिरण्यगर्भमन्त्रविधिः । ततश्च प्रकृतौ द्वितीयाघारे य ऐन्द्रो मन्त्रः प्रयुज्यते-तस्य स्थाने विकृतौ हिरण्यगर्भमन्त्रः प्रयोज्य इत्यभ्युपेयम् । तस्माद्धिरण्यगर्भमन्त्रस्य द्वितीये एवाघारे प्राप्तिरिति ।

एतदभिप्रेत्याह हिरण्यगर्भ इति । 'हिरण्यगर्भः मन्त्रः' हिरण्यगर्भः समवर्तताग्रे इत्यादिः मन्त्रः—'प्रथमे' आघारे—'न' प्रयोज्यः—अपि तु द्वितीये एव—प्रकृतितः प्राप्तमैन्द्रमन्त्रं बाधित्वेत्याशयः ॥ २ ॥

## (३) १०।३।१८–२२ आसादने स्याद्द विधिरुत्करस्य

( १ ) बाधचिन्ता वर्तते ।

( २ ) सौमिकेषु चातुर्मास्येषु श्रूयते—'उत्करे वाजिनमासादय-ति' इति ।

( ३ ) तत्र संशयः—किमिदमासादनान्तरम्—उत प्राकृत एवासा-दने उत्कररूपगुणविधिः इति ।

(४) पूर्वपक्षः—प्रकृतमासादनं दृष्टार्थम् । इह विहितं त्वासादनं दृष्टार्थं न भवितुमर्हति तीदणाग्रे मृत्पांसुराशौ उत्करे आसादितेन वाजि-नाख्यजलीयद्रव्येण कस्यापि दृष्टस्य प्रयोजनस्य साधनमसम्भवम् । तस्माददृष्टार्थमेवेदमासादनं प्राकृतादासादनात् कर्मान्तरमित्यभ्युपे-यमिति ।

( ५ ) सिद्धान्तः—प्रथमाधिकरणन्यायेन प्राकृते एव वाजिनासा-दने उत्कररूपगुणविधिरयम् । मृद्राशिरूपस्योत्करस्य पृथक्प्रतापि सम्भ-वति—ततश्च तत्र वाजिनासादनं नैवात्यन्तमप्रयोजकमिति ।

एतदभिप्रेत्याह आसादन इति । 'आसादने' प्राकृते एव-'उत्करस्य' वाजिनाधारत्वेन—'विधिः' । ततश्च प्राकृते एवासादने तत्रोक्तं वेदि-रूपमाधारं बाधित्वा उत्कररूप आधारो ग्राह्यो विकृतावित्याशयः ॥ ३ ॥

## (४) १०।३।२३-२६ दीक्षाहुतीनां तु समुच्चयः स्यात् ।

( १ ) बाधचिन्ता वर्तते ।

( २ ) अग्निचयने षट् दीक्षाहुतयः श्रूयन्ते—'षड्भिर्दीक्षयति' इति । प्रकृतौ च षट् दीक्षाहुतयो विहिताः—'स्रुवेण चतस्रो जुहोति दीक्षित-त्वाय' इत्यादिना । मन्त्राश्चोभयत्र भिन्नाः । तथाहि—'आकूत्यै प्रयुजे-ऽग्नये स्वाहा' इत्यादयः प्रकृतौ—'आकूतिमग्निं प्रयुजं स्वाहा' इत्याद-यो विकृतौ ।

( ३ ) तत्र संशयः—विकृतौ किं प्राकृतानाम्मन्त्राणां बाधः—उत द्वादशानामपि समुच्चितः प्रयोग इति ।

( ४ ) पूर्वपक्षः—विकृतौ ये मन्त्राः प्रत्यक्षमुपदिष्टास्तैश्चोदकबलेना-तिदिष्टानां बाध एव न्याय्यः—अतिदेशादुपदेशस्य बलीयस्त्वादिति ।

( ५ ) सिद्धान्तः—'द्वादश जुहोति' इति वाक्यान्तरेण समुच्चयः स्पष्टं सूचितः। षड्भिर्वैकृतैर्मन्त्रैः षड्भिश्च प्राकृतर्मन्त्रैर्होमे सत्येव द्वाद-शसङ्ख्यापूर्तिः सम्भवति । तस्मात् समुच्चय एव न बाध इति ।

एतदभिप्रेत्याह दीक्षाहुतीनामिति । 'दीक्षाहुतीनां' प्रकृतावुक्तानां षण्णां विकृतौ चोक्तानां षण्णां-'समुच्चयः' सम्मेलनं-'स्यात्'-न बाधः प्राकृतानामिति भावः ॥ ४ ॥

## (५) १०।३।३०-३३ प्राग्दाक्षिणा नो पुनरादधातौ

(१) बाधचिन्ता वर्तते।

(२) आधाने—'एका देया, षड् देयाः, द्वादश देयाः' इत्यादिना नानाविधाः दक्षिणाः श्रुताः। पुनराधाने तु—'पुनर्निष्कृतो रथो दक्षिणा' इति अन्यैव दक्षिणाम्नाता [भग्नः पुनः समाहितो 'निष्कृत' इत्युच्यते]।

(३) तत्र संशयः—पुनराधाने या विशिष्टा दक्षिणा प्रोक्ता तया किं प्राकृतानां दक्षिणानां बाधः—उत समुच्चय इति।

(४) पूर्वपक्षः—'उभयीर्ददाति—आधेयिकीः पौनराधयिकीश्च' इति वचनात् समुच्चय इति।

(५) सिद्धान्तः—दक्षिणास्वरूपस्य कार्यस्यैकत्वात् उपदिष्टया अतिदिष्टाया बाध एव न्याय्यः। उभयीरिति वाक्यं तु न विधिरपि त्व-नुवाद एवेति।

एतदभिप्रेत्याह प्रागिति। 'प्राग्दक्षिणा' प्रथमाधानस्य या दक्षिणा विहिता सा—'पुनराधाने—'नो' न भवति। ततश्च तस्या बाध एवे-त्याशयः ॥ ५ ॥

## (६) १०।३।३४ वासादि पूर्वस्य निवर्तकं स्यात्।

(१) बाधचिन्ता वर्तते।

(२) आग्रयणे श्रूयते—'वासो दक्षिणा' 'वत्सः प्रथमजो दक्षिणा' इति। प्रकृतौ तु अन्वाहार्यो दक्षिणा। सा चात्र चोदकप्राप्ता।

(३) तत्र संशयः—वासादिभिर्वैकृतैः किं प्राकृतोऽन्वाहार्यो बाध्यते उत समुच्चीयते—इति।

(४) पूर्वपक्षः—उभयोर्विरोधाभावात् समुच्चय इति।

(५) सिद्धान्तः—एककार्यत्वात् न समुच्चयोऽपि तु बाध एवेति।

एतदभिप्रेत्याह वासादीति। 'वासादि' वासो वत्सश्च इत्येवमादि द-क्षिणा—'पूर्वस्य' प्राकृतस्य अन्वाहार्यस्य दक्षिणारूपस्य—'निवर्तकं' बाधकं—'स्यात्' इति सम्बन्धः ॥ ६ ॥

## (७) १०।३।३५ वासादिरन्वाहरणादिधर्मा

(१) बाधचिन्ता वर्तते।

(२) आग्रयणे दक्षिणोक्ता वासादिरूपा। प्रकृतौ चान्वाहार्यो दक्षि-णा। अत्रान्वाहार्ये सन्ति कतिचिद् धर्मा विहिताः। अन्वाहार्यस्य वि-कृतौ बाध इति स्थितम्।

(३) तत्र सन्देहः—किं विकृतावन्वाहार्यधर्माणामपि बाध उत नेति।

(४) पूर्वपक्षः—अन्वाहार्यनिमित्तत्वाद् धर्माणाम् अन्वाहार्यबाधे तेऽपि बाधिता भवन्तीति।

( ५ ) सिद्धान्तः—अन्वाहार्यस्य दक्षिणारूपत्वेनानतिसाधनत्वप्रयुक्ता एव ते धर्माः क्रियन्ते । तत्साधनत्वं च वासादेरपि समानम् । तस्मादत्रापि ते धर्मा अनुष्ठेया इति ।

एतदभिप्रेत्याह वासेति । 'वासादिः' यो दक्षिणात्वेनोक्तः स-'अन्वाहरणादिधर्मा' अन्वाहार्यस्य धर्मा एव धर्मा यस्य स एवम्भूतः—स्यादिति शेषः । तस्मादान्वाहार्यधर्माणां नास्ति बाध इत्याशयः ॥ ७ ॥

(८) १०।३।३६ वत्से न पाकः क्रियते विरोधात् ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) अन्वाहार्ये पाको भवति । स च चोदकप्राप्तो विकृतावाग्रयणे।

( ३ ) तत्र सन्देहः—आग्रयणदक्षिणाभूते वत्सेऽयं पाको भवति न वेति ।

( ४ ) पूर्वपक्षः—पूर्वन्यायेन अन्वाहार्यधर्माणां विकृतावतिदेशात् भवत्येव पाको वत्सस्येति ।

( ५ ) सिद्धान्तः—पाके सति वत्सस्य नाशः स्यात् । तस्मान्नास्ति वत्से पाक इति ।

एतदभिप्रेत्याह वत्स इति । 'वत्से' आग्रयणदक्षिणाभूते-'पाकः' प्राकृतान्वाहार्ये कर्तव्यत्वेन विहितः-'न क्रियते'—कुत इत्यत आह 'विरोधादिति' । असामञ्जस्यादित्यर्थः । वत्सस्य पाके नाशेनोपयोगित्वासम्भवे आनतिकार्यसम्पादनानौपयिकत्वे दक्षिणात्वभङ्गप्रसङ्गादित्याशयः ॥ ८ ॥

(९) १०।३।३७ वासो न पच्येत—न हीदमन्नम् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) आग्रयणे विकृतौ वासो वत्सश्च दक्षिणा । तत्र वत्से प्राकृतपाकस्यासम्भवः प्रदर्शितः । वाससि तादृशासम्भवो नास्ति ।

( ३ ) तस्मात्तत्र संशयः-वाससि पाको भवति न वेति ।

( ४ ) पूर्वपक्षः—उष्णोदकभाण्डे प्रक्षेपेण वाससो वत्सस्येव नाशो न भवति । तस्मादत्रान्वाहार्यवत् पाकः स्यादेव—सप्तमाधिकरणन्यायेनेति ।

( ५ ) सिद्धान्तः—अन्नस्योदनत्वसम्पादनायैव पाको भवति । न च वाससः पच्यमानस्योदनता कदाऽपि सम्भवति । तस्मादत्रापि अतिदिष्टस्य पाकस्य बाध एवेति ।

एतदभिप्रेत्याह वास इति । 'वासो न पच्येत' वाससि पाको न कार्यः—कस्मात्-'इदं' वासः 'अन्नम्' अदनीयं न भवति । तस्मात्पाकस्योपयोगित्वाभावादित्याशयः ॥ ९ ॥

(१०) १०।३।३८ न चाभिघारो वसने च वत्से ।

( १ ) बाधचिन्ता वर्तते । सप्तमाधिकरणस्यापवादान्तरम् ।

( २ ) आग्रयणदक्षिणाभूते वाससि वत्से चान्वाहार्यधर्मा अनुष्ठेया इति सप्तमे स्थितम् । अस्ति चान्वाहार्यधर्मेषु अभिघारः ।

( ३ ) तत्र संशयः–वाससि वत्से च अभिघारणं भवति न वेति ।

( ४ ) पूर्वपक्षः—सप्तमाधिकरणन्यायेन भवत्यभिघारणमिति ।

( ५ ) सिद्धान्तः—स्वादुतासम्पादनार्थैवाभिघारणं भवति अन्वाहार्ये । वाससि वत्से च स्वादुताया असम्भवेन द्वारलोपाद् बाध एवाभिघारणस्येति ।

एतदभिप्रेत्याह न चेति । 'वसने' वाससि—'वत्से च'—आग्रयणदक्षिणाभूते—'अभिघारः' अभिघारणं—'न'—कर्तव्यमिति शेषः ॥ १० ॥

(११) १०।३।३९–४९ शतं गवामेव तु दक्षिणासु

( १ ) बाधे प्रासङ्गिकी चिन्ता ।

( २ ) ज्योतिष्टोमे दक्षिणा श्रूयते—'गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च—तस्य द्वादशशतं दक्षिणा' इति [ 'द्वादशशतं' द्वादशाधिकशतमित्यर्थः ] ।

( ३ ) तत्र संशयः—द्वादशशतमिति या सङ्ख्या सा किं गवादिभिः सर्वैः सम्बद्धा उत गोमात्रेणेति ।

( ४ ) पूर्वपक्षः—गवादीनि सर्वाणि द्रव्याणि प्रधानानि—सङ्ख्या च तेषां गुणः गौणः । प्रतिप्रधानं च गुणस्यावृत्तिर्न्याय्या । तस्मात् सङ्ख्या गवादिभिः सर्वैः प्रत्येकमभिसम्बद्धेति ।

( ५ ) सिद्धान्तः—गौरेवात्र प्रथमः श्रुतः उपकारकतमश्च । यादृश उपकारो गवा भवति न तादृशोऽश्वादिभिः । तस्मादितरेषामपेक्षया गौरेव प्रधानम् । तस्माद् द्वादशशतसङ्ख्या गोमात्रेणाभिसम्बद्धेति ।

एतदभिप्रेत्याह शतमिति । 'दक्षिणासु' दक्षिणाद्रव्येषु गवादिषु यत् 'शतं' द्वादशाधिकशतं यदुक्तं तद्—'गवामेव' नेतरेषामश्वादीनामिति सम्बन्धः । एवं च सति विकृतिषु यत्र गोर्दक्षिणायाः सङ्ख्यान्तरं श्रूयते तत्रास्या द्वादशशतसङ्ख्याया बाधो भवति ॥ ११ ॥

(१२) १०।३।५०–५२ विभज्य दानं खलु दक्षिणायाः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) ज्योतिष्टोमे गौर्दक्षिणा—तस्या एव च सङ्ख्या द्वादशाधिकं शतमिति समधिगतम् ।

( ३ ) तत्र संशयः—ऋत्विग्भ्यो देयानां द्वादशाधिकशतसङ्ख्यकानां

गवां विभज्यैव दानमिति नियमः—उत विभज्य अविभज्य वेत्यत्र यजमानस्य स्वाच्छन्द्यमिति ।

( ४ ) पूर्वपक्षः—नियामकस्यानुपलम्भात् नास्ति नियमे प्रमाणम् । तस्माद् यथा यजमान इच्छति तथैव विभज्य अविभज्य वा दानमिति ।

( ५ ) सिद्धान्तः—अविभज्य ऋत्विक्समूहाय दाने प्रातिस्विकस्वत्वस्यानुत्पत्तौ परस्वत्वापादनरूपो दानशब्दार्थो न सम्पद्येत । समुपलभ्यते च लिङ्गमपि-'तुथो वो विभज्य विश्ववेदा विभजतु' इति । तस्माद् विभज्यैव दानमिति ।

एतदभिप्रेत्याह विभज्येति । 'दक्षिणायाः' शतगोरूपायाः—'दानं' ऋत्विग्भ्यः प्रदानम्—'विभज्य' विभागपूर्वकम्—'खलु' एव—इति संबन्धः ॥ १२ ॥

## (१३) १०।३।५३–५५ भागं समाख्यानुगुणं प्रकुर्यात्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) गवां दानं विभज्येति स्थितम् ।

( ३ ) तत्र संशयः—अयं विभागः किं सम उत विषमः—वैषम्येऽपि किं कर्मकृतं वैषम्यमुत शब्दकृतमिति ।

( ४ ) पूर्वपक्षः—वैषम्यहेतोर्विशेषस्याश्रवणात् समो विभागः । तथैव च विभागो लोके दृश्यते इति । अथ च यदि विषमो विभागस्तर्हि कार्यानुरूपमेव विभजनमिति ।

( ५ ) सिद्धान्तः—द्वादशाहे दीक्षायामेव ऋत्विजां नामान्युपलभ्यन्ते—'अर्धिनो दीक्षयति पादिनो दीक्षयति' इत्यादि । विभागे सति येषामृत्विजां अर्धं भवति ते अर्धिनः येषां चतुर्थांशस्ते पादिनः । एवं श्रौतसमाख्यानुसारेण विभागः कार्यः । तथा च केषांचित् अर्धम् केषांचिच्चतुर्थांश एवेति विषम एव विभाग इति ।

एतदभिप्रेत्याह भागमिति । 'समाख्यानुगुणं' अर्धिनः पादिनः इत्यादि नामानुसारेण-'कुर्यात्' । तस्माद्विषमः एव विभाग इति तात्पर्यम् १३

## (१४) १०।३।५६–५८ धेनुः समस्तस्य निवर्तिका स्यात् ।

( १ ) प्रकृतिगतदक्षिणास्वरूपं तद्विभागश्च निरूपितो बाधोपोद्घातरूपेण । इदानीं विकृतौ बाधचिन्ता पुनः प्रवर्तते ।

( २ ) 'अथैष भूः' इति भूनामकमेकाहमुपक्रम्य दक्षिणाविशेष आम्नातः 'धेनुर्दक्षिणा' इति । प्राकृतं च गौरश्व इत्यादिकं सर्वं चोदकप्राप्तम् ।

( ३ ) तत्र संशयः—वैकृत्या दक्षिणया धेनुरूपया किं प्राकृतं गोमात्रं बाध्यते उत गवाश्वादिकं सर्वमिति ।

(४) पूर्वपक्षः—नवप्रसूतगोवाचकेन धेनुशब्देन गोमात्रं विशिष्यते नाश्वादिकम् । तस्मात्तेन गोमात्रस्य बाधो नाश्वादिकस्येति ।

(५) सिद्धान्तः—गवादीनां सर्वेषां समूहितानां दक्षिणात्वम् । अत एवैकवचनप्रयोगो युज्यते । तस्माद् गवादीनां माषान्तानां सर्वेषां प्राकृतदक्षिणाभूतानां वैकृत्या दक्षिणया धेनुशब्दवाच्यया बाध इति ।

एतदभिप्रेत्याह धेनुरिति । 'धेनुः' भूनामकयागदक्षिणात्वेनाम्नाता नवप्रसूता गौः—'समस्तस्य' गौरश्व इत्यादीनां सर्वेषां प्राकृतदक्षिणानां समूहस्य—'निवर्तिका' बाधिका—'स्यात्'—नतु गोमात्रस्येत्यर्थः ॥१४॥

## (१५) १०।३।५६ एका च पञ्चेति गवां निवृत्तिः

(१) बाधचिन्ता वर्तते ।

(२) इदं श्रूयते—'यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यात्—अभिदग्धे पञ्च गाः' इति । प्रकृते च गौरश्व इत्यादि दक्षिणाः । ताश्च चोदकप्राप्ता विकृतौ ।

(३) एवं सति सन्देहः—'एका गौः' 'पञ्च गावः' इति यत् सङ्ख्याविशिष्टं द्रव्यं दक्षिणात्वेनोक्तं तत् किं प्राकृतं समस्तं दक्षिणाजातं बाधते—उत तेषाम्मध्ये गामेव इति ।

(४) पूर्वपक्षः—कृत्स्नां गवाश्वादिदक्षिणां बाधते । दक्षिणाशब्दयोगेन कार्यैक्यात् इति ।

(५) सिद्धान्तः—उदाहृते वाक्ये एकत्वसङ्ख्याविशिष्टगोविधाने गौरवात् सङ्ख्यामात्रं विधेयम् । एवं चेयं सङ्ख्या गोगतां प्राकृतीं सङ्ख्यामेव बाधते न त्वन्यत् किञ्चित् । तस्मात् एकत्वसङ्ख्या पञ्चत्वसङ्ख्या च प्राकृतसङ्ख्याविशिष्टां गामेव बाधते इति ।

एतदभिप्रेत्याह—एकेति । 'एका' 'पञ्च च इति' सङ्ख्याविधानेन—'गवाम्' प्राकृतसङ्ख्याविशिष्टानाम्—'निवृत्तिः' बाधः । प्राकृतसङ्ख्याविशिष्टा गौरेव बाध्यते–न त्वश्वादिकमिति शेषः ॥ १५ ॥

## (१६) १०।३।६०–६२ बाध्येत वत्सेन पुरोक्तसर्वम् ।

(१) बाधचिन्ता ।

(२) साद्यस्क्रे वर्षत्रयवयस्को वत्सः सोमक्रयसाधनत्वेनाम्नातः 'त्रिवत्सः साण्डः सोमक्रयण' इति । प्रकृतौ तु—'अजया क्रीणाति हिरण्येन क्रीणाति वृषभेण क्रीणाति' इत्यन्यानि क्रयसाधनान्युक्तानि । एतानि च साद्यस्क्रे चोदकप्राप्तानि ।

(३) तत्र संशयः—किं त्रिवत्सः प्राकृतस्य ऋषभमात्रस्य बाधकः–उत प्राकृतानां सर्वेषाम्—इति ।

( ४ ) पूर्वपक्षः—यथा वत्सः पुङ्गवस्तथा ऋषभोऽपि । न त्वजाद-यस्तथा । तस्माद्वृषभमात्रस्य बाध इति ।

( ५ ) सिद्धान्तः—वत्सः प्रत्यक्षं क्रयेण सम्बध्यते । तस्मात् सर्वेषां प्राकृतानां क्रयसाधनानां बाधक इति ।

एतदभिप्रेत्याह बाध्येतेति । 'वत्सेन' वैकृतेन क्रयसाधनेन—'पुरोक्तं' प्रकृतौ विहितं 'सर्वं' सर्वाणि क्रयसाधनानि अजादीनि—'बाध्येत' निवर्तितं भवति—न केवलमृषभमात्रमिति भावः ॥ १६ ॥

## (१७) १०।३।६३–६४ प्राकाशबोधे न तु सर्वबाधो

( १ ) बाधचिन्ता ।

( २ ) अश्वमेधे श्रूयते—'हिरण्मयौ प्राकाशावध्वर्यवे ददाति' इति । 'प्राकाशौ' दीपस्तम्भौ । तौ ह्यत्राध्वर्यवे देयत्वेनाम्नातौ । प्रकृतौ तु गवाश्वादयो विहिताः ।

( ३ ) तत्र संशयः—प्राकाशौ किं कृत्स्नस्य प्राकृतस्य दक्षिणाद्रव्यस्य बाधकौ—उत अध्वर्युभागमात्रस्येति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सर्वस्य बाध इति ।

( ५ ) सिद्धान्तः—'अध्वर्यवे ददाति' इति सम्प्रदानविशेषसम्बन्धिनी दानक्रिया उच्यते । तस्मात् सम्प्रदानविशेषविशिष्टदानद्रव्येण तत्सम्प्रदानविशिष्टदानद्रव्यस्यैव बाधो न त्वन्येषां दानद्रव्याणाम् । तस्मात् अध्वर्युभागस्यैव बाधो न सर्वस्य दक्षिणाद्रव्यस्येति ।

एतदभिप्रेत्याह—प्राकाशेति । 'प्राकाशयोः' अध्वर्यवे देयत्वेन विहितयोर्दीपस्तम्भयोः 'बोधे' विधौ—'सर्वेषां' प्राकृतदक्षिणाद्रव्याणाम् 'बाधः' न भवति—अपि तु तेषाम्मध्येऽध्वर्युदेयमात्रस्येति शेषः ॥१७॥

## (१८) १०।३।६५–६७ ऽश्वः स्यात् समस्तस्य निवर्तनाय ।

( १ ) बाधचिन्ता—पूर्वाधिकरणापवादः ।

( २ ) उपहव्यनामके एकाहयागे श्रूयते—'अश्वः श्यावो रुक्मललाटो दक्षिणास ब्रह्मणे देयः' इति—श्यावाश्वरूपा दक्षिणा । प्रकृतौ च गवाश्वादयः ।

( ३ ) तत्र संशयः—इदमश्वद्रव्यं किं कृत्स्नं दक्षिणाद्रव्यं बाधते-उत ब्रह्मभागमात्रस्येति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन ब्रह्मभागमात्रं बाध्यते इति ।

( ५ ) सिद्धान्तः—दक्षिणाशब्दसम्बन्धात् चतुर्दशाधिकरणन्यायेन कृत्स्नस्यैव बाधक इति ।

एतदभिप्रेत्याह अश्व इति । 'अश्वः' ब्रह्मणे देयत्वेनाम्नातः—'सम-

स्तस्य' प्राकृतानां सर्वेषां दक्षिणाद्रव्याणां-'निवर्तनाय' बाधाय-'स्यात्'-बाधको भवेत्—न तु ब्रह्मभागमात्रस्येत्याशयः ॥ १८ ॥

## (१६) १०।३।६८-७३ तथा समस्तं चमसेन बाध्यम्

( १ ) बाधचिन्ता ।

( २ ) ऋतपेये श्रूयते—'औदुम्बरः सोमचमसो दक्षिणा'-स प्रियाय सगोत्राय ब्रह्मणे देयः' इति । प्रकृतितश्च गवाश्वादिकं प्राप्तम् ।

( ३ ) तत्र संशयः—किमयं चमसो ब्रह्मभागमात्रं बाधते उत सर्वं दक्षिणाद्रव्यम् ।

( ४ ) पूर्वपक्षः—'ब्रह्मणे देय' इति स्पष्टमुक्तत्वात् ब्रह्मभागमात्रं बाध्यते इति ।

( ५ ) सिद्धान्तः—पूर्वाधिकरणन्यायेन कृत्स्नं दक्षिणाद्रव्यं बाध्यते इति ।

एतदभिप्रेत्याह—तत्रेति । यथा पूर्वाधिकरणे अश्वेन-'तथा' ऋतपेयेऽपि-'चमसेन'-'समस्तं' कृत्स्नं दक्षिणाद्रव्यं गवाश्वादिकं-'बाध्यम्' बाध्यते-नतु ब्रह्मभागमात्रमित्यर्थः ॥ १६ ॥

## (२०) १०।३।७१-७३ (वर्णकान्तरं) न ब्रह्मभागव्यतिरिक्तदानम् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) सर्वस्य दक्षिणाद्रव्यस्य बाध इति पूर्वाधिकरणे स्थितम् ।

( ३ ) तत्र संशयः—किमनेन बाधेन ब्रह्मातिरिक्तेभ्य ऋत्विग्भ्यो दक्षिणा नैव देयेति पर्यवसानम्-उत यथा ब्रह्मणे चमसो देयस्तथैवेतरेभ्योऽपि स एव देय इति ।

( ४ ) पूर्वपक्षः—गवाश्वादिदक्षिणाद्रव्यस्यैव बाधो न तु ऋत्विक्पुरुषाणाम् । तथाच ऋत्विग्भ्यो दक्षिणा देयेति स्थिते गवाश्वादौ च बाधिते चमस एवैकोऽवशिष्यते यः सर्वेभ्यो देय इति ।

( ५ ) सिद्धान्तः—बाधिते दक्षिणाद्रव्ये देयस्याभावात् दानमेव बाधितम्भवति । तस्मात् सर्वेभ्य ऋत्विग्भ्यो दानं बाधितं भवति । ब्रह्मणे दानं तु चमसस्य 'ब्रह्मणे देय' इति वाक्यान्तरेण विहितम् । तस्मात् तस्मै देयैव दक्षिणा चमसरूपा इति ।

एतदभिप्रेत्याह—नेति । 'ब्रह्मभागाद्' विशिष्य ब्रह्मणे देयत्वेन विहितात् चमसद्रव्यात् 'व्यतिरिक्तस्य' ऋत्विगन्तरेभ्यो देयस्य प्राकृतस्य दक्षिणाद्रव्यस्य 'दानं' 'न' भवति—तस्मात् ब्रह्मणे केवलं चमसो दातव्यः इतरेभ्यस्तु दक्षिणा न देया-आनतिस्तु तेषां यथाकथञ्चिल्लौकिकोपायैः सम्पादनीयेत्याशयः ॥ २० ॥

## (२१) १०।३।७४-७५ यजूरथोऽध्वर्युमुपैति नान्यम्

( १ ) बाधचिन्ता वर्तते।

( २ ) वाजपेये श्रूयते-'यजुर्युक्तं रथमध्वर्यवे ददाति' इति। [ अस्यार्थः-रथशकटादीनि सप्तदशद्रव्याणि प्राकृतगवाश्वादिद्रव्यबाधकानि विहितानि तत्र सप्तदशानां रथानामेको रथो मुख्यः इन्द्रस्येत्यादि यजुर्वेदोक्तैर्मन्त्रैः सज्जीक्रियते-स वायं यजुर्युक्तो रथः यजूरथ इति चोच्यते। एतं रथं दक्षिणाकाले अध्वर्यवे दद्यात्-इत्यर्थः। ]

( ३ ) तत्र संशयः—किमयं यजूरथः दक्षिणासु अध्वर्युभागमात्रस्य बाधकः-उत सप्तदशसु रथेषु प्रदेयेषु अध्वर्युभागस्य नियामक इति।

( ४ ) पूर्वपक्षः—सप्तदशाधिकरणन्यायेनाध्वर्युभागस्य बाधकः। तस्मात् इतरेषु रथेषु शकटादिषु वा दक्षिणाद्रव्येषु यजूरथाद् व्यतिरिक्तमध्वर्यवे न देयमिति।

( ५ ) सिद्धान्तः—नात्र सप्तदशाधिकरणन्यायावतारः वैषम्यात्। तत्र प्राकाशावत्यन्तमप्राप्तौ विहितौ-अत्र तु सप्तदशसु रथेषु यजूरथस्याप्यन्तर्गतत्वान्नात्यन्तमप्राप्तिः। तस्मात् सप्तदशसु यो यजूरथः सोऽवश्यमध्वर्यवे एव देय इत्यस्मिन्नियमे एव तात्पर्यं विधेरिति न कस्यापि बाधोऽत्र विवक्षित इति।

एतदभिप्रेत्याह यजूरथ इति। 'यजूरथः' यजुर्युक्तो मुख्यो रथः-'अध्वर्युम्' अध्वर्यवे एव 'उपैति' दीयते-'नान्यम्' नान्यस्मै स रथो देय इत्येतावत्येव नियमे तात्पर्यं विधिवाक्यस्येत्यर्थः॥ २१॥

न्याया इहैकाधिकविंशतिः स्युः।

स्पष्टम्।

इति दशमस्य तृतीयः।

---

# अथ दशमस्य चतुर्थः।

[ बाधप्रतियोगिसमुच्चयनिरूपणपरः ]

## (१) १०।४।१-२ उपहोमा न बाधन्ते।

( १ ) बाधानन्तरं तत्प्रतियोगिभूतः समुच्चयश्चिन्त्यते।

( २ ) अस्त्यग्निचयने नक्षत्रेष्टिः। तत्रोपहोममन्त्राः-'अग्नये स्वाहा-अम्बायै स्वाहा-दुलायै स्वाहा' इत्यादयः। प्रकृतौ च प्रधानहोमानन्तरभाविनो नारिष्ठहोमा विहिताः—'नारिष्ठान् होमान् जुहोति' इति।

तत्र च मन्त्राः-'दश ते तनु वो यज्ञायज्ञियाः' इत्यादयः। त इमे नारिष्ट-होमाश्चोदकप्राप्ता नक्षत्रेष्टौ।

(३) तत्र संशयः—प्राकृतानां नारिष्टहोमानां वैकृतैरुपहोमैर्बाध उत समुच्चय इति।

(४) पूर्वपक्षः—उपहोमनारिष्टहोमयोर्होमरूपत्वात् कार्यैक्यं प्र-तीयते। तस्मादुपहोमैर्नारिष्टहोमानां बाध इति।

(५) सिद्धान्तः—दृष्टार्थेषु तावद् भवति कार्यैकत्वाद् बाधः। प्र-कृते तूभावप्यदृष्टापूर्वार्थौ। अपूर्वं च विधिभेदेन भिद्यते। तस्मादुपहो-मनारिष्टहोमयोरपूर्वरूपकार्यभेदान्न बाधोऽपि तु समुच्चय एवाभ्यु-पेय इति।

एतदभिप्रेत्याह उपहोमा इति। 'उपहोमा' 'न' 'बाधन्ते'-चोदकप्रा-प्तान् नारिष्टहोमानिति शेषः॥ १॥

(२) १०।४।२ कुशानां बाधकाः शराः।

(१) पूर्वाधिकरणापवादः।

(२) अस्त्यभिचारकर्म-'सौमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीही-णामभिचरन्'। तत्रैव 'शरमयं बर्हिः' इत्याम्नातम्। प्राकृतं कुशबर्हि-श्चोदकेन प्राप्तम्।

(३) तत्र संशयः—वैकृतेन शरेण कुशस्य बाध उत समुच्चय इति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेनात्र समुच्चय इति।

(५) सिद्धान्तः—शरमयमित्यत्र विकारार्थे मयट्प्रत्ययः। तस्मात् समस्तस्य बर्हिषः शरविकारत्वम्प्राप्तम्। तेन च कुशस्य बाधः एव— कार्यैक्यात् इति।

एतदभिप्रेत्याह कुशानामिति। 'शराः' वैकृताः-'कुशानां' प्राकृतानां- 'बाधका' एव-तस्मान्नात्र समुच्चय इत्याशयः॥ २॥

(३) १०।४।२ ( वर्णकान्तरम् ) दर्भमन्त्रार्थयोर्घोषः

(१.) बाधे विचारविशेषः।

(२) अस्ति वाजपेयः-'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति। तत्र श्रूयते-'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति-दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति'। प्रकृतौ तु 'उपावर्तध्वमिति दर्भाभ्यां स्तो-त्रमुपाकरोति' इति श्रुतम्। [ उपाकरणं नाम स्तोत्रम्प्रति प्रेरणम्। ]

(३) तत्र संशयः-किं रथघोषेण दुन्दुभिघोषेण च प्राकृतस्य बाधः, रथद्रव्येण दुन्दुभिद्रव्येण च दर्भद्रव्यस्य- उत मन्त्रस्य द्रव्यस्य चेत्युभयो-रपि घोष एव बाधक इति।

( ४ ) पूर्वपक्षः--घोषो मन्त्रस्य बाधकः, रथद्रव्यं दुन्दुभिद्रव्यं च दर्भद्रव्यस्य । तथैवोभयत्र उभयोः कार्यैक्यात् इति ।

( ५ ) सिद्धान्तः--घोष एव मन्त्रस्य द्रव्यस्य च बाधक इति ।

एतदभिप्रेत्याह-दर्भेति । 'घोषः' रथस्य दुन्दुभेश्च-'दर्भमन्त्रार्थयोः' 'दर्भमन्त्रस्य' दर्भसम्बन्धेन विहितस्य मन्त्रस्य, 'दर्भार्थस्य' दर्भद्रव्यस्य चेत्युभयोः-'बाधकः' इति पूर्वेण सम्बध्यते ॥ ३ ॥

## (४) १०।४।३-५ बार्हस्पत्यो न बाधकः ।

( १ ) समुच्चयचिन्ता ।

( २ ) बृहस्पतिसवे श्रूयते-'बार्हस्पत्यं ग्रहं गृह्णाति' इति । सन्ति च प्रकृतौ ऐन्द्रवायवाद्या ग्रहाः । ते इह चोदकप्राप्ताः ।

( ३ ) तत्र संशयः-प्राकृता ऐन्द्रवायवाद्याः किं बार्हस्पत्येन बाध्यन्ते उत समुच्चीयन्ते ।

( ४ ) पूर्वपक्षः--प्राकृता वैकृतेन बाध्यन्ते । यागनिष्पादनलक्षणस्य कार्यस्यैकत्वात् । ग्रहशब्दसम्बन्धश्च कार्यैक्यगमक इति ।

( ५ ) सिद्धान्तः-इहोपदिष्टस्य बार्हस्पत्यस्यातिदिष्टैरैन्द्रवायवादिभिः समुच्चय एव न्याय्यः । यागनिष्पादकत्वं तु सहितानामेव नैकैकस्य। ग्रहशब्दश्चापूर्वविधेयग्रहणक्रियां वक्ति- न तु प्रकृतौ क्लृप्तकार्यं कञ्चित् पदार्थमनुवदति । तस्मात्समुच्चय इति ।

एतदभिप्रेत्याह बार्हस्पत्य इति । 'बार्हस्पत्यः' ग्रहः-'न' 'बाधकः' वैकृतानां ग्रहाणाम्-अपि तु समुच्चायक एवेत्याशयः ॥ ४ ॥

## (५) १०।४।६ प्राजापत्या न बाधन्ते

( १ ) समुच्चयचिन्ता ।

( २ ) वाजपेये श्रूयते-'सप्तदश प्राजापत्यान् पशूनालभते' इति। प्रकृतौ तु सन्ति आग्नेयादयः पशवः । ते इह चोदकप्राप्ताः ।

( ३ ) तत्र संशयः-प्राजापत्या आग्नेयादीन् बाधन्ते न वेति ।

( ४ ) पूर्वपक्षः-बाध एव-पशुत्वलिङ्गात् । नहि पशुशब्दोऽपूर्वविधेयक्रियां काञ्चिद् वक्ति इति ।

( ५ ) सिद्धान्तः—पूर्वाधिकरणन्यायोऽत्रापि योजनीयः । वाजपेयप्रसङ्गेन श्रूयते—'ब्रह्मवादिनो वदन्ति'''कस्मात् सर्वे वाजपेये यज्ञक्रतवोऽवरुध्यन्ते आग्नेयं पशुमालभते ऽग्निष्टोममेतेनावरुन्धे—ऐन्द्राग्नेनोकथम्' इत्यादि । अत्र च वाक्ये चोदकप्राप्ताग्नेयादिपशुसद्भावस्य वाजपेये सिद्धवदनुवादात्-वैकृतैस्सह प्राकृतानां समुच्चयोऽभ्युपगन्तव्य इति।

एतदभिप्रेत्याह प्राजापत्या इति । 'प्राजापत्याः' पशवः—'न बाधन्ते'—वाजपेये प्राकृतानाग्नेयादीन् पशूनिति—अपि तु समुच्चय एवात्रेत्याशयः ॥ ५ ॥

## (६) १०।४।७-६ ऽनुयाजाः स्युः सहामनैः ।

( १ ) समुच्चयोदाहरणम् ।

( २ ) साङ्ग्रहण्यां श्रूयते—'आमनमस्यामनमस्य देवा ये सजाता इति तिस्र आहुतीर्जुहोति' इति । सन्ति प्रकृतौ त्रयोऽनुयाजाः । ते चात्र चोदकप्राप्ताः ।

( ३ ) तत्र संशयः—किमामनहोमैरनुयाजा बाध्यन्ते—उत समुच्चीयन्त इति ।

( ४ ) पूर्वपक्षः-त्रित्वलिङ्गसाम्येनानुयाजा आमनहोमैर्बाध्यन्ते-इति ।

( ५ ) सिद्धान्तः—कर्मान्तरमत्र विधीयते । तस्मान्न बाधोऽपि तु समुच्चय एवेति ।

एतदभिप्रेत्याह अनुयाजा इति । 'अनुयाजाः' त्रयोऽनुयाजाहुतयः—'आमनैः' आमनहोमैः-'सह' समुच्चिताः—'स्युः' भवेयुः—न तु बाधिता इति शेषः ॥ ६ ॥

## (७) १०।४।८-६ उपगानं समुच्चेयम्

( १ ) समुच्चयोदाहरणम् ।

( २ ) गवामयनेऽस्ति महाव्रतं नामैकाहः । तत्र श्रूयते-'पत्न्य उपगायन्ति' इति । सन्ति च प्रकृतावुपगातार ऋत्विजः। तेऽत्र चोदकप्राप्ताः।

( ३ ) तत्र संशयः—विकृतौ गायन्तीभिः पत्नीभिः प्राकृता उपगातार ऋत्विजः बाध्यन्ते । उत समुच्चीयन्त इति ।

( ४ ) पूर्वपक्षः—गानशब्दो हि शारीर्यां गीतौ प्रसिद्धः । तस्माद् गानमेवोपगानम् । ततश्च विकृतौ ऋत्विक्कार्यमुपगानं पत्न्य एव कुर्वन्ति । तस्मादृत्विजो निवर्तन्ते—एवं च ऋत्विक्कर्तृकमुपगानं बाध्यत इति ।

( ५ ) सिद्धान्तः—'दिक्षु दुन्दुभयो नदन्ति' इति दुन्दुभिगानस्यान्तरं विहितं पत्नीभिरुपगानं ऋत्विक्कृतसामगानात् कर्मान्तरम् । तन्त्रीगानेऽपि गानशब्दः प्रयुज्यते । तस्यैवोपगानं पत्नीभिरुपगानम् । तस्मात् पत्नीकृतोपगानेन ऋत्विक्कृतोपगानस्य न बाधोऽपि तु समुच्चय एवेति ।

एतदभिप्रेत्याह उपगानमिति । 'उपगानम्'पत्नीकर्तृकम् ऋत्विक्कर्तृकमित्युभयम्—'समुच्चेयम्' सह प्रयोज्यम्—नानयोर्बाध्यबाधकभाव इत्याशयः ॥ ७ ॥

एतदभिप्रेत्याह उपगानमिति । 'उपगानम्' पत्नीकर्तृकम् ऋत्विक्कर्तृकमित्युभयम्—'समुच्चेयम्' सह प्रयोज्यम्—नानयोर्बाध्यबाधकभाव इत्याशयः ॥ ७ ॥

(८) १०।४।१०-१२ तथा गौग्गुलवाञ्जनम् ।

( १ ) समुच्चयोदाहरणम् ।

( २ ) अस्ति अञ्जनाभ्यञ्जनो नाम एकोनपञ्चाशद्रात्रः सत्रविशेषः। तत्रेदं समाम्नायते—'गौग्गुलवेन प्रातःसवने समञ्जते' इत्यादि । अस्ति प्रकृतौ नवनीतेनाभ्यञ्जनम् । तदिह चोदकप्राप्तम् ।

( ३ ) तत्र संशयः—प्राकृतं नवनीताभ्यञ्जनं गौग्गुलवाभ्यञ्जनेन बाध्यते उत समुच्चीयत इति ।

( ४ ) पूर्वपक्षः—लेपजन्यं शरीरसंस्काररूपं कार्यमुभयत्र समानम्। तस्माद्बाध इति ।

( ५ ) सिद्धान्तः-अस्तीह कार्यभेदः । गौग्गुलवाभ्यञ्जने शैत्यं नवनीताभ्यञ्जने तु स्निग्धता जन्यते । किञ्च नावनीतो दीक्षाकालीनः गौग्गुलवः सुत्याकालीनः । तस्मात् समुच्चयो न बाधः इति ।

एतदभिप्रेत्याह तथेति । 'गौग्गुलवाञ्जनम्' गुग्गुलेनाभ्यञ्जनमपि—'तथा'—प्राकृतेन नवनीताभ्यञ्जनेन 'समुच्चेयम्'इति भावः ॥ ८ ॥

(९) १०।४।१३-१५ समुच्चयो वाससां स्यात्

( १ ) समुच्चयोदाहरणम् ।

( २ ) महाव्रते श्रूयते-'तार्यं यजमानः परिधत्ते दर्भमयं पत्नी' इति। [ 'तार्यम्'घृताक्तः कम्बलः ] । प्रकृतौ तु 'अहतं वासः परिधत्ते' इति ।

( ३ ) तत्र सन्देहः—तार्यदर्भमयाभ्यामहतस्य वाससो बाध उत समुच्चय इति ।

( ४ ) पूर्वपक्षः—'परिधत्ते' इत्यनेन गुह्याच्छादनरूपकार्यस्यैकत्वाद्बाध एवेति ।

( ५ ) सिद्धान्तः—तार्यदर्भमयाभ्यां गुह्याच्छादनं नैव भवति । 'वासांसि विस्रंसयति' इत्यनुवादे बहूनां वाससामुक्तत्वात् तार्यदर्भमयशब्दाभ्यामुपरितनं वस्त्रं विवक्षितमिति प्रतिभाति । तस्मात् कार्यभेदात् समुच्चय एव न बाध इति ।

एतदभिप्रेत्याह समुच्चय इति । 'वाससाम्''तार्यं' 'दर्भमयम्' इति वैकृते तथाच 'अहतम्' इति प्राकृतम्—इत्येतेषां त्रयाणां—'समुच्चयः'—न तु वैकृताभ्यां प्राकृतस्य बाध इति ॥ ९ ॥

(१०) १०।४।१६-१७ श्लोकस्तोत्रन्न बाधकम् ।

( १ ) समुच्चयोदाहरणम् ।

( २ ) महाव्रते श्रूयते—'श्लोकेन पुरस्तात् स्तुवते अनुश्लोकेन पश्चाद' इति । प्रकृतौ तु सन्त्याज्यपृष्ठादिस्तोत्रगतानि रथन्तरवामदेव्यनामकानि सामानि ।

( ३ ) तत्र संशयः—वैकृतं श्लोकस्तोत्रं प्राकृतानां साम्नां बाधकन्न वेति ।

( ४ ) पूर्वपक्षः—प्रकृतौ 'आज्यैः स्तुवते' इत्यादि श्रूयते-विकृतौ च 'श्लोकेन स्तुवते' इत्यादि । उभयत्रैकस्यैव कार्यस्य स्तवनरूपस्य सत्त्वाद् बाधो वैकृतेन प्राकृतानामिति ।

( ५ ) सिद्धान्तः—श्लोकेनेत्यत्र वाक्ये गुणद्वयविशिष्टा स्तुतिर्विधीयते—प्रकृतौ चान्यदेव विशेषणं स्तोत्रस्य । विशेषणभेदेन च विशेष्ययोर्भेदः । एवं च कार्यैक्याभावे नास्ति बाधः—अपि तु समुच्चय एवेति ।

एतदभिप्रेत्याह श्लोक इति । 'श्लोकस्तोत्रं' वैकृतं-'न बाधकम्' प्राकृतानां स्तोत्राणामिति शेषः । तस्मादत्र समुच्चय एवेत्यर्थः ॥ १० ॥

(११) १०।४।१७ ( वर्णकान्तरम् ) कौत्सादि पूर्वं बाधेत

( १ ) समुच्चयापवादः ।

( २ ) विकृतिविशेषे श्रूयते—'कौत्सं भवति काण्वं भवति' इति । प्रकृतौ तु सामान्तरम् ।

( ३ ) तत्र संशयः—किं कौत्सादिना प्राकृतस्य साम्नो बाध उत समुच्चयः इति ।

( ४ ) पूर्वपक्षः—कार्यैक्याभावात् समुच्चय इति ।

( ५ ) सिद्धान्तः—प्रकरणात् क्रत्वङ्गत्वे सति अगक्षराभिव्यक्तिसामर्थ्यलक्षणप्राकृतलिङ्गेन कार्यैक्यमवगम्यते । तस्माद् बाध इति ।

एतदभिप्रेत्याह कौत्सेति । 'कौत्सादि' कौत्सं काण्वमिति सामद्वयम्—'पूर्वं' प्राकृतं—'साम' 'बाधेत'—तस्मान्नात्र समुच्चय इति भावः॥११॥

(१२) १०।४।१८–१९ तद्बाधः सपसङ्ख्यया ।

( १ ) बाधोदाहरणम् ।

( २ ) पूर्वोदाहृतमेव वाक्यम्—'कौत्सं भवति—काण्वं भवति—वसिष्ठस्य जनित्रे भवतः—शुद्धाशुद्धीये भवतः—भर्गयशसी भवतः—क्रौञ्चानि भवन्ति' इति । सन्ति च प्राकृतानि सामानि चोदकप्राप्तानि कौत्सादीनि प्राकृतानां बाधकानीति स्थितम् ।

( ३ ) तत्र संशयः—किं सर्वाणि वैकृतानि सर्वेषां प्राकृतानां बाधकानि—अथवा एकवचनान्तनिर्दिष्टमेकस्य बाधकं, द्विवचनान्तनिर्दिष्टं द्वयोः, बहुवचनान्तनिर्दिष्टं बहूनामिति नियम इति ।

( ४ ) पूर्वपक्षः—नियामकाभावात् सर्वाणि सर्वेषां बाधकानीति।

( ५ ) सिद्धान्तः—सन्त्येव नियामिका एकादिवचनरूपाः श्रुतयः। 'कौत्सं' 'जनित्रे' 'क्रोश्चानि' इति बाधकेषु श्रूयमाणानि एकवचनद्विवचनबहुवचनानि बाध्यानामप्येतत्सङ्ख्यावत्त्वं सूचयन्ति। तस्मात् समसङ्ख्यकयोरेव बाध्यबाधकभावः न सर्वं सर्वस्य बाधकमिति।

एतदभिप्रेत्याह तदिति। 'तस्य' प्राकृतस्य साम्नः 'बाधः'—वैकृतेन कौत्सादिना साम्ना—'समसङ्ख्यया' एकवचनाद्यनुसारेणैव—स्यादिति शेषः। विकृतावेकवचननिर्दिष्टम् साम प्राकृतस्यैकस्य साम्नो बाधकम्, द्विवचननिर्दिष्टं द्वयोरित्येवं क्रमेण वकृतानां बाध इत्याशयः ॥ १२ ॥

## (१३) १०।४।२० न बाधः स्तोमवृद्धौ तु

( १ ) बाधापवादोदाहरणम्।

( २ ) सन्ति विवृद्धस्तोमकाः अविवृद्धस्तोमकाश्च क्रतवः। तत्र क्वचित् विकृतौ प्राकृती स्तोत्रसङ्ख्या विवृद्धा भवति क्वचिद् हीना भवति।

( ३ ) तत्र सन्देहः—विकृतौ हानौ वृद्धौ वा उभयत्रापि प्राकृतानां साम्नां बाधः—उत हानौ बाधः विवृद्धावबाध इति।

( ४ ) पूर्वपक्षः—उभयत्रापि प्राकृतानां बाध एवेति।

( ५ ) सिद्धान्तः—विवृद्धौ न बाधः। आगमेन हि साम्नां सङ्ख्यापूरणं वक्ष्यतेऽग्रे (१०।५।२३)। एवं च चोदकानुग्रहोऽपि भवति। यदा तु अविवृद्धिस्तदा प्राकृतानां यावतां बाधने वैकृती सङ्ख्या पूर्यते तावत् बाधितव्यमन्यच्च ग्राह्यमेव। तस्माद् विवृद्धस्तोमकेषु न बाधः अविवृद्धस्तोमकेषु यावदपेक्षितं बाधितव्यमिति।

एतदभिप्रेत्याह नेति। 'स्तोमवृद्धौ' स्तोमसङ्ख्यावृद्धौ—'बाधः' प्राकृतानां सर्वेषां साम्नां—'न'—स्यात्—अपि तु यावतः परित्यागेन वैकृती सङ्ख्या पूर्येत तावत एव बाध इत्याशयः ॥ १३ ॥

## (१४) १०।४।२१–२२ पवमानेऽधिकोद्धृती

( १ ) पूर्वाधिकरणशेषः।

( २ ) वृद्धस्तोमकेषु प्राकृतानाम् अबाधे आवापः (प्रवेशः)—अविवृद्धस्तोमकेषु तु बाधे उद्वापः (बहिष्करणम्)—इति पूर्वाधिकरणे स्थितम्।

( ३ ) तत्र सन्देहः—किमनियमेन यत्र कुत्रचित् साम्नि आवापोद्वापौ—उत पवमानेष्वेवेति नियम इति।

( ४ ) पूर्वपक्षः—यस्मिन् कस्मिंश्चित् स्तोत्रे यस्यां कस्यांचिच्च ऋचि आवापोद्वापौ ( वृद्धिह्रासौ ) इत्यनियमः—नियामकाभावादिति।

( ५ ) सिद्धान्तः—एवं ह्याम्नायते—'त्रीणि ह वा यज्ञस्योदाहरणानि

यद् गायत्री बृहत्यनुष्टुप् च-अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति । अत्र च गायत्रीबृहत्यनुष्टुप्छन्दस्कास्वेव ऋक्ष्वावापोद्वापौ भवतो नान्यास्विति एवकारेण सूच्यते । एतच्छन्दस्काश्च ऋचः पवमानेषूपलभ्यन्ते । तस्मात् पवमानेष्वेव गायत्र्यादिष्वावापोद्वापाविति नियम इति ।

एतदभिप्रेत्याह पवमान इति । 'अधिकोद्धृती'-'अधिकम्' आधिक्यम्, आवापो, वृद्धिः-'उद्धृतिः' उद्धरणमुद्वापः-ते एते-'पवमाने' एव भवत इति शेषः ॥ १४ ॥

## (१५) १०।४।२३-२४ विधिशब्दस्तु मन्त्रे स्यात्

( १ ) देवतावाचिपदस्यातिदेशबाधादिचिन्तोपोद्धातरूपो विचारः प्रवर्तते ।

( २ ) दर्शपूर्णमासयोराम्नायते-'आग्नेयोऽष्टाकपाल' इति । सन्ति चाग्नेरभिधानानि बहूनि-अग्निः शुचिः पावकः धूमकेतुः कृशानुः वैश्वानरः शाण्डिल्य इत्येवमादीनि ।

( ३ ) तत्र सन्देहः—देवतावाचिषु मन्त्रेषु यदग्नेरभिधानं तत् किं येनकेनाप्यभिधानेन कर्तव्यमुत विधिवाक्यगतेनाग्निशब्देनैवेति ।

( ४ ) पूर्वपक्षः—येन केनापि पर्यायेणाभिधानम् । शब्दप्रयोगो ह्यर्थावबोधनार्थं क्रियते-अर्थावबोधनं च सर्वैरेव पर्यायैस्तुल्यमेव भवति । तस्माद् येन केनाप्यभिधानमिति ।

( ५ ) सिद्धान्तः—यत्रार्थैर्दृष्टं कार्यं निष्पाद्यते तत्र शब्दप्रयोगोऽर्थप्रत्यायनाय भवति-यत्र तु शब्दोच्चारणमात्रं प्रयोजनं तत्र तेन कार्येण यः शब्दः सम्बद्धः स एव प्रयोक्तव्यः । एवं च प्रकृते विधिवाक्यगते अग्निशब्दे एव कार्यमासक्तम्-विधिं विना द्रव्यदेवतयोः सम्बन्धाभावात् । विधिकृते च सम्बन्धे शब्दस्य प्रयोजकत्वं दुर्वारम् । तस्माद् विधिगतैरेव पदैर्देवताभिधानं कर्तव्यमिति ।

एतदभिप्रेत्याह विधीति । 'मन्त्रे' कर्मसु उच्चारयितव्ये-'विधिशब्दः' विधिवाक्यगतदेवतावाची शब्द एव-'स्यात्' प्रयोज्यः-इति नियमोऽभ्युपेयो न तु येन केनचित्पर्यायेण देवताभिधानं कर्तव्यमित्यर्थः ॥ १५ ॥

[ अत्रैवाधिकरणे भाष्ये 'का पुनरियं देवता नाम' इति विचार्य ,सूक्तभाजो हविर्भाजश्च देवताः इति देवतालक्षणं निर्धारितम् ]

## (१६) १०।४।२५ सौर्ये सूर्यपदं वदेत् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) 'सौर्यं चरुं निर्वपेत्' इत्यादिविकृतिषु चोदकातिदिष्टा ये मन्त्रास्तेष्वग्न्यादिशब्दस्थाने सूर्यादिशब्द ऊहितव्य इति स्थितम् ।

( ३ ) तत्र ऊहे संशयः—किं येन केनचिदादित्यादिना सूर्यपर्यायेण सूर्यदेवताभिधानं कर्तव्यमुत सूर्यशब्देनैवेति ।

( ४ ) पूर्वपक्षः—सूर्यदेवतारूपेऽर्थे प्रत्याययितव्ये येन केनापि पर्यायेण तत्प्रत्यायनं सम्भवति । तस्माद् येन केनापि अभिधानमिति ।

( ५ ) सिद्धान्तः—अत्र 'सौर्यं निर्वपेत्' इत्यनेन सूर्यान्वयो भवति । प्रकृतावपि निगमेषु नार्थमात्रविवक्षयाऽग्निशब्दः प्रयुज्यते-अपि तु वैधविवक्षयाऽपि । तथा सत्यतिदेशोऽपि वैधशब्दविषय एव भविष्यति । तस्मात् सूर्यशब्द एव प्रयोक्तव्य इति ।

एतदभिप्रेत्याह सौर्य इति । 'सौर्ये' विकृतियागे-प्राकृताग्निदेवतानामस्थाने सूर्यदेवतानामनि ऊहितव्ये—'सूर्यपदम्' एव—'वदेत्' उच्चारयेत्-न यं कञ्चिदपि पर्यायमित्याशयः ॥ १६ ॥

## (१७) १०।४।२६-२९ सगुणा देवता वाच्या

( १ ) पूर्वाधिकरणशेषः ।

( २ ) आधाने पवमानहवींषि श्रूयन्ते—'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्-अग्नये पावकाय-अग्नये शुचये' इति । तत्र गुणसहितोऽग्निरुक्तः । प्राकृतमन्त्रे चास्त्युक्तः केवलोऽग्निः ।

( ३ ) तत्र सन्देहः—निगमे किं सगुणस्याग्नेरभिधानं कर्तव्यमुत गुणरहितस्येति ।

( ४ ) पूर्वपक्षः—गुणरहित एवाग्निरभिधातव्यः—तस्यैव केवलस्य चोदकप्राप्तमन्त्र पठितत्वादिति ।

( ५ ) सिद्धान्तः—पावकत्वगुणयुक्तो ह्यग्निरत्र वैधः । तस्मात् पूर्वाधिकरणन्यायेन सगुण एवाभिधातव्य इति ।

एतदभिप्रेत्याह सगुणा इति । 'देवता' अग्न्यादिरूपा 'सगुणा' पावकत्वादिगुणयुक्ता एव—'वाच्या' अभिधातव्या-निगमेष्विति शेषः ॥१७॥

## (१८) १०।४।३०-३१ बुधन्वान् नाग्निरिष्यते ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) आधाने पवमानेष्टिष्वाज्यभागौ स्तः—तौ प्रकृत्य श्रूयते-'बुधन्वानाग्नेयः कार्यः—पावकवान् सौम्यः' इति ।

( ३ ) तत्र संशयः—किं सगुणमग्नेरभिधानं कर्तव्यमुत निर्गुणमिति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सगुणोऽग्निर्वाच्य इति ।

( ५ ) सिद्धान्तः—बुधन्वत्ता हि मन्त्रगुणो न देवतागुणः-आग्नेयपदमत्र मन्त्रपरं न यागपरम् । सम्भवति च मन्त्रस्य साक्षात् बुधन्वच्छब्दयोगः—'अग्निं स्तोमेन बोधय' इत्येवंरूपो मन्त्रो बुधधातुयोगाद् 'बु-

धन्वान्' भवति। तस्मादत्र देवताया गुणस्यानुक्तत्वात् निर्गुणैव देवता-ऽभिधानीया भवतीति।

एतदभिप्रेत्याह बुधन्वानिति। 'बुधन्वान्' इत्यनेन गुणवाचकपदेन 'अग्निः' 'न' 'दृष्यते' विशेष्टुम्। तस्मात् निर्गुण एवाग्निरभिधातव्य इत्यर्थः॥ १८॥

## (१९) १०।४।३२-३३ उस्राशब्दोऽनुबन्ध्यायाम्

(१) षोडशाधिकरणन्यायस्योदाहरणान्तरम्।

(२) ज्योतिष्टोमे श्रूयते—'गौरनुबन्ध्यः' इति। सन्ति च गोरभि-धानानि—'उस्रा उस्रिया अही मही अदितिः इला' इत्येवमादीनि।

(३) तत्र संशयः—किं मन्त्रेषु येन केनचित् पर्यायेण गोरभिधानं कर्तव्यमुत वैधेनैव शब्देन कर्तव्यमिति।

(४) पूर्वपक्षः—प्रकृतौ विधिनिगमयोर्भेदप्रदर्शकनियमो न दृ-श्यते। तथा हि अग्नीषोमीयः पशुरनुबन्ध्यस्य प्रकृतिः-तत्र च 'अग्नीषोमीयं पशुमालभेत' इति विधौ पशुशब्दः-मन्त्रे तु 'छागस्य वपया' इति छागशब्दः। एवमेव बहुशः शब्दयोरभेदोऽपि दृश्यते। एवं च प्रकृ-तावनियमं दृष्ट्वा विकृतावप्यनियम एव। तस्माद् येनकेनापि शब्देना-नुबन्ध्यस्याभिधानमिति।

(५) सिद्धान्तः—प्रकृतौ यो विधिमन्त्रयोर्भेदः प्रदर्शितः स आ-र्थिकः। न चार्थिकं चोदकेनातिदिश्यते। तस्माद् वैध एव शब्दो मन्त्रेषु प्रयोक्तव्यः। अनुबन्ध्याविषये च 'उस्रा' इति भवति वैधशब्दः-'उस्राया वपाया मेदसोऽनुब्रूहि' इत्याम्नानात्। तस्मादुस्राशब्देनैवानुबन्ध्याया अभिधानमिति।

एतदभिप्रेत्याह-उस्रेति। 'अनुबध्यायां' गौरनुबन्ध्य इति विहिताया गोर-भिधाने मन्त्रे 'उस्राशब्दः' एव प्रयोक्तव्यः न तु पर्यायान्तरमिति भावः॥१९॥

## (२०) १०।४।३४-३५ यौगिकं स्विष्टकृत्पदम्।

(१) षोडशाधिकरणसदृश एव विचारोऽनुवर्तते।

(२) अवभृथयागे आम्नायते-'अग्नीवरुणौ स्विष्टकृतौ यजति' इति।

(३) तत्र संशयः--मन्त्रे यदा देवताभिधानं तदा किं स्विष्टकृच्छ-ब्देन रहितौ देवताभिधानशब्दौ प्रयोक्तव्यौ-उत तेन सहिताविति।

(४) पूर्वपक्षः-स्विष्टकृच्छब्दरहितावेवाग्निवरुणशब्दौ प्रयोक्तव्यौ। स्विष्टकृच्छब्दस्य रूढ्या नाग्निवरुणगुणवाचित्वम्; स्विष्टं कृतवानिति भूतार्थे क्विप्प्रत्ययविधानात 'यः स्विष्टं कृतवान्' इत्ययमेव यौगिकार्थः सम्भवति। न चास्यान्वयः। प्रयोगकाले हि इष्टस्य करिष्यमाणत्वं न भूतार्थत्वम् इति।

( ५ ) सिद्धान्तः—स्विष्टस्य करिष्यमाणत्वेऽपि विश्वासदार्ढ्येन भविष्यतोऽपि सिद्धवत्प्रयोगो नासम्भवी। तस्माद् यौगिकार्थेनान्वयसम्भवात् स्विष्टकृच्छब्दयुक्तावेवाग्निवरुणशब्दौ प्रयोक्तव्याविति।

एतदभिप्रेत्याह यौगिकमिति। 'स्विष्टकृत्पदम्'–अग्निवरुणौ स्विष्टकृतौ यजति इत्यत्र प्रयुक्तं 'यौगिकम्' शोभनेष्टकर्तृत्वेतद्यौगिकार्थवाचितयैव ग्राह्यम्—ततश्च गुणवाचिना तेन पदेन सहैव अग्निवरुणशब्दौ प्रयोक्तव्यौ मन्त्रे इत्याशयः॥ २०॥

## (२१) १०।४।३६-३७ गुणलोपस्तु सार्वत्रः

( १ ) पूर्वाधिकरणापवादः।

( २ ) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। तत्र स्विष्टकृति गुणरहितः केवलोऽग्निः श्रूयते–'अग्निं यजति' इति।

( ३ ) तत्र संशयः--किं यागे एव स्विष्टकृतो गुणलोपः अवशिष्टेषु मन्त्रेषु यथाप्रकृतिभावः—उत सर्वत्रैव गुणलोप इति।

( ४ ) पूर्वपक्षः—गुणरहितस्याग्नेर्यजिधातुमात्रेणान्वयाद् यागे एव गुणलोप इति।

( ५ ) सिद्धान्तः—यजतिशब्दस्य समस्तप्रयोगवचनत्वात् अखिलेषु मन्त्रप्रयोगेषु गुणलोप इति।

एतदभिप्रेत्याह गुणेति। 'गुणलोपः' गुणरहिताग्निशब्दप्रयोगः-सर्वेषु मन्त्रेषु भवतीति भावः॥ २१॥

## (२२) १०।४।३८ ऽनुयाजः स्विष्टकृद्गुणः।

( १ ) प्रासङ्गिको विचारः।

( २ ) स्तो दर्शपूर्णमासौ। तत्र स्विष्टकृत्—'अनुयाजेष्वग्निं स्विष्टकृतं यजति' इति।

( ३ ) तत्र सन्देहः—किं स्विष्टकृद्यागोऽनुयाजेष्वारादुपकारक उत संस्कारक इति।

( ४ )पूर्वपक्षः—एतद्धि कर्मणां प्रसिद्धं कार्यं यत् आरादुपक्रिया। तस्मात् स्विष्टकृत् अनुयाजानामारादुपकारक इति।

( ५ ) सिद्धान्तः—संस्कारकमेव स्विष्टकृत्। तथा सत्येव हि प्रयोजनवत् भवति।

एतदभिप्रेत्याह अनुयाज इति। 'अनुयाजः' 'स्विष्टकृत्' यागः 'गुणः' संस्कारको यस्य स एवंभूतो भवतीति शेषः॥ २२॥

## (२३) १०।४।३९-४१ याज्यानुवाक्ये संस्कारौ

( १ ) पूर्वाधिकरणविचारो वर्तते ।

( २ ) दर्शपूर्णमासयोः श्रूयते—'याज्यामन्वाह पुरोऽनुवाक्याम-न्वाहेति' ।

( ३ ) तत्र संशयः—याज्यापुरोनुवाक्यानुवचनं किं प्रधानकर्म उत संस्कारकर्मेति ।

( ४ ) पूर्वपक्षः—प्रधानकर्मेति ।

( ५ ) सिद्धान्तः—चोदितदेवतास्मरणसंस्कार एव दृष्टप्रयोजनम-नुवचनस्य । सति तु दृष्टे प्रयोजनेऽदृष्टकल्पनाऽन्याय्या । अदृष्टकल्पनं तु प्रधानकर्मत्वे दुर्वारम् । तस्मात् संस्कारकर्मेति ।

एतदभिप्रेत्याह याज्येति । 'याज्या' च 'पुरोऽनुवाक्या' चेत्यनयोर-नुवचने—'संस्कारौ' संस्कारकर्मणी-न प्रधानकर्मणी-इति भावः ॥२३॥

## (२४) १०।४।४२ मनोता न विकारभाक् ।

( १ ) बाधे प्रासङ्गिकी चिन्ताऽनुवर्तते ।

( २ ) अस्ति वायव्यः पशुः–'वायव्यं श्वेतमालभेत भूतिकाम' इति। अस्ति च प्रकृतावग्नीषोमीयपशौ मनोतामन्त्रः—'त्वं ह्यग्ने प्रथमो मनोता अस्या धियो अभवोदस्महोता' इति—स च मन्त्रः वायव्ये चोदकेन प्राप्तः ।

( ३ ) तत्र सन्देहः—किं अग्निस्थाने वायुमूहयित्वा पठनीयो मन्त्र उताविकारेण यथावस्थित एवेति।

( ४ ) पूर्वपक्षः—ऊहयित्वा प्रयोक्तव्यो मनोतामन्त्रः। तथैव देवता-विधिरनुगृहीतो भवतीति ।

( ५ ) सिद्धान्तः—'यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या' इति स्पष्टमूहो निषिध्यते । तस्माद् यथावस्थित एव पाठ इति ।

एतदभिप्रेत्याह मनोतेति। 'मनोता' मनोतामन्त्रः—'न' 'विकार-भाक्' विकारम् ऊहं न भजते—वायव्ये पशाविति शेषः ॥ २४ ॥

## (२५) १०।४।४३-४६ स्वयोनौ साम कण्वाख्यम्

( १ ) प्रासङ्गिको विचारो बाधस्य ।

( २ ) वैश्यस्तोमे श्रूयते—'कण्वरथन्तरं पृष्ठं भवति' इति । उभय-विकारः कण्वरथन्तरमिति च नवमे स्थितम् ( ९।२।४८ ) ।

( ३ ) तत्र सन्देहः—कण्वरथन्तरं किं बृहतो योनौ रथन्तरस्य वा योनावनियमेन गेयम्—उत रथन्तरस्यैव योनौ—उत कण्वरथन्तरस्य योनाविति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तयोर्विशेषनियामकाभावात् अनियम इत्येकः पक्षः । रथन्तरविशेष एव कण्वरथन्तरम्—तस्मात् रथन्तरयोनावेव गेयमिति द्वितीयः पक्षः ।

( ५ ) सिद्धान्तः—बृहद्रथन्तरसाम्नोरेव प्रकृतावङ्गत्वम्, न तद्योन्योः । अतो नास्ति तद्योन्योरतिदेशेन प्राप्तिः । कण्वरथन्तरं च रथन्तराद् भिन्नम् । तस्मात् कण्वरथन्तरयोनावेव गेयमिति ।

एतदभिप्रेत्याह स्वेति । 'कण्वाख्यम्' कण्वनामकं 'साम' कण्वरथन्तरम्—'स्वयोनौ' एव गेयमित्यर्थः ।। २५ ।।

## (२६) १०।४।४७–४८ स्वयोन्युत्तरयोश्च तत् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) कण्वरथन्तरे एवोक्तम्—'उत्तरयोर्गायति' इति । कण्वरथन्तरसाम्नां ऋचां त्रयमाश्रयः । तत्र एका स्वयोनिः । इतरे स्वयोन्युत्तरे । एवं बृहद्रथन्तरयोरपि ।

( ३ ) तत्र सन्देहः—किं रथन्तरयोन्युत्तरयोर्बृहद्योन्युत्तरयोर्वाऽनियमेन गेयम्—उत स्वयोन्युत्तरयोरिति ।

( ४ ) पूर्वपक्षः—बृहदुत्तरयोः रथन्तरोत्तरयोर्वाऽतिदेशप्राप्त्यविशेषेण स्वेच्छया गानमिति । अथवा नामसाम्याद् रथन्तरोत्तरयोरेव गेयम् इति द्वितीयः पक्षः ।

( ५ ) सिद्धान्तः—योनिवद् उत्तरयोरपि उत्तराग्रन्थपठितत्वात् स्वयोन्युत्तरयोरेव गेयमिति ।

एतदभिप्रेत्याह स्वेति । 'तत्' कण्वरथन्तरं साम—'स्वयोन्युत्तरयोः च'—गेयमिति शेषः ।। २६ ।।

## (२७) १०।४।४९ स्तोत्रे शस्त्रे विकारो नो

( १ ) ऊहविचारः ।

( २ ) अस्त्यग्निष्टुत् एकाहः । तत्र श्रूयते–'आग्नेया ग्रहा भवन्ति' इति । प्राकृते च स्तोत्रशस्त्रे नानादैवतेऽत्र चोदकप्राप्ते ।

( ३ ) तत्र सन्देहः—किम्प्राकृतयोः स्तोत्रशस्त्रयोर्दैवतानुसारेणोह उत यथावस्थित एव पाठ इति ।

( ४ ) पूर्वपक्षः—स्तोत्रशस्त्रयोः संस्कारकर्मत्वादस्त्यूह इति ।

( ५ ) सिद्धान्तः—स्तोत्रशस्त्रयोः प्रधानकर्मत्वमिति द्वितीयाध्यायप्रथमपादीयपञ्चमाधिकरणे स्थितम् । तस्मान्नास्त्यूह इति ।

एतदभिप्रेत्याह स्तोत्र इति । 'स्तोत्रे' 'शस्त्रे' च विकारः' ऊहः–'नो' न भवतीति शेषः ।। २७ ।।

(२८) १०।४।५०-५६ निगमाश्चाज्यपानिति ।

( १ ) ऊहविचारो वर्तते ।

( २ ) चातुर्मास्येष्वनुयाजान् प्रकृत्य समाम्नातम्—पृषदाज्येनानुयाजान् यजति' इति । अस्ति च प्रकृतावावाहनम्-'देवाज्यपानावह' इति । तच्च चोदकेनानुयाजेषु प्राप्तम् ।

( ३ ) तत्र सन्देहः-विकृतौ किमविकारेणावाहनं कर्तव्यमुत ऊहेनेति ।

( ४ ) ऊहेनावाहनम्—ऊहश्च—'दध्याज्यपान्' 'दधिपान्' 'पृषदाज्यपान्' इत्येतेषामन्यतमरूपेण कर्तव्य इति ।

( ५ ) सिद्धान्तः—नास्त्यूहः । यद्यपि पृषदाज्यस्य हविष्ट्वमनुयाजेषूक्तम् तथापि पृषत्त्वं नाम चित्रता । तच्च आज्यस्य गुणः। स च गुणो दधिमिश्रणेन लभ्यते आज्ये । तस्मादाज्यस्यैव द्रव्यत्वात् नास्त्यूहः । 'आज्यपान्' इति शब्दोपेताः सर्वे मन्त्राः पठनीया इति ।

एतदभिप्रेत्याह निगमा इति । 'निगमाः' आवाहनमन्त्राश्च—'आज्यपान्' इत्येवं यथावस्थितरूपा एव पठनीयाः। नात्रोह इत्याशयः ॥२८॥

न्यायाश्चतुर्थपादेऽस्मिन्नष्टात्रिंशतिरीरिताः ।

स्पष्टम् ।

इति दशमस्य चतुर्थः ।

---

# अथ दशमाध्यायस्य पञ्चमः पादः ।

[ बाधप्रसङ्गागतो ग्रहादिविचारः ]

(१) १०।५।१-६ बह्वेकदेशग्रहणेऽन्त्यलोपः

( १ ) बाधप्रसङ्गागता ग्रहचिन्ता प्रवर्तते ।

( २ ) प्रकृतौ—'आग्नेयमष्टाकपालम्' इत्यष्टसङ्ख्यकानि कपालानि। विकृतिषु—'द्यावापृथिव्यमेककपालम्' आश्विनं द्विकपालम्' इत्यादि प्राकृताया अष्टत्वसङ्ख्याया न्यूनाः कपालसङ्ख्याः ।

( ३ ) तत्र सन्देहः—अष्टानां कपालानां केषांचित् विकृतौ परित्यक्तव्ये—किमनियमेन यस्य कस्यापि कपालस्य परित्यागः—उताद्यभागानामेव—उतान्त्यभागानामेवेति ।

( ४ ) पूर्वपक्षः—आद्यं मध्यममन्त्यं वा यं कञ्चिदेकदेशं परित्यज्यावशिष्टो ग्रहीतव्यः । नियामकाभावात् इति ।

( ५ ) सिद्धान्तः-'आचतुर्थात् कर्मणोऽभिसमीक्षेत-इदं करिष्यामि इदं करिष्यामि' इत्युक्तम्। ततश्च अनुक्रमेण स्मृत्वाऽनुष्ठेयानि। प्रकृते चास्ति क्रमो नियतः। एवं च सति प्रतीतपरित्यागाप्रतीतस्वीकारयोरन्याय्यत्वात् आद्य एव भागो ग्राह्योऽन्त्य एव परित्याज्य इति।

एतदभिप्रेत्याह बह्विति। 'बहूनां' कपालानाम् मध्ये 'एकदेशस्य' एकभागस्य 'ग्रहणे' उपस्थिते—'अन्त्यस्य' एव भागस्य 'लोपः' त्यागः—आद्यस्य तु ग्रहणमित्याशयः॥ १॥

## (२) १०।५।७-९ एकत्रिके स्यात् तृचमाद्यमेव।

( १ ) बाधे प्रासङ्गिको विचारः।

( २ ) अस्त्येकत्रिकः क्रतुः। तत्र श्रूयते-'अथैष एकत्रिकः—तस्यैकस्यां बहिष्पवमानम् तिसृषु होतुराज्यम् एकस्याम्मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसिनः एकस्यामच्छावाकस्य तिसृषु माध्यन्दिनः पवमान' इति। सन्ति च प्रकृतौ माध्यन्दिनपवमानस्य त्रयस्तृचाः।

( ३ ) तत्र संशयः—'तिसृषु माध्यन्दिनः पवमान' इति यच्छ्रुतं तत्र किं त्रयाणां तृचानामाद्यास्तिस्र ऋचो ग्राह्याः—उत प्रथमतृचस्था एव क्रमास्नातास्तिस्र इति।

( ४ ) पूर्वपक्षः—'त्रिच्छन्दा माध्यन्दिनः पवमान' इति प्रत्यक्षश्रुतिबलेन त्रयाणां तृचानामाद्यास्तिस्र ऋचो ग्राह्या इति।

( ५ ) सिद्धान्तः-पाठक्रमेण प्रथमप्रक्रान्तस्यैव गायत्रीच्छन्दस्कस्य प्राप्तौ तत्परित्यागे मानाभावात् तस्यैवैकस्य त्रिचस्य तिस्र ऋचो ग्राह्या इति।

एतदभिप्रेत्याह एकेति। 'एकत्रिके' क्रतौ—'आद्यम्' प्रथमम् गायत्रीछन्दस्कमेव—'तृचम्' तिस्र ऋचः—'स्यात्'—ग्राह्यमिति शेषः ॥२॥

## (३) १०।५।१०-११ भवेदृगेका धुरि सामगीतौ

( १ ) बाधे प्रासङ्गिकविचारः।

( २ ) अस्त्येकत्रिकः क्रतुः पूर्वमुक्तः। सन्ति च तत्र धुरि सामानि।

( ३ ) तेषु सामसु संशयः—किं तृचे गेयान्युतैकस्यामृचि इति।

( ४ ) पूर्वपक्षः—चोदकेन तृचे एव सामानीति।

( ५ ) सिद्धान्तः—'आवृत्तं धूर्षु स्तुवते' इति धूर्गानस्यावृत्तिः श्रूयते। तस्माद् एकस्यामेवर्चि सामानीति।

एतदभिप्रेत्याह भवेदिति। 'धुरि सामगीतौ' धुरि यत् सामानि गीयन्ते तत्र—'एका' एव 'ऋक्' भवेत्—गानस्याश्रय इति शेषः ॥ ३॥

## (४) १०।५।१२-१३ अहर्गणे स्युर्दशरात्रधर्माः ।

(१) बाधोदाहरणम् ।

(२) सन्त्यहीनस्य द्वादशाहस्य विकृतयो द्विरात्रादयोऽहर्गणाः ।

(३) तेषु संशयः—किमेतेष्वहर्गणेषु कृत्स्नस्य द्वादशाहस्य विध्यन्तः प्रवर्तते—उताद्यौ द्वौ प्रायणीयोदयनीयौ वर्जयित्वा दशरात्रस्येति ।

(४) पूर्वपक्षः—विशेषाभिधानाभावात् चोदकेन कृत्स्नस्य विध्यन्तः प्राप्नोति ।

(५) सिद्धान्तः—यत् प्रथमं तद् द्वितीयम् यद् द्वितीयं तत् तृतीयम्'इति द्विरात्रप्रकरणे श्रूयते । तस्यार्थः—'यद् द्विरात्रस्य प्रथममहरनुष्ठेयं तद् द्वादशाहस्य द्वितीयमित्यादि' । तदेतत् आद्यस्य प्रायणीयस्य वर्जने लिङ्गम् । तथा चोक्तम्—'जगतीमन्तर्गच्छति' इति—तत्र च षडहतृतीयं जागतं अन्तरीयमाणं दर्शयति—तच्च दशरात्रस्य प्रवृत्तिं उदयनीयवर्जनं च सूचयति । एवमाद्ययोर्वर्जने लब्धे यदवशिष्टं दशरात्रं तस्यैव विध्यन्तः प्रवर्तते इति ।

एतदभिप्रेत्याह अहरिति । 'अहर्गणे' द्विरात्रादौ—'दशरात्रस्य' एव 'धर्माः'—'स्युः'—अनुष्ठिताः, न द्वादशाहस्य कृत्स्नस्येति शेषः ।। ४ ॥

## (५) १०।५।१४ नाद्यादरः स्यात् पवनादिमन्त्रे

(१) क्रमबाधोदाहरणम् ।

(२) अग्निचयने अग्नः पवनार्थाः आधूननार्थाश्च बहवो मन्त्राः पठिताः । प्रयोगे तु तेषां सङ्ख्यानियमः श्रूयते—'चतुर्दशभिर्वपति' 'सप्तभिराधुनोति' इति ।

(३) तत्र संशयः—के एते चतुर्दश सप्त वा मन्त्राः । किमाद्या एव चतुर्दश सप्त वा ग्राह्याः—उत अनियमः—ये केचन ग्राह्या इति ।

(४) पूर्वपक्षः—प्रथमाधिकरणन्यायेनाद्यानामेव ग्रहणमिति ।

(५) सिद्धान्तः—यथोक्तसङ्ख्यातिरिक्ता मन्त्राः पठिताः । यदि नियमेनाद्यानामेव ग्रहणं विवक्षितं भवेत्तर्हि इतरेषां पाठस्य वैयर्थ्यापत्तिः । तस्मात् न नियमः । निजेच्छया उक्तेषु मन्त्रेषु यत्रकचनारभ्य अपेक्षिता सङ्ख्या पूरणीयेति ।

एतदभिप्रेत्याह नेति । पवनादिमन्त्रे पवमानार्थानां आधूननार्थानां च मन्त्राणां प्रयोगे—'आद्यादरः' आद्ये आदरः—आद्यमेवारभ्य पठनीया मन्त्रा इति नियमः—'न स्यात्'—अपि तु अनियम एवेति भावः ॥५॥

## (६) १०।५।१५-२५ सामागमेनाधिकसङ्ख्यपूर्तिः ।

( १ ) बाधप्रसङ्गेन विचारः ।

( २ ) सन्ति विवृद्धस्तोमकाः क्रतवः—'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्—त्रिणवेनौजस्कामम्—त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति । सन्ति च प्रकृतौ त्रिवृत्पञ्चदशादिस्तोमाः । तेषामेव विवर्धनेन एकविंशति—त्रिणव-त्रयस्त्रिंशस्तोमाः भवन्ति ।

( ३ ) तत्र संशयः—अत्रोक्ता विभिन्नाः सङ्ख्याः किं प्राकृतानां साम्नामभ्यासेन पूरणीयाः-उत अप्राकृतानामागमेनेति ।

( ४ ) पूर्वपक्षः—अनुक्तस्य साम्न आगमने प्रमाणाभावात् प्राकृतानामभ्यासेनैव सङ्ख्याः पूरणीया इति ।

( ५ ) सिद्धान्तः—अभ्यासोऽपि साक्षाच्छ्रुतः । सङ्ख्यापूरणार्थैव स कल्प्येत । सङ्ख्यापूरणं च लोके द्रव्यान्तरागमेनैव भवति नाभ्यासेन । न ह्यष्टकृत्व एकं घटमानीयाष्टघटवत्त्वं गृहस्य भवति । तस्मात् सामान्तराणामागमेनैव सङ्ख्यावृद्धिरिति ।

एतदभिप्रेत्याह सामेति । 'अधिकसङ्ख्यपूर्तिः'—अधिका सङ्ख्या यस्य स्तोमस्य तस्य एकविंशतिसङ्ख्यकस्तोमस्य 'पूर्तिः' सङ्ख्यापूरणम्-'सामागमेन'साम्नां प्राकृताद् भिन्नानां 'आगमेन' प्रवेशेन—एव-स्यात् इति शेषः-न तु प्राकृतानामभ्यासेनेत्यर्थः ॥ ६ ॥

## (७) १०।५।२६ ऋगागमः स्यात् पवमान आद्ये·

( १ ) पूर्वाधिकरणापवादः ।

( २ ) सन्ति विवृद्धस्तोमकाः क्रतवः पूर्वोक्ताः ।

( ३ ) तत्र पुनः संशयः—बहिष्पवमाने किं साम्नामागम उताभ्यास इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सामागम इति ।

( ५ ) सिद्धान्तः—'एकं हि तत्र साम' इति बहिष्पवमानं प्रकृत्याम्नायते । अतः सामान्तरागमो न सम्भवति । अत ऋगन्तरागमेनैव सङ्ख्याविवृद्धिः कर्तव्येति ।

एतदभिप्रेत्याह ऋगिति । 'आद्ये पवमाने' बहिष्पवमानस्तोमे—'ऋचः' ऋगन्तरस्य एव 'आगमः' 'स्यात्'—न तु सामान्तरस्येत्याशयः ॥ ७ ॥

## (८) १०।५।२७-३३ ऽभ्यस्या यथोक्तं खलु सामिधेनी ।

( १ ) पूर्वाधिकरणद्वयापवादः ।

( २ ) दर्शपूर्णमासयोः पञ्चदश सामिधेनीर्विधाय विकृतिकामेष्टिषु—'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्ये'त्यादि सामिधेनीसङ्ख्यावृद्धिः श्रूयते ।

( ३ ) तत्र संशयः—इयं सङ्ख्यावृद्धिः किमृगागमेनोताभ्यासेनेति।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन ऋगागमेनेति।

( ५ ) सिद्धान्तः—एकादशैव सामिधेनीमन्त्राः। प्रकृतौ तासां पञ्चदशत्वं ऋगागमेन न कृतमपि तु 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इत्यभ्यासेनैव सङ्ख्याविवृद्धिराम्नाता। अतः काम्येष्वपि तथैवाभ्यासेन सङ्ख्याविवृद्धिः कर्तव्या। किन्तु यद्रूपोऽभ्यासः प्रकृतावाम्नातस्तस्यैव विकृतौ प्राप्तिः न तदतिरिक्ताभ्यासस्य। तस्मात् प्रकृतिवत् त्रिः प्रथमां त्रिरुत्तमामभ्यस्य पञ्चदशं पूरयित्वाऽवशिष्टा षट्सङ्ख्या ऋगागमन पूरणीयेति। एवमत्राभ्यासेनागमेन चेत्युभाभ्यामेवापेक्षितसङ्ख्यापूरणमिति।

एतदभिप्रेत्याह अभ्यस्येति। 'सामिधेनी' सामिधेनीमन्त्रा एकादश—'यथोक्तं' प्रकृतौ यथा 'त्रिः प्रथमां त्रिरुत्तमाम्' इत्यभ्यासप्रकारः उक्तस्तथैव—'अभ्यस्या' अभ्यसनीया 'खलु'—न तदतिरिक्ताऽभ्यसनीया—अवशिष्टा तु सङ्ख्या ऋगागमेनैव पूरयितव्येति भावः॥ ८॥

## (९) १०।५।३४-४१ स्यात् षोडशी तु प्रकृतौ प्रयोगे

( १ ) बाधे प्रासङ्गिको विचारः।

( २ ) ज्योतिष्टोमप्रकरणे श्रूयते—'षोडशिनं गृह्णाति' इति।

( ३ ) तत्र संशयः—अयं षोडशी किं प्रकृतौ निविशते—उत विकृतौ इति।

( ४ ) पूर्वपक्षः—षोडशिनं प्रकृत्य 'उत्तरेऽहन् द्विरात्रस्य गृह्यते मध्यमेहन् त्रिरात्रस्ये'ति श्रुतम्। द्विरात्रादीनां च विकृतित्वं प्रसिद्धम्। तस्माद् विकृतिगामी षोडशीति।

( ५ ) सिद्धान्तः—'अग्निष्टोमे राजन्यस्य गृह्णीयात्' इत्येतद् वाक्यमस्ति। तेन प्रकृतिभूतेऽग्निष्टोमे एव निवेशः षोडशिनः। अग्निष्टोमस्य च ज्योतिष्टोमसंस्थात्वेन नात्र प्रकरणं बाध्यते इति।

एतदभिप्रेत्याह स्यादिति। 'षोडशी' षोडशिग्रहणं—'तु'—'प्रकृतौ' 'प्रयोगे' प्रकृत्यनुष्ठानमध्ये एव स्यात्' इत्यर्थः॥ ९॥

## (१०) १०।५।४२-४३ स गृह्यते चाग्रयणान्न तूक्थ्यात्।

( १ ) पूर्वाधिकरणशेषः।

( २ ) उक्ते षोडशिग्रहणे—

( ३ ) संशयः—किमयं षोडशी आग्रयणपात्रादुक्थ्यपात्राच्च गृहीतव्य उताग्रयणपात्रादेवेति।

( ४ ) पूर्वपक्षः—'उक्थ्यान्निगृह्णाति षोडशिनम्'—'आग्रयणान्निगृह्णाति षोडशिनम्' इति वाक्यद्वयबलादाग्रयणादुक्थ्याच्च ग्रहीतव्य इति।

( ५ ) सिद्धान्तः—'तं पराञ्चमुक्थ्यान्निगृह्णाति' इत्युक्थ्यवाक्यस्यो-त्तरकालताविधिपरत्वमुक्तम् । अतो नोभयस्माद् ग्रहणमपि त्वाग्रय-णादेवेति ।

एतदभिप्रेत्याह स इति । 'स' षोडशी–'आग्रयणात्' आग्रयणपात्राद् 'गृह्यते'–'न तु उक्थ्यात्' उक्थ्यपात्रादिति सम्बन्धः ॥ १० ॥

## (११) १०।५।४४–४८ ग्राह्यस्तृतीये सवने स नूनम्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) षोडशिग्रहणे—

( ३ ) पुनः संशयः-किमिदं ग्रहणं प्रतिसवनं भवत्युत तृतीये एव सवने इति ।

( ४ ) पूर्वपक्षः-षोडशिग्रहणं त्रिष्वपि सवनेषु भवेत् । 'प्रातःसवने ग्राह्यः-माध्यन्दिनसवने ग्राह्यः-तृतीयसवने ग्राह्यः' इति प्रतिसवनं श्रुत-त्वादिति ।

( ५ ) सिद्धान्तः–उदाहृतस्य वाक्यस्य शेषे सवनद्वयं निन्दित्वा 'तृतीयसवने ग्राह्यः न सर्वेषु सवनेषु गृह्णाति' इति प्रशंसापूर्वकं तृतीय-सवनमेव विहितम् । तस्मात् तृतीये एव सवने षोडशिग्रह इति ॥

एतदभिप्रेत्याह ग्राह्य इति । 'स' षोडशी–'तृतीये सवने' एव 'ग्राह्यः' 'नूनम्' निश्चयेन– न सर्वेषु सवनेष्विति भावः ॥ ११ ॥

## (१२) १०।५।४७–५२ सस्तोत्रशस्त्रः खलु षोडशी स्यात् ।

( १ ) षोडशीविचार एव वर्तते ।

( २ ) षोडशिग्रहणे—

( ३ ) संशयान्तरम्—अयं षोडशी किं स्तोत्रशस्त्रसहितः उत ताभ्यां रहित इति ।

( ४ ) पूर्वपक्षः—'अग्नीषोमीये राजन्यस्य गृह्णीयात्, अत्युक्थ्ये ग्राह्य' इति षोडशिग्रहोऽग्निष्टोमोक्थ्यसंस्थयोर्विहितः । तथा चायं स्तोत्र-शस्त्रवर्जित एव स्यात् । अन्यथा तदीयाभ्यां स्तोत्रशस्त्राभ्यां क्रतुसमा-प्तौ षोडशिसंस्थात्वम्प्रसज्येताग्निष्टोमीयसंस्थात्वं च बाध्येत इति ।

( ५ )-सिद्धान्तः—'एकविंशं स्तोत्रं भवति, प्रतिष्ठायै हरिवच्छस्यते' इति षोडशिनि प्रत्यक्षविधिना स्तोत्रशस्त्रे विहिते । तस्मादस्ति स्तोत्र-शस्त्रसहितत्वं षोडशिन इति ।

एतदभिप्रेत्याह सस्तोत्रेति । 'सस्तोत्रशस्त्रः' स्तोत्रं च शस्त्रं च, ताभ्यां सहितः एव-'षोडशी' 'स्यात्';'खलु' निश्चयेनेति सम्बन्धः ।।१२।।

(१३) १०।५।५३ ५४ प्राप्तस्य तस्य श्रवणं द्विरात्रे

(१) षोडशिविचारो वर्तते।

(२) अस्त्यङ्गिरसां द्विरात्रः। तत्राम्नायते-'वैखानसं पूर्वेद्युः साम भवति—षोडश्युत्तरे' इति।

(३) तत्र संशयः—अस्य वाक्यस्य कोऽर्थः—किं षोडशिग्रहणमितरेभ्यो द्विरात्रेभ्यो निवर्त्य अङ्गिरसां द्विरात्रे नियम्य विधीयते—उत षोडशिग्रहणं केवलमनूद्यत इति।

(४) पूर्वपक्षः—यदेतत् प्राकृतमतिरात्रेषु षोडशिग्रहणं तत् 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनेन सर्वेषु द्विरात्रेषु प्राप्तं नियम्यते। तथा चान्येषु द्विरात्रेषु षोडशिग्रहस्याभावः अङ्गिरसां द्विरात्रमात्रे तु तस्य भाव इति तस्य विधेरर्थः।

(५) सिद्धान्तः—सर्वद्विरात्रेषूत्तराण्यहानि षोडशिग्रहणेन सम्बद्धानि—'उत्तरेहन् द्विरात्रस्य गृह्यते' इति सामान्यविधानेन। वैखानसमित्याद्युदाहृतवाक्ये तु वैखानससाम्नो विधिः, न षोडशिग्रहणस्य। तस्मादुत्तरेऽहनि षोडशिग्रहणं उत्तरेऽहन्निति वाक्येन विहितमत्र अङ्गिरसां द्विरात्रे केवलमनूद्यते इति।

एतदभिप्रेत्याह प्राप्तस्येति। 'प्राप्तस्य' वाक्यान्तरेण (उत्तरेऽहन् द्विरात्रस्य गृह्यते इत्यनेन) सर्वेषु द्विरात्रेषु विहितस्य—'तस्य' षोडशिनः—अङ्गिरसां 'द्विरात्रे'—'श्रवणम्' अनुवादः—षोडश्युत्तरे इत्यत्र वाक्य इति शेषः॥

[भाष्यकारेण द्वे अधिकरणस्वरूपे अत्रोक्ते। तत्राद्यं वृत्तिकारमतेनापरं भाष्यकारमतेनेति न्यायमाला। मण्डनेन चात्र कारिकायां द्वितीस्वरूपस्यैव ग्रहणं कृतम्—इति ध्येयम्]॥ १३॥

(१४) १०।५।५५–५७ चतुर्थवीप्सा खलु बह्वहीने।

(१) षोडशिविचारो वर्तते।

(२) षोडशिनं प्रकृत्यामनन्ति-'चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते'।

(३) तत्र संशयः—किमेकस्मिन्नेव अहीने चतुर्थेऽहनि षोडश्यभ्यसितव्यः—उत एकस्मिन्नहीने चतुर्थेऽहनि पुनरन्यस्मिन्नहीनेऽपि चतुर्थेऽहनि इत्येवंरूपोऽभ्यास इति।

(४) पूर्वपक्षः—एकस्मिन्नहीने प्रथमाहमारभ्य चतुर्थेऽहनि ग्रहणं, तथा-पुनः पञ्चमाहमारभ्य चतुर्थे दिने इत्येवं रूपोऽभ्यासो विवक्षितः। तथासत्येव 'चतुर्थे चतुर्थे' इति वीप्सा चरितार्था स्यात्। अन्यथा 'चतुर्थेऽहनि' इत्येतावन्मात्रं पर्याप्तं स्यात्। 'अहीनस्य' इत्येकवचनमपि एकस्मिन्नेवाहीनेऽभ्यासं सूचयतीति।

( ५ ) सिद्धान्तः—एकाहीनपक्षे 'चतुर्थेऽष्टमेऽहनि' इत्येवमुक्तं स्यात् । 'अहीनस्य' इत्येकवचनं तु नानाहीनपक्षे जात्यभिप्रायत्वेन सङ्गच्छते । तस्मान्नानाहीनेषु चतुर्थेहनि षोडशिग्रह इति ।

एतदभिप्रेत्याह चतुर्थेति । 'चतुर्थवीप्सा' चतुर्थे चतुर्थेऽहनीति चतुर्थशब्दस्य द्विरुक्तिः—'बह्वहीने' नानाहीनपक्षे एव—'सङ्गच्छते' इति शेषः । नानाहीनेषु चतुर्थेऽहनि षोडशिग्रहणं कर्तव्यमित्यस्मिन्नेवार्थे वीप्सा चरितार्था भवति न त्वेकाहीनपक्षे इत्याशयः ॥ १४ ॥

(१५) १०।५।५८ भवेज्जगत्साम मखे विकारे

( १ ) बाधसम्बन्धी विचारः ।

( २ ) ज्योतिष्टोमे श्रूयते—'यदि जगत्सामा सोमः स्यादाग्रयणाग्रान् ग्रहान् गृह्णाति' इति ।

( ३ ) तत्र संशयः—अत्रोक्ताया आग्रयणाग्रतायाः किं प्रकृतौ निवेश उत विकृतौ ।

( ४ ) पूर्वपक्षः—यदि जगत्सामा इत्यनेन ज्योतिष्टोमोऽभिधीयते तदा प्रकरणानुरोधात् प्रकृतौ ( ज्योतिष्टोमे ) एव निवेश इति ।

( ५ ) सिद्धान्तः—'जगत्' इति कस्यापि साम्नो नाम नोपलभ्यते । तस्मात् जगत्यामृचि उत्पन्नं साम यस्मिन् यज्ञे भवति स एव भवति 'जगत्सामा सोमः' । उक्तं च साम विषुवन्नामकं विकृतावेव मुख्येऽहनि सम्भवति । तस्माद् विकृतावेव निवेशः ।

एतदभिप्रेत्याह भवेदिति । 'जगत्साम' जगत्यामृच्युत्पन्नं साम—'विकारे' विकृतिभूते एव—'मखे' यज्ञे—'भवेत्' सम्भवति—नतु प्रकृताविति भावः । तस्मादाग्रयणाग्रतायाः विकृतावेव निवेश इति भावः ॥१५॥

(१६) १०।५।५८ (वर्णकान्तरम्) गानं जगत्साम यतो जगत्याम्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) 'यदि जगत्सामा आग्रयणाग्रान् ग्रहान् गृह्णीयात्' इति पूर्वोक्तमेव वाक्यम् ।

( ३ ) तत्र संशयः—'जगत्सामा' इत्यस्य पदस्य कोऽर्थः—किं रथन्तरसामा बृहत्सामा वेति विकल्पः—उत बृहद्रथन्तरोभयसामा—उत रथन्तरसामा—उत जगत्यां ऋच्युत्पन्नं साम यस्मिन् स इति ।

( ४ ) पूर्वपक्षः—(अ) बृहत्सामा रथन्तरसामा वेति विकल्पः—विशेषानवगमात् इति (क)अथवा बृहद्रथन्तरोभयसामा—जगच्छब्दस्य कृत्स्नवाचित्वात् इति । (च)अथवा रथन्तरसामा—नोभयोः समुच्चयो न्याय्यः इति ।

( ५ ) सिद्धान्तः—जगच्छब्दोऽत्र जगतीच्छन्दोवाची । ततश्च तच्छ-न्दस्कामृचमुपलक्ष्य तया ऋचा तन्निष्ठं साम उपलक्ष्यते । तस्मात् जग-त्यामृच्युत्पन्नं साम यस्मिन् इत्येव जगत्सामशब्दस्यार्थ इति ।

एतदभिप्रेत्याह गानमिति—'यतः' यस्मात् कारणात्—'जगत्याम्' जगतीच्छन्दस्कायामृचि—'गानम्' साम—एव—'जगत्साम' जगत्साम-पदेन विवक्षितम् [ तस्मात् 'जगत्सामा' इति विशेषणं विकृतावेवोपप-द्यते इति पूर्वेण सम्बन्धः ] ॥ १६ ॥

## (१७) १०।५।५६—६१ क्रत्वाश्रयस्तूभयसामके स्यात्

( १ ) समुच्चये विचारः ।

( २ ) गोसवादिषु क्रतुषु रथन्तरपृष्ठबृहत्पृष्ठयोः समुच्चयो विहितः—'गोसव उभे कुर्यात्'इति । प्रकृतौ तु इदमाम्नातम्—'उपवतीं रथन्तरपृ-ष्ठस्य प्रतिपदं कुर्यात्, अग्रवतीं बृहत्पृष्ठस्य' इति । ते इमे उपवत्यग्रवत्यौ ऋचौ पृष्ठद्वयस्याङ्गभूते गोसवादिष्वतिदेशतः प्राप्ते ।

( ३ ) तत्र संशयः—किं इमे ऋचौ गोसवे विकल्प्येते—उतान्यतर-स्य ग्रहणम्—यद्यन्यतरस्य, किं रथन्तरस्योत बृहत इति ।

( ४ ) पूर्वपक्षः—विकल्पः—तन्निमित्तयोः पृष्ठयोर्द्वित्वात् । न च समुच्चयः ऋचोर्द्वयोः प्राथम्यस्य व्याहतत्वात् । अथवा प्रथमश्रुतत्वाद् रथन्तरस्य मुख्यत्वाद्वा रथन्तरस्यैव प्रतिपदं उपवतीं कुर्यादिति ।

( ५ ) सिद्धान्तः—प्रकृतावेकैकं पृष्ठमितरनिरपेक्षमेव निमित्तम् । उभयसामके गोसवादौ तु मिलितयोरेव पृष्ठता । तस्मात् प्राकृतयोः प्र-तिपदोर्नास्त्यत्र सम्भवः । तथा सति नात्र रथन्तरपृष्ठं नापि बृहत्पृष्ठम्, अपि तु बृहद्रथन्तराभ्यामुभाभ्यामत्र पृष्ठनिर्वृत्तिः । तस्मान्नोपवती प्रति-पत् नाप्यग्रवती. अन्यैव क्रतुनिमित्ता काचिद् भविष्यति इति ।

एतदभिप्रेत्याह क्रत्विति । 'उभयसामके' गोसवादौ—'क्रत्वाश्रयः' एव प्रतिपत्—'स्यात्'—न तु रथन्तरबृहत्सम्बन्धिन्यौ उपवत्यग्रवत्या-विति शेषः ॥ १७ ॥

## (१८) १०।५।६२—६४ सर्वादितो न प्रतिकर्षणं स्यात् ।

( १ ) बाधे प्रासङ्गिकी चिन्ता ।

( २ ) ज्योतिष्टोमे श्रूयते—'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णन्ति' इति ऐ-न्द्रवायवस्याग्रत्वरूपं प्राथम्यम् । मन्त्रकाण्डविधिकाण्डयोस्तु ग्रहाणा-मयं पाठक्रमः—'प्रथम उपांशुग्रहः, द्वितीयोऽन्तर्यामग्रहः, तृतीय ऐन्द्रवा-यवग्रहः, चतुर्थो मैत्रावरुणो ग्रह' इत्यादि ।

( ३ ) तत्र संशयः—ऐन्द्रवायवस्याग्रतासम्पादनाय किं सर्वादौ प्रतिकर्षे उपांशोरपि पूर्वं ग्राह्यता—उत स्वस्थाने एव तस्य ग्रहणमिति ।

( ४ ) पूर्वपक्षः—ऐन्द्रवायवस्य स्पष्टमग्रत्वविधानात् सर्वेभ्य उपांश्वादिभ्यः पूर्वमेव स ग्राह्य इति ।

( ५ ) सिद्धान्तः—ऐन्द्रवायवो धाराग्रहाणामेकतमः । तस्मात् तस्याग्रत्वं धाराग्रहापेक्षयैव । एवं सति तस्य स्वस्थान एव ग्रहणमिति ।

एतदभिप्रेत्याह सर्वेति । 'सर्वादितः' सर्वेषां ग्रहाणां उपांश्वादीनां आदौ प्राक्—'प्रतिकर्षणं' स्वस्थानादाकृष्य ग्रहणं—'न स्यात्' अपि तु स्वस्थान एव ग्रहणं स्यात्—ऐन्द्रवायवग्रहस्येति शेषः ॥ १८ ॥

## (१९) १०।५।६५-६६ काम्येऽपि न स्यात् सकलग्रहेभ्यः

( १ ) पूर्वाधिकरणचिन्ताऽनुवर्तते ।

( २ ) ज्योतिष्टोम एव श्रूयते—'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति ।

( ३ ) तत्र संशयः—अत्रापि किमैन्द्रवायवस्य ग्रहणं स्वस्थाने स्यादुत सर्वेभ्यः पूर्वमिति ।

( ४ ) पूर्वपक्षः—धाराग्रहादिष्वग्रतायां पूर्वोदाहृतेनैव वाक्येन सिद्धायामत्रोदाहृते वाक्ये यदग्रताविधानं तद्बलात् सर्वेभ्यः पूर्वं ग्रहणमिति ।

( ५ ) सिद्धान्तः—नात्र सर्वाग्रत्वं विधातुं शक्यम्—धाराग्रहाणामेव प्रकृतत्वात् यथास्थानस्थितानामेव धाराग्रहाणां कामविशेषसंयोगोऽत्रोच्यते । तस्मात् काम्येऽपि स्वस्थान एव ग्रहणमिति ।

एतदभिप्रेत्याह काम्य इति । 'काम्येऽपि' ग्रहणे—'सकलग्रहेभ्यः' सर्वेभ्य उपांशुप्रभृतिभ्यः—'पूर्वम्' इति शेषः—'न स्यात्' ऐन्द्रवायवस्य ग्रहणमिति सम्बन्धः ॥ १९ ॥

## (२०) १०।५।६७-६८ मन्थ्याग्रतादिः सकलग्रहाणाम् ।

( १ ) ग्रहाग्रताविचार एव वर्तते—पूर्वाधिकरणद्वयापवादोऽयम् ।

( २ ) ज्योतिष्टोमे श्रूयते—'शुक्राग्रान् ग्रहान् गृह्णीयादभिचरतो मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य' इत्यादि ।

( ३ ) तत्र संशयः—किमत्रापि मन्थ्यशुक्रादीनां स्वस्थाने ग्रहणमुत सर्वादाविति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन स्वस्थान एव ग्रहणमिति ।

( ५ ) सिद्धान्तः—ऐन्द्रवायवस्य धाराग्रहाग्रत्वं स्वस्थानग्रहणेनैव सम्पन्नम् । मन्थ्यादिषु तु न तथा इति नात्र पूर्वाधिकरणन्यायावतारः ।

तथा सति विधीयमानमग्रत्वं पाठक्रमबाधमन्तरेण न सम्भवतीति प्रतिकृष्य सर्वादौ ग्रहणमिति ।

एतदभिप्रेत्याह मन्थ्येति । 'मन्थ्याग्रतादि' मन्थ्यादिग्रहाणां यदग्रत्वमुक्तं तत्— सकलग्रहाणाम्'–अपेक्षयेति शेषः । तस्मात् तेषां सर्वादावेव प्रतिकर्ष इत्याशयः ॥ २० ॥

## (२१) १०।५।७०-७२ सा त्वैन्द्रवायव्यत एव पूर्वा ।

( १ ) ग्रहविचारो वर्तते—पूर्वाधिकरणशेषः ।

( २ ) मन्थ्याग्रता सर्वग्रहाणामपेक्षयेति मन्थ्यादीनां प्रतिकर्ष इति स्थितम् ।

( ३ ) तत्र पुनः संशयः—किमेषां प्रतिकर्षः सर्वादौ,–उत यतः कुतश्चित् अनियमेन—उत ऐन्द्रवायवस्यैव पुरस्तादिति ।

( ४ ) पूर्वपक्षः—उक्तः प्रतिकर्षः सर्वेषामुपांशुप्रभृतीनां ग्रहाणामादौ युक्तः—विशेषनियामकाभावात् । सामान्यतः श्रुतमग्रत्वं सर्वापेक्षमेव न्याय्यमिति ।

( ५ ) सिद्धान्तः—प्राकृतान् धाराग्रहानाश्रित्यैव फलविशेषाय मन्थ्याग्रत्वादि विहितम् । किञ्च 'धारयेयुस्तं यं कामाय गृह्णीयुः—ऐन्द्रवायवं गृहीत्वा सादयेत्' इति वाक्यं मन्थ्यादेः काम्यस्य धारणानन्तरमैन्द्रवायवस्य ग्रहणं वदत् ऐन्द्रवायवापेक्षयैवाग्रत्वं मन्थ्यादीनामिति बोधयति । तस्मादैन्द्रवायवग्रहात् प्राक्, न सर्वेषां प्राक्, मन्थ्यादेर्ग्रहणमिति ।

एतदभिप्रेत्याह सेति । 'सा' मन्थ्यादीनामग्रता—'ऐन्द्रवायवत एव' ऐन्द्रवायवग्रहात् एव—'पूर्वा' प्राक् कर्तव्या—न तु सर्वेषामादाविति भावः ॥ २१ ॥

## (२२) १०।५।७३-७४ तत्सादनं च प्रतिकृष्यतेऽर्थात् ।

( १ ) ग्रहविचारशेषः ।

( २ ) सर्वे ग्रहाः गृहीत्वा साद्यन्ते ।

( ३ ) तत्र सन्देहः—यत्र काम्यस्य ग्रहस्यापकर्षस्तत्र तस्य सादनस्यापकर्षो भवति न वेति ।

( ४ ) पूर्वपक्षः—सादनस्य प्रतिकर्षो न श्रुतः । तस्मान्न प्रतिकर्ष इति ।

( ५ ) सिद्धान्तः—ग्रहणशेषो हि सादनम् । ग्रहणं हि प्रदानार्थम्–न चासादनं विना प्रदानं सम्भवति । एवं च सादनस्य ग्रहणशेषत्वे ग्रहणस्य प्रतिकर्षस्तदा सादनस्यापि प्रतिकर्ष इति ।

एतदभिप्रेत्याह—तदिति । 'तत्सादनं' गृहाणां सादनं—'च' अपि—'अर्थात्' प्रयोजनवशात्—'प्रतिकृष्यते'—यत्र गृहणं प्रतिकृष्यते तत्र सादनमपि प्रतिकृष्यते-सादनं विना प्रदानरूपस्य प्रयोजनस्य सिद्ध्यसम्भवादित्याशयः ॥ २२ ॥

## (२३) १०।५।७५–७६ न तु प्रदानं प्रतिकर्षणीयम्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) गृहाणां गृहणं सादनं च प्रदानार्थम् । गृहणस्य सादनस्य च क्वचित् प्रतिकर्षो भवतीति स्थितम् ।

( ३ ) तत्र संशयः—प्रदानस्यापि प्रतिकर्षो भवति न वेति ।

( ४ ) पूर्वपक्षः—गृहाणां गृहणप्रतिकर्षानुसारेण यथा सादनस्य प्रतिकर्षस्तथा प्रदानस्यापीति ।

( ५ ) सिद्धान्तः—सादनं हि ग्रहणशेषः—ततो ग्रहणप्रतिकर्षेण तस्य प्रतिकर्षः । प्रदानं तु न ग्रहणशेषः—प्रधानमेव तत् । न तु शेषानुसारेण प्रधानस्य प्रतिकर्ष इति ।

एतदभिप्रेत्याह नत्विति । 'प्रदानं' तु प्रधानं सत्—'न प्रतिकर्षणीयम्'। सादनं यथा प्रतिकृष्यते न तथा प्रदानं प्रधानत्वादित्याशयः ॥२३॥

## (२४) १०।५।७७–७८ समं विधत्ते पुनरग्रतोक्तिः ।

( १ ) गृहविचारो वर्तते ।

( २ ) अस्ति द्वादशाहे त्र्यनीका । तत्र श्रूयते-'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः, अथेतरेषां नवानामह्नां ऐन्द्रवायवाग्रं प्रथमगृहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्'इति॥ प्रकृतौ द्वादशाहे च द्वितीयतृतीयचतुर्थेषु त्रिष्वहःसु क्रमेण ऐन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणत्वानि विहितानि—तेष्वाद्यं रथन्तरनिमित्तं द्वितीयं बृहन्निमित्तम् ॥ एवञ्चोभयमपि चोदकेनापि प्राप्तम् ।

( ३ ) एवं सति संशयः—यदि चोदकेनैव प्राप्तं तर्हि त्र्यनीकां प्रकृत्य पुनर्वचनस्य ( उदाहृतवाक्यस्य ) किम्प्रयोजनम्—किं चोदकप्राप्तस्यानुवादः—उत गुणान्तरस्य परिसङ्ख्या—उतार्थवादः—उत विधिरिति ।

( ४ ) पूर्वपक्षः-अनुवादोऽप्रयोजकः । परिसङ्ख्या दोषत्रयदुष्टा । न च प्राप्तस्य विधिः सम्भवति । तस्मादर्थवाद एवेति ।

( ५ ) सिद्धान्तः—आग्रयणाग्रत्वे यथा विधिस्तथा ऐन्द्रवायवाग्र-

क्राग्रतयोरपि । न च प्राप्तत्वादविधिः । अस्य विधेरनिमित्तकत्वाभ्युपगमात्, चोदकप्राप्तस्य तु रथन्तरनिमित्तकत्वात् इति ।

एतदभिप्रेत्याह सममिति । 'पुनः' द्वितीयवारं, चोदकप्राप्त्यनन्तरं या 'अग्रतोक्तिः' अग्रताश्रुतिः सा—समं विधत्ते समानविधानम् । वाक्येनेदं ज्योतिष्टोमे रथन्तरसामनिमित्तकं प्रवृत्तमत्र चोदकेन प्राप्तं—तस्मात् समानविधिकं करिष्यामीति पुनर्वचनमिति भावः ॥ २४ ॥

## (२५) १०।५।७६–८२ व्यूढः समूढस्य भवेद्ध विकारः

( १ ) अतिदेशबाधप्रसङ्गेन विचारः ।

( २ ) द्विविधो द्वादशाहः—व्यूढः समूढश्च । समूढस्तावत्—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाह' इत्यादि । व्यूढस्तु—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ अथेतरेषां दशानामह्नाम्' इत्यादि ।

( ३ ) तत्र संशयः—किमुभयप्रकारमपि द्वादशाहं प्रकृत्य धर्मा आम्नाता, उभौ च प्रकृतिभूतौ—उत समूढः प्रकृतिः व्यूढः तद्विकृतिरिति ।

( ४ ) पूर्वपक्षः—उभयस्य प्रकृतत्वाविशेषात् न ज्ञायते कस्यैकस्य धर्मा आम्नाताः कस्य नेति । न चैकस्यापि कोपि विशेषो दृश्यते येन तयोः प्रकृतिविकृतिभावविवेको भवेत् । तस्मादुभावपि प्रकृतिभूतौ इति ।

(५) सिद्धान्तः–समूढ एव प्रकृतिः व्यूढस्तद्विकृतिः । 'ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमह' इति व्यूढे श्रूयते । एतच्च तस्य विकृतित्वे एव सम्भवति नान्यथा । किंच 'यः कामयेत बहु स्यां प्रजायेय' इति कामाय व्यूढो विधीयते । तथा सति नास्य क्रत्वर्थता । तस्मात् समूढस्य द्वादशाहस्य विकृतिरयमिति ।

एतदभिप्रेत्याह व्यूढ इति । 'व्यूढः' द्वादशाहः—'समूढस्य' द्वादशाहस्य—'विकारः' विकृतिः—'भवेत्'–तस्माद्ध अहर्गणेषु समूढधर्माणामेवातिदेशो न व्यूढधर्माणामित्याशयः ॥ २५ ॥

## (२६) १०।५।८३–८७ स्वस्थानवृद्धिं लभते त्र्यनीका ।

( १ ) द्वादशाहविषय एव विचारो वर्तते ।

( २ ) अस्ति समूढस्य द्वादशाहस्य विकृतिर्गवामयनं संवत्सरसत्रम् । तत्र त्र्यनीका चोदकप्राप्ता [ त्रीणि अनीकानि ऐन्द्रवायवशुक्राग्रयणरूपाणि यस्यां क्रियायां सा त्र्यनीका ]—तयाच त्रिरावृत्तया [ द्वादशाहाद्यन्तयोरह्नोर्मध्ये दशममहः परित्यज्य ] नवसङ्ख्यकान्यहानि पूरितानि । [ ऐन्द्रवायवः—शुक्रः—आग्रयणः; पुनरैन्द्रवायवः—शुक्रः—आग्रयणः; पुनरैन्द्रवायवः—शुक्रः—आग्रयण इत्येवमावृत्तिः ] ॥ ततश्च

विकृतौ संवत्सरसत्रेऽपि तथैव पूरयितव्यानि । उक्ता च त्र्यनीकाया आवृत्तिर्द्विधा सम्भवति—नवदिवसात्मकस्य समूहस्यावृत्तिरित्येकः प्रकारः—नवदिवसात्मकसमूहान्तर्गतैकैकस्य दिवसस्य पुनःपुनरनुष्ठानमित्यपरः प्रकारः ॥

( ३ ) तत्र संशयः—द्वयोरनयोः कतरः प्रकारो न्याय्य इति ।

( ४ ) पूर्वपक्षः—नवदिवसात्मकस्य समूहस्यैवावृत्तिः । ऐन्द्रवायवग्रहानन्तरं शुक्राग्रो विहितः—आवृत्तौ यदि ऐन्द्रवायव आवर्त्येत तदा ऐन्द्रवायवादानन्तर्यं शुक्रस्य बाध्येत । तस्मात् समूहात्मकेनैवावृत्तिर्न्याय्येति ।

( ५ ) सिद्धान्तः—ग्रहाणां स्वस्थानवृद्ध्यैव प्रायणीयोदयनीययोरन्तरालपूर्तिर्भवति । तथाच पूरयितव्यमन्तरालं नवधा विभज्य—प्रथमभागगतेषु अहःसु ऐन्द्रवायवाग्रत्वम् त्रिरावृत्तम्—द्वितीयभागे शुक्राग्रत्वं त्रिरावृत्तम्—तृतीयभागे आग्रयणाग्रत्वं त्रिरावृत्तमित्येवंक्रमेणानुष्ठानम् । एवं खण्डश आवृत्तिः । तस्मात् स्वस्थान एव वृद्धिरिति ।

एतदभिप्रत्याह—स्वेति । 'त्र्यनीका' ग्रहत्रयात्मिका—'स्वस्थाने' 'वृद्धिम्' त्रिधा आवृत्तिं—'लभते' प्राप्नोति । तस्मात् खण्डश आवृत्तिः, समूहात्मकेनेत्यर्थः ॥ २६ ॥

## (२७) १०।५।८८ छन्दोविवृत्त्या न विवर्ततेऽर्थः

( १ ) द्वादशाहे विचारविशेषः ।

( २ ) सन्ति द्वादशाहे भक्ष-पवमान—परिधि-कपालानि । तत्र च मन्त्रा आम्नाताः ॥ ते च द्वादशाहविकृतौ चोदकेन प्राप्ताः ॥ ते च भक्षादयो गायत्रादिच्छन्दोनुसारिनाम्ना व्यवहृताः । विकृतौ च छन्दसां व्यतिक्रमः श्रूयते-'गायत्रीत्रिष्टुभः, त्रिष्टुप् जगत्याः, जगती गायत्र्या' इति ॥

( ३ ) तत्र संशयः—योऽयं छन्दोव्यतिक्रमः स किं मन्त्रशब्दानामेव कार्यः उत भक्षपवमानपरिधिकपालरूपाणां तेषामर्थानामपि इति ।

( ४ ) पूर्वपक्षः—सर्वत्र व्यतिक्रमः । तेन गायत्रशब्दनिर्दिष्टः प्रातःसवनीयो भक्षः त्रैष्टुभशब्दस्य माध्यन्दिनीयभक्षस्य स्थाने–माध्यन्दिनीयो जागतस्य स्थाने-जागतो गायत्रस्य स्थाने-इत्येवं पवमानेषु परिधिषु कपालेषु च योज्यम् । सोऽयं व्यतिक्रमोऽर्थेष्विव मन्त्रशब्देष्वपि कार्य इति ।

( ५ ) सिद्धान्तः–उदाहृते वाक्ये अर्थानां व्यतिक्रमो नोक्तः, अपि तु छन्दसामेव । तस्मात् मन्त्रगतानां गायत्रादिशब्दानामेव व्यतिक्रमः । भक्षादीनां गायत्रत्वाद्यसम्भवात् तत्तच्छन्दोनाम्ना व्यपदेशः प्रशंसार्थमेव । तस्मान्नार्थानां भक्षादीनां व्यतिक्रम इति ।

एतदभिप्रेत्याह छन्द इति। 'छन्दोविवृत्या' छन्दसो व्यतिक्रमेण 'अर्थः' भक्षादिः—'न विवर्तते'—भक्षादिरूपेऽर्थे व्यतिक्रमो न भवतीत्यर्थः॥२७॥

सप्ताधिका विंशतिर्नीतयोऽत्र।

स्पष्टम्।

इति दशमस्य पञ्चमः।

---

## अथ दशमस्य षष्ठः पादः।

[ बाधप्रसङ्गागतः सामविचारः ]

### (१) १०।६।१-२ तृचे गेयं भवेत् साम

( १ ) बाधप्रसङ्गेन सामविचारः प्रस्तूयते।

( २ ) सामान्युदाहरणम्। पवमानाज्यपृष्ठादिस्तोत्रेषु विहितं रथन्तर-बृहद्-वैरूपादिसाम सामाध्येतार एकस्यामृच्यधीयते।

( ३ ) तत्र संशयः—स्तोत्रप्रयोगकालेऽपि किमिदं साम एकस्यामृचि गेयम्—उत तृचे गेयमिति।

( ४ ) पूर्वपक्षः—अध्ययनस्यानुष्ठानार्थत्वाद् यथाध्ययनमेकस्यामेव ऋचि गेयम् इति।

( ५ ) सिद्धान्तः—'अक्षरेण प्रथमाया ऋचः प्रस्तौति अथर्वेणोत्तरयोः' इति तिसृषु ऋक्षु प्रस्तोत्रा गातव्यो भागो निरूप्यते। तदिदं तृचस्य लिङ्गम्। पुनश्च ऋग्देवतासामदेवतासंवादे सामदेवता एकामृचं द्वे ऋचे च प्रत्याख्याय तिस्र ऋचोऽङ्गीचकारेति वर्णितम्। तदपि तृचस्य लिङ्गम्। अन्यच्च 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति वचनम्। तस्मात् तृचे साम गेयमिति।

एतदभिप्रेत्याह तृच इति। 'साम' रथन्तरादि—'तृचे' ऋक्त्रयसङ्घे—'गेयम्' न त्वेकस्यामृचीति भावः॥ १॥

### (२) १०।६।३ कालार्थं स्वर्दृगुच्यते।

( १ ) सामविशेषविचारः।

( २ ) रथन्तरसाम्नो योनौ 'अभि त्वा शूर' इति ऋचि 'स्वर्दृक्'शब्दः श्रूयते—'ईशानमस्य जगतः स्वर्दृशम्' इति। अस्ति चोद्गातुः कर्तृता तृचे—'रथन्तरे प्रस्तूयमाने सम्मीलयेत्–स्वर्दृशं प्रति वीक्षेत' इति।

( ३ ) तत्र संशयः—किं स्वर्दृक्शब्दोच्चारणवीक्षणयोरङ्गाङ्गिभावोऽत्र विधीयते—उत विधीयमानसम्मीलनावधिकत्वेन स्वर्दृक्शब्दोच्चारणं निर्दिश्यत इति।

( ४ ) पूर्वपक्षः—सम्मीलनवाक्याद् वीक्षणवाक्यं भिन्नम् । ततो सम्मीलनावधित्वेन उच्चारणस्यान्वयो न सम्भवति । किं च वीक्षेतेत्यत्र लिङ्श्रवणात् विधिर्गम्यते । तस्मात् स्वर्दृकूशब्दोच्चारणं वीक्षणाङ्गम्, वीक्षणं चोच्चारणाङ्गमित्यङ्गाङ्गिभावोऽभ्युपेय इति ।

( ५ ) सिद्धान्तः—स्वर्दृशं प्रतीत्यत्र कर्मप्रवचनीयेन प्रतिशब्देन स्वर्दृक्शब्दोच्चारणस्य सम्मीलनकालविधित्वं द्योत्यते । न च वाक्यं भिन्नम्—'आ स्वर्दृकूशब्दोच्चारणात् सम्मीलयेत्' इत्येवंरूपैकवाक्यतासम्भवात् । एवं चोत्तरयोर्ऋचोः सम्मीलनस्य बाध इति फलम्—इति ।

एतदभिप्रेत्याह कालेति । 'कालार्थं' सम्मीलनस्य कालावधिज्ञापनार्थम्—'स्वर्दृकूशब्दः—'उच्यते' प्रयुज्यते—अतो न सम्मीलनोच्चारणयोरङ्गाङ्गिभाव इति भावः ॥ २ ॥

(३) १०।६।४–५ प्रत्यहन्न द्विसामत्वम्

( १ ) सामविचारो वर्तते ।

( २ ) प्रकृतौ द्वादशाहे पृष्ठ्यः षडह उत्पन्नः । तत्र षण्णामप्यह्नां क्रमेण रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवतानि सामानि विहितानि॥ विकृतौ गवामयने यः पृष्ठ्यः षडहस्तत्र श्रूयते—'पृष्ठ्यः षडहो बृहद्रथन्तरसामा'इति ॥ चोदकप्राप्तयोरपि बृहद्रथन्तरयोः पुनर्विधानात् वैरूपादिनिवृत्तिः ॥

( ३ ) तत्र संशयः—शिष्यमाणं बृहद्रथन्तरसामद्वयं किं प्रत्यहं कर्तव्यमुत केषुचिद् अहःसु बृहत केषुचिद्रथन्तरम् इति ।

( ४ ) पूर्वपक्षः—'बृहद्रथन्तरसामा' इत्यत्र द्वन्द्वगर्भे बहुव्रीहौ साम्नोः साहित्यं प्रतीयते । ततः प्रत्यहं सामद्वयमिति ।

( ५ ) सिद्धान्तः—षडहे सामद्वयस्य साहित्यमित्येवार्थो 'बृहद्रथन्तरसामा षडहः' इत्यस्माद्वाक्याद् गम्यते । प्रकृतौ च साम्नां परस्परनिरपेक्षत्वादिहापि द्वयोः साम्नोः परस्परनैरपेक्ष्यमेव । तस्मात् केषुचिदहस्सु एकं साम केषुचिदपरम्, न सर्वेषु सामद्वयमिति ।

एतदभिप्रेत्याह प्रतीति । 'द्विसामत्वं' सामद्वयप्रयोगः—'प्रत्यहम्' सर्वेषु अहःसु 'न' भवतीति सम्बन्धः ॥ ३ ॥

(४) १०।६।६–१२ नैकादशिनमन्वहम् ।

( १ ) बाधातिदेशचिन्ताऽनुवर्तते पूर्वचिन्तासदृशी ।

( २ ) द्वादशाहे श्रूयते—'एकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्' इति ।

( ३ ) तत्र संशयः—किमेकादशापि पशवः प्रायणीये कर्तव्या, त ए-

वेकादश पुनरुदयनीये—अथवा एकादशानां केचित्प्रायणीये केचिदुदयनीये इति ।

(४) पूर्वपक्षः—एकादशापि प्रायणीये—पुनस्त एवोदयनीये भवन्ति । प्रायणीयोदयनीययोरुभयोरपि प्राधान्यात् प्रतिप्रधानं चाङ्गावृत्तेर्न्याय्यत्वादिति ।

(५) सिद्धान्तः—वचनान्तरेण विहितानामेकादशानां प्रकरणेन द्वादशाहाङ्गत्वे सिद्धे देशाकाङ्क्षायां तान् पशूनुद्दिश्य प्रायणीयोदयनीयौ देशत्वेन विधीयेते । तस्मान्न तयोः प्राधान्यम् । एवं च सति यथा'शतं देवदत्तयज्ञदत्तयोर्दीयताम्' इत्यत्र शतस्य कश्चिद् भागो देवदत्ताय कश्चिद् यज्ञदत्ताय दीयते—तथैव 'प्रायणीये पञ्च उदयनीये च षट्' इत्येवंरूपेण विभागेन पशवः कर्तव्या इति ।

एतदभिप्रेत्याह नेति । 'एकादशिनम्' एकादश पशून्—'अन्वहम्' प्रायणीयोदयनीययोरुभयत्रावृत्त्या-'न'-'कर्तव्यमिति शेषः ॥ ४ ॥

## (५) १०।६।१३-१४ पृष्ठमेकं विश्वजिति

(१) सामविचारः ।

(२) इदमाम्नायते—'विश्वजित् सर्वपृष्ठ' इति । षडहे षट्सु अहःसु क्रमेण 'रथन्तरम्—बृहद्-वैरूपम्-वैराजम्—शाक्वरं-रैवतम्' इत्येतैः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितम् । तान्येतानि सर्वाणि पृष्ठसामानि यस्मिन् विश्वजिति स भवति सर्वपृष्ठः ।

(३) तत्र संशयः—माध्यन्दिनपवमान-मैत्रावरुण-साम्नोरन्तरालरूपे देशे किं सर्वाणि पृष्ठसामानि कार्याणि-उत एकस्य पृष्ठदेशे अन्येषामन्यत्रेति ।

(४) पूर्वपक्षः—पृष्ठकार्ये वर्तमानस्य सर्वस्य अयं देश उक्तः । तस्मात् सर्वाणि तत्र कार्याणि इति ।

(५) सिद्धान्तः—वचनेन देशविशेषः साम्नां व्यवस्थाप्यते—'पवमाने रथन्तरं करोति, आर्भवे बृहत्, मध्य इतराणि—वैरूपं होतुः, पृष्ठं वैराजं ब्रह्मसाम, शाक्वरं मत्रावरुणसाम, रैवतमच्छावाकसाम' इति । वचनं हि न्यायाद्बलीयः । एवं च एकस्य पृष्ठकार्ये निवेशोऽन्येषामन्यत्र परिसामकार्ये इति ।

एतदभिप्रेत्याह पृष्ठमिति । 'विश्वजिति'—'एकम्' एव—'पृष्ठम्'—एकस्यैव साम्नः पृष्ठकार्ये निवेशः, अन्येषां तु सामकार्ये इत्याशयः ॥५॥

## (६) १०।६।१५-२१ वैरूपं पृष्ठसाधनम् ।

(१) सामविचारः ।

( २ ) इदमाम्नायते—'उक्थ्यो वैरूपसामा' इति ।

( ३ ) तत्र सन्देहः—किं वैरूपं कृत्स्ने क्रतौ निविशते-उत केवलं पृष्ठकार्ये इति ।

( ४ ) पूर्वपक्षः—'वैरूपसामा उक्थ्यः' इत्यत्र वैरूपं साम यस्मिन् उक्थ्ये क्रतौ स-इत्येवंरूपस्य सम्बन्धस्य प्रतीयमानत्वात् कृत्स्ने एव क्रतौ वैरूपस्य निवेश इति ।

( ५ ) सिद्धान्तः—प्रकृतौ 'रथन्तरसामा' 'बृहत्सामा' इत्येवंविधस्य निर्देशस्य पृष्ठविषयत्वदर्शनात् अत्रापि तन्निर्देशेन पृष्ठकार्ये एव वैरूपस्य निवेशः-क्रतुसम्बन्धश्च पृष्ठद्वारेणैवेति ।

एतदभिप्रेत्याह वैरूपमिति । 'वैरूपं' साम-'पृष्ठस्य' एव 'साधनम्' निष्पादकमङ्गं भवति—तस्मात् पृष्ठकार्ये एव तस्य निवेशो न कृत्स्ने क्रतावित्याशयः ॥ ६ ॥

## (७) १०।६।२२-२३ स्तोमस्यैव त्रिवृत्त्वं स्यात्

( १ ) सामविचारः ।

( २ ) एवं श्रूयते—'त्रिवृदग्निष्टुदग्निष्टोमः' इति ।

( ३ ) तत्र सन्देहः—किं त्रिवृत्त्वमग्निष्टुति क्रतौ सर्वेषु साधनेषु निविशते—उत स्तोममात्रेण सम्बध्यते इति ।

( ४ ) पूर्वपक्षः—त्रिवृद्रज्जुरित्यादौ त्रिवृच्छब्दस्य त्रैगुण्यवाचित्वदर्शनात् अत्रापि क्रतुसाधनेषु या या सङ्ख्या श्रूयते सा सर्वा त्रिवृत्त्वेन विक्रियते इति ।

( ५ ) सिद्धान्तः—अवयवव्युत्पत्त्या यद्यपि त्रिवृच्छब्दस्त्रैगुण्यवाची तथाऽपि वेदे रूढ्या स स्तोमवाची एव । तस्मात् स्तोममात्रसम्बन्धि त्रिवृत्त्वमिति ।

एतदभिप्रेत्याह स्तोमस्येति । 'त्रिवृत्त्वं' त्रिवृदितिनिर्देशः—'स्तोमस्य' 'एव' 'स्यात्'—न तु सर्वेषां क्रतुसाधनानामिति शेषः ॥ ७ ॥

## (८) १०।६।२४-२५ द्वैपृष्ठ्यमुभयश्रुतौ ।

( १ ) सामविचारः ।

( २ ) सन्त्युभयसामानः क्रतवः—'संसव उभे कुर्यात्', 'अभिजिता चैकाह उभे बृहद्रथन्तरे कुर्यात्' इति ।

( ३ ) तत्र सन्देहः—किं बृहद्रथन्तरे विभक्ते भवतः-एकं पृष्ठस्तुतौ इतरत् अन्यस्तुतौ-उत समस्ते उभे पृष्ठस्तुतावेवेति ।

( ४ ) पूर्वपक्षः—प्रकृतौ बृहद्रथन्तयोरेकेनैव पृष्ठं साधितम् । इहापि

चोदकेन अन्यतरेण पृष्ठं साधनीयम्। तस्मात् द्वे सामनी विभक्ते भवतः इति।

(५) सिद्धान्तः—प्रकृतिवदन्यतरस्य विकल्पे पुनर्विधानं व्यर्थं स्यात्। तस्मात् समस्ते समुच्चीयेते इति।

एतदभिप्रत्याह द्वैपृष्ठमिति। 'उभयश्रुतौ' उभयसामनि यागे-'द्वैपृष्ठम्' द्वे पृष्ठे इति द्वैपृष्ठम्—द्वयोरेव साम्नोः समुच्चयेन प्रयोगो न विकल्पेनेत्याशयः॥ ८॥

(९) १०।६।२७-२८ षडहान्ते चाशनं स्यात्

(१) प्रासङ्गिको विचारः।

(२) पृष्ठ्यः षडहो द्विविधः। प्रकृतौ द्वादशाहे-'त्रिवृत्-पञ्चदशः-सप्तदशः-एकविंशः-त्रिणवः-त्रयस्त्रिंशः' इत्येतैः षड्भिः स्तोमैर्युक्तान्यहानि षड् विहितानि। सोऽयं त्रयस्त्रिंशान्तः षडहः। क्वचित्तु विकृतौ व्यत्यासेन आदौ त्रयस्त्रिंशोऽन्ते त्रिवृत् इति त्रयस्त्रिंशादिः षडहः॥ मधुभोजनं चात्र चोदकेन प्राप्तम्। तच्च प्रकृतौ त्रयस्त्रिंशानन्तरं कृतम्।

(३) तत्र सन्देहः—विकृतावपि किं त्रयस्त्रिंशानन्तरमेव कार्यमुत षडहान्ते इति।

(४) पूर्वपक्षः—चोदकप्राप्तस्य त्रयस्त्रिंशानन्तरभोजनस्य परित्यागे मानाभावात् तथैव त्रयस्त्रिंशान्ते एव भोजनमिति।

(५) सिद्धान्तः—'संस्थिते षडहे मध्वाशयेद् घृतं वा' इति षडहस्य समाप्तावेव प्रकृतौ भोजनस्य विहितत्वाद्विकृतावपि षडहान्त एवाशनमिति। प्रकृतौ त्रयस्त्रिंशोऽन्त्यो विकृतौ तु त्रिवृदेवान्त्यः—अत एकत्र त्रयस्त्रिंशान्ते इतरत्र त्रिवृदन्ते इति नोचितम्। उभयत्रापि षडहान्ते एव भोजनमिति।

एतदभिप्रेत्याह षडिति। 'षडहान्ते' यथा प्रकृतौ तथैव विकृतावपि षडहस्य 'अन्ते' समाप्तौ एव-'अशनं' भोजनम् मधुनो घृतस्य वा-'स्यात्'-इति सम्बन्धः॥ ९॥

(१०) १०।६।२९-३० नावृत्तिरशनस्य तु।

(१) पूर्वविचारशेषः।

(२) 'आवृत्तं पृष्ठमुपयन्ति' इति श्रूयते। तथाच षडहावृत्तौ स्तोत्रादीन्यावृत्तानि भवन्ति।

(३) तत्र संशयः—किं मधुभोजनस्याप्यावृत्तिरुत नेति।

(४) पूर्वपक्षः—यथा स्तोत्रादीनामावृत्तिस्तथा भोजनस्यापि भवतीति।

(५) सिद्धान्तः—समाप्ते षडहे भोजनं विहितम्। समाप्तिश्च नाम

षडहविशेषव्यापारोपरमः । अतः षडहावृत्तावपि आवृत्तेरन्ते एव भोजनम् । तस्मान्नावृत्तिसम्भवो भोजनस्य इति ।

एतदभिप्रेत्याह नेति । 'अशनस्य' मधुभोजनस्य-'तु' 'आवृत्तिः' पुनरनुष्ठानम्-'न' भवति-षडहस्यावृत्तावपीति शेषः ॥ १० ॥

## (११) १०।६।३१ प्रतिमासन्तदावृत्तिः

( १ ) पूर्वविचारशेषः तदपवादरूपः ।

( २ ) गवामयने श्रूयते-'चत्वारोऽभिप्लवाः षडहाः-पृष्ठ्यः षडहः स मासः स द्वितीयः स तृतीयः स पञ्चमः'-इति षडहपञ्चकरूपो 'मासः'। तत्र च चोदकेन षडहस्यान्ते मधुभोजनं प्राप्तम् ।

( ३ ) तत्र सन्देहः—उक्तः षडहपञ्चकरूपो मासो यदा आवर्त्यते तदा किं प्रतिमासं मधुभोजनस्यावृत्तिरुत सर्वेषाम्मासानामन्ते इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन सर्वेषामन्ते—न प्रतिमासमिति।

( ५ ) सिद्धान्तः—प्रतिमासं समाप्तानां षडहानां पृथक्त्वात् भोजनमपि प्रतिमासमावर्तनीयमिति ।

एतदभिप्रेत्याह प्रतीति । 'प्रतिमासम्' मासस्य अन्ते-'तस्य' मधुभोजनस्य-'आवृत्तिः' भवेदिति सम्बन्धः ॥ ११ ॥

## (१२) १०।६।३२-३३ दीक्षितैः प्राश्यते मधु ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) सत्रात्मके द्वादशाहे श्रूयते-'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत्' इति ।

( ३ ) तत्र संशयः—सत्रिभिर्मधु भक्षणीयं न वेति ।

( ४ ) पूर्वपक्षः—न भक्षणीयम्—सत्रिणां दीक्षितत्वेन ब्रह्मचारित्वात्-ब्रह्मचारिणश्च मधुमांसप्रतिषेधात् इति ।

( ५ ) सिद्धान्तः—उक्तनिषेधः पुरुषार्थः । सत्रे मधुभक्षणं क्रत्वर्थम्। ततो विषयभेदः । तस्मात् भक्षणीयमिति ।

एतदभिप्रेत्याह दीक्षितैरिति । 'दीक्षितैः' सत्रिभिः-'मधु'-'प्राश्यते' इति सम्बन्धः ॥ १२ ॥

## (१३) १०।६।३४-४४ न मानसमहर्भिन्नम्

( १ ) द्वादशाहविचारो वर्तते ।

( २ ) द्वादशाहे मानसग्रहणं श्रूयते-'अनया त्वा पृथिव्या समुद्रस्या प्रजापतये त्वा जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णाति' इति । अस्यार्थः-'पृथिवीपात्रम् , समुद्रः सोमः, प्रजापतिर्देवता, एवंविशिष्टस्य ग्रहणे मनः साधनम्-तदिदम्मानसमिति' ।

( ३ ) तत्र संशयः—किमिदम्मानसमहः द्वादशाहाद् भिन्नमुत तद-न्तर्गतमेवेति ।

( ४ ) पूर्वपक्षः—एतद् द्वादशाहेभ्यो भिन्नं त्रयोदशेऽहनि कर्तव्यो यागविशेषः । 'द्वादशाहेन हृतरसानि छन्दांसि मानसेनाप्याययन्ति' इति वाक्याद् द्वादशाहानन्तरमेव कर्तव्यम्मानसमिति द्योत्यते ॥ व्यपदेशभेदोऽपि श्रूयते–'वाग् वै द्वादशाहः, मनो मानसम्' इति ।

( ५ ) सिद्धान्तः—द्वादशाहे एव दशमस्याह्नोऽङ्गं भवति मानसम् । 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इत्येषा श्रुतिर्दशमाह्नोऽङ्गम्मा-नसमिति बोधयति । एवमङ्गत्वेऽपि मानसेनाप्यायनोक्तिः सङ्गच्छते । त-स्मात् द्वादशाहाङ्गमेव मानसमिति ।

एतदभिप्रेत्याह नेति । 'मानसम्' अहः' 'न' भिन्नम्'–द्वादशाहादिति शेषः ॥ १३ ॥

## (१४) १०।६।४५–५० सत्रं स्याद्व बहुकर्तृकम् ।

( १ ) द्वादशाहस्य सत्रविशेषस्य प्रसङ्गेन सामान्यतः सत्राणि चिन्त्यन्ते ।

( २ ) सन्ति सत्राणि ज्योतिष्टोमस्य विकृतयः ।

( ३ ) तत्र संशयः—किमेककर्तृकाणि उत बहुकर्तृकाणीति ।

( ४ ) पूर्वपक्षः—प्रकृतिवत् एककर्तृकाणीति ।

( ५ ) सिद्धान्तः—'सत्रमासीरन्' 'सत्रमुपेयुः' इत्येवं बहुवचनान्ताः श्रूयन्ते सत्रविधयः । तस्मात् बहुकर्तृकाणीति ।

एतदभिप्रेत्याह सत्रमिति । 'सत्रम्' द्वादशाहादिकम्– 'बहुकर्तृकम्' बहवः कर्तारोऽनुष्ठातारो यजमाना यस्मिन् तत् एवम्भूतं–'स्यात्'–न तु प्रकृतिवदेककर्तृकमिति भावः ॥ १४ ॥

## (१५) १०।६।५१–५८ ऋत्विजस्त्विह नान्ये स्युः

( १ ) सत्रविचारो।वर्तते ।

( २ ) सन्ति सत्राणि । तानि च बहुकर्तृकाणीति स्थितम् ।

( ३ ) सत्रेषु पुनः संशयः—किं सत्रिणो यजमाना एव ऋत्विजो भवन्ति–उत तेभ्योऽन्ये ऋत्विजः कर्तव्या इति ।

( ४ ) पूर्वपक्षः—ज्योतिष्टोमे यजमानाद् व्यतिरिक्ता एव ऋत्विजः । तदनुसारेण सत्रेष्वपि तथैवेति ।

( ५ ) सिद्धान्तः—'ये यजमानास्त एव ऋत्विजः' इति प्रत्यक्षवच-नम् । 'अदक्षिणानि सत्राणि' इति दक्षिणाराहित्यमपि श्रुतम् । तस्माद् यजमाना एव ऋत्विजः सत्रेष्विति ।

एतदभिप्रेत्याह ऋत्विज इति । 'इह' सत्रेषु—'ऋत्विजः'–'अन्ये'

यजमानेभ्यो व्यतिरिक्ताः—न' स्युः' अपि तु य एव यजमानास्त एव ऋत्विज इत्याशयः ॥ १५ ॥

(१६) १०।६।५९ सत्रं स्याद् द्वादशाहकम् ।

( १ ) सत्रविचार एव वर्तते ।

( २ ) अस्ति द्वादशाहः । तत्र च वर्तते सत्रम् ।

( ३ ) तत्र सन्देहः—द्वादशाहवर्तिनः सत्रत्वं युक्तं न वेति ।

( ४ ) पूर्वपक्षः—द्वादशाहो ज्योतिष्टोमस्य विकृतिः । न च तत्र सत्रलक्षणलक्षितत्वम् । तस्मान्न द्वादशाहगतस्य सत्रत्वमिति ।

( ५ ) सिद्धान्तः—द्वादशाहस्य सत्रत्वमेव । तथाहि—'आसते' 'उपयन्ति' इत्यादि चोदनास्वरूपं यजमानबहुत्वं च सत्रे—तदेव द्वादशाहेऽपि इति ।

एतदभिप्रेत्याह—सत्रमिति । 'द्वादशाहकम्' द्वादशाहयागः—'सत्रं' सत्रलक्षणलक्षितं—'स्यात्' भवेत्—आसनोपायिचोदनया यजमानबहुत्वेन च लक्षितत्वादित्याशयः ॥ १६ ॥

(१७) १०।६।६० अहीनोऽपि भवेदेवम्

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्ति द्वादशाहः—अस्ति तत्राहीनोऽपि ।

( ३ ) तत्र संशयः—द्वादशाहवर्तिनः अहीनत्वं युक्तं न वेति ।

( ४ ) पूर्वपक्षः—द्वादशाहस्याहीनलक्षणलक्षितत्वाभावान्न युक्तं तद्वर्तिनोऽहीनत्वमिति ।

( ५ ) सिद्धान्तः—'यजति'इति चोदनास्वरूपं यजमानसङ्ख्यानियमाभावश्चाहीनलक्षणम् । तदेतद् वर्तत एव द्वादशाहवृत्तिषु कतिपयेषु यागेषु द्विरात्रादौ । तस्माद् युक्तमहीनाभिधानं द्वादशाहस्येति ।

एतदभिप्रेत्याह अहीन इति । 'अहीनः' 'अपि' 'एवं'—द्वादशाहकं—'स्यात्' । अहीनलक्षणमपि द्वादशाहे वर्तत एवेत्याशयः ॥

तथाच 'आसीरन्' 'उपेयुः'-इत्यादि चोदनास्वरूपं बहव एव यजमाना इति नियमश्च सत्रलक्षणम्—'यजति' इति चोदनास्वरूपं यजमानबहुत्वनियमाभावश्चाहीनलक्षणम्—अयमेव च भेदः सत्राहीनयोरिति तात्पर्यमधिकरणद्वयस्येति ध्येयम् ॥ १७ ॥

(१८) १०।६।६१-६७ दक्षिणा सकृदश्रुतेः ।

( १ ) सत्रविशेषविचारो वर्तते ।

( २ ) अस्ति द्वादशाहस्य विकृतिषु एकादशरात्रः पौण्डरीकयागः । तत्र दक्षिणा विहिता-'अयुतं पुण्डरीके दद्यात् अश्वसहस्रमेकादशम्' इति ।

( ३ ) तत्र सन्देहः—किमियं दक्षिणा एकादशसु दिनेषु प्रत्यहं दातव्या उत सकृदेव कर्मान्ते इति।

( ४ ) पूर्वपक्षः—प्रतिदिनकर्तव्यं कर्म प्रधानम्। दक्षिणा च कर्माङ्गम्। प्रतिप्रधानं च अङ्गमावर्तनीयम्। तस्मात्प्रत्यहं दक्षिणादानमिति।

( ५ ) सिद्धान्तः—एकादशदिनव्यापी समस्तेतिकर्तव्यतासम्पन्न एक एव यागः पौण्डरीकः। तस्य न प्रत्यहं समाप्तिरपि तु एकादशदिनावसाने एव। कर्मान्ते च दक्षिणा। तस्मान्न प्रत्यहं दक्षिणाऽपि तु सकृदेव कर्मान्ते इति।

एतदभिप्रेत्याह दक्षिणेति। पौण्डरीकयागे 'दक्षिणा' 'सकृत्' एकवारमेव कर्मान्ते दातव्या, न प्रत्यहम्-कुतः—'अश्रुतेः' यस्मात् पौण्डरीकयागः कर्मसमुदायः—प्रत्येकं समुदायिनामङ्गरूपेण च दक्षिणा न श्रूयते इति भावः॥ १८॥

## (१९) १०।६।६८-७१ विभज्य नयनं तस्याः

( १ ) पूर्वाधिकरणशेषः।

( २ ) पौण्डरीकस्य प्रकृतौ—"माध्यन्दिने सवने दक्षिणा नीयन्ते" इति दक्षिणाया नयनादिरूपसंस्कारः श्रूयते। स च चोदकेन पौण्डरीकेऽपि प्राप्तः। दक्षिणाया दानं च पौण्डरीके सकृदेवेति समधिगतम्।

( ३ ) तत्र सन्देहः—किं गवायुतादिरूपाणां सर्वासां दक्षिणानां कार्त्स्न्येन नयनं प्रत्यहम्-उत सकृदेव नयनम्—उत प्रविभज्यैकैकस्य प्रत्यहं नयनमिति।

( ४ ) पूर्वपक्षः—समस्तदक्षिणाद्रव्यस्यैकत्वात् समस्तस्य कृत्स्नस्य सकृदेव नयनम्। तच्च प्रत्यहं वा स्यात् कर्मान्ते वेत्यैच्छिकमिति।

( ५ ) सिद्धान्तः—द्वादशाहे त्वन्वहं विभज्यैव दक्षिणानयनं भवति। तस्मात् तस्य विकृते पौण्डरीकेऽपि तथैव कर्तव्यमिति।

एतदभिप्रेत्याह विभज्येति। 'तस्याः' दक्षिणायाः—'नयनं' नयनादिसंस्कारः—'विभज्य' दिनानुदिनमेकैकं प्रति कर्तव्यमिति शेषः। एवं च सति दशसु अहःसु गवामेकैकसहस्रम् एकादशे चाहि अश्वसहस्रम्—नेतव्यमिति भावः॥ १९॥

## (२०) १०।६।७२-७५ यावदर्थं मनोऽर्चः।

( १ ) प्रासङ्गिको विचारः।

( २ क्वचित कर्मविशेषे श्रूयते—'मनोर्ऋचः सामिधेन्यो भवन्ति' इति।

( ३ ) तत्र सन्देहः—किं यावत्य ऋचः मनुसम्बन्धिन्यस्ताः सर्वाः सामिधेनीषु प्रयोक्तव्या उत काश्चिदेवेति ।

( ४ ) पूर्वपक्षः—विशेषाश्रवणात्सर्वा मनुलिङ्गा ऋचः प्रयोक्तव्या इति ।

( ५ ) सिद्धान्तः—अग्निसमिन्धनमेव सामिधेनीनां कार्यम्—तद्यावतीभिः सिध्यति तावत्य एव प्रयोक्तव्या न सर्वाः । प्रकृतौ च पञ्चदशभिरेव ऋग्भिरग्निसमिन्धनं सिध्यति । तस्मादत्रापि पञ्चदशैव प्रयोक्तव्या इति ।

एतदभिप्रेत्याह यावदिति । 'मनोऋ॑चः' या विकृतौ विहिताः ताः—'यावदर्थम्' प्रयोजनानुसारेण यावतीभिरग्निसमिन्धनरूपोऽर्थः सिध्यति तावत्य एव—प्रयोक्तव्या न सर्वा मनुलिङ्गा इति शेषः ॥ २० ॥

## (२१) १०।६।७६ मानोपाहरणे वस्त्रे

( १ ) प्रासङ्गिको विचारः ।

( २ ) ज्योतिष्टोमे सोमस्य मानम् उपाहरणं चाम्नातम् ।

( ३ ) तत्र संशयः—किमेते येन केनापि साधनेन कार्ये उत वस्त्रेणैवेति ।

( ४ ) पूर्वपक्षः—प्रयत्नविशेषं विनैव यत्किञ्चिल्लभ्यते साधनं तेनैव कर्तव्ये इति ।

( ५ ) सिद्धान्तः—'वाससि मिनोति—वाससा चोपाहरति' इति प्रत्यक्षं श्रूयते । तस्मात् वस्त्रे एव मानम्, वस्त्रेणैवोपाहरणमिति नियम इति ।

एतदभिप्रेत्याह मानेति । 'मानोपाहरणे' मानं च उपाहरणं च—'वस्त्र' वस्त्रेणैव साधनेन कार्ये इति भावः ॥ २१ ॥

## (२२) १०।६।७७ पृथग् वस्त्रमहर्गणे ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्ति द्वादशाहोऽहर्गणः । तत्र चोदकप्राप्तमुपाहरणम् ।

( ३ ) तत्र संशयः—किमेतदुपाहरणार्थमन्यद् वस्त्रं प्रत्यहं सम्पादनीयमुत नेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तादन्यस्य वाससोऽनुक्तत्वान्न ग्राह्यमन्यद् वास इति ।

( ५ ) सिद्धान्तः—द्वादशदिनेषु प्रत्यहं सोमस्योपाहरणं चोदकप्राप्तं भवति । तच्च प्रत्यहं वस्त्रभेदमन्तरेण न सम्भवति । तस्मात् वस्त्रान्तरं सम्पादनीयमिति ।

एतदभिप्रेत्याह पृथगिति । 'अहर्गणे' द्वादशाहे—'पृथग्' अन्यत्—'वस्त्रम्' उपाहरणार्थं सम्पादनीयम्प्रत्यहमिति शेषः ॥ २२ ॥

## (२३) १०।६।७८-७६ हरणार्थे पृथग् वासः

(१) पूर्वाधिकरणशेषः ।

(२) प्रत्यहं वस्त्रं सम्पादनीयमित्यवगतम् ।

(३) तत्र संशयः—किं मानार्थं सम्पादनीयमुतोपाहरणम्प्रति इति ।

(४) पूर्वपक्षः—प्रकृतौ मानोपाहरणार्थमेक एव वास उपादीयते । तस्मादिहापि उभयार्थं पृथग्वस्त्रं सम्पाद्यमिति ।

(५) सिद्धान्तः—उपाहरणार्थमेव सम्पादनीयं वस्त्रान्तरम् । यदा प्रयोजनं तदैव साधनं सम्पाद्यते । उपाहरणाय च वस्त्रान्तरस्य प्रयोजनम् । तस्मादुपाहरणार्थं तस्यैव काले सम्पादनीयमिति ।

एतदभिप्रेत्याह हरणेति । 'पृथक्' अन्यत्—'वासः' वस्त्रं—यदुपादेयत्वेन सिद्धम्पूर्वाधिकरणे—तत्—'हरणार्थम्' उपाहरणार्थमेव न तु मानार्थमपि । तस्मादुपाहरणायैव सम्पादनीयमिति भावः ॥ २३ ॥

त्रयोविंशति नीतयः ।

स्पष्टम् ।

इति दशमस्य षष्ठः ।

---

# अथ दशमस्य सप्तमः ।

[ बाधप्रसङ्गागतः प्रकीर्णविचारः ]

## (१) १०।७।१-२ पशौ हविः स्यात् पृथगङ्गमङ्गम् ।

(१) प्रासङ्गिको विचारः प्रवर्तते ।

(२) अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः ।

(३) तत्र संशयः—किं कृत्स्नः पशुरेकं हविरुत प्रत्यङ्गम् भिन्नं हविरिति ।

(४) पूर्वपक्षः—कृत्स्नः पशुरेकं हविः । अग्नीषोमदेवतां प्रति देयद्रव्यत्वेन पशुश्चोदितः—न च हृदयादि पशोरङ्गं साक्षात् 'पशुः' भवति इति ।

(५) सिद्धान्तः—'हृदयस्याग्रेऽवद्यति, अथ जिह्वाया' इत्यादिना हृदयाद्यङ्गानामवदानानि पृथगाम्नायन्ते । अवदानं च हविष्ट्वप्रयोजकः संस्कारविशेषः—पुरोडाशादौ हविषि होतुमवदीयमानत्वदर्शनात् । ह-

विःशब्दश्च 'हूयते इति हविः' इति व्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते। तस्मा-त्प्रत्यङ्गं भिन्नं हविरिति।

एतदभिप्रेत्याह पशाविति। 'पशौ' अग्नीषोमीये-'अङ्गम् अङ्गम्' प्र-त्यङ्गम्—'पृथक्' भिन्नं-'हविः' होमद्रव्यं—'स्यात्'। न च कृत्स्नस्य पशो-रेकहविष्ट्वमित्याशयः ॥ १ ॥

(२) १०।७।३-१ तस्यावदेयं हृदयादि नान्यत्।

(१) हविष्ट्वचिन्तैव वर्तते।

(२) पशोः प्रत्यङ्गं हविर्भिन्नमिति स्थितम्।

(३) तत्र संशयः—किं येन केनचिदङ्गेन हविषा यागो निर्वर्तनीयः-उत सर्वैरङ्गैरवदातव्यम्-उत यान्युक्तानि एकादश हृदयादीन्यङ्गानि तैरेव नान्यैरिति।

(४) पूर्वपक्षः—अनिर्दिष्टविशेषेण येन केनचिदङ्गेन यथेच्छं यागः कार्य इति। अथवा सर्वैरङ्गैरवदातव्यम् कृत्स्नस्य पशोर्ह-विष्ट्वात् कस्याप्यङ्गस्य परित्यागे मानाभावात् इति।

(५) सिद्धान्तः—विशेषेणोक्तैर्हृदयादिभिरेवैकादशभिर्यागः कर्तव्यः। अन्येषामङ्गानां परिसङ्ख्यातत्वात्। अंसाद्यङ्गानां प्रतिषेधोऽपि श्रूयते 'नांसयोरवद्यति न शिरसः' इति।

एतदभिप्रेत्याह तस्येति। 'तस्य' पशोः—'हृदयादि' एव अङ्गं-'हृदय-स्याग्रेऽवद्यति-अथ ग्रीवायाः' इत्यादिनोक्तमेव—'अवदेयं' हविरर्थमिति शेषः—'न' 'अन्यत्' अङ्गम्, अंसादि। ततश्च अंसादीनां परिसङ्ख्येति तात्पर्यम् ॥ २ ॥

(३) १०।७।१०-११ त्र्यङ्गैर्यजेतेति न यागशेषैः [युक्तैरिति पाठान्तरम्]

(१) हविर्विचारो वर्तते।

(२) अग्नीषोमीये पशौ श्रूयते—'त्र्यङ्गैः स्विष्टकृतं यजति' इति।

(३) तत्र संशयः—किं यागशेषस्त्रिभिरङ्गैः स्विष्टकृद् यष्टव्य उत अयागशेषैः इति।

(४) पूर्वपक्षः—प्रकृतौ ज्योतिष्टोमे यागशेषैरेव स्विष्टकृद्धोमो भवति। तस्मादिहापि विकृतौ तथैव स्यात्। ततश्च यागार्थानां हृदया-दीनामङ्गानां यैः कैश्चित् त्रिभिरङ्गैर्यागशेषभूतैः स्विष्टकृद् होतव्य इति।

(५) सिद्धान्तः—'दोष्णः पूर्वार्धादग्रे समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः' इत्यत्र हृदयाद्येकादशभ्योऽन्यान्येवाङ्गानि त्रीणि स्विष्ट-कृते समाम्नायन्ते। न चैतेषां त्रयाणामुपयोगः कुत्रापि यागे पूर्वं कृतो येनैतानि यागशेषाणि भवेयुः। तस्मादयागशेषैरेवाङ्गैर्होतव्यः स्विष्टकृदिति।

एतदभिप्रेत्याह त्र्यङ्गैरिति । 'त्र्यङ्गैः यजेत' 'इति' वाक्येन विहितो यः स्विष्टकृद् होमः स—'यागशेषैः' पूर्वयागस्य शेषभूतैः हृदयादिभिः—'न' कर्तव्यः—अपि तु अयागशेषैरन्यैरेव त्रिभिरङ्गैर्गुदादिभिः कर्तव्य इत्याशयः ॥ ३ ॥

## (४) १०।७।१२–१६ अध्यूध्निका होतृभजेर्विकारः ।

( १ ) भक्षविचार इदानीम्प्रवर्तते ।

( २ ) अस्ति ज्योतिष्टोमस्य विकृतिः पशुरग्नीषोमीयः । तत्रेदमाम्नायते—'अध्यूध्नीं होत्रे हरन्ति' इति । ['अध्यूध्नी' हृदयादिभ्योऽन्यदङ्गम् ] ।

( ३ ) तत्र संशयः—इयमध्यूध्नी किं प्राकृतस्य होतृभक्षस्य विकार उत अविकार एव होतुर्नियम्यत इति ।

( ४ ) पूर्वपक्षः–'इयमध्यूध्नी होतुरेव नान्यस्य' इति नियम्यते । हृदयादीन् यागशेषान् भक्षणार्थं पात्रे निक्षिप्य अयागशेषानपि तत्र प्रक्षिपेत् । अस्मिंश्च भक्षणे प्रत्येकमृत्विजां विभज्यमाने सेयमध्यूध्नी होतुः कदाचित् स्यात् कदाचिदन्यस्य—इति पक्षे प्राप्तत्वादत्र नियम्यते इति ।

( ५ ) सिद्धान्तः—भक्षैकत्रीकरणविधानं त्वेवं श्रूयते—'अथ यत् परिशिष्यते तत्तत् समवत्तधान्याम् आनयति–हृदयं जिह्वा वक्षः—वनिष्टुम्' । न चात्राध्यूध्नी पठ्यते । एवं चाप्राप्तत्वात् उदाहृतवाक्येनैव विधीयमानाऽध्यूध्नी होतुरिडाभागमन्यं बाधते । तत्रेत्थं वचनव्यक्तिः—'यद् होत्रे हरन्ति तदध्यूध्नीम्' इति । तस्मात् प्राकृतस्य होतृभक्षस्य विकारिकाऽध्यूध्नी इति ।

एतदभिप्रेत्याह अधीति । 'अध्यूध्निका' अध्यूध्नी—'होतृभजेः' होतृभागस्य 'विकारः' इति सम्बन्धः ॥ ४ ॥

## (५) १०।७।१७ वनिष्टुरग्नीदशनं विकुर्यात् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अग्नीषोमीयपशावेव श्रूयते—'वनिष्टुमग्नीधे' इति ।

( ३ ) तत्र संशयः—किमग्नीद्भक्षस्य प्राकृतस्य विकार उत अविकार एवाग्नीधो नियम्यत इति ।

( ४ ) पूर्वपक्षः—हृदयाद्यङ्गे वनिष्टोरपि पाठात् अध्यूध्नीवदत्र नियमे बाधो नास्ति । तस्माद् वनिष्टुरग्नीध एव भवतीति नियम इति ।

( ५ ) सिद्धान्तः—यस्मिन् वाक्ये हृदयादिषु वनिष्टुरपि पठितः तद् हृदयादीनां पात्रप्रक्षेपमात्रं विधत्ते न तु भक्षत्वम् । तस्मात्तेन वनिष्टोर्भक्षत्वं न विहितम् । एवं च अन्यतोऽप्राप्तत्वात् उदाहृतवाक्येनैव वनिष्टोर्भक्षत्वविधानात् वनिष्टुव्यतिरिक्तोऽग्नीधो भागो बाध्यते । तस्मात् पूर्ववत् प्राकृतस्य अग्नीद्भागस्य विकारोऽयमिति ।

एतदभिप्रेत्याह वनिष्ठुरिति । 'वनिष्ठुः' पशोरङ्गविशेषः—'अग्नीद्-ग्रनम्' अग्नीधः भक्षभागं—'विकुर्यात्' तत्साधनं गृह्णीयात्—योऽग्नीधे भागः स वनिष्ठुरेवेति भावः ॥ ५ ॥

## (६) १०।७।१८–१९ अस्त्येव मैत्रावरुणस्य भक्षः ।

( १ ) भक्षचिन्ता वर्तते ।

( २ ) अस्त्यग्नीषोमीयः पशुः । अस्ति च मैत्रावरुणनामा ऋत्विक् ।

( ३ ) तत्र संशयः–चोदकप्राप्तो मैत्रावरुणस्य शेषभक्षो भवति न वेति ।

( ४ ) पूर्वपक्षः—प्रकृतौ मैत्रावरुणस्याभावात् चोदकेन प्राप्तिरत्र न सम्भवति । तस्मान्नास्ति मैत्रावरुणस्य भक्ष इति ।

( ५ ) सिद्धान्तः—'मैत्रावरुणः प्रेष्यति चानुचाह' इति प्रैषानुवचने अस्य विधीयेते । ततश्च प्रैषकार्येणास्याध्वर्यावेवान्तर्भावः,अनुवचनकार्येण च होतरि । तस्मादस्ति भक्ष इति ।

एतदभिप्रेत्याह अस्तीति । 'मैत्रावरुणस्य' मैत्रावरुणनाम्न ऋत्विजः—'भक्षः' शेषभक्षभागः—'अस्त्येव' इति सम्बन्धः ॥ ६ ॥

## (७) १०।७।२०–२१ एकस्तु मैत्रावरुणस्य भागः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्ति मैत्रावरुणस्य भक्ष इति स्थितम् ।

( ३ ) तत्र संशयः—तस्य द्वौ भागौ उतैक एवेति ।

( ४ ) पूर्वपक्षः—कार्यनिमित्तक एव भक्षभागः । मैत्रावरुणश्च प्रैषरूपमध्वर्युकार्यं करोति अनुवचनरूपं च होतृकार्यम् । तस्मादस्य कार्यद्वयनिमित्तकं भागद्वयमिति ।

( ५ ) सिद्धान्तः—यद्यपि द्वे कार्ये तथापि पुरुषस्यैकत्वाद्भक्षभागस्याप्येकत्वम् । भक्षस्य कार्यनिमित्तकत्वे प्रकृतावपि कार्यगौरवलाघवानुसारि भक्षेषु तारतम्यं प्रसज्येत इति ।

एतदभिप्रेत्याह एक इति । 'मैत्रावरुणस्य' 'भागः' 'एकः' 'तु'–यद्यप्ययं कार्यद्वयं करोति तथापि भागोऽस्यैक एवेति तुना गम्यते ॥ ७ ॥

## (८) १०।७।२२–२३ प्रस्थातृभक्षं न पशौ वदन्ति ।

( १ ) भक्षविचारो वर्तते ।

( २ ) अस्ति पशावग्नीषोमीये प्रतिप्रस्थाता नाम ऋत्विग् ।

( ३ ) तं प्रति संशयः—अस्य भक्षो भवति न वेति ।

( ४ ) पूर्वपक्षः—अध्वर्युकार्यं वपापाकमयं करोति । तस्मादस्त्यस्य भक्ष इति ।

(५) सिद्धान्तः—वपाया शेषस्याभावात् न सम्भवति भक्षः इति। एतदभिप्रेत्याह प्रस्थात्रिति। 'पशौ' अग्नीषोमीये—'प्रस्थातुः' प्रतिप्रस्थातृनामकस्य ऋत्विजः—'भक्षं' शेषभक्षभागं—'न' 'वदन्ति'—याज्ञिका इति शेषः॥ ८॥

(९) १०।७।२५–३३ अवेदपूर्वं गृहमेधकर्म।

(१) भक्षविचारः पर्यवसितः। इदानीं कर्मस्वरूपविचारे गृहमेधीयस्वरूपविचारो बाधाबाधविषयकः प्रवर्तते।

(२) चातुर्मास्ये गृहमेधीय आम्नातः—'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनं' इति। तत्र श्रूयते-'आज्यभागौ यजति' इति।

(३) तत्र संशयः—किमिदं गृहमेधीयं चातुर्मास्यस्य विकृतिरत्र च वचने प्राकृतयोरेवाज्यभागयोरनुवादः (इत्येवंरूपाः सप्त पक्षाः)—उत नेदं विकृतिरपूर्वमेवेदं कर्मात्र विधीयते इति।

(४) पूर्वपक्षः—विकृतिरेवायम्। तस्मात् चोदकप्राप्तयोः प्राकृतयोरेवाज्यभागयोरत्र पुनः श्रवणादनुवाद एवायमिति।

(५) सिद्धान्तः—उदाहृतवाक्ये प्रत्यक्ष एवाज्यभागविधिरुपलभ्यते। तथा सति चोदकस्य चोदकेन प्राप्तेर्वा कल्पना निरर्थिका। तस्मादपूर्व एवायं गृहमेधीयः। तस्येतिकर्तव्यतापि प्रत्यक्षवचनेनैव पूर्यते। एवं च गृहमेधीयश्चोदकप्राप्तान्यङ्गान्यपि नापेक्षते। तस्मादविकृतिरूपं साङ्गकलापं कर्म गृहमेधीयमत्र विधीयते इति।

एतदभिप्रेत्याह अवोदति। 'गृहमेधकर्म' गृहमेधीयो यागः—'अपूर्वं' अविकृतिरूपं—'भवेत्'—न तु चातुर्मास्यस्य विकृतिरूपमित्याशयः॥९॥

(१०) १०।७।३४ तद् यावदुक्ताङ्गयुतं प्रकुर्यात्।

(१) पूर्वाधिकरणशेषः।

(२) अस्ति गृहमेधीयः। इदं च स्थितं यदसावाज्यभागाभ्यामेव निराकाङ्क्षो नान्यान्यङ्गानि गृह्णातीति।

(३) तत्र पुनः संशयः—किमत्राज्यभागाभ्यामितरत् किमप्यङ्गं न ग्रहीतव्यमुत किमपि ग्रहीतव्यमिति।

(४) पूर्वपक्षः—गृहमेधीयस्याज्यभागाभ्यामेव निराकाङ्क्षत्वात्ततोऽन्यत् स्विष्टकृदादिकं नैव कार्यमिति।

(५) सिद्धान्तः—यथा आज्यभागौ गृहमेधीये प्रत्यक्षविहितौ तथैवान्यदपि स्विष्टकृदादिकं प्रत्यक्षविहितम्—'अग्नये स्विष्टकृते समवद्यति' 'इडामुपह्वयते' इत्यादि। तस्माद् यद्यपि प्राकृतानि सर्वाण्यङ्गानि न

कार्याणि तथापि यावन्ति प्रत्यक्षविहितानि तावन्ति आज्यभागव्यतिरिक्तान्यपि कार्याण्येवेति ।

एतदभिप्रेत्याह तदिति । 'तत्' गृहमेधीयं कर्म—यावदुक्ताङ्गयुतम्' 'यावन्ति' 'उक्तानि' प्रत्यक्षविहितानि 'अङ्गानि' आज्यभागस्विष्टकृदादीनि, तैः 'युतम्'—'प्रकुर्यात्' अनुतिष्ठेत् इत्यर्थः ॥ १० ॥

(११) १०।७।३५–३७ नास्विष्टकृच्छेषकृतिः सपूर्वे

( १ ) पूर्वाधिकरणशेषः ।

( २ ) गृहमेधीये स्विष्टकृद्यागः कर्तव्य इति स्थितम् 'स्विष्टकृतं यजति' इति प्रत्यक्षवचनबलात् ।

( ३ ) तत्र पुनः संशयः—किमनेन स्विष्टकृद्विधिनाऽन्येषां शेषकार्याणां भक्षादीनां च प्रतिषेधः क्रियते उत नेति । [ यद्यप्यपूर्वत्वाद् गृहमेधीयस्य भक्षास्तत्र न प्राप्नुवन्ति तथाऽपि कृत्वा चिन्तेयमुपन्यस्यते ] ।

( ४ ) पूर्वपक्षः—'इडामुपह्वयते' इतीडोपाह्वानं गृहमेधीये स्विष्टकृद्वत् प्रत्यक्षविहितम् । इडोपाह्वानं च भक्षणार्थमेव भवति । तस्माद् भक्षोऽप्यस्ति इति ।

( ५ ) सिद्धान्तः—स्विष्टकृद्यागो भक्षादिशेषकार्याणि च शेषसंस्कारार्थमेव क्रियन्ते । स्विष्टकृदनुष्ठानेनैव शेषस्य संस्कारे सिद्धे नास्ति प्रयोजनं भक्षादीनां शेषकार्याणामिति न सन्ति शेषकार्याणि गृहमेधीये—इति ।

एतदभिप्रेत्याह नेति । 'सपूर्वे' गृहमेधीयस्यापूर्वत्वाभावेऽपि [यद्यपि गृहमेधीयस्यापूर्वत्वान्न सन्ति भक्षादयस्तत्रेति सिद्धमेव तथाऽपि कृत्वा चिन्तारूपेण तस्यापूर्वत्वं तावत् परित्यज्य सपूर्वत्वं—अर्थात् यागान्तरसापेक्षत्वं—स्वीकृत्यापि कृत्वा चिन्तायां प्रवर्तितायाम् ]–'अस्विष्टकृच्छेषकृतिः'—'अस्विष्टकृत्' स्विष्टकृद्वर्जिता स्विष्टकृतोऽन्या या 'शेषकृतिः' शेषकार्यम् सा–'न' भवतीति शेषः । स्विष्टकृतं वर्जयित्वा अन्यत् किमपि शेषकार्यं भक्षणादिकमत्र न कार्यमित्याशयः ॥ ११ ॥

(१२) १०।७।३८–३९ कर्तव्यमातिथ्यामिडान्तमेव ।

( १ ) गृहमेधीयचिन्ता पर्यवसिता । ज्योतिष्टोमे बाधचिन्ता प्रवर्तते ।

( २ ) ज्योतिष्टोमे श्रूयते–'इडान्ता आतिथ्या सन्तिष्ठते नानुयाजायजति' इति ।

( ३ ) तत्र संशयः—आतिथ्या किं इडान्ता वा कृत्स्नसंस्था वेति विकल्पः—उत इडान्तैवेति नियम इति ।

(४) पूर्वपक्षः—प्रकृतौ चास्ति कपालोद्वासनान्तत्वम्। चोदकेन च आतिथ्याया अपि तथा। इत्येकः कल्पः। इडान्तत्वं च प्रत्यक्षश्रुतम्। तस्मात्सोऽपरः कल्पः। द्वयोश्च प्रामाणिकत्वाद् विकल्प इति।

(५) सिद्धान्तः—इडान्तत्वं प्रत्यक्षविहितम्। तस्मान्न तुल्यबलमुभयोः प्रामाण्यम्। प्रामाणिकोऽपि विकल्पोऽष्टदोषदुष्टः। तस्मात् इडान्तैवातिथ्येति नियम एवेति।

एतदभिप्रेत्याह—कर्तव्यमिति। 'आतिथ्यम्' आतिथ्येष्टिरूपं कर्म—'इडान्तम्' 'एव' 'कर्तव्यम्'—इति नियमोऽभ्युपगन्तव्य इत्याशयः ॥१२॥

## (१३) १०।७।४०–४२ पूर्वेडयैवोपरमो यजेः स्यात्

(१) पूर्वाधिकरणशेषः।

(२) इडान्तैवातिथ्येष्टिरिति स्थितम्। किन्तु द्वे इडे प्रकृतौ भवतः।

(३) तत्र संशयः—किम्परयेडया आतिथ्या समाप्यते—उत पूर्वयेति।

(४) पूर्वपक्षः—विशेषनियामकाभावाद् विकल्पः। अथवा परयैवेडया समाप्तिः। यदि पूर्वया समाप्तिरभिप्रेता स्यात् तर्हि तदवशिष्टकर्मणां निषेधे सिद्धे 'नानुयाजान्' इति प्रतिपदोक्तनिषेधो व्यर्थः स्यात् इति।

(५) सिद्धान्तः—सञ्जातविरोधिनी तु पूर्वैवेडा। अनुयाजनिषेधश्च नित्यानुवादत्वेनाप्युपपद्यते। तस्मात् पूर्वयैवेडया समाप्तिरातिथ्याया इति।

एतदभिप्रेत्याह—पूर्वेति। 'पूर्वेडया' पूर्वया इडया—'एव' 'यजेः' इष्टेः आतिथ्यायाः—'उपरमः' अन्तः—'स्यात्'। न विकल्पो नापि इडान्तत्वमिति एवशब्दार्थः ॥ १३ ॥

## (१४) १०।७।४३–४६ न चोदकेनाङ्गविधोपसत्सु।

(१) ज्योतिष्टोमे बाधविचारो वर्तते।

(२) ज्योतिष्टोमे आम्नायते—'षडुपसद उपसाद्यन्ते' इति। ता उपसदश्च प्रकृत्य श्रूयते—'अप्रयाजास्ता अननुयाजा' इति।

(३) तत्र संशयः—अनेन द्वितीयेन वाक्येन किमपूर्वा एवोपसदो विधीयन्ते उत यावदत्र निषिद्धं तावत् परित्यज्य अन्यत् सर्वं कर्तव्यम् इत्येतावान् विशेषः प्राकृतास्वेवोपसत्सु विधीयते इति।

(४) पूर्वपक्षः—द्वितीयवाक्योक्ता उपसदः पूर्वासां विकृतयः। तस्मात् प्रत्यक्षनिषेधात् प्रयाजानुयाजान् वर्जयित्वाऽवशिष्टमङ्गजातं सर्वं प्राकृतमेव चोदकप्राप्तं कर्तव्यमिति।

(५) सिद्धान्तः—प्रकृतौ विहित एवाघारोऽत्र पुनर्विधीयते। तेन त्रान्यस्य प्राकृतस्याङ्गजातं परिसङ्ख्यातं भवति। अन्यथा पुनर्विधानं व्यर्थं स्यात्। तस्मात् गृहमेधीयवत् अपूर्वमेव कर्मेमा उपसदः—प्रयाजादिनिषेधस्तु नित्यानुवाद इति।

एतदभिप्रेत्याह—नेति। 'उपसत्सु' प्रयाजा इति वाक्येन विहितासु—'चोदकेन' प्रकृतिवद्विकृतिरिति प्राकृताङ्गानां विकृतौ प्रापकस्य चोदकवाक्यस्य बलेन—'अङ्गविधा' प्राकृतानामङ्गानां प्राप्तिः—'न' भवति—अपूर्वाणि कर्माणि एता उपसद इत्याशयः ॥ १४ ॥

## (१५) १०।७।४७-५० भवेदपूर्वोऽवभृथाख्ययागः

(१) ज्योतिष्टोमबाधविचारो वर्तते। पूर्वविचारसदृशः।

(२) अस्ति ज्योतिष्टोमेऽवभृथः। तत्र आम्नायते—'अपबर्हिषः प्रयाजान् यजति—अपबर्हिषौ अनुयाजौ यजति' इति।

(३) तत्र संशयः—किं बर्हिमात्रं वर्जयित्वाऽन्यत् सर्वं प्राकृतं कर्तव्यम्—उतापूर्वमिदं कर्मेति।

(४) सिद्धान्तः—'अप्सुमन्तावाज्यभागौ' इति विशेषेणाङ्गान्तरविधानात् तथोक्तमेव कर्म न प्रकृत्यनुसारि। तस्माद् गृहमेधीयवदपूर्वमेवेदं कर्मेति।

एतदभिप्रेत्याह भवेदिति। 'अवभृथाख्ययागः' अवभृथनामको यागः-'अपूर्वं' एव-'स्यात्'-स्वतन्त्र एवानुष्ठेयो न तु प्रकृतिवदित्यर्थः ॥ १५ ॥

## (१६) १०।७।५१-५७ स्यात् वाजपेये खादिरो हि यूपः।

(१) प्रासङ्गिको बाधविचारः।

(२) वाजपेये श्रूयते—'खादिरो यूपो भवति' इति।

(३) तत्र संशयः—किं खादिर एवेति नियमः—उत खादिरो वा पालाशो वा रौहितको वेति विकल्पः इति।

(४) पूर्वपक्षः—खादिरादीनां प्रकृतौ विकल्पितत्वादिहापि तथैवेति।

(५) सिद्धान्तः—यदि चोदकप्राप्तमेवेष्टमभविष्यत् तर्हि खादिरस्य पुनर्विधानं व्यर्थं स्यात्। तस्मात् खादिर एव कर्तव्य इति नियम एवेति।

एतदभिप्रेत्याह—स्यादिति। 'वाजपेये' यागे—'खदिरः' खादिरकाष्ठनिर्मित एव 'यूपः' 'स्यात्' कर्तव्यः—न तु पलाशादिनिर्मित इत्याशयः ॥ १६ ॥

## (१७) १०।७।५८–६० द्रव्येषु काम्येषु न चोदकोक्तम्

(१) प्रासङ्गिको बाधविचारः ।

(२) सन्ति काम्या इष्टयो विकृतिरूपाः ।

(३) तत्र संशयः—एतासु विकृतिषु किं प्राकृतं द्रव्यदेवतं निवर्तते उत नेति ।

(४) पूर्वपक्षः—न निवर्तते—चोदकेन प्राप्तत्वात् । तस्माद् यत्र विकृतौ पृथक् द्रव्यं देवता वा विधीयते तत्र विकल्पः समुच्चयो वाऽभ्युपेय इति ।

(५) सिद्धान्तः—उत्पन्नस्य यागस्येतिकर्तव्यताकाङ्क्षा उदेति । तदैव चोदकस्यावसरः । एवं च यत्र उत्पत्तिवाक्ये एव द्रव्यं देवता वा विहिता तत्र तदाकाङ्क्षाया अनुदयात् न भवति चोदकावसरः । अतो विकृतिषु प्राकृतयोर्द्रव्यदेवतयोर्न प्राप्तिरिति दूरापेतौ विकल्पसमुच्चयाविति ।

एतदभिप्रेत्याह द्रव्येष्विति । 'काम्येषु' यागेषु—'द्रव्येषु' साक्षाद्विहितेषु सत्सु—'चोदकोक्तम्' चोदकेन प्राप्तं प्राकृतं द्रव्यं—'न' प्राप्नोतीति शेषः । एवं देवताऽपीति ॥ १७ ॥

## (१८) १०।७।६१–६३ तथा पलाशः खदिरेण बाध्यः ।

(१) बाधचिन्तैव वर्तते ।

(२) वाजपेये श्रूयते—'खादिरो यूपो भवति' इति । प्रकृतौ च पालाशोऽपि श्रूयते । स चात्र चोदकप्राप्तः ।

(३) तत्र संशयः—किं प्राकृतं यूपद्रव्यं पलाशरूपमत्र बाध्यते—उत नेति ।

(४) पूर्वपक्षः—चोदकेन पलाशः प्राप्तः उपदेशेन च खदिरः । तस्मात्समुच्चयो विकल्पो वाऽभ्युपेय इति ।

(५) सिद्धान्तः—खादिरपालाशौ परस्परनिरपेक्षावेव यूपकार्यक्षमौ । तत्र साक्षादुपदिष्टेन खादिरेण अतिदिष्टस्य पलाशस्य बाध एवेति ।

एतदभिप्रेत्याह तथेति । 'तथा' यथा काम्येषु प्राकृतस्यातिदिष्टस्य बाधस्तथैव—'पलाशः' प्राकृतः—'खदिरेण' विकृतावुपदिष्टेन—'बाध्यः' निवर्त्यो भवतीत्यर्थः ॥ १८ ॥

## (१९) १०।७।६४–७१ व्रीहिर्विकारे यवबाधकः स्यात्

(१) बाधविचारे पूर्वाधिकरणापवादः ।

(२) 'सौमारौद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' इति श्रूयते । चोदकप्राप्तश्च प्राकृतो व्रीहियवयोर्विकल्पः ।

( ३ ) तत्र संशयः—किं व्रीहिभिर्यवैर्वा ( विकल्पेन, प्रकृतिवद् ) यष्टव्यम्-उत व्रीहिभिरेवेति नियम इति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तस्य परित्यागे मानाभावात्—चोदके-नातिदेशेन व्रीहयो यवाश्च प्राप्ताः—उपदेशेनापि व्रीहयः । एवं नास्ति विरोधः—येन बाधः स्यात् इति ।

( ५ ) सिद्धान्तः—शुक्लव्रीहिद्रव्यको यागोऽत्र वाक्ये विधीयते । तथासति अतिदिष्टव्रीहियवयोर्यत् कार्यं तदेवोपदिश्यमानव्रीहिकार्यम् । ततश्च चोदकस्यावसरो न भवति पदिक्रमितुम् । तस्माद् यवस्य बाध एवेति ।

एतदभिप्रेत्याह व्रीहिरिति । 'विकारे' विकृतियागे—'व्रीहिः' स्व-तन्त्र उपदिष्टः—'यवबाधकः' यवस्य पाक्षिकतयातिदिष्टस्य बाधकः एव-'स्यात्'-न चात्र विकल्प आश्रयणीय इत्याशयः ॥ १९ ॥

(२०) १०।७।७२-७३ पञ्चावदानं हृदयादिकेऽपि ।

( १ ) बाधविचारो वर्तते ।

( २ ) ज्योतिष्टोमीयाग्नीषोमीयपशावाम्नायते-'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति । [ यजमानगोत्रभेदेन अवदान-सङ्ख्यानियमः ] ।

( ३ ) तत्र संशयः-इयं वपायां श्रूयमाणा पञ्चावदानता किं वपाया-मेव चतुरवदानं बाधयति-उतेतरेष्वपि पश्वङ्गेषु हृदयादिषु इति ।

( ४ ) पूर्वपक्षः—वपामात्रमुद्दिश्य पञ्चावदानं विधीयते । तस्मा-त्तत्रैव तस्य निवेशो न हृदयादिष्वङ्गेष्विति ।

( ५ ) सिद्धान्तः—अवदानं चोदकप्राप्तं नात्र विधेयम्—अपि तु चोदकप्राप्तमवदानमनूद्य तत्र पञ्चत्वसङ्ख्या विधीयते । तस्माद् यत्र यत्राङ्गेऽवदानं प्राप्तं तत्र तत्र सर्वत्र तस्याः सङ्ख्याया निवेशः । तस्माद् हृदयाद्यङ्गेष्वपि पञ्चावदानमिति ।

एतदभिप्रेत्याह पञ्चेति । 'हृदयादिके' 'अपि' पश्वङ्गे-'पञ्चावदानम्' न केवलं वपायामित्याशयः ॥ २० ॥

महर्षिणा लोकहिताय सम्यक्
समीरिता विंशतिनीतयोऽत्र ॥

स्पष्टम् ।

इति दशमस्य सप्तमः ।

---

# अथ दशमस्याष्टमः पादः ।

[ बाधोपयुक्तो नञर्थविचारः ]

## (१) १०।८।१-४ आर्षेये न विकल्पः स्यात्

( १ ) निषेधार्थचिन्ता प्रवर्तते । तत्र पर्युदासोदाहरणम् ।

( २ ) महापितृयज्ञे ऋत्विग्वरणं चोदकप्राप्तम् । तत्र पुनः प्रतिषेधः श्रूयते—'न होतारं वृणीते नार्षेयम्' इति ।

( ३ ) तत्र संशयः—किमत्र विकल्प—उत पर्युदास इति ।

( ४ ) पूर्वपक्षः—वरणं चोदकप्राप्तम्—अत्र प्रतिषिद्धम् । उभयं च प्रामाणिकम् । तस्मात् तुल्यबलत्वाद् विकल्प इति ।

( ५ ) सिद्धान्तः—'प्रकृतिवद् विकृतिः कर्तव्या' इति चोदकवाक्येन वरणं प्राप्तम्—तदेव वरणं प्रतिषेधवाक्येन पर्युदस्तम् । तस्मादुभयवाक्यपरामर्शेनेत्थमर्थः पर्यवस्यति—'महापितृयज्ञे वरणं वर्जयित्वा सर्वं प्रकृतिवत् कर्तव्यम्' इति । तस्मात् पर्युदास एवात्र नञ्शब्दार्थ इति ।

एतदभिप्रेत्याह आर्षेये इति । 'आर्षेये' आर्षेयवरणे चोदकेन प्राप्ते वाक्यान्तरेण च प्रतिषिद्धे सति—'विकल्पः' 'न' 'स्यात्'—न्याय्यः—अपि तु पर्युदास एवेत्याशयः ॥ १ ॥

## (२) १०।८।५ न सोम इति सुश्रुतिः ।

( १ ) नञोऽर्थवादार्थत्वोदाहरणम् ।

( २ ) दर्शपूर्णमासयोराज्यभागौ प्रकृत्याम्नातम्—'न तौ पशौ करोति न सोमे' इति ।

( ३ ) तत्र संशयः—किं 'न सोमे' इत्यत्र प्रतिषेधः उत पर्युदासः उतार्थवादः इति ।

( ४ ) पूर्वपक्षः—अत्र नकारो न समस्तः । तस्मात् क्रियापदेनान्वित आज्यभागानुष्ठानं प्रतिषेधति । तस्मात् प्रतिषेधः ॥ अथवा सामव्यतिरिक्ते कर्मण्याज्यभागानुष्ठानम्' इत्येवमेवार्थः । तथाच पर्युदास इति ।

( ५ ) सिद्धान्तः—पूर्वाधिकरणवदत्र सोमे आज्यभागप्रसक्तिरेव नास्ति—उपदेशेनातिदेशेन वा । तस्मान्न पर्युदाससम्भवः । तत्वतस्तु 'न तौ पशौ करोति' इत्यस्य निषेधस्य शेषभूतमेव वाक्यम्—'न सोमे' इति । तथा चात्र दृष्टान्तवर्णनरूपोऽर्थवाद एवेति ।

एतदभिप्रेत्याह नेति । 'न सोम इति' वाक्यं—'सुश्रुतिः' अर्थवादः—दृष्टान्तवर्णनरूपः—'यथा सोमे आज्यभागौ न क्रियेते तथैव पशावपि न कर्तव्यौ'इत्येवमेवार्थो वाक्ययोरिति भावः ॥ २ ॥

## (३) १०।८।६ शिष्टे नञ् प्रतिषेधार्थः

( १ ) नञ्शब्दस्य पर्युदासार्थः अर्थवादार्थश्च प्रदर्शितः । प्रतिषेधार्थं इदानीं प्रदर्श्यते ।

( २ ) ज्योतिष्टोमस्य संस्थाविशेषे श्रूयते—'अतिरात्रे षोडशिनं गृह्णाति—नातिरात्रे षोडशिनं गृह्णाति' इति ।

( ३ ) तत्र सन्देहः—अत्र नञर्थः कः । किम्पर्युदास उतार्थवाद उत प्रतिषेध इति ।

( ४ ) पूर्वपक्षः— प्रथमाधिकरणन्यायेन पर्युदासः । अथवा द्वितीयाधिकरणन्यायेनार्थवाद इति ।

( ५ ) सिद्धान्तः—पर्युदासे सति 'अतिरात्रं वर्जयित्वा अतिरात्रे षोडशिनं गृह्णाति' इत्यर्थः स्यात् । स तु न समञ्जसः । न चात्र कश्चिदर्थो यस्यार्थवादः स्यात् । तस्मात् प्रतिषेध एवार्थं इति ।

एतदभिप्रेत्याह शिष्टे इति । 'शिष्टे' प्रमाणान्तरेण प्रापिते सति कस्मिंश्चिदर्थे यदा तत्सम्बन्धेन 'नञ्' प्रयुज्यते [यथा अतिरात्रे षोडशिग्रहणे पूर्ववाक्येन प्रापिते सति नातिरात्रे षोडशिनं गृह्णातीत्यत्र द्वितीयवाक्ये ग्रहणसम्बन्धेन नकारः प्रयुज्यते] तदाऽयं 'नञ्' 'न' शब्दः—'प्रतिषेधार्थः' प्रतिषेधमेव वक्ति । एवं च सति अनुष्ठाने भिन्नप्रयोगविषयत्वेन विकल्प एवाभ्युपगन्तव्योऽनन्यगतिकत्वादित्याशयः ॥ ३ ॥

## (४) १०।८।६ ( पूर्वाधिकरणत्वेनात्र प्रदर्शितम् )
## पर्युदासेऽन्यता भवेत् ।

( १ ) पूर्वाधिकरणविचारशेषः ।

( २ ) षोडशिग्रहणविषये एव ।

( ३ ) संशयः—पर्युदासार्थोऽत्र सम्भवति न वेति ।

( ४ ) पूर्वपक्षः—यथा आर्षेयवरणे विधिनिषेधयोः सत्वे पर्युदासस्तथैवात्रापि सम्भवति इति ।

( ५ ) सिद्धान्तः—पर्युदासे इत्थमेव स्याद् वचनव्यक्तिः—'अतिरात्रं वर्जयित्वाऽतिरात्रे षोडशिनं गृह्णीयात्' इति । एवं च सति परस्परव्याघात एव स्यात् । पर्युदासे विषयान्यत्वमावश्यकमिति ।

एतदभिप्रेत्याह पर्युदास इति । 'पर्युदासे'—'अन्यता' विषययोः परस्परभेदः—'भवेत्' आवश्यकी इति शेषः । विषयान्यत्वं विना विषयैकत्वे परस्परव्याघात एव भवति—यथा प्रथमेऽधिकरणे—इत्यर्थः ॥ ४ ॥

(५) १०।८।७ स्तुतिर्जर्तिलवाक्यन्तु

( १ ) नञोऽर्थवादार्थतोदाहरणान्तरम् ।

( २ ) अग्निहोत्रे श्रूयते—'जर्तिलयवाग्वा जुहुयात्-अथो खल्वाहुः अनाहुतिर्वै जर्तिलाः—पयसाऽग्निहोत्रं जुहुयात्' इति । [ 'जर्तिला' आरण्यतिलाः ] ।

( ३ ) तत्र संशयः—अत्र किं 'जर्तिलयवाग्वा जुहुयात्' इति विधिः 'अनाहुतिर्जर्तिला'' इति निषेधः—अथवा उभावप्येतावर्थवादौ 'पयसाऽग्निहोत्रं जुहुयात्' इति विधिरिति ।

( ४ ) पूर्वपक्षः—जर्तिलैर्होमः जर्तिला अनाहुतिरिति विधिनिषेधयोर्विकल्प एव पूर्वाधिकरणन्यायेनेति ।

( ५ ) सिद्धान्तः—पयसा होम इत्येवात्र विधिः। तेनवैकवाक्यतामापन्नमितरद् वाक्यद्वयमर्थवादत्वेनान्वेति—जर्तिलादीनां नास्ति होमयोग्यता पयसस्त्वस्तीति पयसः प्राशस्त्यज्ञापनाय । तस्मादर्थवाद एवात्र नञर्थ इति ।

एतदभिप्रेत्याह स्तुतिरिति । 'जर्तिलवाक्यं' अनाहुतिर्वै जर्तिला इति वाक्यम्—'स्तुतिः' पयसो होमद्रव्यस्य प्राशस्त्यज्ञापकमित्यर्थः ॥ ५ ॥

(६) १०।८।८ त्र्यम्बकावघृतिः स्तुतिः ।

( १ ) नञोऽर्थवादवाचकत्वोदाहरणान्तरम् ।

( २ ) चातुर्मास्येषु त्र्यम्बकमन्त्रसंयोगेन त्र्यम्बकनामका एककपालाः पुरोडाशा बहवो विहिताः । तान् प्रकृत्य श्रूयते—'अभिघार्या अनभिघार्या इति मीमांसन्ते ब्रह्मवादिन' इति ।

( ३ ) अत्र संशयः—किमभिघारयितव्यास्त्र्यम्बका उत नाभिघारयितव्या—उत विकल्प उत नात्र अभिघारयितव्यत्वविधिनिषेधौ वाक्यद्वयमर्थवाद एवेति ।

( ४ ) पूर्वपक्षः—तृतीयाधिकरणन्यायेन विकल्पः विधिनिषेधयोरुभयोः श्रौतत्वेन तुल्यबलत्वादिति ।

( ५ ) सिद्धान्तः—विधित्सितार्थस्तुतिरेवात्र गम्यते—'इत्थम्महान् विधित्सितोऽर्थो यन्मीमांसया निर्णयो भवतीति—एकवाक्यत्वेन स्तुतिरेवेति ।

एतदभि ेत्याह त्र्यम्बकेति । 'त्र्यम्बकावघृतिः' त्र्यम्बकावघारणानवघारणोक्तिः—'स्तुतिः'—विधित्सितस्यार्थस्येति शेषः ॥ ६ ॥

(७) १०।८।९-११ साम्नां विकल्प आधाने

( १ ) निषेधस्य विकल्पार्थतोदाहरणम् ।

( २ ) अस्त्याधानम् । तत्रेदमामनन्ति—'य एवंविद्वान् वारवन्तीयं गायति' इत्यादि । तत्रेदमन्याम्नायते—'उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा साम गायति' इति [ 'उपवीताः' परित्यक्ता इत्यर्थः ]। अनया निन्दया ब्रह्मणः सामगाननिषेध उन्नीयते ।

( ३ ) तत्र संशयः-अयं निषेधः किमर्थवादार्थं उत प्रतिषेधार्थं इति।

( ४ ) पूर्वपक्षः—अयं निषेध उद्गातुर्वामदेव्यादिगानं स्तौति । तस्मादर्थवाद इति ।

( ५ ) सिद्धान्तः--नायं वामदेव्यादिगानस्तुतिः सम्भवति । वामदेव्यादिगानवाक्यानि पृथक् स्वसन्निधिपठितैरेवार्थवादैर्निराकाङ्क्षाणि। ब्रह्मशब्दोऽत्रोद्गातारं ब्रूते—उद्गातुश्च गानं विहितम् । तस्मादु एकविषययोर्विधिनिषेधयोर्विकल्प आश्रयणीयस्तृतीयाधिकरणन्यायेन । तस्मादत्र निषेधः प्रतिषेधार्थ एवेति ।

एतदभिप्रेत्याह साम्नामिति । 'आधाने' अग्न्याधाने यानि सामानि गेयत्वेन विहितानि तेषां 'साम्नां' गातुर्विषये—'विकल्प' आश्रयणीय इति भावः ॥ ७ ॥

## (८) १०।८।१२-१५ नात्र दानादि दीक्षिते।

( १ ) पर्युदासार्थतोदाहरणम् ।

( २ ) ज्योतिष्टोमे श्रूयते—'दीक्षितो न ददाति, न जुहोति, न पचति' इति ।

( ३ ) तत्र संशयः—किं सर्वेषां दानहोमपाकानामयं प्रतिषेधः-उत अक्रतुसम्बन्धिनाम्-अथवा क्रतुसम्बन्धिनामपि चोदकप्राप्तानां प्रतिषेधः-अथवा पर्युदास इति ।

( ४ ) पूर्वपक्षः---सर्वेषां दानादीनां प्रतिषेधः । अथवा यानि चोदकातिदिष्टानि तेषामेव प्रतिषेधो नोपदिष्टानामिति ।

( ५ ) सिद्धान्तः---पुरुषार्थानामेव दानादीनामत्र निषेधो न क्रत्वर्थानाम् । तस्मात् पुरुषार्थदानाद्यतिरिक्तं दानादि कर्तव्यमिति पर्युदासे एव पर्यवसानं निषेधस्येति ॥

एतदभिप्रेत्याह नेति । 'दीक्षिते' यज्ञार्थं दीक्षितेन पुरुषेण-'अत्र' ऐहिकं लौकिकं पुरुषार्थमिति यावत्-'दानादि' दानं हवनं पचनमिति-'न' अनुष्ठेयम्-अपि तु पुरुषार्थातिरिक्तमेव दानाद्यनुष्ठेयमिति पर्युदासार्थत्वमत्र निषेधस्येत्याशयः ॥ ८ ॥

## (९) १०।८।१६ होमेऽग्निं बाधते वर्त्म

( १ ) प्रासङ्गिकपर्युदासोदाहरणम् ।

( २ ) ज्योतिष्टोमे श्रूयते--'वर्त्मनि जुहोति' इति। सामान्यतस्तु आहवनीये एव होमा भवन्ति । तस्य निषेध उदाहृतवाक्ये प्रतिभाति ।

( ३ ) तत्र संशयः—ज्योतिष्टोमे वर्त्मन्येव होतव्यं नाहवनीये इत्यस्य निषेधस्यार्थः—उत वर्त्माहवनीययोर्विकल्प इति ।

( ४ ) पूर्वपक्षः—सामान्यशास्त्रेण प्राप्त आहवनीयो विशेषशास्त्रप्राप्तेन वर्त्मना सह विकल्प्यते वर्त्महोमे—उभयोः प्रत्यक्षवचनयोः क्रत्वर्थत्वेन समानबलत्वात् इति ।

( ५ ) सिद्धान्तः—सामान्यविशेषशास्त्रयोर्विशेषशास्त्रमेव बलीयः । तस्मात् वर्त्मना आहवनीयस्य बाधः । एवं च वर्त्महोमे न प्राप्तिराहवनीयस्य । तथाच वर्त्महोमं वर्जयित्वा अन्ये होमा आहवनीये कर्तव्या इति पर्युदास एव पर्यवसानमिति ।

एतदभिप्रेत्याह होम इति । 'वर्त्म' होमाधारत्वेन श्रुतम्—'होमे' होमविशेषानुष्ठाने—'अग्निम्' आहवनीयं—'बाधते' । तस्माद् वर्त्महोमं वर्जयित्वाऽन्ये होमा आहवनीये कर्तव्या इति पर्युदासे एव वाक्यस्य विश्रान्तिरित्याशयः ॥ ९ ॥

(१०) १०।८।१७-१९ साप्तदश्यान्नियम्यते ।

( १ ) निषेधार्थविचारो वर्तते ।

( २ ) अनारभ्याम्नायते—'सप्तदश सामिधेनीरनुब्रूयात्' इति । अत्र साप्तदश्यं विहितम् । तच्च प्रकृतौ विशेषविहितेन पाञ्चदश्येन बाधितं सर्वा एव विकृतीः प्राप्तम् । कासुचिद् विकृतिषु वैमृधादिषु तु पुनः श्रूयते साप्तदश्यम् ।

( ३ ) तत्र संशयः—वैमृधादिषु पुनः साप्तदश्यश्रवणस्य कोऽर्थः—किं वैमृधादिषु सामिधेनीसाप्तदश्यमात्रं प्राकृतमनुष्ठेयं नान्यत् किमपि प्राकृतमङ्गजातम्—उत वैमृधादिष्वेव विकृतिषु साप्तदश्यं नान्यासु विकृतिष्विति ।

( ४ ) पूर्वपक्षः—वैमृधादिषु सामिधेनीसाप्तदश्यं वर्जयित्वाऽन्यत् प्राकृतमङ्गजातं नानुष्ठेयमित्येवार्थ इति ।

( ५ ) सिद्धान्तः—साप्तदश्यं चोदकेनैव सर्वासु विकृतिषु प्राप्तं पुनश्च कासुचिद् विकृतिषु विशेषेणाम्नातं सत् एतास्वेव नियम्यते । तस्माद् वैमृधादावेव साप्तदश्यं नान्यासु विकृतिष्विति नियम एव वाक्यार्थ इति ।

एतदभिप्रेत्याह—साप्तदश्यमिति । 'साप्तदश्यम्' यत् अनारभ्य विहितं, प्रकृतौ च विशेषविहितेन पाञ्चदश्येन बाधितं, वैमृधाद्याः काश्चिद् विकृतीः प्रकृत्य च पुनराम्नातं सत्—'नियम्यते'—वैमृधादिषु विकृतिषु इति शेषः ॥ १० ॥

## (११) १०।८।२०-२२ दर्विहोमेऽखिले स्वाहा

( १ ) पूर्वाधिकरणापवादः ।

( २ ) दर्विहोमं प्रकृत्य श्रूयते—'पृथिव्यै स्वाहा—अन्तरिक्षाय स्वाहा-वायवे स्वाहा' इति । अस्ति चानारभ्य वचनं—'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति ।

( ३ ) तत्र संशयः—किं पूर्वस्यायं वाक्यशेषः—'यतः स्वाहाकारेण देवेभ्योऽन्नं दीयते तस्मात् दर्विहोमे पृथिव्यै स्वाहा इति प्रयोगः कर्तव्यः' इत्यर्थः—उत नायं वाक्यशेषः पूर्वस्य—अर्थश्च 'येष्वपि दर्विहोमेषु स्वाहाकारो न विशेषेणाम्नातस्तेष्वपि स्वाहाकारः कर्तव्य' इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन दर्विहोममात्रे स्वाहाकारो न होमान्तरेष्वित्येवार्थ इति ।

( ५ ) सिद्धान्तः—सर्वस्मिन् दर्विहोमे स्वाहाकारेणैवान्नं दीयते—न वषट्कारेण- होमान्तरेषु तु स्वाहाकारवषट्कारयोर्विकल्पः सुस्थित एवेति ।

एतदभिप्रेत्याह दर्वीति । 'अखिले' सर्वस्मिन्—'दर्विहोमे' यत्र स्वाहाकारो विशेषविहितो यत्रापि न विहितः, सर्वत्र—'स्वाहा' स्वाहाकारेणैवान्नं प्रदेयमित्यर्थः ॥ ११ ॥

## (१२) १०।८।२३-२८ विकृतावप्यतिग्रहाः ।

( १ ) प्रासङ्गिकोऽतिदेशभावाभावविचारः ।

( २ ) इदमाम्नायते-'उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्या' इति। [ अतिग्राह्यसंज्ञका ग्रहा यज्ञस्योपष्टम्भकत्वादनुष्ठेया इत्यर्थः ]

( ३ ) तत्र सन्देहः—अतिग्राह्यस्य च विकृतावतिदेशो भवति न वेति ।

( ४ ) पूर्वपक्षः—नातिदेश इति। 'मासि मास्यतिग्राह्या गृह्यन्ते' इति श्रुतम् । यदि चैते चोदकेनातिदिष्टाः स्युस्तर्हि मासि मासि ग्रहणस्योपदेशो न स्यादिति ।

( ५ ) सिद्धान्तः—अस्त्यतिदेशः । यथाऽन्यान्यङ्गान्यतिदिश्यन्ते तथैवैते ग्रहा अपि इति ।

एतदभिप्रेत्याह विकृताविति । 'अतिग्रहाः' अतिग्राह्यनामका ग्रहाः- 'विकृतौ अपि'-अतिदिश्यन्ते इति शेषः ॥ १२ ॥

## (१३) १०।८।२९-३२ न हविश्चतुरादेयम्

( १ ) प्रासङ्गिको विचारः ।

(२) दर्शपूर्णमासयोः श्रूयते--'चतुरवत्तं जुहोति' इति ।

(३) तत्र संशयः--किम्प्रधानहविर्द्रव्यादेव चतुरवदातव्यम्-उत हविषो द्विरेवावदानं-इतरद् द्वयं चोपस्तरणाभिघारणार्थाभ्यामाज्यावदानाभ्यामेव सम्पादनीयमिति ।

(४) पूर्वपक्षः--चतुरवत्तमिति द्वितीयाश्रुत्या होमकर्मत्वमुच्यत चतुरवत्तस्य । न चाज्यस्य होमकर्मत्वमस्ति । तस्मात् पुरोडाशादेव चतुर्वारावदानेन चतुरवत्तं सम्पद्यत इति ।

(५) सिद्धान्तः--नात्र होमानुवादेन चतुरवत्तं विधीयते-होमस्याप्राप्तत्वात् । होममात्रं त्वत्र विधीयते । चतुरवत्तत्वं च तस्यानूद्यते । तच्च चतुरवत्तमाज्यावदानाभ्यामेव सम्बद्धं भवति-'द्विर्हविषोऽवद्यति' इति हविरवदानस्य द्वित्वसङ्ख्यानियमात् । तस्मात् पुरोडाशे द्विरवदानम् न चतुरवदानमिति ।

एतदभिप्रेत्याह--नेति । 'हविश्चतुः' हविषः पुरोडाशस्य चत्वार्यवदानानि-'न आदेयम्' न ग्रहीतव्यम्-अपि तु द्विरवदानमेव तस्माद् ग्रहीतव्यमित्यर्थः ॥ १३ ॥

(१४) १०।८।३३-३४ उपांशौ च चतुर्ग्रहः ।

(१) पूर्वाधिकरणशेषः ।

(२) दर्शपूर्णमासयोरस्त्युपांशुयाजः ।

(३) तत्र संशयः--उपांशुयाजे चतुरवत्तं कर्तव्यमुत नेति ।

(४) पूर्वपक्षः--उपांशुयाजस्योपस्तरणादिराहित्यान्नास्ति चतुरवत्तमिति ।

(५) सिद्धान्तः--'चतुरवत्तं जुहोति' इति वाक्यादेवोपांशुयाजेऽस्ति चतुरवत्तम् । होमे चतुरवत्तं गुणो विधीयते । स च गुण उपांशुयाजहोमेऽपि स्यादेवेति ।

एतदभिप्रेत्याह उपेति । 'उपांशौ' उपांशुयाजहोमे-'च'-'चतुर्ग्रहः' चतुरवत्तं-कर्तव्यमेवेति शेषः ॥ १४ ॥

(१५) १०।८।३५-४६ अग्निकौ न पुरोडाशौ

(१) प्रासङ्गिको विचारः ।

(२) दर्शपूर्णमासयोराम्नायते-'पुरोडाशाभ्यामेव असोमयाजिनं याजयेत्-यावेतौ आग्नेयश्चैन्द्राग्नश्च' इति । 'दर्शपूर्णमासाभ्यां स्वर्गका-

(३) तत्र सन्देहः--किमधिकारश्रुतेः-'दर्शपूर्णमासाभ्यां स्वर्गका-मो यजेत' इत्यस्य-वाक्यशेषोऽयम्-उताधिकयोः कर्मान्तरयोरुत्पत्तिः उत दर्शपूर्णमासान्तर्गतयोरेवाग्नेयैन्द्राग्नयोरनुवाद इति ।

( ४ ) पूर्वपक्षः—अधिकारश्रुतेर्वाक्यशेषः—असोमयाजिनो यदा दर्शपूर्णमासावनुष्ठीयेते तदा आग्नेयैन्द्राग्नाभ्यामेव पुरोडाशाभ्यामित्यर्थः। अथवा दर्शपूर्णमासाभ्यामतिरिक्तौ पुरोडाशौ विधीयेते इत्यादि बहवः पक्षाः सम्भवन्ति।

( ५ ) सिद्धान्तः—सोमयाजिनः सान्नाय्यविधानार्थमेतद्वाक्यम्। तस्यार्थः—असोमयाजिनो यावाग्नेयैन्द्राग्नौ पुरोडाशौ प्राप्तौ—यौ च तौ चापरं च सान्नाय्यं सोमयाजिनः प्राप्तं—तत्रासोमयाजिनमुक्ताभ्यां पुरोडाशाभ्यामेव याजयेत्। तस्मादत्रोभयोः पुरोडाशयोरनुवाद एवेति।

एतदभिप्रेत्याह अधिकाविति। 'पुरोडाशौ' आग्नेय ऐन्द्राग्नश्चेत्युभौ यावसोमयाजिन उक्तौ तौ—'न'—'अधिकौ' दर्शपूर्णमासगतपुरोडाशाभ्यां व्यतिरिक्तौ—अपि तु तदन्तर्गतावेवात्रानूदितावित्याशयः ॥१५॥

(१६) १०।८।४७-४८ उपांशुः स्यात् ध्रुवाज्यतः।

( १ ) प्रासङ्गिको विचारः।

( २ ) दर्शपूर्णमासयोराम्नायते—'उपांशुयागमन्तरा यजति' इति।

( ३ ) तत्र द्रव्यं प्रति सन्देहः— किमनियम उत किञ्चिद्‌द्रव्यं नियतमिति।

( ४ ) पूर्वपक्षः—द्रव्यविशेषाश्रवणात् यथेच्छं द्रव्यं यत् किञ्चिद् ग्राह्यमिति।

( ५ ) सिद्धान्तः—श्रूयते त्वाज्यरूपं द्रव्यम्—'आज्यस्यैव तावुपांशुपौर्णमास्यां यजन्' इति। तत्रापि ध्रौवमेवाज्यं गृहीतव्यमित्यत्रापि नियामकमस्ति—'सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' इति। तस्माद् ध्रुवाज्यमेवोपांशुयागे द्रव्यमिति।

एतदभिप्रेत्याह उपांशुरिति। 'उपांशुः' उपांशुयागे हविःप्रदानम्—'ध्रुवाज्यतः' ध्रुवायां धृतात् आज्यात्—'स्यात्' भवेदित्यस्ति नियम इत्यर्थः ॥ १६ ॥

(१७) १०।८।४९-५० तस्यान्तु देवता तान्त्री

( १ ) उपांशुयागविचारो वर्तते।

( २ ) उपांशुयागे आज्यं द्रव्यमिति स्थितम्।

( ३ ) तत्र संशयः—अत्र देवता का—या काचिदुत नियम इति।

( ४ ) पूर्वपक्षः—देवताविशेषविधेरभावात् या काचिद् देवता स्यादिति।

( ५ ) सिद्धान्तः—उपांशुयागस्य दर्शपूर्णमासप्रकरणपठितत्वात् दर्शपूर्णमासतन्त्रमध्यपठितैव काचिद् देवतोपांशुयागे नियम्यत इति।

एतदभिप्रेत्याह तस्यामिति। 'तस्याम्' उपांशुयागक्रियायाम्-'ता-

ग्नी' दर्शपूर्णमासतन्त्रपठिता एव काचिद्—'देवता'—स्यादिति शेषः । सा च देवता विष्णुप्रजापत्यग्नीषोमेभ्योऽन्यतमैव स्यादिति नियमः इत्याशयः ॥ १७ ॥

(१८) १०।८।५१-६१ पौर्णमास्यां तु सा भवेत् ।

(१) उपांशुयागविचारो वर्तते ।

(२) उपांशुयागस्य द्रव्यं देवता चावगता ।

(३) काले इदानीं सन्देहः—किम्पौर्णमास्यामुतामावास्यायामनुष्ठानमिति ।

(४) पूर्वपक्षः—उभयत्रेति । अथवाऽमावास्यायामेवेति ।

(५) सिद्धान्तः—'उपांशु पौर्णमास्यां यजन्' इति पौर्णमास्यास्तत्कालत्वेन स्पष्टमभिधानात् पौर्णमास्येव काल इति ।

एतदभिप्रेत्याह पौर्णेति । 'सा' उपांशुयागक्रिया—'पौर्णमास्याम्' एव—'भवेत्' अनुष्ठीयेत—न तु दर्शे इत्याशयः ॥ १८ ॥

(१९) १०।८।६२-७० उपांश्वेकपुरोडाशे

(१) उपांशुयाजविचारो वर्तते ।

(२) उपांशुयाजः पौर्णमास्याम्भवतीति समधिगतम् । अस्ति तु पौर्णमास्यां सोमादूर्ध्वं द्वौ पुरोडाशौ, सोमात् प्राक् त्वेक एव पुरोडाशः ।

(३) तत्र सन्देहः—किं द्विपुरोडाशायां पौर्णमास्यामुपांशुयाजः कर्तव्य उतैकपुरोडाशायामिति ।

(४) पूर्वपक्षः—'उपांशुयाजमन्तरा यजति' इति वाक्ये उपांशुयाजस्य अन्तरालवत्त्वोक्तिः । तच्चान्तरालवत्त्वं पुरोडाशद्वये सत्येव सम्भवति । तस्माद् द्विपुरोडाशायां पौर्णमास्यामुपांशुयाज इति ।

(५) सिद्धान्तः—पुरोडाशौ अन्तरालकालस्योपलक्षकौ न लक्षणभूतौ । कालस्य चोपलक्षणमन्यथाऽपि सम्भवति । तस्मादेकपुरोडाशायामपि भवत्युपांशुयाज इति ।

एतदभिप्रेत्याह उपेति । 'एकपुरोडाशे' एकपुरोडाशोपलक्षितेऽपि पौर्णमासीकाले—'उपांशु' उपांशुयाजः–अनुष्ठेय इति शेषः-न द्विपुरोडाशायामेवेत्यर्थः ॥ १९ ॥

न्यायास्त्वेकोनविंशतिः ।

स्पष्टम् ।

इति दशमस्याष्टमः

इति दशमोऽध्यायः ।

# अथैकादशोऽध्यायः ।

[ तन्त्रावापनिरूपणम् ]

## प्रथमः पादः ।

[ तन्त्रविचारे उपोद्घातः ]

### (१) ११।१।१-४ षण्णां यजीनाम्फलमेकमेव

( १ ) बाधाबाधविचारेण प्रयोज्ये निश्चिते सति ।
प्रयोगस्य विकारोऽयं तन्त्ररूपः प्रतन्यते ॥

दशमाध्याये बाधाभ्युच्चयलक्षणं वृत्तम् । इदानीमेकादशे तन्त्रावापलक्षणं प्रवर्तते । तत्र यत् सकृत् कृतं बहूनामुपकरोति तत् 'तन्त्रम्'-यथा बहूनां ब्राह्मणानाम्मध्ये दीपः । यस्तु आवृत्त्या उपकारोति स 'आवापः'—यथा तेषामेव ब्राह्मणानामनुलेपनम् । तत्रादौ तन्त्रविचारः प्रस्तूयते ।

( २ ) दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि षट् । तेषां स्वर्गः फलं श्रूयते—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति ।

( ३ ) तत्र सन्देहः—इदं फलं किं षण्णां प्रत्येकमुत तन्त्रेणेति ।

( ४ ) पूर्वपक्षः—श्रुतं फलमाग्नेयादिभिः प्रत्येकमभिसम्बध्यते । पृथगुत्पन्नानां परस्परनिरपेक्षाणां फलाकांक्षित्वात् ।

( ५ ) सिद्धान्तः-षड्यागसमूहवाचिना दर्शपूर्णमासशब्देन व्यवहृत्य संघस्यैव फलसम्बन्ध उच्यते । तस्मात् षण्णामपि तेषां फलं स्वर्ग एकमेव । इदमेव तन्त्रम् । एकेन फलेनैव बहूनामाग्नेयादीनां फलाभिसम्बन्धरूपोपकारो भवतीति ।

एतदभिप्रेत्याह षण्णामिति । 'षण्णाम्' दर्शपूर्णमासान्तर्गतानामाग्नेयादीनां 'यजीनां' यागानाम्—'एकमेव' स्वर्गरूपम्—'फलम्' । तदिदं तन्त्रेणेति ज्ञेयमित्याशयः ॥ १ ॥

### (२) ११।१।५-१० सर्वाङ्गजन्योपकृतिस्तथैका ।

( १ ) प्रधानानां फलाभिसम्बन्धं विचार्याङ्गानीदानीं विचार्यन्ते ।

( २ ) दर्शपूर्णमासयोः सन्ति प्रयाजादीन्यङ्गानि ।

( ३ ) तत्र संशयः—किमङ्गानि सम्भूय प्रधानस्योपकुर्वन्त्युत भेदेनेति ।

( ४ ) पूर्वपक्षः—अङ्गानि पृथक् कर्माणि । एवं च तेषां प्रधानं प्रत्युपकारभेदः स्यात् । न चात्र पूर्वाधिकरणवत् सङ्घता द्योत्यते इति ।

(५) सिद्धान्तः—प्रधानकार्याकाङ्क्षानुसारेण हि अङ्गैरुपकारः कल्पनीयः। कार्यं च प्रधानमेकमेव सत् स्वशक्त्युद्बोधनलक्षणमेकमेवोपकारमङ्गकृतमपेक्षते। उपकारस्य द्वारभेदेनैव भिन्नानामङ्गानामुपयोगः। तस्मात्सम्भूयैवाङ्गानि प्रधानस्योपकुर्वन्तीति।

एतदभिप्रेत्याह सर्वेति। 'सर्वाङ्गजन्या' सर्वैः भिन्नैः अङ्गैः जन्या सम्पादनीया—'उपकृतिः' उपकारः प्रधानस्य—'एका' एव—न भिन्नेत्याशयः ॥ २ ॥

## (३) ११।१।११-१६ कार्यं प्रधानं सकलाङ्गयुक्तम्

(१) पूर्वाधिकरणशेषः।

(२) अङ्गैः प्रधानस्योपकारः क्रियते—इति स्थितम्।

(३) तत्र पुनः संशयः—दर्शपूर्णमासादीनि कर्माणि किमेकदेशाङ्गयुक्तान्यपि कर्तव्यान्युत सर्वाङ्गयुक्तान्येवेति।

(४) पूर्वपक्षः—एकदेशेनाप्यङ्गेनानुष्ठितेन दर्शपूर्णमासयोः स्वर्गं प्रति व्यापारः सिध्यत्येव। तेनैव च कृतार्थत्वात् प्रधानानुष्ठानं सम्पद्यते। अङ्गानामनुष्ठानं प्रति यो यावन्ति शक्नुयात् तावन्त्येव कुर्यादिति।

(५) सिद्धान्तः—प्रधानस्याकाङ्क्षा नैकेन पूर्यतेऽपि तु सर्वैरेवाङ्गैः। सर्वैरेव कृतेनोपकारेण फलसम्पादनोन्मुखत्वं प्रधानस्य भवति। तस्मात् सर्वैरेवाङ्गैरुपेतं प्रधानमनुष्ठेयमिति।

एतदभिप्रेत्याह कार्यमिति। 'सकलाङ्गयुक्तम्' सकलैः सर्वैरेव अङ्गैः युक्तम् कृतोपकारं—'प्रधानं' कर्म—'कार्यम्' कर्तव्यम्—न तु कतिपयैरेवाङ्गैर्युतमित्याशयः ॥ ३ ॥

## (४) ११।१।२०-२६ काम्यं यथेच्छं पुनरेव कुर्यात्

(१) तन्त्रविचारप्रसङ्गेन काम्यकर्माणि चिन्त्यन्ते—द्वितीयाधिकरणापवादरूपेण।

(२) सन्ति काम्यानि कर्माणि 'चित्रया यजेत पशुकाम' इत्यादीनि।

(३) तत्र सन्देहः—किमिदं काम्यं कर्म सकृदेवानुष्ठातव्यमुताभ्यसितव्यमिति।

(४) पूर्वपक्षः—सकृत्प्रयोगेनैव फलसिद्धेर्नास्ति प्रयोजनम् पुनरनुष्ठानस्य। तस्मात् सकृदेव कार्यमिति—यथा प्रयाजाद्यङ्गं सकृदेवानुष्ठीयते तथैवेति।

(५) सिद्धान्तः—अङ्गकृतोपकारस्य तु प्रधानस्य सकृदेवाकाङ्क्षा—सा च सकृदनुष्ठानेन पूर्यते। इह तु पुरुषस्य पश्वादिफलं प्रति भवति

भूयोभूय आकाङ्क्षा तस्मात् आकाङ्क्षानुसारेण भवत्येवाभ्यास इति।

एतदभिप्रेत्याह काम्यमिति। 'काम्यं' कर्म यत्फलोद्देशेन क्रियते तत्-'यथेच्छं' फलाकाङ्क्षानुसारेण—'पुनः एव' पुनः पुनरपि-'कुर्यात्'—न तु सकृदेवेत्यर्थः ॥ ४ ॥

(५) ११।१।२७ अभ्यास आतुण्डलतोऽवहन्तेः

( १ ) तन्त्रप्रसङ्गेनाभ्यासश्चिन्त्यते।

( २ ) अस्त्यवघातविधिः—'व्रीहीनवहन्ति' इति।

( ३ ) तत्र संशयः—किं सकृदेवावघात उताभ्यास इति।

( ४ ) पूर्वपक्षः—सकृन्मुसलपातरूपेण विधानेन विधेः कृतार्थता। तस्मान्नाभ्यास इति।

( ५ ) सिद्धान्तः-तण्डुलनिष्पत्तिरेवावघातस्य दृष्टमेव प्रयोजनम्। तस्मात् तण्डुलनिष्पत्तिपर्यन्तमभ्यास इति फलबलेन कल्पनीयम्। तस्मादभ्यास इति।

एतदभिप्रेत्याह अभ्यास इति। 'आतण्डुलतः' तण्डुलनिष्पत्तिपर्यन्तम्—'अवहन्तेः' अवघातस्य—'अभ्यासः' कर्तव्यो भवतीत्यर्थः ॥५॥

(६) ११।१।२८ सर्वौषधे स्यात् सकृदेव घातः।

( १ ) पूर्वाधिकरणापवादः।

( २ ) अग्निप्रकरणे श्रूयते—'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति' इति।

( ३ ) तत्रावघाते संशयः—किं सकृदनुष्ठानमुताभ्यास इति।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेनाभ्यास इति।

( ५ ) सिद्धान्तः—नास्ति सर्वौषधेऽवघातस्य दृष्टं प्रयोजनम्। केवलमदृष्टमेव प्रयोजनमत्र। तस्य सकृदवघातेनापि सम्पाद्यत्वात् सकृदेवावघातः इति।

एतदभिप्रेत्याह सर्वेति। 'सर्वौषधे' अवहननीये-'घातः' अवघातः-'सकृत्' 'एव' 'स्यात्'—न ह्यत्राभ्यास इत्याशयः ॥ ६ ॥

(७) ११।१।२९-३७ अङ्गप्रयाजादि सकृत् प्रकुर्यात्

( १ ) अभ्यासापवादः।

( २ ) दर्शपूर्णमासयोः सन्ति प्रयाजादीन्यङ्गानि।

( ३ ) तेषु संशयः—अङ्गं किं सकृदनुष्ठेयमुताभ्यसितव्यमिति।

( ४ ) पूर्वपक्षः—फलभूमार्थिनाऽङ्गमभ्यसनीयम्-काम्येष्वभ्यासेन फलभूयस्त्वदर्शनादिति।

(५) सिद्धान्तः—साङ्गस्य प्रधानस्यानुष्ठानेन यद्दृष्टं फलं तत्र भूयस्त्वाल्पत्वे न सम्भवतः। यदि फलभूयस्त्वेच्छा स्यात्तर्हि साङ्गप्रधानमेवावर्तनीयं न केवलमङ्गम्। केवलेनाङ्गेन न किमपि सिध्येत्। तस्मात् एकस्मिन् प्रयोगे सकृदेवानुष्ठानमङ्गस्येति।

एतदभिप्रेत्याह अङ्गमिति। 'प्रयाजादि' 'अङ्गं' 'सकृत्' एव प्रकुर्यात्' एकस्मिन् प्रधानप्रयोगे इति शेषः॥ ७॥

(८) ११।१।३८-४५ त्रित्वमेव नियम्येत कपिञ्जलेषु।

(१) अभ्यासप्रसङ्गेन विचारः।

(२) अश्वमेधे श्रूयते—'वसन्ताय कपिञ्जलानालभते' इति।

(३) तत्र संशयः—कपिञ्जलानित्यत्र बहुवचनेन किं त्रित्वचतुष्ट्वादीनां संख्यानां यथाकामं ग्रहणमुत त्रित्वे एव नियमनमिति।

(४) पूर्वपक्षः—त्रित्वमारभ्य या काचित् बहुत्वसङ्ख्या स्वीकार्येति।

(५) सिद्धान्तः—त्रित्वेनैव शास्त्रस्य कृतकार्यत्वात् अधिकसङ्ख्योपादाने नास्ति प्रमाणम्। त्रित्वसङ्ख्या तु कथमपि परित्यक्तुं न शक्यते। तस्मादवश्यम्भावित्वेन प्रथमभावित्वेन लाघवेन च त्रित्वे उपात्ते शास्त्रार्थे सिद्धे ततोऽधिकपक्षिहिंसायां प्रत्यवायः स्यात्। तस्मात् त्रित्वमेवोपादेयमिति।

एतदभिप्रेत्याह त्रित्वमिति। 'कपिञ्जलेषु' कपिञ्जलानित्यत्र बहुवचनान्ते पदे-'त्रित्वं' त्रित्वसङ्ख्यैव-'नियम्येत'-त्रित्वसङ्ख्यैवोपादेया न ततोऽधिकेत्यर्थः॥ ८॥

(९) ११।१।४६-५२ न तूत्तरादोहविधौ त्रिसङ्ख्या

(१) पूर्वाधिकरणापवादः।

(२) सान्नाय्ये दोहनम्प्रकृत्य श्रूयते—'वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्योत्तरा दोहयति' इति।

(३) तत्र सन्देहः—किं तिस्र एवोत्तरा गावो दोहनीया उताधिका इति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन तिस्र एवेति।

(५) सिद्धान्तः—हविर्बाहुल्यमत्रापेक्षितम्। न च कपिञ्जलवद् अधिकसङ्ख्यास्वीकारे हिंसादिदोषः। तस्मात् यावत्य उत्तरा गावो यजमानस्य ताः सर्वा दोहयितव्या इति।

एतदभिप्रेत्याह न त्विति। 'उत्तरादोहविधौ' तिस्रो दोहयित्वा ताभ्य 'उत्तराः' अतिरिक्ता या गावः तासां दोहविधौ 'उत्तरा दोहयतीति'

अत्र वाक्ये—'त्रिसङ्ख्या' त्रित्वसंङ्ख्या-'न' ग्रहीतव्या—अपि तु सर्वा उत्तरा गावो दोहयितव्याः इति भावः ॥ ९ ॥

## (१०) ११।१।५३-६६ यागत्रयेऽङ्गानि भवन्ति तन्त्रम् ।

(१) तन्त्रोदाहरणम् ।

(२) दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि, अङ्गानि प्रयाजादीनि।

(३) तत्र सन्देहः—किं तत्तत्प्रधानं प्रति भेदेनाङ्गानामनुष्ठानमुत सर्वेषां तन्त्रेणेति ।

(४) पूर्वपक्षः—प्रधानस्य प्रत्येकस्योपकारापेक्षित्वात् प्रतिप्रधानमङ्गानि भेदेनानुष्ठेयानीति ।

(५) सिद्धान्तः—आग्नेयादिदेशकालकर्तॄणामेकत्वाद् अङ्गानां सकृदेव तन्त्रेणानुष्ठानमिति ।

एतदभिप्रेत्याह—यागेति । 'यागत्रये' आग्नेयादिषु प्रधानेषु त्रिषु यागेषु—'अङ्गानि' प्रयाजादीनि—'तन्त्रम्' सकृदनुष्ठितं त्रयाणामुपकारकं 'भवन्ति' । अतो न प्रतिप्रधानं भेदेनानुष्ठानमङ्गानामित्याशयः ॥१०॥

## (११) ११।१।६७-७० आग्नेययागश्च पृथक् प्रदानम्

(१) आवापोदाहरणम् ।

(२) काम्यपशुकाण्डे श्रूयते—'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवम्, पुरोधायां स्पर्धमान' इति । अस्यार्थः-ममैव पौरोहित्यमस्तु नान्यस्येति स्पर्धोपेतो यथोक्तवर्णोपेतं पशुत्रयमालभेतेति ।

(३) तत्र संशयः—प्रथमतृतीयस्थानयोरुक्तयोः कृष्णग्रीवयोः किं सह प्रदानमुत भेदेनेति ।

(४) पूर्वपक्षः—प्रथमतृतीययोरुभयोरग्निदैवतत्वसाम्यात् तन्त्रेण सकृदेवानुष्ठानमिति ।

(५) सिद्धान्तः—सौम्यपशुना व्यवधाने सति कालस्य भेदः स्पष्टः। एवं सति तन्त्रासम्भवाद् भेदेनैवानुष्ठानमत आवाप एवात्रेति ।

एतदभिप्रेत्याह आग्नेयेति । 'आग्नेययागः' कृष्णग्रीवालम्भनरूपः, प्रथमतृतीयस्थानयोरुपदिष्टः—'पृथक्प्रदानम्' पृथगनुष्ठानरूपो भवतीति शेषः । आग्नेयपश्वालम्भनद्वयं पृथगेव कार्यमित्याशयः ॥ ११ ॥

न्याया इहैकादश सम्प्रदिष्टाः ।

स्पष्टम् ।

इत्येकादशस्य प्रथमः ।

# अथैकादशस्य द्वितीयः पादः ।

( तन्त्रावापयोः सङ्क्षेपेण विचारः )

## (१) ११।२।१–२ देशाद्येकम्प्रधानानाम्

( १ ) तन्त्रोदाहरणम् ।

( २ ) दर्शपूर्णमासयोर्देश–काल–कर्तारो विहिताः–'समे दर्शपूर्णमासाभ्यां यजेत' -'पौर्णमास्यां यजेत अमावास्यायां यजेत'–'दर्शपूर्णमासयोश्चत्वार ऋत्विज' इति । सन्ति चात्राग्नेयादीनि प्रधानानि ।

( ३ ) तत्र सन्देहः—आग्नेयादीनां प्रधानानां देशादयः किं तन्त्रेण सम्बध्यन्ते उत प्रतिप्रधानं भिद्यन्ते इति ।

( ४ ) पूर्वपक्षः—देशादयोऽङ्गम् । अत एव द्रव्यदेवतावत् उत्पत्तिविधिशेषाः । तस्मात्प्रतिप्रधानं भिद्यन्ते इति ।

( ५ ) सिद्धान्तः—परस्परभिन्ना अप्याग्नेयादयः सङ्घरूपेणैव दर्शपूर्णमासशब्देन स्वर्गसाधनतया विधीयन्ते । तस्मात् सङ्घातरूप एक एव प्रयोगो द्योत्यते । सङ्घवाचकदर्शपूर्णमासशब्देनैव च देशादिविधयः श्रूयन्ते । तस्मादेकत्र प्रयोगे देशकालकर्तॄणां तन्त्रेण सम्बन्धः ।

एतदभिप्रेत्याह देशेति । 'प्रधानानाम्' आग्नेयादीनाम् सम्बन्धेन—'देशादि' देशः कालः कर्ता चेत्यादि–'एकम्' एकमेव—तन्त्रेण प्रतिप्रधानं सम्बध्यते इत्याशयः ॥ १ ॥

## (२) ११।२।२–१० तदेवाङ्गेषु नो पृथक् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) सन्ति प्रयाजादीनि दर्शपूर्णमासयोरङ्गानि ।

( ३ ) तत्र सन्देहः—प्रधानस्य ये देशादयस्त एव किमङ्गानामपि–उत भिन्ना इति ।

( ४ ) पूर्वपक्षः—यथा द्रव्यं देवता चाङ्गानाम्प्रधानद्रव्यदेवताभ्यां भिन्नास्तथैव देशादयोऽपि भवेयुरिति ।

( ५ ) सिद्धान्तः—देशादीनां प्रयोगशेषत्वम्, नाग्नेयादिविधिशेषत्वम् । प्रयोगे च प्रधानवद् अङ्गान्यप्यन्तर्भवन्ति । तस्माद् य एव देशादयः प्रधानानां त एवाङ्गानामपीति ।

एतदभिप्रेत्याह तदिति । 'अङ्गेषु' प्रयाजादिषु–'तत्' देशादि–'नो' न 'पृथक्' भिन्नम्–प्रधानदेशादिभ्य इति शेषः ॥ २ ॥

## (३) ११।२।११-१७ त्रिके त्रिकेऽङ्गमभ्यस्येत्

(१) आवापोदाहरणम्।

(२) दर्शपूर्णमासेष्ट्यां षड्यागसङ्घरूपायां द्वौ समुदायौ-दर्श इत्येकं त्रिकम्, पूर्णमास इति द्वितीयम्। सन्ति च प्रयाजादीनि इष्ट्यङ्गानि।

(३) तत्र सन्देहः—किं दर्शस्य पूर्णमासस्य च पृथक् अङ्गानाम्प्रयोग उत तन्त्रेणेति।

(४) पूर्वपक्षः—अवान्तरत्रिकयोर्भेदेऽपि षट्करूपेण कर्मणो दर्शपूर्णमासाख्यस्यैकत्वमेवेति प्रथमाधिकरणन्यायेनाङ्गानां तन्त्रेणैवानुष्ठानमिति।

(५) सिद्धान्तः—दर्शपूर्णमासाख्यकर्म यद्यपि एकफलसाधनत्वेनैकन्तथापि दर्शप्रयोगात् पूर्णमासप्रयोगो भिन्न एवेत्यनुष्ठानकालभेदादेव स्पष्टम्। एवं च कालभेदेन प्रयोगभेदात् प्रयोगशेषाणामङ्गानामावृत्तिः प्रतित्रिकमिति।

एतदभिप्रेत्याह त्रिक इति। 'त्रिके त्रिके' यागत्रयसमुदायरूपे दर्शे अपरयागत्रयसमुदायरूपे पूर्णमासे च-'अङ्गम्' प्रयाजादि-'अभ्यस्येत्'-प्रतित्रिकमङ्गानां पृथगनुष्ठानं न तन्त्रेणेत्याशयः॥ ३॥

## (४) ११।२।१८-२२ अङ्गाभ्यासोऽध्वराभिधे।

(१) आवापोदाहरणान्तरम्।

(२) काम्येष्टिष्वध्वरकल्पा नाम काचिदिष्टिः। तत्र प्रातःकाले त्रयाणां यागानामग्नावैष्णव-सारस्वत-बार्हस्पत्यानां सङ्घः पठितः। मध्याह्नापराह्णयोरपि तथैव पठितः। अष्टाकपालैकादशकपालद्वादशकपालैरग्नावैष्णवो विशेषितः—इतरत्समानं त्रिषु।

(३) तत्र सन्देहः—त्रिषु कालेषु प्रयुज्यमानानामेतेषां कर्मसमुदायानामङ्गानुष्ठानं किं तन्त्रेणोत भेदेनेति।

(४) पूर्वपक्षः—'पुरा वाचः प्रवदितोर्निर्वपेत्' इति सङ्घस्य यागस्याशेषस्य-रात्रौ सुप्तजनानां प्रबोधपूर्वकव्यापारात् प्राचीने उषःकालेऽपकर्षे सति निर्वापवदङ्गान्तराणामप्यपकर्षस्य भानम्। तस्मात् त्रिषु अङ्गानां तन्त्रमिति।

(५) सिद्धान्तः—'अग्नावैष्णवमष्टाकपालं प्रातर्निर्वपेत्' इति सामान्येन विहितो यः प्रातःकालीनो निर्वापः स एव सन्निहितत्वात् 'पुरा वाचः' इत्यनेन विशिष्यते। तस्मादुत्तरसङ्घनिर्वापोऽपि मुख्यत्वलाभाय

तत्तत्काले एव कर्तव्यः । तद्धदेवाङ्गानामपि तत्तत्काले भेदेनैवानुष्ठानमिति ।

एतदभिप्रेत्याह अङ्गेति । 'अध्वराभिधे' अध्वरकल्पायामिष्टौ-'अङ्गाभ्यासः' प्रतिविक्रमङ्गानां भेदेनैवानुष्ठानमित्यर्थः ॥ ४ ॥

## (५) ११।२।२३ देवतैक्ये वसा तन्त्रम्

( १ ) तन्त्रोदाहरणम् ।

( २ ) सन्त्येकदेवताकाः पशुयागाः—'सप्तदश प्राजापत्यान् पशूनालभेत' इत्येवमादयः । अस्ति प्रकृतौ अग्नीषोमीये वसाहोमः । स च प्राजापत्ये चोदकेन प्राप्यते ।

( ३ ) तत्र सन्देहः—किमस्य वसाहोमस्य प्रतिपश्वभ्यास उत तन्त्रेणानुष्ठानमिति ।

( ४ ) पूर्वपक्षः—पशुभेदेन वसाया भिन्नत्वात् वसाहोमस्य प्रतिपशु भेदः । तस्मादभ्यास इति ।

( ५ ) सिद्धान्तः—एक एव प्रजापतिः सर्वेषां पशुयागानामत्र देवता । पाकश्च हविषः सहैव क्रियते । पाकवच्च प्रदानस्याप्येकत्वम् । कालोऽप्येक एव । शक्यते चानेकानाम्पशूनां वसयैकत्रीकृतया सह होमः । तस्मात् तन्त्रमिति ।

एतदभिप्रेत्याह देवतेति । 'देवतैक्ये' यत्रानेकेषु कर्मसु एकैव देवता, यथा वाजपेये प्राजापत्येषु, तत्र-'वसा' वसाहोमः-'तन्त्रम्' तन्त्रेणैवानुष्ठीयते-न तु प्रतिपशु अभ्यस्यते इत्यर्थः ॥ ५ ॥

## (६) ११।२।२४ तद्भेदे तु वसा पृथक् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) सन्त्येकादशिनाः पशवः आग्नेय-सारस्वत-सौम्यादयः । एतेष्वपि वसाहोमः प्राप्तः ।

( ३ ) तत्र सन्देहः—अयं वसाहोमः किं तन्त्रेणानुष्ठेय उत प्रतिपशु भेदेनेति ।

( ४ ) पूर्वपक्षः—सर्वत्र सह कर्तुं शक्यत्वात् तन्त्रेणैवानुष्ठानमिति ।

( ५ ) सिद्धान्तः—देवताभेदात् प्रधानभेदः । याज्यार्थचोन्तिकालानां चैतेषां पशूनां कालभेदोऽप्यस्ति । तस्मात् तन्त्रं न न्याय्यम् । प्रतिपशु भेदेनैवानुष्ठानमिति ।

एतदभिप्रेत्याह तदिति । 'तद्भेदे' देवताभेदे—'तु'—'वसा' वसाहोमः—'पृथक्' भेदेनैवानुष्ठेयेति भावः ॥ ६ ॥

## (७) ११।२।२५–२७ यूपान्तिकाहुतिस्तन्त्रम्

( १ ) तन्त्रोदाहरणम् ।

( २ ) अस्ति ज्योतिष्टोमे यूपैकादशिनी—'एकादश यूपान् छिनत्ति' इति । अस्ति च प्रकृतौ अग्नीषोमीये पशौ यूपाहुतिः ।

( ३ ) तत्र संशयः—एकादशसु यूपेषु यूपाहुतिः किं भेदेन कर्तव्या—उत तन्त्रेणेति ।

( ४ ) पूर्वपक्षः—'यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति' इति श्रूयते । भिन्नानां च यूपानां भिन्नान्यन्तिकानि । तस्मादेकादशानामन्तिकेषु भिन्नैवाहुतिः । तस्माद् भेदेनानुष्ठानमिति ।

( ५ ) सिद्धान्तः—अन्तिकत्वं नात्यन्तसामीप्यम् । तथा सति अग्नेरत्यन्तसामीप्ये पशुदाहप्रसङ्गात् । सामीप्यमात्रमत्र अन्तिकशब्देन विवक्षितम् । तस्मात् यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावतो देशस्य अत्र अन्तिकत्वमभ्युपेयम् । एवं देशैक्यसम्भवात् तन्त्रेणैवानुष्ठानमिति ।

एतदभिप्रेत्याह यूपेति । 'यूपान्तिकाहुतिः' यूपानामन्तिके या आहुतिर्विहिता सा—'तन्त्रम्' तन्त्रेणैवानुष्ठेयेत्यर्थः ॥ ७ ॥

## (८) ११।२।२८–३२ साङ्गोऽप्स्ववभृथो भवेत् ।

( १ ) तन्त्रेण सहानुष्ठानमित्येतत्प्रसङ्गेन दैशिकं साहित्यं चिन्त्यते ।

( २ ) अस्ति ज्योतिष्टोमेऽवभृथः । तत्र श्रूयते—'अप्स्ववभृथेन चरन्ति' इति । तत्र वारुण एककपालयागः प्रधानं कर्म इतरत् सर्वं तदङ्गम् ।

( ३ ) तत्र सन्देहः—अवभृथे किं प्रधानकर्ममात्रमप्सु कर्तव्यम्—उताङ्गान्यपीति ।

( ४ ) पूर्वपक्षः—यथा द्रव्यं देवता च प्रधानकर्मणैव सम्बध्यते तथाऽपामपि प्रधानाङ्गत्वात् प्रधानमात्रमप्सु कर्तव्यमितरत् सर्वमङ्गजातमाघाराज्यभागादिकन्त्वाहवनीयेऽग्नावेव कर्तव्यमिति ।

( ५ ) सिद्धान्तः—'अप्सु चरन्ति' इत्यत्र अवभृथप्रयोगस्य समस्तस्यापां सम्बन्धः श्रूयते । तस्मात् साङ्गमेव प्रधानमप्सु कर्तव्यमिति ।

एतदभिप्रेत्याह साङ्ग इति । 'अवभृथः' अवभृथयागः—'साङ्गः' अङ्गैस्सहित एव–'अप्सु' जले–'भवेत्' अनुष्ठित इति शेषः । न त्वङ्गानामाहवनीयेऽनुष्ठानम्प्रधानमात्रस्याप्स्वित्याशयः ॥ ८ ॥

## (९) ११।२।३३–४१ विहारयोस्तन्त्रभेदः

(१) तन्त्रचिन्ताऽनुवर्तते ।

(२) वरुणप्रघासेषु विहारपृथक्त्वम्—'पृथगग्नी प्रणयतः पृथग्वेदीं कुरुत' इति । सन्ति चात्राग्नेयादीनि नव हवींषि । तत्र श्रूयते—'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति—मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति । सन्ति चात्राङ्गान्यनुष्ठेयानि ।

(३) तत्र संशयः—किं दक्षिणविहारे पृथगङ्गानुष्ठानमुत यान्येवोत्तरे कृतानि तान्येव दक्षिणेऽप्युपकुर्वन्तीति ।

(४) पूर्वपक्षः—उत्तरे यान्यनुष्ठितानि तान्येव दक्षिणेऽप्युपकुर्वन्ति तन्त्रेण । वरुणप्रघासान्तःपातित्वेन प्रयोगैक्यात् इति ।

(५) सिद्धान्तः—देशभेदात् प्रयोगभेदः—ततश्चाङ्गानुष्ठानस्य पृथक्त्वं दुर्वारम् । तस्माद् भेदेनैवाङ्गानुष्ठानं दक्षिणे विहारे इति ।

एतदभिप्रेत्याह विहारयोरिति । 'विहारयोः' उत्तरदक्षिणयोः अङ्गानुष्ठाने–'तन्त्रभेदः' भेद एव न तन्त्रमित्यर्थः ॥ ९ ॥

## (१०) ११।२।४२-४६ न तयोः कर्तृभिन्नता ।

(१) पूर्वाधिकरणशेषः ।

(२) पूर्वोक्ते एव विषये—

(३) संशयान्तरम्—कि य एव ऋत्विज उत्तरे विहारे कर्तारस्त एव दक्षिणेऽपि उतान्ये इति ।

(४) पूर्वपक्षः—प्रयोगभेदादाधाराद्यङ्गभेदे कर्तॄणामपि भेद इति ।

(५) सिद्धान्तः—ऋत्विजां सङ्ख्या ।पञ्चैव नियमिता–'चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज' इति । यदि द्वयोर्विहारयोः पृथग् ऋत्विजो भवेयुस्तर्हि तेषां सङ्ख्या दश सम्पद्येत । तच्च प्रत्यक्षवचनविरुद्धम् । तस्मान्नास्ति कर्तृभेद इति ।

एतदभिप्रेत्याह नेति । 'तयोः' उत्तरदक्षिणविहारयोः–'कर्तृभिन्नता' कर्तॄणाम् ऋत्विजां 'भिन्नता' भेदो–'न' भवतीति शेषः । य एवोत्तरे ऋत्विजस्त एव दक्षिणेऽपीति भावः ॥ १० ॥

## (११) ११।२।४७-४८ आपराग्निकभेदः स्यात्

(१) पूर्वाधिकरणापवादः ।

(२) विहारयोः सन्ति आपराग्निका होमाः ।

(३) तत्र संशयः—किमेतेषामुभयत्र विहारयोस्तन्त्रमुत भेदेनानुष्ठानमिति ।

(४) पूर्वपक्षः—एकस्मिन्नेवाग्नावेते होमाः क्रियन्ते । तस्मात्तन्त्रमिति ।

( ५ ) सिद्धान्तः—मारुत्या यान्यङ्गानि तानि प्रतिप्रस्थातुः कार्याणि-इतरत्राध्वर्योः । तन्त्रभावे अन्यतरेषां कर्तृकृतं वैगुण्यं स्यात् । तस्माद् भेदेनानुष्ठानमिति ।

एतदभिप्रेत्याह आपरेति । 'आपराग्निकभेदः' आपराग्निकानां होमानां 'भेदः' भेदेनानुष्ठानं स्यात्—न तन्त्रेणेत्यर्थः ॥ ११ ॥

## (१२) ११।२।४६–५१ संस्कारो वार्यते पशौ ।

( १ ) प्रासङ्गिको विचारः ।

( २ ) वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते—'तान् पर्यग्निकृतान् उत्सृजन्ति-ब्रह्मसाम्नि आलभते' इति ।

( ३ ) तत्र संशयः—'पर्यग्निकृतानुत्सृजन्ति' इत्यत्र किं कर्मशेषप्रतिषेध उत पर्यग्निकरणोत्तरभाविनां संस्काराणां प्रतिषेधः इति ।

( ४ ) पूर्वपक्षः—पर्यग्निकरणोत्तरभाविसकलकर्मशेष एव प्रतिषिध्यते-अश्वमेधे एतादृशस्यैव वाक्ये तदर्थत्वस्य प्रतिपन्नत्वादिति ।

( ५ ) सिद्धान्तः—पर्यग्निकरणोत्तरभाविकर्मशेषो न प्रतिषिध्यते-अपि तु तस्यैव कर्मशेषस्य ब्रह्मसामकाले उत्कर्षो विधीयते द्वितीयेन वाक्येन तथा च सति पर्यग्निकरणानन्तरभाविनो ये पशुसंस्कारास्त एव प्रतिषिध्यन्ते इति ।

एतदभिप्रेत्याह संस्कार इति । 'पशौ' प्राजापत्ये-'संस्कारः' पर्यग्निकरणानन्तरभावी—'वार्यते' प्रतिषिध्यते-न तु कर्मशेष इत्याशयः ॥१२॥

## (१३) ११।२।५२–५४ इज्यात्रयं त्वहीने स्यात्

( १ ) पूर्वाधिकरणापवादः ।

( २ ) अस्त्यहीनेषु पञ्चशारदीयनामकः कश्चित् पञ्चाहविशेषः—स च पञ्चसु वर्षेष्वनुष्ठेयः । तत्र प्रथमे वर्षे विशाखानक्षत्रयुक्तायाममावास्यायां सप्तदश स्वल्पवयसः स्त्रीपशवः सप्तदश उक्षाणश्च विहिताः । तेषु सर्वेषु पर्यग्निकृतेषु प्रोक्षितेषु च सत्सु स्त्रीपशूनामालम्भं पुम्पशूनां चोत्सर्गमाम्नाय—पुनर्द्वितीये तृतीये चतुर्थे च वत्सरे तथैवानुष्ठानमाम्नाय—पश्चादाम्नायते—'त्रींस्त्रीनेकस्मिन्नहन्यालभेरन्, पञ्चोत्तमेऽहनि' इति ।

( ३ ) तत्र संशयः—योऽयं पुम्पशूनामुत्सर्गः स किं कर्मशेषप्रतिषेधक उत संस्कारप्रतिषेधक इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन संस्कारस्यैव प्रतिषेध इति ।

( ५ ) सिद्धान्तः—उत्सृष्टानां पशूनां कर्मान्तरे उपयोगो न युज्यते । पुनश्च त्रींस्त्रीनिति वाक्येन च विहिता आलम्भाः सप्तदशसङ्ख्यका

एव—वर्षचतुष्टये प्रतिवर्षं त्रय इति द्वादश अन्तिमे च वर्षे पञ्च इति सप्तदशसङ्ख्या पूर्यते। इयं च सप्तदश आलम्भसङ्ख्या सप्तदशभिः स्त्रीपशुभिरेव पूर्यते इति पुम्पशुषु नास्ति किमपि कर्तव्यम्। तस्मात् कर्मशेषप्रतिषेध इति।

एतदभिप्रेत्याह इज्येति। 'अहीने' पञ्चशारदीयनामके—'इज्यात्रयं' त्रींस्त्रीनिति वाक्येन पञ्चमवत्सरे विहितं—'स्यात्' अपूर्वमेवेति शेषः। न तूत्सृष्टेषु पशुषु इदमिज्यात्रयं कार्यम्। तेषु कर्मशेषः प्रतिषिद्धः। तस्मादपूर्वमेव कर्म इदमिज्यात्रयमित्याशयः॥ १३॥

## (१४) ११।२।५५-६० दशपेयक्रयः पृथक्।

(१) तन्त्रचिन्ताऽनुवर्तते।

(२) राजसूये दशपेयाभिषेचनीयौ द्वौ सोमयागौ।

(३) तत्र संशयः—किमनयोरङ्गानुष्ठानं तन्त्रेणोत भेदेनेति।

(४) पूर्वपक्षः—तन्त्रेणैवानुष्ठानम्। 'सह सोमौ क्रीणात्यभिषेचनीयदशपेययोः' इत्युभयगतसोमक्रयस्य साहित्यं श्रूयते। एवं च सति क्रयात् पूर्वभाविनामङ्गानामनुष्ठानं तन्त्रेणैव भवितुमर्हति इति।

(५) सिद्धान्तः—दशपेयाभिषेचनीयौ भिन्नकालीनौ। नापि क्रये साहित्यं सम्भवति—'सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति' इति दशपेये क्रमस्य सद्यस्कालताविधानात्। 'सह सोमौ' इति वाक्यं च क्रयार्थो यः संवादस्तत्परत्वेन नेयम्। तस्मादुभयोरङ्गानां भेदेनानुष्ठानमिति।

एतदभिप्रेत्याह—दशेति। 'दशपेयक्रयः' दशपेययागे यत् सोमस्य क्रयणं तत्—'पृथक्' अभिषेचनीययागे यत् क्रयणं तस्माद् भिन्न एवेति। तस्मादितरेषामङ्गानामपि पृथगेवानुष्ठानमुभयत्र न तन्त्रेणेति भावः॥१४॥

## (१५) ११।२।६१-६३ निष्कासोऽवभृथाद् भिन्नः

(१) तन्त्रे प्रासङ्गिको विचारः।

(२) चातुर्मास्ययागेषु वरुणप्रघासेषु वारुणीमामिक्षां प्रकृत्याम्नायते 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' इति। तत्रायं प्रयोगप्रकारः। वरुणप्रघासेषु नव हवींषि। तेष्वष्टमं हविर्वारुण्यामिक्षा—नवमं हविः काय एककपालः। वारुण्यामामिक्षायां यवपिष्टनिर्मितं मेषमवदधाति। तत आमिक्षासंयुक्तं मेषं सर्वमवदाय हुत्वा—तत एककपालेन प्रचर्य—भाण्डलिप्तेन आमिक्षाया निष्कासेन यवतुषैश्च अवभृथमनुतिष्ठन्ति' इति॥

(३) तत्र संशयः—किं वारुण्यामिक्षाया एकमंशं यवमयमेषसहितं पूर्वं प्रदाय पश्चादेककपालप्रचारादूर्ध्वं—निष्कासरूपेण अंशान्तरेण तुषैः

अवभृथे प्रचरितव्यमिति प्रचारस्योत्कर्षः—उत कर्मान्तरमवभृथ इति।

(४) पूर्वपक्षः—सवनीयपशौ यथा विप्रकर्ष एव न कर्मान्तरम् तद्वदिहापि प्रचारविप्रकर्षो न कर्मान्तरमिति।

(५) सिद्धान्तः—प्रचारविप्रकर्षमात्रं यदि स्यात्तर्हि अवभृथशब्दो व्यर्थः स्यात्। तस्मात् कर्मान्तरमेवावभृथ इति।

एतदभिप्रेत्याह–निष्कास इति। 'निष्कासः' वारुण्या निष्कासेनानुष्ठेयं यत् कर्म विहितं तत्–'अवभृथात्'–'भिन्न' एवेत्यर्थः॥ १५॥

## (१६) ११।२।६४–६६ चरुशेषोऽङ्गमुत्तरे।

(१) पूर्वाधिकरणापवादः।

(२) ज्योतिष्टोमे श्रूयते—'प्रायणीयस्य निष्कासे उदयनीयमभिनिर्वपति' इति।

(३) तत्र संशयः—किमत्र निष्कासद्रव्यकम् उदयनीयसमानधर्मकं कर्मान्तरं विहितम्–उत उदयनीयस्यैव संस्कारकमङ्गमिति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन कर्मान्तरमिति।

(५) सिद्धान्तः—उदयनीयमेवात्र मुख्यं प्रकृतम्। तस्यैव संस्कारकमङ्गमिति।

एतदभिप्रेत्याह—चर्विति। 'चरुशेषः' निष्कासः—'उत्तरे' उदयनीये–'अङ्गम्' संस्कारकम्–न तु कर्मान्तरमिति भावः॥ १६॥

पादेऽस्मिन् षोडश न्याया मुनिना सम्प्रकीर्तिताः।

स्पष्टम्।

इत्येकादशस्य द्वितीयः।

# अथैकादशस्य तृतीयः पादः।

[ तन्त्रस्य प्रपञ्चः ]

## (१) ११।३।१ वाक्यादङ्गे देशकालादिभेदः

(१) तन्त्रे प्रासङ्गिको विचारः प्रवर्तते–तस्यैव प्रपञ्चरूपेण।

(२) वेदिः वेदः (कुशमुष्टिः), बर्हिः—इत्यादीनि भवन्ति सम्पादनीयानि। एतच्च सम्पादनं कर्माङ्गम्।

(३) तत्र संशयः—किमेतत् प्रधानकर्मण एव काले स्यादुत कर्मणां स्वस्वकाले एवेति।

( ४ ) पूर्वपक्षः—अङ्गानां प्रधानकालत्वं प्रधानदेशत्वं प्रधानकर्तृकत्वं च स्थितमेकादशाध्यायद्वितीयपादे । अतोऽत्रापि प्रधानकाल एव कर्तव्यमिति ।

( ५ ) सिद्धान्तः—क्वचित् कालादिभेदः श्रुत्यैवोच्यते । तथाहि 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति कालभेदः–'अप्स्ववभृथं चरन्ति' इति देशभेदः–अग्नौ सौत्रामण्यां च दक्षिणाभेदात् कर्तृभेदः । तस्माद् वाचनिकाः कालादयस्तत्र स्वस्वकालादावेवानुष्ठानमिति ।

एतदभिप्रेत्याह वाक्यादिति । 'अङ्गे' अनुष्ठेय–'वाक्यात्' प्रत्यक्षश्रुतिबलात्–'देशकालादिभेदः' देशभेदः कालभेदः कर्तृभेदश्च–स्यादिति शेषः । यत्र देशादिभेदविधायकं प्रत्यक्षवचनमुपलभ्यते तत्र भवत्येव भेद इत्याशयः ॥ १ ॥

(२) ११।३।२ सर्वेषां स्यात् तन्त्रमाधानमेकम् ।

( १ ) तन्त्रोदाहरणम् ।

( २ ) अस्ति आधानम्—'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति । एतच्चाधानमाहवनीयसम्पादनद्वारेण सकलकर्मकलापस्योपकारकमित्यभ्युपगमः ।

( ३ ) तत्र सन्देहः—किमिदमाधानं प्रतिकर्म भेदेन क्रियते–उत सकृदेव तन्त्रेणेति ।

( ४ ) पूर्वपक्षः—प्रयाजाद्यङ्गवत् प्रतिकर्म पृथगेव कार्यमिति ।

( ५ ) सिद्धान्तः—आधानस्य स्वतन्त्रेण वसन्तादिकालो विहितः । न च तत्कालानुष्ठानं सम्भवेद् यदि प्रतिकर्माधानं क्रियेत । स्वकाले तु कृतस्याधानस्य सकलकर्मसम्बन्धः सम्भवति । तस्मात् सकृदेव तन्त्रेणानुष्ठानमिति ।

एतदभिप्रेत्याह सर्वेषामिति । 'सर्वषां' ऐष्टिक–पाशुक–सौमिक–दार्विहोमिकानां कर्मणाम्–उपकाराय–'आधानम्' अग्न्याधानकर्म–'एकम्' एव–'तन्त्रम्' सकृदेव सर्वोपकारकत्वेन अनुष्ठितं–'स्यात्'–न तु प्रतिकर्म भेदेनानुष्ठीयेतेत्याशयः ॥ २ ॥

(३) ११।३।३–४ तन्त्रं यूपः स्यात् पशूनां त्रयाणाम्

( १ ) तन्त्रोदाहरणम् ।

( २ ) ज्योतिष्टोमेऽग्नीषोमीय–सवनीयानुबन्ध्यास्त्रयः पशवो विहिताः । पशोश्च यूपः श्रुतः ।

( ३ ) तत्र संशयः—किं त्रयाणां पशूनामेक एव यूपस्तन्त्रमुत प्रतिपशु भिन्न इति ।

( ४ ) पूर्वपक्षः—अग्नीषोमीये प्रत्यक्षश्रुतो यूपः । इतरयोस्त्वतिदेशेन

प्राप्तः तस्मात् प्रतिपशु भिन्न एव यूप इति ।

( ५ ) सिद्धान्तः—यूपस्योत्पत्तिर्नाग्नीषोमीयकाले—अपि तु ततः प्रागेव–'दीक्षासु यूपं छिनत्ति क्रीते वा राजनि' इति भिन्नः तस्य कालो विहितः । तस्मादाधानवत् सर्वार्थत्वं यूपस्य सम्भवति । तस्मादेक एव यूपः त्रयाणामपि पशूनां तन्त्रेणोपकरोतीति ।

एतदभिप्रेत्याह तन्त्रमिति । 'त्रयाणाम्' अग्नीषोमीयसवनीयानुबन्ध्यानाम्–'पशूनाम्'–'यूपः'–'तन्त्रम्'–स्यात्'–एक एव त्रयाणामप्युपकरोतीत्यर्थः ॥ ३ ॥

## (४) ११।३।५–७ तत्संस्काराश्चापि तन्त्रन्न भिन्नाः ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) सन्ति तक्षणपर्यूहणादयो यूपसंस्काराः ।

( ३ ) तेषु संशयः—किमेते प्रतिपशु भेदेनानुष्ठेया उत सकृदेव तन्त्रेणेति ।

( ४ ) पूर्वपक्षः—पशुकालीनत्वात् संस्काराणां ते प्रत्येकपशोः काले एव कर्तव्याः इति भेदेनैवानुष्ठानमिमि ।

( ५ ) सिद्धान्तः—छेदनवत् तक्षणाद्यपि यूपकालीनं न पशुकालीनम् । तस्मात् त्रिष्वपि पशुषु यूपच्छेदनवत् तक्षणपर्यूहणादिकमपि तन्त्रेणैवानुष्ठेयमिति ।

एतदभिप्रेत्याह तदिति । 'तत्संस्काराः'–'तस्य' यूपस्य 'संस्काराः' तक्षणादयः–'च' अपि'–'तन्त्रम्' तन्त्रेण सकृदेवानुष्ठेयाः–'न भिन्नाः' न प्रतिपशुभेदेनानुष्ठेया इत्याशयः ॥ ४ ॥

## (५) ११।३।८–१२ स्वर्वैकत्वं स्यात् त्रयाणां पशूनाम्

( १ ) तन्त्रोदाहरणम् ।

( २ ) 'यूपस्य स्वरुं करोति' इति स्वरुः श्रुतः । ['स्वरुः' यूपकाष्ठस्य प्रथमपतितेन शकलेन निर्मितो यूपस्याञ्जनसाधनरूपः] ।

( ३ ) तत्र संशयः–अयं स्वरुः किं प्रतिपशु भिन्नः उत तन्त्रम् इति ।

( ४ ) पूर्वपक्षः—भिन्नेषु पशुषु भिन्न एव सम्पादनीयः स्वरुः । नास्ति यूपस्येव स्वरोः कश्चित् स्वकालः । यूपाञ्जनकालीनो हि सः । तस्माद् भेद इति ।

( ५ ) सिद्धान्तः—'यः प्रथमः शकलः परापतेत् स स्वरुः कार्य' इत्युक्तम् । एतच्च प्राथम्यमेकस्मिन्नेव शकले सम्भवति । स च शकलो यूपकालीन एव स्यात् । तस्मात् यूपवत् तन्त्रेणैव सर्वान् पशूनुपकरोतीति ।

एतदभिप्रेत्याह—स्वर्विति । 'त्रयाणाम्' अपि—'पशूनाम्'—'स्वर्वै-

कत्वं' स्वरोः एकत्वम् तन्त्रेण सर्वोपकारकत्वं—'स्यात्'। न तु पशुभेदेन भेद इत्यर्थः॥ ५॥

(६) ११।३।१३-१४ प्रास्येदन्त्याहे विषाणां गणस्य

(१) तन्त्रप्रसङ्गेनैव विचारः।

(२) ज्योतिष्टोमे श्रूयते—'कृष्णविषाणया कण्डूयते'—नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति—कृष्णविषाणायाः प्रासनम्। तच्च चोदकेन अहर्गणे प्राप्तम्।

(३) तत्र सन्देहः—एतत् प्रासनं किमन्त्ये प्रथमे वाऽहनि विकल्पेन कार्यमुतान्त्ये एवेत नियम इति।

(४) पूर्वपक्षः—विकल्पः समबलत्वादिति।

(५) सिद्धान्तः—प्रथमेऽहनि यदि प्रासनं स्यात् तर्हि अन्येषु अहःसु कृष्णविषाणया कण्डूयनं न सम्भवेत्। तस्मात् अन्त्येऽहन्येव प्रासनमिति नियम इति।

एतदभिप्रेत्याह—प्रास्येदिति। 'गणस्य' अहर्गणसम्बन्धिनीं—'कृष्णविषाणां' कण्डूयनार्थां—'अन्त्याहे' अन्त्येऽहनि—'प्रास्येत्' चात्वाले प्रक्षिपेदित्यर्थः॥ ६॥

(७) ११।३।१५ अन्त्ये बीजे वाग्यमस्य प्रहाणम्

(१) प्रासङ्गिको विचारो वर्तते।

(२) सन्ति राजसूये नानाबीजयुक्ता यागाः—'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीनां—सोमाय वनस्पतये श्यामाकं चरुम्' इत्यादि। प्रकृतौ च प्रणीताप्रणयनकाले नियमिताया वाचो विसर्गो हविष्कृदाह्वानकाले श्रुतः। स च वाग्विसर्गोऽत्र राजसूये चोदकप्राप्तः।

(३) तत्र संशयः—अयं वाग्विसर्गः किमन्त्ये प्रथमे वा हविष्कृदाह्वानकाले कर्तव्य इति विकल्पः—उतान्त्ये एवेति नियम इति।

(४) पूर्वपक्षः—विकल्प इति।

(५) सिद्धान्त—अन्त्ये एवेति।

एतदभिप्रेत्याह—अन्त्य इति। 'बीजे' नानाबीजयुक्ते राजसूययागे—'वाग्यमस्य' वाङ्नियमनव्रतस्य—'प्रहाणम्' परित्यागः—'अन्त्ये' चरमे हविष्कृदाह्वानकाले एव—'स्यात्' इति नियम एवेत्यर्थः॥ ७॥

(८) ११।३।१६ पौरोडाशो वाग्विसर्गः पशौ चेत्।

(१) प्रासङ्गिको विचारः।

( २ ) वाग्विसर्गो राजसूये कदा स्यादिति स्थितम्–अग्निषोमीयपशौ च पशुः पुरोडाशश्चेत्युभयम् ।

( ३ ) तत्रापि वाग्विसर्गविषये संशयः–किं पाशुककर्माङ्गहविष्कृदाह्वानकाले वाग्विसर्गः–उत पौरोडाशिककर्माङ्गहविष्कृदाह्वानकाले इति ।

( ४ ) पूर्वपक्षः—पाशुककर्माङ्गहविष्कृदाह्वानकाले एव वाग्विसर्गः । पुरोडाशस्य प्रासङ्गिकत्वेन पशावनुष्ठितैरेवाङ्गैरुपकारसिद्धेरिति ।

( ५ ) सिद्धान्तः—वाग्यमो न फलार्थः–किन्तु तत्कर्तृसंस्कारार्थः । तथासति पुरोडाशे यदि तदभावः स्यात् तर्हि असंस्कृतेन कर्त्रा तदनुष्ठानं प्रसज्येत । तस्मात् पश्चाद्भाविपौरोडाशिकाङ्गहविष्कृदाह्वानकाले एव वाचं विसृजेदिति ।

एतदभिप्रेत्याह पौरोडाश इति । 'पशौ' अग्नीयोमीयपशौ–'चेत्' यदि हविष्कृत् स्यात् तर्हि–'वाग्विसर्गः' 'पौरोडाशः'–पौरोडाशिकहविष्कृदाह्वानकालिक एव स्यादित्यर्थः ॥ ८ ॥

## (६) ११।३।१७-२० साङ्गस्यादावन्ततो योगमोकौ

[ वार्तिकमतेनाधिकरणप्रदर्शकः पाठः ]

[ आदावन्ते योगमोकौ प्रधाने–पाठान्तरं भाष्यमतेनाधिकरणप्रदर्शकम् ]

( १ ) प्रासङ्गिको वर्तते ।

( २ ) अग्निचयनेऽग्नेर्योगविमोकौ श्रुतौ–'अग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेवैतत् युनक्ति' इति होमो 'योगः'–'इमं स्तनं मधुमन्तं धयायाम् इत्यग्निविमोकं जुहोति' इति 'विमोकः' ।

( ३ ) तत्र संशयः—अयमग्निविमोकः किं साङ्गप्रधानार्थः साङ्गप्रधानस्य समाप्तौ कर्तव्यः–उत प्रधानमात्रार्थः प्रधानस्यैव समाप्तौ कर्तव्य इति ।

( ४ ) पूर्वपक्षः—'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमाप्नोति' इत्यनेन यज्ञप्राप्त्यर्थं युनक्तीति ज्ञायते । ततश्च प्रधानार्थो योग इति द्योत्यते । एवं च सति विमोकोऽपि प्रधानार्थ एव प्रधानस्यैवावसाने कर्तव्य इति ।

( ५ ) सिद्धान्तः—'अग्निं युनज्मि' इत्यादिवाक्यं योगविधायकम् । तत्र प्रधानसम्बन्धद्योतकं किमपि नोपलभ्यते । 'पञ्चभिर्युनक्ति' इत्यस्मिन् वाक्येऽपि सामान्याभिधायी यज्ञशब्द एव प्रयुक्तः–एवं च तत्रापि प्रधानमात्रसम्बन्धद्योतकं न किञ्चिदस्ति । तस्मात् योगस्य साङ्गप्रधानार्थत्वे सिद्धे विमोकस्यापि तथैवेति ।

एतदभिप्रेत्याह साङ्गेति। 'साङ्गस्य' अङ्गैस्सहितस्य, न केवलस्य- 'आदौ' 'अन्ततः' योगविमोकौ-'आदौ योगः अन्ते विमोकः' इति यथाक्रमं सम्बन्धः।

तदेतद् वार्तिककारमतेनाधिकरणस्वरूपम्।

भाष्यकारमतेन त्वधिकरणस्वरूपमन्यथा भवति। तत्र पूर्वोक्तयोः पूर्वपक्षसिद्धान्तयोर्व्यतिक्रमः प्रधानस्यैवादौ योगः इति पूर्वपक्षः-प्रधानस्यैवान्ते विमोक इति सिद्धान्तः॥ एतदनुसारी च कारिकाया अपि पाठः क्वचिदुपलभ्यते-'आदावन्ते योगमोकौ प्रधाने' इति। प्रधाने एव केवले-आदौ योग अन्ते मोक इति सम्बन्धः॥ ६॥

## (१०) ११।३।२१ सुब्रह्मण्याऽहर्गणे तन्त्रमादौ।

(१) तन्त्रचिन्ता वर्तते।

(२) द्वादशाहे उपसत्काले सुब्रह्मण्याह्वानं विहितम्।

(३) तत्र संशयः—किमेतत् तन्त्रेणाहःसु कर्तव्यमुत भेदेनेति।

(४) पूर्वपक्षः—प्रधानभेदाद् भेदेन कर्तव्यमिति।

(५) सिद्धान्तः—आह्वानस्य पूर्वकालीनतया तृतीयाधिकरणीययुक्त्यायेन तन्त्रेणैवानुष्ठानमिति।

एतदभिप्रेत्याह—सुब्रह्मण्येति। 'अहर्गणे' द्वादशाहे-'आदौ' कर्मणः प्राक् पृथक्काले कर्तव्या या-'सुब्रह्मण्या' सुब्रह्मण्याह्वानम्-सा-'तन्त्रम्' तन्त्रेणानुष्ठेयेति॥ १०॥

## (११) ११।३।२२-३२ आवर्तेताह्वानमह्नां समूहे

(१) पूर्वाधिकरणापवादः।

(२) द्वादशाह एव उपसत्कालात् अन्यत्र सुत्याकालेऽपि सुब्रह्मण्याह्वानं विहितम्।

(३) तत्र संशयः—किमिदं तन्त्रेणोत भेदेनेति।

(४) पूर्वपक्षः—प्रथमसुत्यासन्निधौ कृतमपि आह्वानं तन्त्रेण सर्वेष्वहस्सूपकरोति इति।

(५) सिद्धान्तः—एकसुत्याकालीनेनाह्वानेन नास्त्यन्यत्रोपकारः। तस्माद् भेदेनाह्वानमिति।

एतदभिप्रेत्याह—आवर्तेतेति। 'अह्नां समूहे' अहर्गणे-'आह्वानं' सुब्रह्मण्याह्वानं सुत्याकालीनं-'आवर्तेत' कर्मभेदे भेदेनानुष्ठीयेतेत्यर्थः॥११॥

## (१२) ११।३।३३ देशः कर्ताऽन्यः स चान्यप्रयोगे।

(१) तन्त्रचिन्ता वर्तते।

( २ ) श्रौतेषु कर्मसु देशकर्त्रादयः सन्ति-'समे यजेत' 'चत्वार ऋत्विजः'-इत्येवमादयः।

( ३ ) तेषु संशयः—किम्प्रतिप्रयोगमन्यानि कर्त्रादीन्युपादेयानि-उत यान्येकस्मिन् प्रयोगे उपयुक्तानि तानि वाऽन्यानि वा उपादाय प्रयोगा अनुष्ठेया इति।

( ४ ) पूर्वपक्षः—भोजनादौ यथा कदलीपत्रादिकमुपयुक्तं न पुनरुपयुज्यते तथैव यान्येकस्मिन् प्रयोगे कृतोपयोगानि तेषां पुनरुपयोगो न कार्य इति।

( ५ ) सिद्धान्तः—यथा वस्त्रम्पूर्वस्मिन् दिने परिहितमपि दिनान्तरेऽपि परिधानयोग्यं भवति तद्वदिहापि। तस्मात् एकम्प्रयोगं समाप्य प्रयोगान्तरे कृतोपयोगानि वाऽन्यानि वा देशादीनि यथेच्छमुपादेयानीति।

एतदभिप्रेत्याह—देश इति। 'अन्यप्रयोगे' एकप्रयोगसमाप्त्यनन्तरं यत् प्रयोगान्तरं भवति तस्मिन्-'देशः' स्थानं-'कर्ता' अनुष्ठाता च-'स' पूर्वप्रयोगकर्ता पूर्वप्रयोगदेशः-'च' वा स्यात्-अथवा 'अन्यः' ताभ्यां भिन्न एव देशः कर्ता च स्यात्। अत्र न कोऽपि नियमः-स एव स्यात् अन्य एव वा-यथेच्छं देशादिकमुपादाय प्रयोगोऽनुष्ठेय इत्याशयः॥ तथा च देशस्य कर्तुश्च तन्त्रमपि भवत्यतन्त्रमपीति॥ १२॥

## (१३) ११।३।३४-४२ पात्राणां स्याद्ध धारणं सर्वकाले

( १ ) पूर्वविचारशेषः तदपवादरूपः।

( २ ) देशकर्त्रोः सामान्येनान्यत्वनियमो नास्तीति स्थितम्। पात्रेष्विदानीं विचारः।

( ३ ) तत्र संशयः—प्रथमप्रयोगे यानि पात्राण्युपयुक्तानि किं तान्येव प्रयोगान्तरेऽप्युपयोज्यानि-उत पात्रान्तराण्युपादेयानि इति।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन नास्ति नियमः—यथेच्छं कर्तव्यमिति।

( ५ ) सिद्धान्तः—'आहिताग्निमिर्दहन्ति यज्ञपात्रैश्च' इति मरणानन्तरं पात्राणां प्रतिपत्तिरुक्ता तेषामामरणं धारणीयत्वं द्योतयति। एवं च त्यागानर्हत्वात् पात्राणामुपयोगः सर्वेषु प्रयोगेषु न्याय्यः। तस्मात्तान्येव पात्राण्युपयोज्यानि-इति नियम एव। एवं च पात्राणामस्ति तन्त्रमिति।

एतदभिप्रेत्याह पात्राणामिति। 'पात्राणां' यज्ञियानां-'सर्वकाले' आमरणं-'धारणं' यत्नेन रक्षणं-'स्यात्' कर्तव्यम्। तस्मात् प्रयोगान्तरेषु तान्येवोपयोज्यानीति नियम इत्याशयः॥ १३॥

(१४) ११।३।४३-४५ तेषामग्न्याधानतो धारणं स्यात्।

(१) पूर्वाधिकरणशेषः।

(२) पात्राणां धारणमावश्यकम्—तस्य चोत्तरोऽवधिः मरणमिति स्थितम्। प्रथमावधिविषये

(३) संशयः—कदा आरभ्य पात्राणां धारणम्-किं पौर्णमासीमारभ्य उत अग्न्याधानमारभ्येति।

(४) पूर्वपक्षः—अनारभ्याधीतानां पात्राणां प्रकृतिगामितया पौर्णमासीमारभ्य धारणमिति।

(५) सिद्धान्तः—आधानकाले पवमानेष्टिषु भवन्ति पात्राणि चोदकप्राप्तानि। तस्मादाधानकालमारभ्यैव धारणम्। अन्यथा आधानपौर्णमास्योर्मध्ये यजमानस्य मरणे पात्राभावात् पात्रैस्सह दाहो न सम्भवेदिति।

एतदभिप्रेत्याह—तेषामिति। 'तेषाम्' पात्राणां-'धारणं'-'अग्न्याधानतः' अग्न्याधानमारभ्य-स्यात्-आमरणमिति ॥ १४ ॥

(१५) ११।३।४६-५२ प्राजापत्याः सर्वसोमोपरिष्टात्

(१) तर्कप्रसङ्गेनानुष्ठानकालविचारः।

(२) वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते-'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इति। प्रयोगक्रमश्चेत्थम्-तृतीयसवने प्रथमम् आर्भवः पवमानः-ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः-ततोऽशस्त्रिषु अवशिष्टेषु सोमग्रहेषु अग्निष्टोमसाम्नः ऊर्ध्वम् उक्थ्यादयः सोमविकारा इति।

(३) एवं क्रमे सति प्राजापत्यप्रचारविषये भवति संशयः—किमयम्प्रचारः सर्वेषां सोमानामुपरिष्टात् भवति—उत उक्तानां त्रयाणां कालानामन्यतमे काले इति।

(४) पूर्वपक्षः—आर्भवकाले स्यात्-प्रकृतौ हि स एव प्रचारकालः ॥—अथवा शस्त्रवतां वैश्वदेवग्रहान्तानां सोमानामुपरिष्टात् स्यात्-॥ अथवा अग्निष्टोमसाम्नोऽन्ते स्यात्—तस्यैव विकृतिकालत्वादिति।

(५) सिद्धान्तः—अविशेषमेव वचनं श्रूयते। तस्मात् प्राकृतानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात् प्राजापत्यपशुप्रचार इति।

एतदभिप्रेत्याह—प्राजापत्या इति। 'सर्वसोमोपरिष्टात् सर्वेषां प्राकृतानां वैकृतानां च सोमानाम् उपरिष्टात्-'प्राजापत्याः' पशवः—प्रचारिताः स्युरिति शेषः ॥ १५ ॥

(१६) ११।३।५३-५४ उत्कर्षेरन् देवताः सूक्तवाके।

( १ ) तन्त्रप्रसङ्गेन देवतोत्कर्षविचारः ।

( २ ) ज्योतिष्टोमे सवनीयपशुस्तन्त्री, सवनीयपुरोडाशः प्रसङ्गी। तस्मिन् पुरोडाशे देवता आम्नाताः–'भृज्जमिन्द्राय, हरिवते धानाः, पूषण्वते करम्भम्' इत्यादिना । सवनीयपशोश्चानुयाजा उत्कृष्यन्ते। उत्कृष्टेषु चानुयाजेषु तदुत्तरकालीनः सूक्तवाकोऽप्युत्कृष्यते । तस्मिंश्चोत्कृष्टे सूक्तवाके देवतावाचीनि पदानि प्रयोक्तव्यानि ।

( ३ ) तत्र संशयः—किं पशुसम्बन्धिसूक्तवाकोत्कर्षेण पुरोडाशसम्बन्धिदेवतावाचकपदानामुत्कर्षो भवति न वेति ।

( ४ ) पूर्वपक्षः—न भवत्युत्कर्षः–तासां देवतानां पश्वनङ्गत्वादिति ।

( ५ ) सिद्धान्तः—सूक्तवाकमन्तरेण पृथगुच्चरितानां पौरोडाशिकदेवतावाचिपदानामन्वयो न स्यात्–सूक्तवाके त्वस्त्यन्वयः । तस्मादस्त्युत्कर्ष इति ।

एतदभिप्रेत्याह—उत्कृष्येरन्निति । 'सूक्तवाके' उत्कृष्टे सति–'देवताः' पौरोडाशिकदेवतावाचिशब्दा–'उत्कृष्येरन्' इति सम्बन्धः ॥ १६ ॥

अस्मिन् पादे भाष्यकारेण सम्यक्

प्रोक्ता न्याया धीमता षोडशैव ॥

स्पष्टम् ।

इत्येकादशस्य तृतीयः ।

---

# अथैकादशस्य चतुर्थः पादः ।

[ आवापप्रपञ्चः ]

## (१) ११।४।१-२ भृतिभेदे तन्त्रभेदः

( १ ) तन्त्रचिन्ता पर्यवसिता । आवापचिन्तेदानीं प्रपञ्च्यते ।

( २ ) राजसूये श्रूयन्ते अनुक्तदेशकालानि प्रधानानि–'आग्नावैष्णव एकादशकपालः–ऐन्द्रावैष्णवश्चरुः' इत्यादीनि ।

( ३ ) तत्र संशयः—एतेषु अङ्गानामनुष्ठानं किं तन्त्रेणोत भेदेनेति ।

( ४ ) पूर्वपक्षः—कृत्स्नस्य राजसूयस्य फलैक्येनैतेऽप्येकफलकाः । तेन तन्त्रमेवेति ।

( ५ ) अस्ति चैतेषु दक्षिणाभेदस्तेन च कर्तृभेदः । तस्माद् भेदेनैवानुष्ठानमङ्गानामिति ।

एतदभिप्रेत्याह—भृतीति । 'भृतिभेदे' 'भृतिः' दक्षिणा तस्याः 'भेदे'

सति-'तन्त्रभेदः' 'तन्त्राणाम्' अङ्गानाम् 'भेदः' भेदेनानुष्ठानं-स्यादिति शेषः ॥ १ ॥

(२) ११।४।४-८ नर्त्विग्भेदो नृपक्रतौ ।

(१) पूर्वाधिकरणापवादः ।

(२) राजसूये एव पुनः

(३) संशयः—उपक्रमे ये कर्तारस्त एवान्तपर्यन्तमुतान्ये इति ।

(४) पूर्वपक्षः—य एवादौ त एवान्तपर्यन्तमिति नास्ति नियमः । दक्षिणाभेदः श्रूयते । एवं च सति यया दक्षिणया यः क्रीतः स तावदेव कर्मानुष्ठास्यति, इतरस्मिंस्तु कर्मण्यन्यः कर्ता भविष्यति इति ।

(५) सिद्धान्तः—'अनेन कर्मसमुदायेन राजसूयाख्येन मां याजय' इत्येवं यजमानेन वृतत्वात् आसमाप्तेस्त एव कर्तारः । ईदृशमेवं च वरणं न्याय्यम्-समुदायस्यैकफलकत्वात् । प्रतिकर्मपृथग्वरणे च वृथा गौरवं स्यात् । दक्षिणाभेदस्तु कर्मभेदेऽपि सम्भवति । तस्मात्त एव कर्तार इति नियम इति ।

एतदभिप्रेत्याह—नेति । 'नृपक्रतौ' राजसूये-'ऋत्विग्भेदः' ऋत्विजां वृतानां भेदः-'न' भवति । तस्माद् य एवादौ कर्तारस्त एवान्तपर्यन्तं कर्तार इत्याशयः ॥ २ ॥

(३) ११।४।९-११ अवेष्टौ न क्रतौ तन्त्रम्

(१) आवापोदाहरणम् ।

(२) सन्ति राजसूयेऽवेष्टय एवमाम्नाताः—'आग्नेयमष्टाकपालं निर्वपति, हिरण्यं दक्षिणा-ऐन्द्रमेकादशकपालम्, ऋषभो दक्षिणा-वैश्वदेवं चरुम्, पिशङ्गी षष्ठौही दक्षिणा-मैत्रावरुणीमामिक्षाम्, वशा दक्षिणा-बार्हस्पत्यं चरुम्, शितिपृष्ठो दक्षिणा' इति ।

(३) तत्र सन्देहः—अवेष्टिष्वङ्गानामनुष्ठानं तन्त्रेणोत भेदेनेति ।

(४) पूर्वपक्षः—प्रयोगैक्यात् कर्मैक्यम् । तस्मात्तन्त्रमिति ।

(५) सिद्धान्तः—उत्पत्तिवाक्ये दक्षिणाभेदस्य श्रुतत्वात् प्रयोगभेदः । तस्माद् भेदेनाङ्गानुष्ठानमिति ।

एतदभिप्रेत्याह-अवेष्टाविति । 'अवेष्टौ' यागे-'क्रतौ' प्रयोगे, अनुष्ठाने-'तन्त्रम्' 'न'-भवतीति शेषः । तस्मादङ्गानाम्भेदेनैवानुष्ठानमवेष्टाविस्याशयः ॥ ३ ॥

(४) ११।४।१२-१५ पवमानेष्टितन्त्रता ।

(१) तन्त्रोदाहरणम् ।

( २ ) सन्त्याधाने पवमानेष्टयः–'अग्नये पवमानायाष्टाकपालं निर्वपेत्–अग्नये पावकाय–अग्नये शुचये' इति।

( ३ ) तत्र संशयः—एतासु किमङ्गानां तन्त्रमुत भेद इति।

( ४ ) पूर्वपक्षः—एवं हि वचनं भवति–'यः कामयेत–उत्तरं वसीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरुप्याथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्' इति। अत्र च स्पष्टं भेदेनानुष्ठानमुच्यते। तस्माद् भेदेनानुष्ठानमिति।

( ५ ) सिद्धान्तः—त्रिभिर्हविर्भिः साध्यस्याग्नेरेकत्वात् देशाद्यभेदाच्च तन्त्रेणैवानुष्ठानमिति। उदाहृतं च वचनं काम्यपवमानेष्टिपरम्। तस्मान्नित्येऽनुष्ठाने तन्त्रमेवेति।

एतदभिप्रेत्याह—पवमान इति। 'पवमानेष्टौ' 'तन्त्रता' तन्त्रेणाङ्गानुष्ठानं स्यादिति शेषः॥ ४॥

## (५) ११।४।१६-२३ स्वस्थानवृद्धिर्दीक्षादेः

( १ ) प्रावापोदाहरणम्।

( २ ) अस्ति द्वादशाहः–'द्वादशाहेन प्रजाकामं याजयेत्' इति। तत्र एकैकमहः पृथक् कर्म। तस्मिंश्च सदीक्षस्य सोपसत्कस्य ससुत्यस्य ज्योतिष्टोमस्य विध्यन्तोऽतिदिष्टः। अतिदिष्टानामुपसदां दीक्षाणां च प्राकृतसङ्ख्याबाधनाय पृथग् द्वादशत्वं श्रुतम् 'द्वादश दीक्षाः द्वादशोपसदः' इति।

( ३ ) तत्र संशयः—किं दीक्षार्थं द्वादशदिनानि–उपसदर्थं द्वादश–सुत्यार्थमेकम्–इति पञ्चविंशतिरेकस्मिन्नहर्योगे। एवं च द्वादशाहे द्वादशधा आवृत्त्या शतत्रयं सम्पद्यते–उत द्वादश दीक्षाः द्वादश उपसदः इत्यङ्गयोर्मुख्यवत् पृथग् द्वादशत्वश्रुत्या षट्त्रिंशद्दिनानि इति।

( ४ ) पूर्वपक्षः—शतत्रयमिति।

( ५ ) सिद्धान्तः—षट्त्रिंशदिति।

एतदभिप्रेत्याह—स्वेति। द्वादशाहे–'दीक्षादेः' दीक्षा उपसत् इत्यादेः–'स्वस्थाने' एव 'वृद्धिः'–द्वादश दीक्षाः द्वादश उपसद इत्येवं क्रमेणैव प्राकृतसङ्ख्याविवृद्धिरित्यर्थः॥ ५॥

## (६) ११।४।२४-२७ सुत्याहाङ्गम्पृथग् भवेत्।

( १ ) पूर्वाधिकरणशेषः।

( २ ) प्रधानात् पृथक्कालान्यङ्गानि द्वादशाहस्य विचारितानि। सन्ति च कानिचिदङ्गानि प्रधानैरपृथक्कालानि सुत्याहाङ्गानि।

( ३ ) तत्र सन्देहः—किमेतेषां तन्त्रेणानुष्ठानमुत भेदेनेति।

( ४ ) पूर्वपक्षः—'द्वादशाहेन प्रजाकामं याजयेत्' इति प्रयोगैक्यावगमात् सकृदेवानुष्ठानम् । तस्मात् तन्त्रमिति ।

( ५ ) सिद्धान्तः—दीक्षादीन्यन्यस्मिन् कालेऽनुष्ठेयानि । सुत्याहाङ्गानि तु प्रधानसमकालानि । तस्माद् भेदेनानुष्ठानमिति ।

एतदभिप्रेत्याह—सुत्येति । 'सुत्याहाङ्गम्' 'पृथक्' 'भवेत्'–अस्य भेदेनैवानुष्ठानमित्यर्थः ॥ ६ ॥

(७) ११।४।२८–२९ गाने नाह्नां पृथग्भावः

( १ ) तन्त्रोदाहरणम् ।

( २ ) उपसत्काले यत् सुब्रह्मण्याह्वानं प्रकृतावस्ति तद् द्वादशाहे चोदकप्राप्तम् । तस्य प्रधानकालादन्यः काल इति कृत्वा तन्त्रं पूर्वं निर्णीतं तृतीयपादीयदशमेऽधिकरणे । इदानीमन्य ऊहरूपो विकारस्तन्त्रावापपर्यवसायी विचार्यते । प्रकृतौ प्रथमोपसद्दिनमारभ्य त्रयोदशेऽह्नि प्रथमसुत्या—चतुर्दशेऽह्नि द्वितीयसुत्या—इत्येवंक्रमेण चतुर्विंशेऽह्नि चरमसुत्या भवति । तथा च प्रकृतौ 'चतुरहः' इति सङ्ख्याविशिष्टेनाहःशब्देन सुत्याया उपलक्षणम्—'चतुरहे सुत्यामागच्छ मघवन्' इति हि सुब्रह्मण्याह्वाने ।

( ३ ) तत्र संशयः—विकृतियागे द्वादशाहे यदाऽयमाह्वानमन्त्रः प्रयुज्यते तदा किं त्रयोदशचतुर्दशादिसङ्ख्यानामूहरूपो विकारो भवति—ततश्चाह्वानस्य द्वादशकृत्वो भेदेनानुष्ठानादावापः—उताविकृतरूपेणैव प्रयोगस्तथा च तन्त्रमेवेति ।

( ४ ) पूर्वपक्षः—अहःसङ्ख्याया ऊहनीयत्वेन विकारः ततश्च भेदेनानुष्ठानमिति ।

( ५ ) सिद्धान्तः—सुत्याकारेण द्वादशाहस्यैकत्वम् । तस्मान्नोहः । तस्मात्तन्त्रमेवेति ।

एतदभिप्रेत्याह—गान इति । 'गाने' सुब्रह्मण्याह्वाने—'अह्नाम्' सुत्याह्नानाम्—'पृथग्भावः' भेदेनानुष्ठानं—'न' भवति—अपि तु तन्त्रेणैवेति भावः ॥ ७ ॥

(८) ११।४।३० कुम्भ्येका पशुसंहतौ ।

( १ ) तन्त्रोदाहरणम् ।

( २ ) वाजपेये सन्ति सप्तदश प्राजापत्याः पशवः । अपेक्ष्यन्ते च तत्र कुम्भीशूलादयः ।

( ३ ) तत्र सन्देहः—किं कुम्भीशूलादीनां प्रतिपशु भेद उत तन्त्रमिति ।

( ४ ) पूर्वपक्षः—पश्वङ्गानां भिन्नत्वाद् भिन्नाः स्युरिति ।

(५) सिद्धान्तः—एकैव कुम्भी शूलं वा—सर्वपशूनां श्रपणादौ प्रभवति। तस्मात्तन्त्रमिति।

एतदभिप्रेत्याह—कुम्भीति। 'पशुसंहतौ' अनेकपशूनां समूहेऽपि—'कुम्भी'—'एका' एव—तस्मात्तन्त्रमत्रेत्याशयः ॥ ८ ॥

## (९) ११।४।३१-३२ एकैव भिन्नदैवत्ये

(१) पूर्वाधिकरणशेषः।

(२) सन्त्येकादशिनाः पशवो भिन्नदेवताकाः।

(३) तत्र संशयः—अत्रापि कुम्भ्यास्तन्त्रमुत भेद इति।

(४) पूर्वपक्षः—एकत्वे सति सम्प्रदानदेवतानां साङ्कर्यप्रसङ्गात् भिन्नैव कुम्भी प्रतिपशिवति।

(५) सिद्धान्तः—चिह्नकरणमात्रेण साङ्कर्यनिवारणस्य सुकरत्वात् लाघवात् एकैव कुम्भी इति।

एतदभिप्रेत्याह—'भिन्नदैवत्ये' भिन्नदेवताकेऽपि पशौ—'एका एव' कुम्भीति शेषः ॥ ९ ॥

## (१०) ११।४।३३-३६ वसार्थमपि नो पृथक्।

(१) पूर्वाधिकरणशेषः।

(२) एकादशिनेष्वेव पशुषु वसाहोमे—

(३) संशयः—वसाकरणे किं प्रतिपशु भिन्ना कुम्भी—उतैकवेति।

(४) पूर्वपक्षः—पश्वङ्गवत् वसासु चिह्नकरणासम्भवेन साङ्कर्यं दुर्वारं यदि एकैव कुम्भी स्यात्। तस्माद् भिन्नैव कुम्भी प्रतिपशिवति।

(५) सिद्धान्तः—वसाहोमः प्रतिपत्तिरूपः। अतो नायं द्रव्यप्रयोजकः। तथा च सति कुम्भीभेदप्रयोजकत्वं दूरापेतम्। तस्मादेकैव कुम्भीति।

एतदभिप्रेत्याह—वसेति। 'वसार्थम्' वसाहोमार्थम् 'अपि'—'नो' न 'पृथक्' प्रतिपशु भिन्ना कुम्भी इति शेषः—अपि त्वेकैवेत्यर्थः ॥ १० ॥

## (११) ११।४।३७-३८ जातिभेदे पृथक् कुम्भी

(१) पूर्वाधिकरणानामपवादः।

(२) एकादशिनाः पशवो यदा भिन्नजातीया भवन्ति—

(३) तदा संशयः—किं कुम्भी एका उत भिन्ना इति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेनैकैवेति।

(५) सिद्धान्तः—अग्नेरङ्गानि शीघ्रं पच्यन्ते, अजाङ्गानि तु चिरत्वे-न। ततश्च साहित्यासम्भवात् भिन्ना कुम्भी कर्तव्येति।

एतदभिप्रेत्याह—जातीति। 'जातिभेदे' भिन्नजातीयेषु पशुषु—'कुम्भी' 'पृथक्' प्रतिपशुभिन्ना भवति—तस्मादावाप इत्यर्थः॥ ११॥

## (१२) ११।४।३९-४१ कपालेषु न तन्त्रता।

(१) आवापोदाहरणम्।

(२) अस्त्यश्वप्रतिग्रहेष्टिः। तत्र श्रूयते—'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्' इति।

(३) तत्र कपालविषये संशयः—किं दीर्घेषु चतुष्कपालेषु सर्वेषाम्पुरोडाशानां श्रपणं भवति तथाच कपालचतुष्कस्य सर्वैः पुरोडाशैस्तन्त्रेण सम्बन्ध उत प्रतिपुरोडाशं कपालचतुष्कभेद इति।

(४) पूर्वपक्षः—यथा प्राजापत्येषु कुम्भ्यां महत्त्वेन तन्त्रम्-इत्यष्टमेऽधिकरणे निर्णीतं तथैवात्रापि तन्त्रमेवेति।

(५) सिद्धान्तः—प्रकृतौ हि प्रतिपुरोडाशं कपालो भिद्यते तदेव चात्र चोदकप्राप्तम्। तस्मात् प्रतिपुरोडाशं कपालचतुष्कभेद इति।

एतदभिप्रेत्याह—कपालेष्विति। 'कपालेषु' चतुर्षु—'तन्त्रता' एकस्यैव चतुष्कस्य तन्त्रेण सर्वैः सम्बन्धः—'न' भवति—अपि तु प्रतिपुरोडाशं भेद एव कपालचतुष्टयस्येत्यर्थः॥ १२॥

## (१३) ११।४।४२-४३ अवघाते सकृन्मन्त्रः

(१) तन्त्रोदाहरणम्।

(२) 'अवरक्षो दिवः सपत्नं वध्यासम्—इत्यवहन्ति'—इत्यवघातमन्त्रो विहितः।

(३) तत्र संशयः—किमवघाते प्रतिप्रहारमावर्तनीयोऽयम्मन्त्र उत सकृदेव पठनीय इति।

(४) पूर्वपक्षः—अवघातस्य प्रहाररूपत्वात् प्रहाराणां च भिन्नत्वात् प्रतिप्रहारमावृत्तिर्मन्त्रस्येति।

(५) सिद्धान्तः—तण्डुलनिष्पत्तिपर्यन्तप्रहाराभ्यासरूपस्यावघातस्य एककर्मत्वात् तत्र विनियुक्तस्य मन्त्रस्यावघातोपक्रमे सकृदेव पाठ इति।

एतदभिप्रेत्याह—अवघात इति। 'अवघाते' विनियुक्तः—'मन्त्रः'—'सकृत्' एव पठनीयः-न प्रतिप्रहारमावर्तनीयः इति भावः॥१३॥

## (१४) ११।४।४४ नानाबीजे पृथक् पृथक्।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) अस्ति राजसूये नानाबीजेष्टिः । तत्र श्यामाकादयो नानाबीजाः । तेष्ववघातः प्राप्तः समन्त्रकः ।

( ३ ) तत्र सन्देहः—किम्मन्त्रः सकृत्पठितः सर्वेषां बीजानामवघातमुपकरोत्युत प्रतिबीजमावर्तनीय इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिरणन्यायेन सकृदेव मन्त्रपाठ इति ।

( ५ ) सिद्धान्तः—बीजानां भेदेऽवघातानामपि भेदः । तथा सति प्रत्यवघातं मन्त्र आवर्तनीय इति ।

एतदभिप्रेत्याह—नानेति । 'नानाबीजे' नानाबीजद्रव्यकेष्टौ—'पृथक् पृथक्' प्रतिबीजस्भेदेन—मन्त्रः पठनीय इति शेषः । अतो नात्र तन्त्रमित्याशयः ॥ १४ ॥

## (१५) ११।४।४५-४६ निर्वापादौ पृथङ्मन्त्रः

( १ ) आवापोदाहरणम् ।

( २ ) दर्शपूर्णमासयोः निर्वापस्यावृत्तिराम्नाता—'चतुरो मुष्टीन्निर्वपति' इति । तथा वेदिस्तरणस्यापि—'त्रिधा तु पञ्चधा तु वेदिं स्तृणाति' इति । एवमन्यत्रापि । निर्वापादौ च मन्त्रोऽपि पठनीयत्वेन विहितः ।

( ३ ) तत्र संशयः—किम्प्रतिनिर्वापं मन्त्र आवर्तनीय उत सकृदेव पठनीय इति ।

( ४ ) पूर्वपक्षः—त्रयोदशाधिकरणन्यायेन सकृदेव मन्त्रपाठः इति ।

( ५ ) सिद्धान्तः—समन्त्रकेण प्रथममुष्टिनिर्वापेण संस्कृता ये तण्डुलास्तेभ्योऽन्ये तण्डुला अपि मुष्ट्यन्तरनिर्वापेण संस्कारमपेक्षन्ते । न च मन्त्रोच्चारणं विना स संस्कारः सम्पद्यते । तस्मात् प्रतिनिर्वापम्मन्त्रपाठः । एवमन्यत्रापीति ।

एतदभिप्रेत्याह निर्वापेति । 'निर्वापादौ' निर्वापे स्तरणे इत्यादौ—'मन्त्रः' 'पृथक्' प्रतिनिर्वापं भेदेन पठनीय इत्यर्थः ॥ १५ ॥

## (१६) ११।४।४७-४८ मन्त्रो वेद्युक्षणे सकृत् ।

( १ ) पूर्वधिकरणापवादः ।

( २ ) वेद्यास्त्रिः प्रोक्षणं विहितं । तत्र च विहितो मन्त्रः 'वेदिरसि' इत्यादिः ।

( ३ ) तत्र संशयः—किमयम्मन्त्रस्त्रिः पठनीय उत सकृदेवेति ।

( ४ ) पूर्वपक्षः—प्रोक्षणक्रियाया आवृत्तौ मन्त्रोऽप्यावर्तनीय इति ।

(५) सिद्धान्तः—संस्कार्याया विद्याया एकत्वात् समन्त्रकप्रथमप्रोक्षणेनैव तत्संस्कारे सिद्धे पुनर्मन्त्रपाठो व्यर्थः । प्रोक्षणावृत्तिस्तु वाचनिकी । तस्मान्न मन्त्रस्यावृत्तिः ।

एतदभिप्रेत्याह—मन्त्र इति । 'वेद्युक्षणे' वेद्याः प्रोक्षणे त्रिः कर्तव्ये-'मन्त्रः' 'सकृत्' एव पठनीय इति शेषः ॥ १६ ॥

## (१७) ११।४।४९–५० सकृत् कण्डूयने मन्त्रः

( १ ) तन्त्रोदाहरणम् ।

( २ ) ज्योतिष्टोमे 'कृष्णविषाणया कण्डूयते' इति विहिते कण्डूयने 'सुपिप्पलाभ्य' इत्यादिर्मन्त्रो विहितः ।

( ३ ) तत्र सन्देहः—युगपद् यदा अनेकेषु अङ्गेषु कण्डूतिरुत्पद्यते तदा किम्प्रत्यङ्गं मन्त्रावृत्तिरुत सकृदेव मन्त्रपाठ इति ।

( ४ ) पूर्वपक्षः—मन्त्र आवर्तनीयः-कण्डूयितव्यानामङ्गानामनेकत्वात् इति ।

( ५ ) सिद्धान्तः—मन्त्रोऽयं नाङ्गशेषोऽपि तु कण्डूयनशेषः । बहुष्वप्यङ्गेषु कण्डूयनकर्म त्वेकमेव । तस्मात् सकृदेव मन्त्रपाठ इति ।

एतदभिप्रेत्याह सकृदिति । 'कण्डूयने' 'मन्त्रः' 'सकृत्' एव पठनीय इति शेषः ॥ १७ ॥

## (१८) ११।४।५१ मन्त्रः स्वप्नादिके सकृत् ।

( १ ) तन्त्रोदाहरणम् ।

( २ ) दीक्षितस्य स्वप्ननद्युत्तरणवृष्ट्यादिदर्शननिमित्तको मन्त्रजपो विहितः ।

( ३ ) तत्र सन्देहः—यत्रानेकवारं स्वापः-उत्तरणीया नदी वा बहुस्रोतस्का-वृष्टिश्चानेकशः-इत्येवंरूपास्ववस्थासु किं तत्तन्निमित्तको मन्त्रजप आवर्तनीयः उत सकृदेव कर्तव्य इति ।

( ४ ) पूर्वपक्षः—निमित्तबहुत्वेन नैमित्तिकबहुत्वं न्याय्यम् । तस्मान्मन्त्रजप आवर्तनीय इति ।

( ५ ) सिद्धान्तः—रात्रिगतां कृत्स्नां निद्रामुद्दिश्य हि मन्त्रो विहितः तस्मात् सकृदेव जप इति । एवमितरत्रापीति ।

एतदभिप्रेत्याह मन्त्र इति । 'स्वप्नादिके' स्वप्ने नदीतरणे इत्येवंरूपाणां निमित्तानां बहुत्वेपि तन्निमित्तको 'मन्त्रः' मन्त्रजपः—'सकृत्' एव कार्यो न त्वावर्तनीय इत्यर्थः ॥ १८ ॥

## (१९) ११।४।५२ प्रयाणे च सकृन्मन्त्रः

( १ ) तन्त्रोदाहरणम् ।

( २ ) दीक्षितस्य प्रस्थितस्य प्रयाणमन्त्रः-'भद्रादभिश्रेयः प्रेहि' इति ।

( ३ ) तत्र सन्देहः—किं विश्रामे विश्रामे पुनः प्रस्थितेन मन्त्र आवर्तनीय उतादावेव सकृत् पठनीय इति ।

( ४ ) पूर्वपक्षः—विश्रामभेदेन प्रस्थानस्यापि भिन्नत्वात् मन्त्र आवर्तनीय इति ।

( ५ ) सिद्धान्तः—प्रथमप्रस्थानादारभ्य पुनः प्रवेशपर्यन्तं प्रस्थानक्रियाया एकत्वात् सकृदेवादौ मन्त्रपाठः इति ।

एतदभिप्रेत्याह प्रयाण इति । 'प्रयाणे' प्रस्थाने-'च'-'मन्त्रः'-'सकृत्' पठनीयः, नावर्तनीय इत्यर्थः ॥ १९ ॥

(२०) ११।४।५३-५४ मन्त्रस्तूपरवे पृथक् ।

( १ ) आवापोदाहरणम् ।

( २ ) सन्ति ज्योतिष्टोमे पीठपादचतुष्टयाकारा बाहुमात्रखाता उपरवनामकाः चत्वारो खाताः । अस्ति च तदीयखननमन्त्रः-'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति ।

(३) तत्र संशयः—किम्प्रतिखातं मन्त्र आवर्तनीय उत सकृन्मन्त्रपाठ इति।

( ४ ) पूर्वपक्षः—बहुवचनं मन्त्रे श्रूयते । तस्य प्रतिखातमावृत्तौ नान्वयः । तस्मात् सकृत् पाठः इति ।

( ५ ) सिद्धान्तः—एकस्मिन्नपि बहुवचनमादरार्थं भवति । खेयाश्च खाता भिन्नाः । तस्मात् खननभेदेन खननमन्त्र आवर्तनीय इति ।

एतदभिप्रेत्याह मन्त्र इति । 'उपरवे' उपरवनामके खातचतुष्टये खननीये-'मन्त्रः' खननमन्त्रः—'पृथक्' खातभेदेन आवर्तनीय इत्यर्थः ॥२०॥

(२१) ११।४।५५-५७ नाध्रिगोस्तन्त्रता कार्या

( १ ) आवापोदाहरणम् ।

(२) प्राजापत्येषु पशुष्वस्ति अध्रिगुप्रैषमन्त्रः-'दैव्याः शमितार' इति।

( ३ ) तत्र संशयः—किमस्य मन्त्रस्य पशुभेदेऽपि सकृत्प्रयोग उत प्रतिपश्वावृत्तिरिति ।

(४) पूर्वपक्षः—सर्वेषां पशूनां सहोपक्रमस्यानुग्रहाय सकृदेव मन्त्रः पठनीयः । तस्मात्तन्त्रमिति ।

( ५ ) सिद्धान्तः—पशूनामालम्भे नास्ति साहित्यम् । तस्मात् कालभेदेन न तन्त्रेण सकृन्मन्त्रपाठोऽपि त्वावृत्तिरेवेति ।

एतदभिप्रेत्याह नेति । 'अध्रिगोः' अध्रिगुप्रैषमन्त्रस्य 'तन्त्रता' सकृत्प्रयोगः—'न कार्या'-अपि त्वावृत्तिरेवेत्याशयः ॥ २१ ॥

न्यायास्त्वत्रैकविंशतिः ।

स्पष्टम् ।

इत्येकादशस्य चतुर्थः ।

इत्येकादशाध्यायः समाप्तः ।

# अथ द्वादशाध्यायः ।

[ प्रसङ्ग-तन्त्र-समुच्चय-विकल्प-निरूपकः ]

## प्रथमः पादः ।

### ( प्रसङ्गविचारः )

#### (१) १२।१।१-६ अङ्गम्पुरोडाश उपैति पाशुकम्

( १ ) तन्त्रं द्वयोद्देशकत्वादेकादश उदीरितम् ।
प्रसङ्गोऽन्योद्देशकत्वाज्जघन्यः सन्नथोच्यते ॥

एकादशाध्याये तन्त्रावापलक्षणं व्याख्यातम् । प्रसङ्गलक्षणमिदानीं व्याख्यायते । अन्यत्र कृतस्य अन्यत्रापि प्रसक्तिः 'प्रसङ्गः'–यथा प्रासादे कृतेन दीपेन राजमार्गेऽपि प्रकाशकरणम् ॥ एवंरूपस्य प्रसङ्गस्योदाहरणं प्रदर्श्यते ।

( २ ) अस्त्यग्नीषोमीयः पशुः पुरोडाशश्च—'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेत्' इति ॥ तत्र पशौ चोदकप्राप्तानि प्रयाजाद्यङ्गान्यनुष्ठीयन्ते ।

( ३ ) तत्र सन्देहः—पशौ कृतान्यङ्गानि पुरोडाशेऽप्युपकुर्वन्ति—उत पुरोडाशेऽन्यान्यनुष्ठेयानीति ।

( ४ ) पूर्वपक्षः—भिन्नविधिबोधितेष्वङ्गावृत्तेरौचित्येन पशुविहिताङ्गैः पुरोडाशोपकारस्यासम्भवात्तत्र पृथक् तदङ्गान्यनुष्ठेयानीति ।

( ५ ) सिद्धान्तः—पाशुकतंत्रमध्ये पुरोडाशविधानस्या प्रसङ्गसाधनात्पशुप्रयोगेण पुरोडाशापूर्वोपकारसिद्धिः । तस्मात् पश्वङ्गैरेव प्रयाजादिभिः पुरोडाशसिद्धौ न तत्राङ्गान्तरापेक्षेति ।

एतदभिप्रेत्याह—अङ्गमिति । 'पुरोडाशः' पशुपुरोडाशः–'पाशुकम्' पशौ कृतम्–'अङ्गम्' प्रयाजादि–'उपैति' गृह्णाति–तेनैवाङ्गेनोपकृतो नान्यदङ्गमपेक्षते इत्यर्थः ॥ १ ॥

#### (२) १२।१।७ तत्राज्यभागाद्यधिकं च किञ्चन ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) 'न तौ पशौ करोति' इति पशावाज्यभागनिषेधे पूर्वाधिकरणसिद्धेन प्रसङ्गेन पशुपुरोडाशे तयोः प्रसक्तिर्नास्ति । तस्मात्—

( ३ ) संशयः—पशुपुरोडाशे आज्यभागः कर्तव्यो न वेति ।

( ४ ) पूर्वपक्षः—पशौ न स्त आज्यभागौ । ततश्च पुरोडाशे तत्प्रापकस्य चोदकं लुप्तम् । तस्मात् पुरोडाशे आज्यभागौ न कर्तव्याविति ।

( ५ ) सिद्धान्तः-प्रसङ्गेन चोदकं न बाध्यते । तस्मात्कर्तव्यावेवाज्य-भागौ पशुपुरोडाशे इति ।

एतदभिप्रेत्याह तत्रेति । 'तत्र' पशुपुरोडाशे-'किञ्चन' किञ्चित्-'अधिकम्' पशोः प्रसङ्गेन यत् प्राप्तं तस्मादतिरिक्तम्-'आज्यभागादि'-कर्तव्यमिति शेषः ॥ २ ॥

## (३) १२।१।८-९ सोमे न वेदिः पृथगिष्टिकर्मणाम्

( १ ) प्रसङ्गोदाहरणम् ।

( २ ) सोमे सन्ति कानिचित् कर्माणि इष्टिरूपाणि दर्शपूर्णमासप्रकृतीनि । अस्ति च सोमे कृता वेदिः ।

( ३ ) तत्र संशयः-उक्तानां कर्मणामनुष्ठानं किं सौमिक्यामेव वेद्यां भवति-उत तदर्थं अन्या दार्शिकी वेदिः कर्तव्येति ।

( ४ ) पूर्वपक्षः—सौमिक्या वेद्याः पृथक् वेदिः दार्शिकी कर्तव्या। यतः सौमिकी वेदिः हविरासादनार्थायाः दार्शिक्या वेद्याः कार्यं कर्तुमसमर्थेति ।

( ५ ) सिद्धान्तः-सौमिक्यामेव वेद्यामिष्टीनामपि हविरासादनकार्यं कर्तुं शक्यते । तस्मान्नास्ति वेद्यन्तरस्य प्रयोजनमिति ।

एतदभिप्रेत्याह सोम इति । 'सोमे' सोमयागे-'इष्टिकर्मणाम्' सोमाङ्गभूतानि दर्शपूर्णमासप्रभृतीनि यानि कर्माणि तदर्थम्-'पृथक्' सौमिक्या वेद्या अतिरिक्ता वेदिः 'न'-कार्येति शेषः ॥ ३ ॥

## (४) १२।१।१०-११ ग्रहादिभिर्नैष्टिकहोम इष्यते ।

( १ ) प्रसङ्गापवादः ।

( २ ) सोमे सन्ति प्रयुक्ता ग्रहाश्चमसाश्च । सन्ति चात्र दर्शपूर्णमासप्रकृतीनि कर्माणि ।

( ३ ) तेषु संशयः-किमुक्तेषु कर्मसु सौमिकैरेव ग्रहचमसैर्होमः कर्तव्य-उत ऐष्टिकैः पात्रैः स्रुवादिभिरिति ।

( ४ ) पूर्वपक्षः-पूर्वाधिकरणन्यायेन सौमिकैर्ग्रहचमसैरेव कर्तव्य इति ।

( ५ ) सिद्धान्तः-स्रुवादिभिर्यत् कर्तव्यं तद् यदि ग्रहैश्चमसैर्वा क्रियेत तर्हि वैगुण्यं स्यात् । वर्तन्ते च सोमेऽपि ऐष्टिकाः स्रुवादयः । तस्मादेभिरैष्टिकैरेव होमः कर्तव्य इति ।

एतदभिप्रेत्याह ग्रहेति । 'ऐष्टिकहोमः' सोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि तेषु यो होमः क्रियते स—'ग्रहादिभिः' सौमिकैः ग्रहैश्चमसर्वा-'न इष्यते'-कर्तुमिति शेषः-अपि त्वैष्टिकैरेव स्रुवादिपात्रैरित्याशयः ॥ ४ ॥

## (५) १२।१।१२ शामित्रवह्नौ पचिरौषधस्य नो

(१) प्रसङ्गापवादः ।

(२) अस्त्यग्नीषोमीयः पशुः–तत्तन्त्रमध्यपाती पुरोडाशश्च । पशुश्च शामित्रेऽग्नौ पच्यते ।

(३) पुरोडाशे संशयः–कस्मिन्नग्नावयं पचनीयः–किं तस्मिन्नेव शामित्रे उतान्यस्मिन्नग्नाविति ।

(४) पूर्वपक्षः–पशुतन्त्रमध्यपातित्वाच्छामित्रे एव पचनीय इति ।

(५) सिद्धान्तः–प्रकृतौ पुरोडाशस्य पचनं गार्हपत्ये विहितम् । स च गार्हपत्यः सोमे प्रयुक्तः शालामुखीयनाम्नाऽभिहितः । तस्मात् वैगुण्यपरिहारायास्मिन्नेव शालामुखीयेऽग्नौ पाक इति ।

एतदभिप्रेत्याह शामित्रेति । 'औषधस्य' पुरोडाशस्य–'पचिः' पाकः–'शामित्रवह्नौ' शामित्रेऽग्नौ–'नो' न भवति–अपितु शालामुखीये एवेत्याशयः ॥ ५ ॥

## (६) १२।१।१३ सत्रे पचिः प्राजहितेऽग्निहोत्रके ।

(१) पूर्वाधिकरणप्रसङ्गेन विचारः ।

(२) अस्ति कुण्डपायिनामयनगतमग्निहोत्रम् । तत्रापि हविःश्रपणम् ।

(३) तत्र संशयः–कस्मिन्नग्नौ भवत्येतच्छ्रपणम्–किं शालामुखीये उत प्राजहिते इति ।

(४) पूर्वपक्षः–प्रकृतिभूतेऽग्निहोत्रे गार्हपत्ये श्रपणं विहितम् । शालामुखीयश्च पूर्वमाहवनीयोऽपि सोमे गार्हपत्यो भवति । स एवात्र चोदकेन प्राप्तः, तस्माच्छालामुखीये एव श्रपणमिति ।

(५) सिद्धान्तः–गार्हपत्यस्यैव 'प्राजहित' इति पूर्वाचार्याणां संज्ञा । तस्मात् प्राजहिते एव श्रपणमिति ।

एतदभिप्रेत्याह सत्र इति । 'सत्रे' कुण्डपायिनामयने यत् अग्निहोत्रं तस्मिन् 'अग्निहोत्रके'–'प्राजहिते' एव अग्नौ–'पचिः' पाको हविष इति शेषः ॥ ६ ॥

## (७) १२।१।१४–१६ निर्वापकर्मार्थमनोऽन्तरम्भवेत्

(१) प्रसङ्गापवादः ।

(२) ज्योतिष्टोमे द्वे हविर्धाननामके शकटे । सन्ति चात्राङ्गभूतानि ऐष्टिकानि कर्माणि ।

(३) तेषु संशयः–किं ऐष्टिककर्मसु प्रयोक्ष्यमाणानां हविषां निर्वापस्तयोरेव हविर्धानशकटयोर्भवति–उत तदर्थं शकटान्तरमुपादेयमिति ।

(४) पूर्वपक्षः—तयोरेव हविर्धानशकटयोः तन्निर्वापाय शक्तत्वात् न शकटान्तरमन्वेष्टव्यमिति ।

(५) सिद्धान्तः—हविर्धानशकटे महावेद्यां स्थापिते । निर्वापश्च गार्हपत्यात् पश्चिमे देशे भवति । तस्माद् देशभेदान्न हविर्धानशकटयोर्निर्वापः । अस्ति च तृतीयमपि शकटमुक्तम्—'अनांसि प्रवर्तयन्ति' इति बहुवचनश्रुतेः । तस्माच्छकटान्तरमुपादेयमिति ।

एतदभिप्रेत्याह निर्वापेति । 'निर्वापकर्मार्थम्' ऐष्टिकहविषां निर्वापाय—'अनोन्तरम्' अन्यत् अनः शकटं—'भवेत्' उपादेयमित्यर्थः ॥७॥

## (८) १२।१।१७ स्यात् प्रायणीयादिषु जागृतिः पृथक् ।

(१) प्रसङ्गापवादः ।

(२) ज्योतिष्टोमे दीक्षाकाले रात्रिजागरणमाम्नातम् । दर्शपूर्णमासयोरपि औपवसथ्येऽहनि एकेषामाम्नातं तत् प्रायणीयादिषु चोदकेन प्राप्यते ।

(३) तत्र संशयः—किं दीक्षाकालीनेनैव जागरणेन प्रायणीयादिषु प्रसङ्गात् उपकारसिद्धिः—उत पृथक् कर्तव्यं जागरणमिति ।

(४) पूर्वपक्षः—अदृष्टार्थमेव जागरणम् । तच्चान्यत्र कृतमप्यन्यत्र प्रसङ्गेनोपकरिष्यतीति पृथक् न कार्यमिति ।

(५) सिद्धान्तः—रक्षार्थं हि जागरणं क्रियते । अस्ति च दीक्षाप्रायणीययोः कालभेदः । तस्मात् पृथगेव जागरणमिति ।

एतदभिप्रेत्याह स्यादिति । 'प्रायणीयादिषु' 'जागृतिः' जागरणम्—'पृथक्' दीक्षाकालीनाज्जागरणात् भिन्नमेव—'स्यात्' इति सम्बन्धः ॥८॥

## (९) १२।१।१८ पाठः पृथक् स्यात् खलु सन्निपातिनाम्

(१) तन्त्रापवादः ।

(२) वरुणप्रघासेषु द्वौ विहारौ अध्वर्युप्रतिप्रस्थात्रोः । तत्र सन्ति केचन मन्त्राः आज्यग्रहणे प्रोक्षणे अभिमर्शने च ।

(३) तत्र संशयः—किं द्वयोर्विहारयोरिमे मन्त्राः सकृत् तन्त्रेण प्रयोज्या उत भेदेनेति ।

(४) पूर्वपक्षः—एकेनैव पठ्यमानेनार्थस्मृतेरुभयत्र सिद्धत्वात् सकृदेव पाठ इति ।

(५) सिद्धान्तः—मन्त्रा ह्यर्थस्मरणद्वारा सान्निपत्योपकारकाः । श्रूयते च मन्त्रे निर्वपामि इत्युत्तमपुरुषप्रयोगः । स चाध्वर्युकर्तृके पाठे न प्रतिप्रस्थातृकर्तृकं निर्वापं स्मारयितुमलम् । तस्मादुभयत्र पृथगेव मन्त्रस्य पाठ इति ।

एतदभिप्रेत्याह पाठ इति। 'सन्निपातिनाम्' अर्थस्मरणद्वारा सन्निपत्योपकारकाणां मन्त्राणाम्—'पाठः' अध्वर्युप्रतिप्रस्थात्रोर्विहारयोः—'पृथक्' भेदेनैव—'स्यात्' 'खलु'—न तन्त्रेणैकत्रैवेत्याशयः ॥ ९ ॥

(१०) १२।१।१९ न त्वादधातिः क्रतुमध्यगेष्टिषु।

(१) बाधोदाहरणम्।

(२) सन्ति सोमे दीक्षणीयादीनि ऐष्टिकानि कर्माणि। अस्ति तेषां प्रकृतौ अग्न्यन्वाधानम्।

(३) तत्र संशयः—किं दीक्षणीयादिष्वन्वाधानं कर्तव्यमुत नेति।

(४) पूर्वपक्षः—चोदकप्राप्तत्वात् कर्तव्यमिति।

(५) सिद्धान्तः—अग्निधारणार्थं हि अन्वाधानम्भवति। तच्चात्र दीक्षणीयादिभ्यः प्राग्भवीयेन सौमिकेन विहरणेनैव सिद्धम्। तस्मान्निष्प्रयोजनत्वान्नास्त्यन्वाधानमिति।

एतदभिप्रेत्याह नेति। 'क्रतुमध्यगेष्टिषु'—'क्रतोः' ज्योतिष्टोमस्य 'मध्यगाः' अन्तःपतिताः या 'इष्टयः' तासु 'तु'—'आदधातिः' अग्न्यन्वाधानम्—'न'—कर्तव्यमिति शेषः ॥ १० ॥

(११) १२।१।२०–२३ सोमाङ्ग इष्टौ न पुनर्व्रतग्रहो-

(१) पूर्वाधिकरणशेषः प्रसङ्गोदाहरणरूपः।

(२) पूर्वोक्तास्वेव इष्टिषु दार्शपौर्णमासिकं व्रतं तस्य ग्रहणमनेन मन्त्रेण भवति—'अग्ने व्रतपते व्रतं चरिष्यामीति'। तदेतद्व्रतग्रहणं समन्त्रकं चोदकप्राप्तम्।

(३) तत्र संशयः—इदं व्रतं कर्तव्यमुत नेति।

(४) पूर्वपक्षः—चोदकप्राप्तत्वात् कर्तव्यमिति।

(५) सिद्धान्तः—सत्यवचनादिव्रतं सोमार्थम्पूर्वमुपेतमेव। तस्य च सोमसमाप्तिपर्यन्तं परित्यागो नोचितः। तन्मध्यपातीष्टिषु यदि पुनरैष्टिकव्रतग्रहणं समन्त्रकं भवेत् तर्हि सौमिकव्रते व्यवच्छेदः स्यात् 'चरिष्यामि' इति भविष्यत्प्रयोगश्च चर्यमाणे व्रत अनन्वितः स्यात्। तस्मान्न कर्तव्यमिति।

एतदभिप्रेत्याह सोमेति। 'सोमाङ्गे' ज्योतिष्टोमाङ्गभूतायाम्—'इष्टौ' दीक्षणीयेष्ट्यादौ—'पुनर्व्रतग्रहः' चर्यमाणे सौमिके व्रते पुनरैष्टिकव्रतस्य ग्रहणं चोदकप्राप्तमपि—'न'—कर्तव्यम् इति शेषः ॥ ११ ॥

(१२) १२।१।२४–२८ ऽन्वाधानमस्थां न च देवताग्रहम्।

(१) दशमाधिकरणशेषः।

( २ ) अन्वाधानस्य अग्निधारणत्वात् सौमिकेन विहरणेनैव तत् प्रसङ्गात् सिद्धं तस्मात्पुनरैष्टिकेषु न कर्तव्यं तदन्वाधानमिति दशमाधिकरणे स्थितम् ।

( ३ ) तत्रैव पुनः संशयः-मा भवतु धारणार्थस्यान्वाधानस्यानुष्ठानमैष्टिकेषु, देवतापरिगृहार्थमपि चान्वाधानं भवति । तत् भवति कर्तव्यमैष्टिकेषु न वेति ।

( ४ ) पूर्वपक्षः-देवतापरिगृहार्थमन्वाधानमन्यतोऽसिद्धम् । अस्ति च देवतापरिगृहार्थत्वमन्वाधानस्य दर्शपूर्णमासयोराम्नातम्-'ममाग्ने वर्चो विहवेष्वस्तु-इति अग्निं गृह्णाति' इति । तस्मात् कर्तव्यमिति ।

( ५ ) सिद्धान्तः-देवतापरिगृहोऽपि सिद्ध एव-'अग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाणः'......यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य दीक्षते' इति । तस्मान्नास्ति पृथगन्वाधानमिति ।

एतदभिप्रेत्याह अन्विति । 'देवतापरम्' देवतागृहणार्थमपि-'अन्वाधानम्'-'अस्यां' सौमिकाङ्गभूतायामिष्टौ-'न'-स्यादिति शेषः ॥ १२ ॥

(१३) १२।१।२९ पत्न्याश्च सन्नाह इष्यते न वै

( १ ) प्रसङ्गोदाहरणम् ।

( २ ) पत्न्याः सन्नहनं दर्शपूर्णमासयोराम्नातम्-'योक्त्रेण पत्नीं सन्नह्यति' इति । तदेतत् सोमाङ्गभूतास्विष्टिषु चोदकप्राप्तम् ।

( ३ ) तत्र संशयः—एतास्विष्टिषु सन्नहनं भवति न वेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तत्वाद् भवत्येवेति ।

( ५ ) सिद्धान्तः—सन्नहनमदृष्टार्थं वा स्यात् वासोधारणरूपदृष्टार्थं वा—उभयथापि सौमिकेनैव योक्त्रबन्धनेन सिध्यति । तस्मात्प्रसङ्गसिद्धं सन्नहनं न पुनः कर्तव्यमिति ।

एतदभिप्रेत्याह पत्न्या इति । 'इह' सोमाङ्गेष्टौ—'पत्न्याः' 'सन्नाहः' सन्नहनम्—'न' 'इष्यते'—कर्तुमिति शेषः—प्रसङ्गेनैव सिद्धत्वादित्याशयः ॥ १३ ॥

(१४) १२।१।३० नारण्यभुक्तिः क्रियतेऽत्र दार्शिकी ।

( १ ) प्रसङ्गोदाहरणम् ।

( २ ) दर्शपूर्णमासयोरारण्यभोजनमाम्नातम्—'यदारण्यानश्नाति' इत्यादि ।

( ३ ) तत्र संशयः-तदेतदारण्यभोजनं सोमाङ्गेष्टिषु कर्तव्यं नवेति ।

( ४ ) पूर्वपक्षः-चोदकप्राप्तत्वात् कर्तव्यमिति ।

(५) सिद्धान्तः- वृत्त्यर्थमेवैतद् भोजनम् । सोमेऽपि वृत्त्यर्थमस्ति पयोव्रतादिकम् । एतेन सौमिकेनैव भोजनेन वृत्तौ प्रसङ्गात् सिद्धायां चोदकप्राप्तस्य भोजनस्य नास्ति प्राप्तिरिति ।

एतदभिप्रेत्याह नेति । 'अत्र' सोमाङ्गेष्टिषु-'दार्शिकी' दर्शपूर्णमासयोराम्नाता-'आरण्यभुक्तिः' आरण्यभोजनम्-'न' 'क्रियते'-सौमिकेनैव भोजनेन वृत्तेः प्रसङ्गात् सिद्धेरित्याशयः ॥ १४ ॥

## (१५) १२।१।३१ स्याच्छेषभक्षः पुनरत्र दर्शवत्

(१) पूर्वाधिकरणापवादः ।

(२) अस्तिपूर्णमासयोः शेषभक्षः ।

(३) तत्र संशयः—अयं शेषभक्षः सोमाङ्गेष्टिषु भवति न वेति ।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन नैव कर्तव्य इति ।

(५) सिद्धान्तः—आरण्यभोजनवत् नायं वृत्त्यर्थः- अपि तु प्रतिपत्तिरूपसंस्कारार्थः । तस्मात् कर्तव्य इति ।

एतदभिप्रेत्याह स्यादिति । 'अत्र' सोमाङ्गेष्टिषु—'शेषभक्षः' दर्शपूर्णमासयोर्विहितः-'दर्शवत्' यथा दर्शे तथैव-'स्यात्' इति सम्बन्धः ॥१५॥

## (१६) १२।१।३२ स्याद् दक्षिणा नेह च दर्शचोदिता ।

(१) प्रसङ्गोदाहरणम् ।

(२) दर्शपूर्णमासयोरन्वाहार्यः परिक्रयार्थो दक्षिणारूप आम्नातः । स च सोमाङ्गेष्टिषु चोदकप्राप्तः ।

(३) तत्र सन्देहः—एतास्विष्टिषु अन्वाहार्यो दातव्य उत नेति ।

(४) पूर्वपक्षः—चोदकप्राप्तत्वाद् दातव्य इति ।

(५) सिद्धान्तः—सोमप्रयोगमध्यपातिनीनामिष्टीनां सौमिकदक्षिणाभिरेव प्रसङ्गात् ऋत्विगानतिरूपे कार्ये सिद्धे नास्ति प्रयोजनं चोदकप्राप्ताया दक्षिणायाः । तस्मान्न दातव्योऽन्वाहार्य इति ।

एतदभिप्रेत्याह स्यादिति । 'इह' सोमाङ्गेष्टिषु—'दर्शचोदिता' दर्शेऽभिहिता—'दक्षिणा' अन्वाहार्यरूपा-'न स्यात्'- दातव्येति शेषः ॥ १६ ॥

## (१७) १२।१।३३-३४ न चानतिद्वारभृतिप्रदानाद् अङ्गेष्टिभक्षा विनिवर्तनीयाः

(१) पञ्चदशाधिकरणाक्षेपपरिहाररूपः षोडशाधिकरणापवादः ।

(२) दार्शिकः शेषभक्षोऽस्ति दार्शिकी दक्षिणा नास्तीति स्थितम् ।

(३) तत्र संशयः—येन हेतुना दक्षिणा निवर्तते तेनैव हेतुना भक्षोऽपि निवर्तते न वेति ।

( ४ ) पूर्वपक्षः—यथा आनतौ प्रसङ्गादेव सिद्धायां दार्शिकी दक्षिणा न दातव्या–तथैव तेनैव हेतुना शेषभक्षोऽपि दार्शिको न कर्तव्य इति।

( ५ ) सिद्धान्तः—दक्षिणा हि आनत्यर्था—न तु शेषभक्षस्तथा—तस्य प्रतिपत्तिसंस्काररूपत्वात्। तस्माद् वैषम्यात् न दक्षिणावद् भक्षस्य परित्याग इति।

एतदभिप्रेत्याह नेति। 'आनतिद्वारभृतिप्रदानात्' ऋत्विजां या 'आनतिः' परिक्रयः तस्य द्वारं या भृतिः वृत्तिर्भक्षरूपा तस्याः 'प्रदानात्'–शेषभक्षः परिक्रयार्थमेव दीयते इत्यस्माद् हेतोः—'अङ्गेष्टिभक्षाः' सोमाङ्गेष्टिषु ये दार्शिका भक्षाः—'न निवर्तनीयाः' न परित्याज्याः। परिक्रयार्थत्वं यद् दक्षिणात्यागे हेतुः तस्य भक्षेष्वभावात् न त्याज्या भक्षा इत्याशयः॥ १७॥

## (१८) १२।१।३५–४१ होतुर्वृतिः स्यादिह पौर्णमासिकी।

( १ ) प्रसङ्गापवादः।

( २ ) अस्ति दर्शपूर्णमासयोर्होतुर्वरणम्। तत् सोमाङ्गेष्टिषु चोदकेन प्राप्यते। अस्ति तु सोमेऽपि होतुर्वरणम्।

( ३ ) तत्र संशयः—इष्टिषु दार्शिकं होतुर्वरणं कर्तव्यमुत नेति।

( ४ ) पूर्वपक्षः—यथा पृथगानत्यभावादन्वाहार्यो नास्ति तथैव होतुर्वरणमपि नास्ति—प्रसङ्गादेव तस्य सिद्धेरिति।

( ५ ) सिद्धान्तः—वरणं हि धर्मार्थमेव भवति दर्शपूर्णमासयोरपि। तस्मादत्रापि प्रकृतिवत् होतुर्वरणं कार्यम्—धर्मार्थं न त्वानत्यर्थम्। धर्मार्थं हि वरणं न सौमिकेन वरणेन प्रसङ्गात् सिध्यति इति।

एतदभिप्रेत्याह होतुरिति। 'इह' सोमाङ्गेष्टिषु—'पौर्णमासिकी' दर्शपूर्णमासयोर्विहिता—'होतुः वृतिः' होतुर्वरणं—'स्यात्' कर्तव्या–धर्मार्था न त्वानत्यर्थेत्याशयः॥ १८॥

## (१९) १२।१।४२–४३ न प्रोक्षणादीन्युपसत्सु बर्हिषाम्

( १ ) प्रसङ्गोदाहरणम्।

( २ ) सोमे श्रूयते—'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्ये'ति। एतच्च बर्हिस्त्रयाणां साधारणमिति चतुर्थे स्थितम्। भवति च बर्हिषां प्रोक्षणाऽग्रावपातनमूलावसेचनरूपः संस्कारः। [ प्रोक्षणम् (२)अग्राणामवपातनम् (३)मूलानामवसेचनम्। ]

( ३ ) तत्र संशयः—किमयं संस्कारः प्रतिकर्म पृथगनुष्ठेयः उत य एवातिथ्यायां कृतस्स एव प्रसङ्गादितरयोरुपकरोतीति।

( ४ ) पूर्वपक्षः—प्रतिकर्म पृथगनुष्ठेयः–तन्त्रप्रसङ्गयोरत्रासम्भवात्।

एककालीनत्वाभावान्न तन्त्रम्। एकस्य तन्त्रेऽन्यतरयोरपठितत्वान्न प्रसङ्ग इति।

(५) सिद्धान्तः—बर्हिष एकत्वात् सकृत्प्रोक्षणादिभिः संस्कारे सिद्धे पुनः संस्कारापेक्षा नास्ति। स च संस्कारः प्राथम्यादातिथ्यायां क्रियते। तस्मात् उपसत्सु अग्नीषोमीये च प्रसङ्गादेव तत्सिद्धिरिति नात्र पुनः कर्तव्य इति।

एतदभिप्रेत्याह नेति। 'उपसत्सु' उपसत्सु अग्नीषोमीये चेत्युभयत्र-बर्हिषाम्—'प्रोक्षणादीनि' प्रोक्षणम्-अग्रावपातनम्-मूलावसेचनमित्येवमादिसंस्कारः—'न'-कर्तव्य इति शेषः॥ १९॥

(२०) १२।१।४४ तेषान्तु मन्त्रांस्तरणे पुनः पठेत्।

(१) पूर्वाधिकरणापवादः।

(२) आतिथ्याबर्हिष्यस्ति मन्त्रः 'ऊर्णाम्रदसं त्वां स्तृणामि' इति।

(३) तत्र संशयः—अस्य आस्तरणमन्त्रस्य पाठोऽग्नीषोमीये पुनः कर्तव्य उत प्रसङ्गादेव तत्सिद्धिरिति।

(४) पूर्वपक्षः—पूर्वाधिकरणन्यायेन प्रसङ्गसिद्धौ न भवति पुनर्मन्त्रपाठ इति।

(५) सिद्धान्तः—आतिथ्यायाः प्राग्वंशो देशः अग्नीषोमीयस्य तूत्तरवेदिः। एवं च देशभेदेन स्तरणभेदे सति तत्सन्निपातिनो मन्त्रस्य पुनः पाठ आवश्यक इति।

एतदभिप्रेत्याह तेषामिति। 'तेषां' बर्हिषां-'स्तरणे'-'मन्त्रान्'-'पुनः' 'पठेत्'—नात्र प्रसङ्गसिद्धिरित्याशयः॥ २०॥

(२१) १२।१।४५-४६ तेषां पशौ सन्नहनं न मन्त्रवत्

(१) पूर्वाधिकरणापवादः।

(२) आतिथ्यादेशे संस्कृतं बर्हिः सन्नह्य कदाचित् अग्नीषोमीयदेशे नीयते। सन्नहने प्रथने च मन्त्रावाम्नातौ—'इन्द्राण्यै सन्नहनम्' इति-'बृहस्पते मूर्ध्ना हरामि' इति।

(३) तत्र संशयः—अग्नीषोमीयदेशे नीयमाने बर्हिषि एतौ मन्त्रौ पुनः प्रयोक्तव्यावुत नेति।

(४) पूर्वपक्षः—पुनः प्रयोक्तव्यौ मन्त्राविति।

(५) सिद्धान्तः—प्रकृतौ लवनदेशादानयने तौ मन्त्रौ दृष्टौ—न तु गार्हपत्यादाहवनीयं प्रत्यानयने। अतोऽत्रापि आतिथ्यादेशात् प्राग्वंशात् अग्नीषोमीयदेशं उत्तरवेदिम् प्रत्यानयने तौ मन्त्रौ चोदकप्राप्तावेव न भवतः। तस्मान्न पठनीयाविति।

एतदभिप्रेत्याह तेषामिति। 'पशौ' अग्नीषोमीये नीयमानानां 'तेषाम्' बर्हिषाम्-'सन्नहनं' 'मन्त्रवत्' मन्त्रोच्चारणपूर्वकं-'न'-भवतीति शेषः॥२१॥

एकाधिका विंशतिनीतयोऽत्र
विविच्य भाष्यादिषु सम्प्रदिष्टाः॥

एकविंशतिर्न्याया अत्रेत्यर्थः॥

इति द्वादशस्य प्रथमः।

## अथ द्वादशस्य द्वितीयः पादः।

[ तन्त्रनिर्णयपरः ]

### (१) १२।२।१-७ त्रेतायां श्रौतकर्मैव

( १ ) प्रासङ्गिको विचारः।

( २ ) अस्त्यग्नित्रयम् गार्हपत्यदक्षिणाग्न्याहवनीयरूपं 'विहार' शब्दवाच्यम्।

( ३ ) तत्र सन्देहः—किमस्मिन्नग्नित्रये लौकिकानि कर्माण्यनुष्ठीयन्ते-उत वैदिकानि-उत सर्वाणि लौकिकानि वैदिकानि चेति।

( ४ ) पूर्वपक्षः—सर्वत्र शक्तत्वात् सर्वाणि इति।

( ५ ) सिद्धान्तः—'गार्हपत्ये हवींषि श्रपयन्ति'—'दक्षिणाग्नावन्वाहार्यं पचन्ति'-'आहवनीये जुह्वति' इत्येतादृशैः प्रत्यक्षवचनैर्निराकाङ्क्षाणां गार्हपत्यादीनां लौकिकार्थत्वं नोपपद्यते। तस्माद् वैदिकाग्निहोत्रादिकर्मार्थमेवाग्नित्रयमिति।

एतदभिप्रेत्याह त्रेतायामिति। 'त्रेतायाम्' अग्नित्रये-'श्रौतम्' वैदिकमेव 'कर्म' कर्तव्यम्-न लौकिकमिति भावः॥ १॥

### (२) १२।२।८-१० पुरोडाशः क्रतोः पशौ।

( १ ) प्रासङ्गिकोऽतिदेशविचारः।

( २ ) अग्नीषोमीये पशौ पुरोडाशो विहितः। सवनीयः पशुरग्नीषोमीयस्य विकृतिः।

( ३ ) तत्र सन्देहः—विकृतौ सवनीये चोदकप्राप्तः पुरोडाशः कर्तव्य उत नेति।

( ४ ) पूर्वपक्षः—'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते, अपिहित्या अच्छिद्रतायै' इति सवनीये छिद्रपिधानार्थः पुरोडाशः पृथग्-

वोक्तः । तेनैवास्य कृतार्थत्वान्नात्र चोदकेन अग्नीषोमीयपुरोडाशस्य प्राप्तिरिति ।

( ५ ) सिद्धान्तः—पुरोडाशस्य पशुदेवतासंस्कारार्थत्वं दशमीयनवमाधिकरणे स्थितम् । छिद्रपिधानवाक्यं त्वर्थवादः । तस्माच्चोदकप्राप्तः पुरोडाशः कर्तव्य इति ।

एतदभिप्रेत्याह पुरोडाश इति । 'क्रतोः' प्रकृतिभूतस्याग्नीषोमीयपशुयागस्य 'पुरोडाशः'-'पशौ' सवनीये पशौ-चोदकप्राप्तः कर्तव्य इति शेषः २

## (३) १२।२।११ सवनीये हविष्कृन्न

( १ ) पूर्वाधिकरणापवादरूपो बाधः ।

( २ ) अस्त्याग्नेयपुरोडाशे हविष्कृदाह्वानम् । तच्च सवनीये चोदकप्राप्तम् ।

( ३ ) तत्र सन्देहः—सवनीये हविष्कृदाह्वानं भवति न वेति ।

( ४ ) पूर्वपक्षः—चोदकप्राप्तत्वाद् भवत्येवेति ।

( ५ ) सिद्धान्तः—औषधार्थं हि हविष्कृदाह्वानम् । तच्च पशौ नास्तीति न हविष्कृदाह्वानं सवनीये इति ।

एतदभिप्रेत्याह सवनीय इति । 'सवनीये' पशौ-'हविष्कृत्' हविष्कृदाह्वानं-'न' भवति इति सम्बन्धः ।। ३ ।।

## (४) १२।२।१२-१३ तार्तीयेष्वपि नैव सा ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) अस्ति तृतीयसवने चरुः सौम्यः ।

( ३ ) तत्र सन्देहः—अस्मिन् तृतीये सवने हविष्कृदाह्वानं भवति न वेति ।

( ४ ) पूर्वपक्षः—चरोरौषधत्वादस्त्येवात्र हविष्कृत् । अग्नीषोमीयपश्वर्थमाहूता सा पशुपाकसम्प्रत्यनन्तरं निवृत्ता । तस्मादस्ति तृतीयसवने तस्याः पुनराह्वानमिति ।

( ५ ) सिद्धान्तः—प्रकृतौ पत्नीसंयाजेभ्यः पश्चात् हविष्कर्त्र्याः पत्न्याः उत्थानं वाक्येन विहितम् । पशावपि तस्मात् प्राक् न भवति तस्या निवृत्तिः । तस्मात् तत्कालीनेषु सौर्यचर्वादिषु नास्ति तस्याः पुनराह्वानमिति ।

एतदभिप्रेत्याह तार्तीयेष्विति । 'तार्तीयेषु' तृतीयसवेने ये चरवस्तेषु—'सा' हविष्कृत्—'न' पुनराह्वतव्येति शेषः ॥ ४ ॥

## (५) १२।२।१४-१८ निशीष्टिर्दर्शतन्त्रा स्यात्

सामिधेन्यादिकं विना

( १ ) तन्त्रित्वचिन्ता प्रसङ्गार्थं प्रवर्तते ।

( २ ) अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्–यो रक्षोभ्यो बिभीयात्' इति विधाय इदमाम्नातम्—'अमावास्यायां निशि यजेत' इति ।

( ३ ) तत्र सन्देहः–किमेतस्मिन् निशियागे दर्शयागस्याङ्गतन्त्रम् ( इतिकर्तव्यता ) प्रसङ्गेन वर्तते न वेति ।

( ४ ) पूर्वपक्षः—दर्शतन्त्रमत्र न प्रसज्यते—दर्शतन्त्रमध्ये हि रक्षोघ्नयागस्य विधिर्न श्रूयते । प्रकरणयोश्च भेदः इति ।

( ५ ) सिद्धान्तः—अमावास्याकाले निशियागो विहितः । तस्मिंश्च काले दर्शयागः प्रक्रान्तः । अतस्तत्रैव रात्रौ क्रियमाणो निशियागः दर्शतन्त्रमध्यपाती भवत्येव । तस्मादस्ति प्रसङ्गसिद्धिरिति ।

एतदभिप्रेत्याह निशीति । 'निशीष्टिः' अमावास्यानिशि विहितो यागः—'दर्शतन्त्रा' प्रसङ्गेन दर्शाङ्गैः कृतोपकारा–'स्यात्' किन्तु 'सामिधेन्यादिकं विना' । दर्शमध्ये यत् सामिधेनीमन्त्रपाठपूर्वकमग्निसमिन्धनं देवतापरिग्रहार्थमन्वाधानं च विहितं तदेवंविधं कतिपयमङ्गजातं निशियागे न प्रसज्यते—अन्यत्तु सर्वं दार्शिकं प्रसङ्गेनोपकरोत्येव तं यागमित्यर्थः ॥ ५ ॥

(६) १।२।१९–२१ आरम्भणीया विकृतौ ।

( १ ) प्रसङ्गबाधोदाहरणम् ।

( २ ) दर्शपूर्णमासयोः प्रथमप्रयोगस्यैवोपक्रमे आरम्भणीया कर्तृसंस्कारार्था भवति—न प्रयोगान्तरस्योपक्रमे—इति नवमीयप्रथमपादीयैकादशाधिकरणे निर्णीतम् ।

( ३ ) तत्र सन्देहः—दर्शपूर्णमासस्य विकृतिषु भवति न वा आरम्भणीयेति ।

( ४ ) पूर्वपक्षः—यथा प्रथमप्रयोगे एव कृतया आरम्भणीयया यावज्जीवमाधिकर्तृसंस्कारे सिद्धे न भवति तदपेक्षा द्वितीयादिप्रयोगेषु–तथैव यावज्जीवलक्षणप्रकृतिकालमध्यपातिनीनां विकृतीनां नास्त्यारम्भणीयापेक्षा इति प्रसङ्ग एवात्रेति ।

( ५ ) सिद्धान्तः–दर्शपूर्णमासावारप्स्यमानस्यैव पुरुषस्यारम्भणीया विहिता । तस्मात् सा क्रत्वर्था । सौर्यादिविकृतयस्तु प्रकृतिभ्यो भिन्नानि क्रत्वन्तराणि । एवं च प्रयोगभेदात् विकृतौ कर्तव्या भवत्यारम्भणीया । तस्मान्नास्त्यत्र प्रसङ्ग इति ।

एतदभिप्रेत्याह आरम्भणीयेति । 'विकृतौ' सौर्यादौ—'आरम्भणी-

या'-पृथगेवानुष्ठेयेति भावः ॥ ६ ॥

(७) १२।२।२२ विरोधे बहुधर्मता

(१) प्रसङ्गप्रासङ्गिकी चिन्ता ।

(२) पञ्चदशरात्रस्य अग्निष्टुत् प्रथममहः—तस्य एकाहरूपोऽग्निष्टुत् प्रकृतिः—तत्रोपसत्कालीनसुब्रह्मण्याह्वानार्थम् ऋग् विहिता । तद्देतत् विकृतिरूपे प्रथमेऽहनि प्राप्नोति—इतरेषु च चतुर्दशसु अहस्सु स्वस्वप्रकृत्यनुसारेण सुब्रह्मण्याह्वानार्थम् ऐन्द्री ऋक् प्राप्ता ॥

(३) एवं सति सन्देहः—प्रसङ्गेन सर्वोपकारसाधिका कतरा—आग्नेयी ऐन्द्री वा—ग्राह्येति ।

(४) पूर्वपक्षः—असञ्जातविरोधित्वात् प्रथमस्याह्नः प्रबलत्वात् प्राथमिका आग्नेय्येव सुब्रह्मण्या ग्राह्येति ।

(५) सिद्धान्तः—आग्नेयी एकस्यैव प्रथमस्याह्नोऽनुगुणा—ऐन्द्री तु बहूनां चतुर्दशानामह्नामनुगुणा । बहूनां परस्परविरुद्धधर्माणां समवायेऽन्यतमानुष्ठानप्रसक्तौ भूयस्सु यो धर्मः स एव ग्राह्यः । तस्मादत्र पञ्चदशानाम्मध्ये चतुर्दशानामनुगुणा ऐन्द्री एव सुब्रह्मण्या ग्राह्येति ।

एतदभिप्रेत्याह विरोध इति । 'विरोधे' बहूनां प्रधानानां विरुद्धधर्माणां प्रसक्तौ सत्याम् 'बहुधर्मता' बहूनामनुगुणो यो धर्मः स्यात् स एव ग्राह्य इत्यर्थः ॥ ७ ॥

(८) १२।२।२३-२४ समेषु मुख्यधर्मः स्यात् ।

(१) पूर्वाधिकरणशेषः ।

पूर्वाधिकरणे विषमसङ्ख्यकानां प्रधानानां धर्मयोर्विरोधो विचारितः । अधुना समसङ्ख्यकानां प्रधानानां धर्माणां विरोधो विचार्यते ।

(२) 'अग्नावैष्णवमेकादशकपालं निर्वपेत्'—'सारस्वतमाज्यस्य यजेत' । तत्रैकस्मिन्नग्नावैष्णवे ऐन्द्राग्नप्रकृतिके वृधन्वतीमन्त्रः—एकस्यामेव च सारस्वत्यामुपांशुयाजप्रकृतिकायां वार्त्रघ्नमन्त्रः ।

(३) तत्र संशयः—कतरो मन्त्रः प्रयोक्तव्य इति ।

(४) पूर्वपक्षः—तुल्यबलत्वाद् विकल्प इति ।

(५) सिद्धान्तः—अग्नावैष्णवस्य प्रथमपठितत्वात् मुख्यत्वम् । ततश्च तद्गतस्यैव मन्त्रस्य प्रयोग इति ।

एतदभिप्रेत्याह समेति । 'समेषु' समसङ्ख्यकत्वात् तुल्यबलेषु विरुद्धधर्मेषु-'मुख्यधर्मः'-'मुख्यस्य' प्राथमिकस्यैव 'धर्मः' मन्त्रादिः-'स्यात्'-अनुष्ठेय इति शेषः ॥ ८ ॥

(९) २।२।२५ प्रधानस्य गुणो बली

( १ ) पूर्वाधिकरणशेषः ।

( २ ) ज्योतिष्टोमे--अङ्गभूताया दीक्षणीयेष्टेः पर्वणि कर्तव्यता-प्रधानभूतस्य सोमस्यापि पर्वण्येव कर्तव्यता । सामान्यतस्तूभयोरप्यनुष्ठानं सम्भवति । परन्तु यस्मिन् ज्योतिष्टोमप्रयोगे 'एका दीक्षा तिस्र उपसदः पञ्चमीप्रसुत' इत्येष कल्पो भवति तत्र दीक्षासोमयोरेकस्मिन्नेव दिनेऽनुष्ठानं न सम्भवति । एवं सति अङ्गप्रधानयोर्दीक्षेष्टिसोमयोर्विरोधे—

( ३ ) संशयः--कतरस्य बाधः कतरस्यानुष्ठानमिति ।

( ४ ) पूर्वपक्षः--पूर्वाधिकरणन्यायेन प्रथमपठितत्वात् दीक्षणीयेष्टेरेवानुष्ठानमिति ।

( ५ ) सिद्धान्तः--प्रधानत्वात् सोम एव पर्वण्यनुष्ठेयः । तदनुसारेणाङ्गभूता दीक्षणीयेष्टिर्दिनान्तरेऽपकृष्यते-इति ।

एतदभिप्रेत्याह प्रधानस्येति । यदा अङ्गप्रधानगुणयोर्विरोधो भवति तत्र 'प्रधानस्यैव' 'गुणः' 'बली' प्रबलत्वादनुष्ठेय इत्यर्थः ।। ९ ।।

(१०) २।२।२६ द्वयोर्गुणाः स्युः परिधौ ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) पशुमत्सु चातुर्मास्येषु श्रूयते-'परिधौ पशौ नियुञ्जन्ति' । सन्ति मार्जनादयः परिधेः स्वकीया धर्माः । प्रकृतौ तु यूपे नियुञ्जन्ति-सन्ति च प्रोक्षणादयो यूपधर्माः ।

( ३ ) तत्र सन्देहः--परिधौ किं स्वकीयधर्मा यूपधर्माश्चानुष्ठेया उत स्वकीयधर्मा एवेति ।

( ४ ) पूर्वपक्षः--मुख्यत्वात् स्वकीया एवानुष्ठेयाः । नतु यूपधर्माः तेषां परिधिं प्रत्यमुख्यत्वादिति ।

( ५ ) सिद्धान्तः-यथाऽग्निपरिधानार्थत्वेन मार्जनादीनां परिधिधर्माणामनुष्ठानं तथैव यूपकार्ये नियोजने परिधिविधानेन यूपधर्माणां प्रोक्षणीयादीनामप्यनुष्ठानमिति द्वयोरेव धर्मा अनुष्ठेया इति ।

एतदभिप्रत्याह द्वयोरिति । 'परिधौ' पशुनियोजनार्थं विहिते-'द्वयोः'-परिधेः यूपस्य च 'गुणाः' धर्माः-मार्जनादयः प्रोक्षणादयश्च-'स्युः'-अनुष्ठेया इति शेषः ।। १० ।।

(११) २।२।२७-२९ विरोधे परिधेर्गुणाः

( १ ) पूर्वाधिकरणशेषः ।

( २ ) यूपधर्माः परिधावनुष्ठेया इति स्थितम्, सन्ति च केचिद्

यूपधर्माः-तक्षणोच्छ्रयणादयः-ये कैश्चित् परिधिधर्मैः त्वक्सहितत्वशयानत्वादिभिर्विरुद्धाः।

(३) तत्र संशयः-किमेते विरुद्धा अपि यूपधर्माः परिधौ कार्या उत नेति।

(४) पूर्वपक्षः--यागसाधकस्य पशोरङ्गे यूपे वर्तमानत्वाद् यूपधर्मा यागस्य प्रत्यासन्नतराः परिधिधर्मापेक्षया। तस्माद् विरोधे सति यूपधर्मा एव कार्या न परिधिधर्मा इति।

(५) सिद्धान्तः—तक्षणादिना परिधिस्वरूपमेव नश्येत। तथासति परिधौ विहितं पशुनियोजनं कुत्र क्रियेत। तस्मात् परिधिधर्माः कार्या न यूपधर्मा इति।

एतदभिप्रेत्याह विरोधे इति। 'विरोधे' यत्र यूपधर्मपरिधिधर्मयोः परस्परं विरोधः तत्र—'परिधेः' एव-'गुणा' धर्मा-अनुष्ठेया-न यूपधर्मा इत्यर्थः॥ ११॥

## (१२) १२।२।३०—३२ सवनीये पशोस्तन्त्रम्।

(१) तन्त्रित्वविचारोऽनुवर्तते।

(२) 'प्रातस्सवने आग्नेयं पशुमुपाकरोति' इति सवनीयः पशुः श्रुतः। तस्याङ्गकलापः प्रकृतिगतश्चोदकप्राप्तः। तथाच 'अनुसवनं पुरोडाशान् निर्वपन्ति' इति विहितस्य पुरोडाशयागस्याङ्गकलापप्राप्तिरपि चोदकादेव प्राप्ता।

(३) तत्र संशयः--सवनीये प्राप्तयोः पशुप्रयोग-पुरोडाशप्रयोगयोः कतरस्तन्त्री यस्य प्रयोगोऽनुष्ठीयेत सवनीये इति।

(४) पूर्वपक्षः--यस्याङ्गकलापः प्रत्यक्षतया श्रूयते स तन्त्री—तन्मध्ये श्रूयमाणस्य च यागान्तरस्य पूर्वतन्त्रेणैव प्रसङ्गसिद्धिरिति नियमः। प्रकृते तु पशौ पुरोडाशे वा कुत्राप्यङ्गकलापो न श्रूयते। तस्मान्नियमे प्रमाणाभावात् पशोः पुरोडाशस्य वा प्रयोगोऽनुष्ठेय इति विकल्प इति।

(५) सिद्धान्तः--पाशुकमेव तन्त्रमनुष्ठेयम्-न विकल्पः। पाशुकमेव तन्त्रं सविशेषं श्रूयते। तथाहि सवनीयपशौ चोदकप्राप्ते मैत्रावरुणप्रैषे पाठविकारः प्रत्यक्षमाम्नायते—'अयं यजमान' इत्यस्य स्थाने 'अयं सुतासुती यजमान' इति पाठविकारो विशेषितः। तस्मात् पशुरेवात्र तन्त्रीति।

एतदभिप्रेत्याह सवनीय इति। 'सवनीये' पशौ-'पशोः' पाशुकमेव-'तन्त्रम्' प्रयोगः-तस्मात् पशुरेवात्र तन्त्री पुरोडाशस्तु तन्मध्यपाती प्रसङ्ग्येवेत्याशयः॥ १२॥

## (१३) १२।२।३३ काम्ये तन्त्रन्तु वैकृतम्

(१) तन्त्रित्वविचारो वर्तते।

(२) अस्ति दर्शपूर्णमासेष्टिः प्रकृतिः—अस्ति च तद्विकृतिः काम्येष्टिः।

(३) तत्र संशयः—यदोभयोरनुष्ठानं सहैव पर्वणि भवति-यदा प्रकृतिविकृत्योरेकस्मिन्नेव दिने सन्निपातः—तदा प्राकृतं तन्त्रमनुष्ठेयमुत वकृतमिति।

(४) पूर्वपक्षः—प्रकृतिरेव पूर्वं प्रयुज्यते। यच्च पूर्वं प्रयुज्यते तस्यैव तन्त्रमनुष्ठेयम्—प्राप्तकालत्वात्। तस्मात् प्राकृतमेव तन्त्रमनुष्ठेयमिति।

(५) सिद्धान्तः—नित्यापेक्षस्य काम्यस्य शीघ्रप्रवर्तकतयाऽनुष्ठाने प्रबला विकृतिरेव तन्त्रिणीति वैकृतमेव तन्त्रमनुष्ठेयमिति।

एतदभिप्रेत्याह काम्य इति। 'काम्ये' सति-यदा नित्यकाम्ययोः प्रकृतिविकृत्योरनुष्ठानसहभावस्तदा—'वैकृतम्' विकृतिसम्बन्धि एव-'तन्त्रम्'—अनुष्ठे मित्यर्थः॥ १३॥

## (१४) १२।२।३४ अमुख्योऽपि गुणो ग्राह्यो येनान्येऽपि गुणान्विताः।

(१) तन्त्रित्वविचार एव वर्तते।

(२) आग्रयणे ऐन्द्राग्नम्—वैश्वदेवम्—द्यावापृथिव्यम् इति क्रमेण हवींषि। तत्राद्ययोः पुष्पमपुष्पं वा बर्हिः—द्यावापृथिव्ये तु पुष्पितमेवाम्नातम्।

(३) तत्र संशयः—किमत्र पुष्पमपुष्पं वेत्यनियमः—उत पुष्पमेवेति नियमः इति।

(४) पूर्वपक्षः—ऐन्द्राग्नस्य मुख्यत्वात् तदनुसारेण पुष्पमपुष्पं वेत्यनियम इति।

(५) सिद्धान्तः—पुष्पितादतिरिक्तस्य बर्हिषः स्वीकारे द्यावापृथिव्ये यत्पुष्पं बर्हिरुक्तं तस्य सर्वथा लोप एव स्यात्। पुष्पस्वीकारे तु ऐन्द्राग्नवैश्वदेवयोर्न किमपि हीयेत—पुष्पस्य तयोरप्युक्तत्वात्। तस्मात् लोपपरिहाराय पुष्पमेव बर्हिरिति।

एतदभिप्रेत्याह अमुख्य इति। द्वयोर्गुणयोर्मध्ये 'येन' गुणेन—'अन्येऽपि' तद्गुणवतोऽतिरिक्ता अपि पदार्थाः—'गुणान्विताः' सगुणाः—स 'गुणः' यद्यपि 'अमुख्यः' तथापि 'ग्राह्यः'। यथोदाहरणे पुष्परूपो गुणो यद्यपि न मुख्यस्तथाऽपि तेन गृहीतेन अन्ये ऽपि ऐन्द्राग्नवैश्वदेवादयो गुणान्विताः विहितेन गुणेन पुष्परूपबर्हिषा सहिता भवन्ति-इत्यस्मात् कारणात् स एव पुष्परूपो गुणो ग्राह्य इति सम्बन्धः॥ १४॥

## (१५) १२।२।३५-३७ न द्यावापृथिवीयस्य तन्त्रिताऽऽग्रयणे भवेत्

( १ ) तन्त्रित्वविचारः पूर्वाधिकरणशेषः ।

( २ ) पुष्पमेव बर्हिर्भवतीति स्थितम् ।

( ३ ) पुनः संशयः—आग्रयणे किं द्यावापृथिवीयस्यैव तन्त्रमनुष्ठेयमिति नियमः-उत ऐन्द्राग्नस्य वा वैश्वदेवस्य वा द्यावापृथिवीयस्य वेत्यनियम इति ।

( ४ ) पूर्वपक्षः—द्यावापृथिवीयस्यैव बर्हिषः पुष्पस्य गृहीतत्वात् तन्त्रमपि द्यावापृथिवीयस्यैवानुष्ठेयमिति नियमोऽस्तीति ।

( ५ ) सिद्धान्तः—पुष्पं बर्हिरतिदेशप्राप्तं न तन्त्रितामापादयति । एवं कस्याप्येकस्यैव तन्त्रितास्वीकारे प्रमाणाभावादनियम एवेति ।

एतदभिप्रत्याह नेति । 'आग्रयणे'-'द्यावापृथिवीयस्य' एव 'तन्त्रिता' 'न' 'भवेत्'—द्यावापृथिवीयस्यैव तन्त्रमनुष्ठेयमिति नियमो नास्तीत्यर्थः ॥ १५ ॥

पादे पञ्चदश न्याया
भाष्यकारेण वर्णिताः ।

स्पष्टम् ।

इति द्वादशस्य द्वितीयः ।

# अथ द्वादशस्य तृतीयपादः

[ समुच्चय-तदपवादभूतविकल्प-विचारः ]

## (१) १२।३।१-२ धार्या वत्सत्वक् पुरोक्ताहतं च

( १ ) समुच्चयचिन्ता प्रवर्तते ।

( २ ) अष्टरात्रे प्रथममहः विश्वजिन्नामकम्—ततः षडहो ज्योतिर्नामकः—ततोऽष्टममहः अभिजिन्नामकम् । विश्वजिन्नामके प्रकृतियागे परिधानार्था वत्सत्वगू विहिता—सा च विश्वजिदिति नामसाम्येन अष्टरात्रस्य प्रथमेऽहनि विश्वजिन्नामकेऽतिदेशेन प्राप्ता । ज्योतिष्टोमे च परिधानार्थमहतं वासो विहितम्—तच्च ज्योतिरिति नामसाम्येन अष्टरात्रस्य द्वितीयभागे षडहेऽतिदेशेन प्राप्तम् । पुनः अष्टरात्रस्यान्तिमे भागेऽभिजिन्नामकेऽपि वास एवातिदेशेन प्राप्तम् । सर्वत्र च नामातिदेशेनैव परिधानस्य प्राप्तिः ।

( ३ ) तत्र संशयः—किं वत्सत्वगू धार्याऽथवाऽहतं वासो धार्यमिति

विकल्पः-उत द्वयमपि धार्यमिति समुच्चय इति ।

(४) पूर्वपक्षः—नामातिदेशस्य सर्वत्र समबलत्वाद् विकल्प एवेति ।

(५) सिद्धान्तः—अधःपरिधानाय वासो योग्यतरं भवति-ऊर्ध्वाङ्गप्रावरणाय च वत्सत्वग् योग्यतरा । तस्मादुभयत्रोपकारकत्वाद् द्वयोरपि समुच्चय इति ।

एतदभिप्रेत्याह धार्येति । 'वत्सत्वक्' 'धार्या' परिधानीया-'पुरोक्तं' प्राकृतं ज्योतिष्टोमात्प्राप्तम् 'अहतं' वास इति शेषः—अपि परिधानीयम् । एवं च सति समुच्चय एवाश्रयणीय इत्याशयः ।। १ ।।

(२) १२।३।३-८ न स्यात् तन्त्रं देवसूनाम्परार्थम् ।

(१) तन्त्रिताविचारोऽनुवर्तते ।

(२) अग्नौ श्रूयते—'अग्नीषोमीयपशुपुरोडाशमनु अष्टौ देवसुवां हवींषि निर्वपति' इति ।

(३) तत्र संशयः—तन्त्रित्वमत्र किं देवसूनां हविषाम्—उत पशुपुरोडाशस्येति ।

(४) पूर्वपक्षः—अष्टहविषामनुनिर्वाप्याणां बहुत्वात् तेषामेव तन्त्रित्वम् । तेषामेव तन्त्रं पुरोडाशे प्रसज्यते इति ।

(५) सिद्धान्तः—पशुपुरोडाशस्यैव तन्त्रित्वम् । तस्यैव पूर्वश्रुतत्वान्मुख्यत्वम्-अष्टहवींष्यनुनिर्वाप्याणि पुरोडाशात् पश्चादागच्छन्ति-तस्मादागन्तुकत्वादमुख्यानि तानि इति ।

एतदभिप्रेत्याह नेति । 'देवसूनाम्' अनुनिर्वाप्याणां अष्टहविषाम्-'तन्त्रं' 'परार्थम्' पशुपुरोडाशार्थं न स्यात् । अनुनिर्वाप्याणां तन्त्रं पुरोडाशे न निविशते-पुरोडाशे स्वकीया धर्मा अनुष्ठीयन्ते इत्याशयः ॥ २ ॥

(३) १२।३।९ कर्मण्येकस्मिन् गुणाः स्युः समस्ताः

(१) समुच्चयोदाहरणम् ।

(२) दर्शपूर्णमासयोराम्नायते-'ऋजुमाघारयति-सन्ततमाघारयति-ऊर्ध्वमाघारयति' इति ।

(३) तत्र संशयः-ऋजुत्वादीनां त्रयाणामत्र समुच्चय उत विकल्प इति ।

(४) पूर्वपक्षः—आघारद्वारा तेषां कार्यस्यैकत्वात् विकल्प इति ।

(५) सिद्धान्तः—दृष्टद्वारभेदाभावेऽप्यदृष्टद्वारभेदात् सहानुष्ठानसम्भवाच्च न विकल्पोऽपि तु समुच्चय एवेति ।

एतदभिप्रेत्याह कर्मणीति । 'एकस्मिन् कर्मणि' आघारे-'गुणाः' अनेके ऋजुत्वादयः-'समस्ताः' समुच्चिताः-'स्युः' भवेयुः-अतो न विकल्प इत्याशयः ॥ ३ ॥

(४) १२।३।१०-१५ कार्यैकत्वे स्याद् गुणानां विकल्पः ।

( १ ) पूर्वाधिकरणशेषस्तदपवादरूपः ।

( २ ) 'यवैर्यजेत' 'व्रीहिभिर्यजेत' इति यवा व्रीहयश्च विहिताः ।

( ३ ) तत्र संशयः—किमनयोर्विकल्प उत समुच्चय इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन समुच्चय इति ।

( ५ ) सिद्धान्तः—पुरोडाशनिष्पादनमेवैकं कार्यमुभयोः । 'यवैर्यजेत' इत्यत्र व्रीहिनिरपेक्षाणां यवानां तत्साधनत्वमुच्यते—'व्रीहिभिर्यजेत' इत्यत्र च यवनिरपेक्षाणां व्रीहीणां तत्साधनत्वम् । तथा सत्युभयोरेककार्यत्वाद् विकल्प इति ।

एतदभिप्रेत्याह—कार्येति । 'कार्यैकत्वे' यदा बहूनामेकमेव कार्यं सम्पादनीयं तदा—'गुणानां' धर्माणां—'विकल्प' एव स्यात्'—न तु समुच्चय इत्यर्थः ॥ ४ ॥

(५) १२।३।१६ प्रायश्चित्तं स्याद् विकल्पेन नाशे

( १ ) विकल्पोदाहरणम् ।

( २ ) दर्शपूर्णमासयोरनुष्ठाने प्रायश्चित्तद्वयं श्रूयते—'वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपात्य'—'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपातयेत्' इति च ।

( ३ ) तत्र संशयः—प्रायश्चित्तयोर्विकल्प उत समुच्चय इति ।

( ४ ) पूर्वपक्षः—अत्र दृष्टप्रयोजनाभावात् अदृष्टार्थमुभयं समुच्चित्यानुष्ठेयमिति ।

( ५ ) सिद्धान्तः—विहिताकरणजन्यदोषसमाधानं दृष्टमेव प्रयोजनं प्रायश्चित्तयोः । उभयोश्च यवव्रीहिवदन्योन्यनिरपेक्षत्वाद् विकल्प एवेति ।

एतदभिप्रेत्याह प्रायश्चित्तमिति । 'नाशे' यज्ञस्य केनचिद्धेतुना वैगुण्ये सति 'प्रायश्चित्तं' 'विकल्पेन' स्यात् । यत्र दोषसमाधानार्थान्यनेकप्रायश्चित्तानि विहितानि तत्र विकल्प एवेत्यर्थः ॥ ५ ॥

(६) १२।३।१७ नैमित्तं चेत्तत् समुच्चेयमेव ।

( १ ) पूर्वाधिकरणशेषस्तदपवादरूपः ।

( २ ) क्वचित्तु निमित्तभेदेनानेकानि प्रायश्चित्तानि श्रूयन्ते—यथा 'भिन्ने जुहोति' स्कन्ने जुहोति' इत्यादीनि ।

( ३ ) तत्र संशयः—एतेषां विकल्प उत समुच्चयः ।

( ४ ) पूर्वपक्षः स्कन्दनादिजन्यदोषसमाधानार्थत्वात् प्रायश्चित्तानां पूर्ववद् विकल्प इति ।

(५) सिद्धान्तः—दोषसंयोगमनुपन्यस्य स्कन्दनादिनिमित्तमुपजीव्यात्र प्रायश्चित्तानि विधीयन्ते। तस्मात् निमित्तानेकत्वे नैमित्तिकानामप्यनेकेषां कर्तव्यत्वात्समुच्चय एव प्रायश्चित्तानामिति।

एतदभिप्रेत्याह नैमित्तमिति। 'तत्' प्रायश्चित्तं–'नैमित्तं चेत्' अनेकनिमित्तकं यदा विधीयते तदा–'समुच्चेयम्' 'एव' नतु विकल्पनीयमित्याशयः ॥ ६ ॥

## (७) १२।३।१८-१९ पाठ्योऽनध्यायेऽपि मन्त्रोऽध्वरादौ

(१) अनुष्ठाने मन्त्रोच्चारणविषयो विचारः प्रासङ्गिको वर्तते।

(२) सन्ति कर्मानुष्ठाने पठनीया मन्त्राः। अस्ति चानध्याये वैदकमन्त्रपाठनिषेधः।

(३) तत्र संशयः—पर्वण्यनध्याये यदा कर्मानुष्ठीयते तदा मन्त्रपाठः कर्तव्य उत नेति।

(४) पूर्वपक्षः—'पर्वणि नाध्येयम्' इति निषेधबलादनध्याये क्रतुप्रयोगे मन्त्रपाठो नास्ति इति।

(५) सिद्धान्तः—निषेधस्याध्ययनाध्यापनविषयत्वात् क्रतुप्रयोगे निषेधाभावः। तस्मादनध्यायेऽपि क्रतुप्रयोगेऽस्त्येव मन्त्रपाठ इति।

एतदभिप्रेत्याह—पाठ्य इति। 'अध्वरादौ' यज्ञानुष्ठानादौ—'अनध्यायेऽपि' यस्मिन् दिने वेदाध्ययनं निषिद्धं तस्मिन्नपि दिने—'मन्त्रः' कर्माङ्गभूतः–'पाठ्यः' पठनीय एवेत्यर्थः ॥ ७ ॥

## (८) १२।३।२०-२२ मन्त्रोच्चारे भाषिको न स्वरः स्यात्।

(१) मन्त्रपाठविचारो वर्तते।

(२) मन्त्रोच्चारणे तत्तच्छाखीयब्राह्मणस्वरो वर्तते। अस्य स्वरस्य पारिभाषिकं नाम 'भाषिक' इति। मन्त्रपाठे चास्ति मन्त्रेषु प्रावचनिकं स्वरत्रयम्।

(३) तत्र संशयः—क्रतुप्रयोगे यदा मन्त्र उच्चार्यते तदा तत्र भाषिकस्वरः प्रयोक्तव्यो न वेति।

(४) पूर्वपक्षः–ब्राह्मणेनोक्तत्वात् भाषिकः स्वरोऽवश्यम्प्रयोक्तव्य इति।

(५) सिद्धान्तः—कर्मकालिकमन्त्रोच्चारणे भाषिकस्वरो न प्रयोक्तव्यः। ब्राह्मणे हि 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यादौ स्वरो नोपदिश्यते—केवलम्मन्त्रं प्रदर्शयितुं तस्य मन्त्रकाण्डपठितान्यक्षराण्यनूद्यन्ते इति। तस्मात् त्रैस्वर्येणैवोच्चारणं न भाषिकस्वरेणेति।

एतदभिप्रेत्याह—मन्त्रेति। 'मन्त्रोच्चारे' कर्मानुष्ठानकाले यन्मत्रोच्चारणं क्रियते तस्मिन्—'भाषिकः स्वरः' तत्तच्छाखीयब्राह्मणस्वरः–

'न स्यात्'- प्रयोक्तव्य इति शेषः-अपि तु प्रावचनिकं स्वरत्रयमेव प्रयोक्तव्यमिति ॥ ८ ॥

(९) १२।३।२३-२४ स्यादेवायम्ब्राह्मणोत्पन्नमन्त्रे

(१) पूर्वाधिकरणापवादः।

(२) मन्त्रकाण्डपठिता मन्त्रा यान् प्रकृत्य ब्राह्मणे उद्देशो लभ्यते तेषां विचारः पर्यवसितः। कर्मकाले तेषां प्रयोगे स्वरो न प्रयोक्तव्य इति स्थितम्। सन्ति च केचिन्मन्त्रा ये मन्त्रकाण्डे न पठिता अपि तु ब्राह्मणेष्वेव पठिताः-यथा 'वानस्पत्योऽसि' इति। तान् प्रति-

(३) संशयः--एतेषु भाषिकः स्वरः प्रयोक्तव्यो न वेति।

(४) पूर्वपक्षः--पूर्वाधिकरणन्यायेन नैव प्रयोक्तव्यः स्वर इति।

(५) सिद्धान्तः--येषां मन्त्राणां मन्त्रकाण्डे पाठ एव नास्ति तेषां नास्ति प्रावचनिकं त्रैस्वर्यम्। तस्मात् तेषामुच्चारणे प्रयोक्तव्य एव भवति भाषिकः स्वर इति।

एतदभिप्रेत्याह--स्यादिति। 'ब्राह्मणोत्पन्नमन्त्रे' यस्य मन्त्रस्य मन्त्रकाण्डे पाठो नोपलभ्यते यस्य चाक्षराणि ब्राह्मणमात्रे समुपलभ्यन्ते तस्मिन् मन्त्रे-'अयम्' भाषिकः स्वरः-'स्यात् एव'--तत्र प्रावचनिकस्य स्वरस्याभावादित्यर्थः ॥ ९ ॥

(१०) १२।३।२५ मन्त्रान्ते स्यात् कर्मणः सन्निपातः।

(१) मन्त्रोच्चारणविषयक एव विचारो वर्तते।

(२) 'इषे त्वा' इति मन्त्रः शाखाच्छेदे करणम्-'इमामगृभ्णन्' इति रशनादाने इत्यादि।

(३) तत्र संशयः--कर्मणोऽनुष्ठानं किं मन्त्रोच्चारणात् प्रागेव उत पश्चादेव उत यदा कदाचिदनियमेन इति।

(४) पूर्वपक्षः--नियामकाभावादनियम इति।

(५) सिद्धान्तः--कृत्स्नमन्त्रजन्यमर्थस्मरणं कर्मणोऽङ्गम्। तच्च मन्त्रोच्चारणसमाप्तेः प्राक् नोदेति। विलम्बे चोत्पन्नं स्मरणं विनश्येत्। तस्मात् मन्त्रस्यान्ते एव कर्मानुष्ठानमिति।

एतदभिप्रेत्याह--मन्त्रेति। 'मन्त्रान्ते' मन्त्रोच्चारणस्य समाप्तौ-'कर्मणः' यस्मिन् कर्मणि स मन्त्रो विहितस्तस्य-'सन्निपातः' अनुष्ठानं-'स्यात्' इति सम्बन्धः ॥ १० ॥

(११) १२।३।२६-२७ धारायागेऽप्येवमेव क्रमः स्यात्

(१) पूर्वाधिकरणशेषः।

(२) 'सन्ततां वसोर्धारां जुहोति' इत्यग्नौ विहितम्। [ 'सान्तत्यं'

चान्नाविच्छिन्नत्वम् ] ।

( ३ ) संशयः—होमो मन्त्रात् प्रागुत पश्चादुतानियम इति ।

( ४ ) पूर्वपक्षः—विहितं सान्तत्यं मन्त्रहोमयोर्युगपदुपक्रमे एव सम्भवति । तस्मान्मन्त्रादावेव होमारम्भः इति ।

( ५ ) सिद्धान्तः—वसोर्धाराख्ये कर्मणि 'द्वादश द्वादशानि जुहोति' इति श्रुतम् । 'वाजश्च मे' इत्यन्तैर्द्वादशभिर्मन्त्रवाक्यैर्हुता आहुतिः 'द्वादश'-शब्देनात्र विवक्षिता । एतादृशाः द्वादश द्वादशाख्याहुतयो वसोर्धारायां हूयन्ते । एतेषु द्वादशसंख्यकद्वादशेषु विलम्बाभाव एव सान्तत्यं वसोर्धारायाः । तस्मात् पूर्वाधिकरणन्यायेन मन्त्रान्ते एव होमानुष्ठानमिति ।

एतदभिप्रेत्याह धारेति । 'धारायागे' वसोर्धाराख्ये कर्मणि–'अपि' 'एवमेव' पूर्वाधिकरणोक्तः एव–'क्रमः' मन्त्रकर्मणोः पौर्वापर्यम्—'स्यात्' इत्यर्थः ॥ ११ ॥

## (१२) १२।३।२८ आधारे स्यादेवमेव व्यवस्था ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) 'सन्ततमाघारयति' इति श्रुत आघारः ।

( ३ ) तत्र संशयः—मन्त्रान्ते मन्त्रादौ वा आघारानुष्ठानमिति ।

( ४ ) पूर्वपक्षः—अत्राहुतेरेकत्वात् पूर्वाधिकरणोक्तं नैरन्तर्यरूपं 'सान्तत्यम्' न सम्भवति । एवं च मन्त्रसाहित्यमेवात्र सान्तत्यम् । मन्त्रादावेव कर्मोपक्रम इति ।

( ५ ) सिद्धान्तः—क्षार्यमाणाज्यबिन्दुनैरन्तर्यमत्र सान्तत्यम् । तथा च सति एवमेव वाक्यार्थः सम्पद्यते—'आघाराय यदाज्यं जुह्वां गृहीतं तत्सर्वं शनैरविच्छेदेनाहवनीयेऽग्नौ पातयेत्' इति । एवं च यदि मन्त्रकर्मणोः सहोपक्रमः स्यात् तदा 'अनेन मन्त्रेण' इति तृतीयायुक्तं पूर्वकालत्वलक्षणं मन्त्रस्य करणत्वं हीयेत । तस्मात् पूर्ववदत्रापि मन्त्रान्ते एव कर्मोपक्रम इति ।

एतदभिप्रेत्याह—आघार इति । 'आघारे' आघारहोमे–'एवमेव' वसोर्धारान्यायानुसारिणी एव–'व्यवस्था' क्रमनियमः–'स्यात्' इति सम्बन्धः ॥ १२ ॥

## (१३) १२।३।२९ स्यादेकार्थे मन्त्रवाक्ये विकल्पः ।

( १ ) मन्त्रविषयको विचारोऽनुवर्तते ।

( २ ) पुरोडाशविभजने त्रयो मन्त्राः श्रूयन्ते—'पूषा वां विभजतु'–'भगो वां विभजतु'—'अर्यमा वां विभजतु' इति ।

( ३ ) तत्र संशयः—अत्र मन्त्राणां समुच्चय उत विकल्प इति ।

( ४ ) पूर्वपक्षः—समुच्चित्यानुष्ठातुं शक्यत्वात् समुच्चयः इति ।

( ५ ) सिद्धान्तः—एकस्यैव मन्त्रान्ते कर्मण उपक्रमे द्वितीयस्य प्रयोजनमेव नोत्पद्यते । तस्माद्विकल्प एवेति ।

एतदभिप्रेत्याह स्यादिति । 'एकार्थे' एकस्मै एव कार्याय विहिते—'मन्त्रवाक्ये' नानामन्त्ररूपे—'विकल्पः' 'स्यात्'—न समुच्चय इत्यर्थः ॥१३॥

## (१४) १२।३।३० सङ्ख्योपेतास्ते समुच्चित्य वाच्याः ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) अग्नौ श्रूयते—'तां चतुर्भिरादत्ते' इति ।

( ३ ) तत्र संशयः—चतुर्णाम्मन्त्राणामत्र विकल्प उत समुच्चय इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन विकल्प इति ।

( ५ ) सिद्धान्तः—पूर्वस्मिन्नधिकरणे प्रत्येकमन्त्रे विभजनमुक्तं तच्च प्रत्येकमन्त्रस्य स्वतन्त्रमेव करणत्वम्-तस्माद्विकल्पः । अत्र तु चतुर्णां समूहस्यैव करणत्वं 'चतुर्भि'रिति पदेन बोध्यते । तस्माच्चतुर्णामपि मन्त्राणामन्ते एव कर्मोपक्रमः । तथाच सति चतुर्णां समुच्चय एव न्याय्य इति ।

एतदभिप्रेत्याह सङ्ख्येति । 'ते' मन्त्राः यदा 'सङ्ख्योपेताः' सङ्ख्याविशेषविशिष्टा विहितास्तदा—'समुच्चित्य' समूहरूपेणैव—'वाच्याः' पठनीया इत्यर्थः ॥ १४ ॥

## (१५) १२।३।३१–३५ मन्त्रोऽनेको ब्राह्मणोक्तो विकल्प्यः

( १ ) मन्त्रविषयक एव विचारो वर्तते ।

( २ ) 'उरु प्रथस्वेति पुरोडाशं प्रथयति'—'उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति' इति ब्राह्मणवाक्यद्वयेन द्वौ मन्त्रौ पुरोडाशप्रथने विनियुज्येते ।

( ३ ) तत्र संशयः—मन्त्रयोः समुच्चय उत विकल्प इति ।

( ४ ) पूर्वपक्षः—अत्र मन्त्रविनियोगस्य मन्त्रलिङ्गेनैव सिद्धत्वात् ब्राह्मणगतं वचनद्वयं चतुस्सङ्ख्यावत् समुच्चये एव पर्यवस्यतीति ।

( ५ ) सिद्धान्तः—वचनद्वये मन्त्रयोः परस्परनैरपेक्ष्यं भासते । तस्मात् समुच्चयो न न्याय्यः—लिङ्गसिद्ध एवार्थो ब्राह्मणवचनेनानूद्यत इत्यभ्युपेयम् । तस्मादेकार्थत्वाद् विकल्प एवेति ।

एतदभिप्रेत्याह मन्त्र इति । 'ब्राह्मणोक्तः' ब्राह्मणवाक्येन विहितः—'अनेकः मन्त्रः' नाना मन्त्रा एकार्था यत्रोपलभ्यन्ते तत्र स 'विकल्प्यः' विकल्पेनैव विनियोक्तव्य इत्यर्थः ॥ १५ ॥

## (१६) १२।३।३६–३८ हौत्रो मन्त्रः स्यात् समुच्चेय एव ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) यूपस्योच्छ्रयणे करणभूत एष मन्त्रोऽध्वर्युणा पठनीयः-'उद्दिवं स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृंह' इति—उच्छ्रीयमाणाय यूपाय प्रेषितेन होत्रा एष मन्त्रः पठनीयः—'उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि' इति ।

( ३ ) तत्र संशयः—अनयोर्मन्त्रयोर्विकल्प उत समुच्चय इति ।

( ४ ) पूर्वपक्षः—यूपोच्छ्रयणस्मारणमेकमेव कार्यं द्वयोर्मन्त्रयोः । तस्मादेककार्यत्वाद्विकल्प इति ।

( ५ ) सिद्धान्तः—प्रथमो मन्त्रः 'उच्छ्रयणं करोमि' इत्युच्छ्रयकरणं स्मारयति द्वितीयस्तु क्रियमाणमुच्छ्रयणमनुवदन् 'यूपोच्छ्रयणं कर्तव्यम्' इत्यध्वर्योः स्मृतिं जनयति । तस्मात् 'करोमि' 'कर्तव्यम्' इत्यनयोः स्मरणप्रकारस्यान्यत्वात् कार्यभेदः-तस्मात् समुच्चय इति ।

एतदभिप्रेत्याह हौत्र इति । 'हौत्रः' होत्रा पठनीयो द्वितीयो मन्त्रः-'समुच्चेयः' 'एव' अध्वर्युपठनीयेन मन्त्रेण सह समुच्चित्य एव पठनीयः इत्यर्थः ।। १६ ।।

अस्मिन् पादे भाष्यकारेण वीक्ष्य<br>न्यायाः सर्वे वर्णिता षोडशैव ।

स्पष्टम् ।

इति द्वादशस्य तृतीयः ।

# अथ द्वादशस्य चतुर्थः पादः

[ विकल्प-तदपवादसमुच्चय-विचारः ]

## (१) १२।४।१-२ समुच्चयो जपादीनाम्

( १ ) समुच्चयोदाहरणम् ।

( २ ) दीक्षितस्य वाङ्नियमनात् पूर्वं जपाय मन्त्रा आम्नाताः-'सारस्वतीमनूच्य वाग् यन्तव्या—वैष्णवीमनूच्य वाग् यन्तव्या' इति ॥-तथा च स्तुतयः 'अग्निर्मूर्धादिव' इत्यादि ।-आशिषः 'आयुर्दा अग्ने' इत्यादि ।

( ३ ) तत्र संशयः—अत्र जपनीयादिमन्त्राणां समुच्चय उत विकल्प इति ।

( ४ ) पूर्वपक्षः—सर्वत्र मन्त्रस्य वचनमात्रं क्रियते । तस्मादेकार्थत्वाद् विकल्प इति ।

( ५ ) सिद्धान्तः—कर्मप्रकाशकलिङ्गशून्या इमे मन्त्राः अदृष्टार्था एवोच्चार्यन्ते । तथा च कार्यभेदः—तस्मात् समुच्चय इति ।

एतदभिप्रेत्याह समुच्चय इति। 'जपादीनाम्' 'समुच्चय' एव न विकल्प इत्यर्थः ॥ १ ॥

(२) १२।४।३-४ याज्याऽनेका विकल्प्यते।

( १ ) विकल्पोदाहरणम्।

( २ ) ऐन्द्राबार्हस्पत्ययागे—'इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती' इत्यादिके याज्यानुवाके द्विविधे आम्नाते।

( ३ ) तत्र संशयः—अनयोस्समुच्चय उत विकल्प इति।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन समुच्चय इति।

( ५ ) सिद्धान्तः—दृष्टप्रयोजनस्य देवताप्रकाशनरूपस्यैकत्वाद् विकल्प इति।

एतदभिप्रेत्याह याज्येति। 'अनेका याज्या' यत्र एकाधिके याज्यानुवाक्ये श्रूयेते तत्र-'विकल्प्यते' विकल्प एव इष्यते-न समुच्चय इत्यर्थः॥२॥

(३) १२।४।५-७ समुच्चयः क्रयद्रव्ये

( १ ) समुच्चयोदाहरणम्।

( २ ) सोमक्रयणार्थानि द्रव्याणि समाम्नातानि—'अजया क्रीणाति हिरण्येन क्रीणाति—वाससा क्रीणाति' इत्यादीनि।

( ३ ) तत्र संशयः—एतेषां द्रव्याणां विकल्प उत समुच्चय इति।

( ४ ) पूर्वपक्षः—क्रयरूपस्य कार्यस्यैकत्वात् विकल्प इति।

( ५ ) सिद्धान्तः—बहुभिर्द्रव्यैर्विक्रेतुः स्वीकारस्य सौलभ्यात्-'दशभिः क्रीणाति' इति सङ्ख्योक्तेश्च—समुच्चय इति।

एतदभिप्रेत्याह समुच्चय इति। 'क्रयद्रव्ये' सोमक्रयणार्थानां द्रव्याणाम् विषये-'समुच्चयः' न तु विकल्प इत्यर्थः ॥ ३ ॥

(४) १२।४।८ गुदानां स्यात् समुच्चयः।

( १ ) समुच्चयोदाहरणम्।

( २ ) अग्नीषोमीये 'गुदेनोपयजति' इति गुदेनोपयजनं श्रूयते। तच्चैकादशिनेषु चोदकप्राप्तम्। तत्र चैकादश गुदाः प्राप्ताः।

( ३ ) तत्र संशयः—एतेषां गुदानां विकल्प उत समुच्चय इति।

( ४ ) पूर्वपक्षः—गुदोपयजनरूपमेकमेव कार्यम्। तस्मात् कार्यैकत्वाद् विकल्प इति।

( ५ ) सिद्धान्तः—अत्र शेषप्रतिपत्तिरूपः संस्कारो विधीयतेऽदृष्टार्थः। तस्मात् समुच्चय इति।

एतदभिप्रेत्याह गुदानामिति। 'गुदानां' गुदोपयजनकर्मणि विहितानामेकादशिने प्राप्तानां-'समुच्चयः'-न विकल्प इत्यर्थः ॥ ४ ॥

(५) १२।४।९ षडेकादौ विकल्पः स्यात्

( १ ) विकल्पोदाहरणम् ।

( २ ) आधाने श्रूयते-'एका देया-षड् देयाः-द्वादश देयाः' इत्यादि।

( ३ ) तत्र संशयः-अत्रैकादीनां समुच्चय उत विकल्प इति ।

( ४ ) पूर्वपक्षः—तृतीयाधिकरणन्यायेनातिसौलभ्याय समुच्चय इति ।

( ५ ) सिद्धान्तः—नानासङ्ख्यानामेकत्वादीनां परस्परनैरपेक्ष्यं गम्यते । तस्मात् विकल्प इति ।

एतदभिप्रेत्याह षडिति । 'षडेकादौ' 'षड् देया एका देया' इत्यादौ 'विकल्पः स्यात्'—सङ्ख्यानामिति शेषः ॥ ५ ॥

(६) १२।४।१०-१६ जाघनी च विकल्प्यते ।

( १ ) विकल्पोदाहरणम् ।

( २ ) 'जाघन्या पत्नीः संयाजयन्ति' इति श्रूयते । एकादशिनादिषु पशुगणेषु सन्त्यनेके पशवः ।

( ३ ) तत्र संशयः-अनेकासां जाघनीनां विकल्प उत समुच्चय इति।

( ४ ) पूर्वपक्षः—चतुर्थाधिकरणन्यायेन समुच्चय इति ।

( ५ ) सिद्धान्तः-पत्नीसंयाजनं विकृतिष्वर्थकर्म । अर्थकर्मणश्चैकयैव जाघन्या सिद्धत्वाद् जाघनीनां विकल्प एवेति ।

एतदभिप्रेत्याह जाघनीति । 'जाघनी च' यत्र पशुगणेषु अनेका जाघन्यो भवन्ति तत्र—'विकल्प्यते' विकल्प एवाभ्युपेयते न समुच्चय इत्यर्थः ॥ ६ ॥

(७) १२।४।१७-२५ वार्त्राग्निर्बाधते तूख्यम्

( १ ) विकल्पोदाहरणप्रासङ्गिको विचारः ।

( २ ) अग्निचयने उखां सम्पाद्य तस्यामुखायामग्निर्ध्रियते-स नित्योऽग्निः । तत्रैव प्रकरणे काम्योऽप्यग्निः श्रूयते-'वृत्रात्प्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्यात्' इति ।

( ३ ) तत्र संशयः—द्वयोरग्न्योर्विकल्प उत समुच्चय इति ।

( ४ ) पूर्वपक्षः—होमा नित्यस्योखायां धृतस्याग्नेः कार्यम्-फलाय धारणं तु काम्यस्याग्नेः । एवं च कार्यभेदात् समुच्चय इति ।

( ५ ) सिद्धान्तः—फलाय धृतेनैवाग्निना होमस्यापि प्रसङ्गसिद्धौ नित्योऽग्निर्बाध्यते । तथासति अकामिन उखायां धृतोऽग्निः-कामिनस्तु अन्यतरम्-इत्येवं विकल्पः इति ।

एतदभिप्रेत्याह—वार्त्राग्निरिति । 'वार्त्राग्निः' वृत्रादाहृतोऽग्निः—'तु-'

'उख्यम्' उखायां धृतमग्निं बाधते–काम्येन वार्त्ताग्निनैव कार्यनिर्वाहाद् इत्यर्थः ॥ ७ ॥

(८) १२।४।२६–२७ नासावाहवनीयकः ।

( १ ) पूर्वाधिकरणापवादः ।

( २ ) यथोखागतोऽग्निः–वार्त्तोऽग्निश्च–तथैवाहवनीयोऽप्यस्त्यग्निः ।

(३) तत्र संशयः–यथा उख्यस्याग्नेर्बाधः तथा किमाहवनीयस्यापीति ।

( ४ ) पूर्वपक्षः––पूर्वाधिकरणन्यायेन काम्येन वार्त्तणैवाग्निना होमकार्यसिद्धेः आहवनीयस्य बाधः ।

( ५ ) सिद्धान्तः—आधानरूपसंस्कारेण ह्याहवनीयत्वं भवति नाहुत्याधारमात्रत्वेन । काम्येऽग्नौ तत्संस्काराभावान्न सम्भवत्याहवनीयत्वम् ।

एतदभिप्रेत्याह नेति । 'असौ' वार्त्तः काम्योग्निः–'आहवनीयः' 'न' भवति–आहवनीयकार्यं कर्तुं न शक्नोतीत्यर्थः ॥ ८ ॥

(९) १२।४।२८–२९ नास्मिन्नाधानसंस्काराः

( १ ) पूर्वाधिकरणशेषः ।

( २ ) पूर्वोक्ते काम्येऽग्नौ—

( ३ ) संशयः––आधानादयः संस्कारा भवन्ति न वेति ।

( ४ ) पूर्वपक्षः—आधानस्य सर्वकर्मशेषत्वादस्त्येवाधानं काम्येऽग्नाविति ।

( ५ ) सिद्धान्तः—संस्कृतस्याग्नेः स्थाने विहितः काम्योऽग्निः संस्कृताग्निकार्यं करोति न तु संस्कारमपेक्षते । तस्मान्नास्त्याधानादिसंस्कारः काम्येऽग्नाविति ।

एतदभिप्रेत्याह नेति । 'अस्मिन्' संस्कृतस्याग्नेः स्थाने विहितेऽसंस्कृते अग्नौ–'आधानसंस्काराः' 'न' क्रियन्ते इति शेषः ॥ ९ ॥

(१०) १२।४।३०–३१ नास्य स्यान्नित्यधारणम् ।

( १ ) पूर्वाधिकरणशेषः ।

( २ ) भवत्यग्निचयने उख्योऽग्निः ।

( ३ ) तत्र संशयः–किमस्य धारणं सार्वकालिकमुत न–अथवा विकल्प इति ।

( ४ ) पूर्वपक्षः—'न प्रतिसमेध्यो–यत् प्रतिसमिन्ध्येत् भ्रातृव्यमस्मै जनयेत्' इति सार्वकालिकधारणनिषेधः श्रूयते । न चाप्राप्तस्य निषेधः–ततश्च निषेधोऽयं प्रापकं विधिमनुमापयति । एवं च विधिनिषेधयोः सत्त्वाद् विकल्प इति ।

( ५ ) सिद्धान्तः—प्रापकविधिं विनाऽपि निषेधः सम्भवति। आहवनीयगतं हि नित्यधारणमुख्ये निषिध्यते। तथा अति विधेरकल्पितत्वान्निषेध एव वर्तते। तस्मान्नास्य नित्यधारणमिति।

एतदभिप्रेत्याह नेति। 'अस्य' उख्यस्याग्नेः–'नित्यधारणम्' सार्वकालिकं धारणम्–'न' भवतीति शेषः॥ १०॥

(११) १२।४।३२ गणे क्रत्वर्थमेकस्य

( १ ) यजमानविषयो विचारः प्रवर्तते।

( २ ) 'शुक्रं यजमानोऽन्वारभते'–'यजमानसम्मितौदुम्बरी भवति' इत्यादि विहितम्। सत्रे च सन्ति बहवो यजमानाः।

( ३ ) तत्र संशयः—सत्रादौ गणयागे किमेतत् सर्वं याजमानमेकस्य यजमानस्य भवेदुत सर्वेषामिति।

( ४ ) पूर्वपक्षः—सर्वेषां यजमानत्वाविशेषात् सर्वेषाम्भवति याजमानमिति।

( ५ ) सिद्धान्तः—उक्तानि याजमानानि क्रत्वर्थानि क्रतुगतग्रहादिसंस्कारार्थानि। एवं च एकेनैव शुक्रग्रहादिसंस्कारस्य सिद्धत्वादितरैस्तत्करणे प्रयोजनं नास्ति। पुरुषसंस्कारार्थत्वे तु भवेत्सर्वगामि। तच्च नास्ति पुरुषार्थत्वम्। तस्मादेकेनैव कर्तव्यमिति॥

एतदभिप्रेत्याह—गण इति। 'गणे' सत्रादौ बहुकर्तृके कर्मणि—यत् 'क्रत्वर्थं' कर्म क्रतुगतग्रहादिसंस्कारार्थं याजमानं विहितम् तत्—'एकस्य' एकेनैव यजमानेन कर्तव्यं न सर्वैरित्यर्थः॥ ११॥

(१२) ।१२।४।३३ कुर्यात् कश्चिदहीनके।

( १ ) पूर्वाधिकरणशेषः।

( २ ) अस्त्यहीनो यागो बहुकर्तृकः। तत्र एकेनैव कार्यं द्रव्यादिसंस्कारादि इति पूर्वन्यायेन स्थितम्।

( ३ ) तत्र संशयः—स एको यजमानः क इति नियम उत यः कश्चिदित्यनियम इति।

(४) पूर्वपक्षः–सत्रे नियमस्य दर्शयिष्यमाणत्वादत्रापि नियम इति।

( ५ ) सिद्धान्तः—अहीने विशेषावधारणस्याशक्यत्वाद् यः कश्चिदिति अनियम एवेति।

एतदभिप्रेत्याह कुर्यादिति। 'अहीनके' अहीने यागे—'यः कश्चित्' यजमानः कुर्यात्—नियमो नास्तीत्याशयः॥ १२॥

(१३) १२।४।३४ सत्रे गृहपतिः कुर्यात्

( १ )याजमानविचारो वर्तते पूर्वाधिकरणापवादः।

( २ ) सन्ति याजमानानि कर्माणि । सन्ति च सत्रे गृहपतिसहिता बहवो यजमानाः । एतेषाम्मध्ये एक एव याजमानानि कुर्यादिति स्थितमेकादशाधिकरणे ।

( ३ ) तत्र सन्देहः—एतेषाम्मध्ये याजमानानि कर्माणि कः कुर्यात् । किं गृहपतिरेवेति नियमः—उत यः कश्चिदेक इति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन यः कश्चित् कुर्यादिति ।

( ५ ) सिद्धान्तः—गृहपतिव्यतिरिक्ता अन्येऽन्यर्त्विक्कार्येषु व्यापृता न शक्नुवन्ति शुक्रग्रहस्पर्शादि याजमानं कार्यं कर्तुम् । विलम्बे चार्त्विज्यशुक्रग्रहस्पर्शादीनां विहितमेककालीनत्वं विहन्येत । तस्मात् गृहपतिरेव कुर्यादिति नियमः इति ।

एतदभिप्रेत्याह सत्र इति । 'सत्रे 'गृहपतिः' एव—'कुर्यात्'-याजमानानि कर्माणीति शेषः ॥ १३ ॥

## (१४) १२।४।३५-४० संस्काराः सर्वकर्तृषु ।

( १ ) सत्रे यजमानानि गृहपतिरेव कुर्यादिति स्थितम् । सन्ति च याजमानाः संस्काराः । त इदानीं चिन्त्यन्ते ।

( २ ) सन्त्यञ्जनादयो यजमानसंस्काराः ।

( ३ ) तत्र सन्देहः—किमेतेऽपि गृहपतेरेव कार्या उत सर्वेषामिति ।

( ४ ) पूर्वपक्षः—पूर्वाधिकरणन्यायेन गृहपतेरेवेति ।

( ५ ) सिद्धान्तः—फलित्वप्रयोजका एते संस्काराः । फलसम्बन्धश्च सत्रे सर्वेषां यजमानानाम् । तस्मात् सर्वेषां यजमानानामञ्जनादिसंस्कारा इति ।

एतदभिप्रेत्याह संस्कारा इति । 'संस्काराः' सत्रे अञ्जनादयो याजमानाः—'सर्वकर्तृषु'—सर्वेषु यजमानेषु—कर्तव्या इति शेषः ॥ १४ ॥

## (१५) १२।४।४१-४७ आर्त्विज्यं ब्राह्मणस्यैव

( १ ) सर्वोपसंहारेणार्त्विज्याधिकारो विचार्यते ।

( २ ) सन्त्यार्त्विज्यानि कार्याणि । सन्ति च ब्राह्मणक्षत्रियवैश्यास्त्रयो वर्णा वेदशास्त्रज्ञाः ।

( ३ ) तत्र सन्देहः—आर्त्विज्यकर्माणि किं त्रिभिरपि द्विजातिभिः कार्याणि उत ब्राह्मणेनैवेति ।

( ४ ) पूर्वपक्षः—त्रयोऽपि वर्णा अधीतवेदा विद्यावन्तः । शक्नुवन्ति च त्रयोऽप्यार्त्विज्यानि कर्तुम् । तस्मात् त्रयोऽपि कुर्युरिति ।

( ५ ) सिद्धान्तः—विद्ययाऽधिकारोऽस्ति त्रयाणामेव । किन्तु ब्रा-

मार्णिकैः स्मृतिभिरार्त्विज्यं ब्राह्मणे एव नियमितम्—'प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा' इति याज्ञवल्क्यवचनात्। तस्माद् ब्राह्मणस्यैवार्त्विज्यमिति।

एतदभिप्रेत्याह—आर्त्विज्यमिति। 'आर्त्विज्यं' ऋत्विजां कर्मस्वधिकारः—'ब्राह्मणस्य एव' न तु क्षत्रियवैश्ययोरिति भावः॥ १५॥

न्यायाः पञ्चदशोदिताः।

॥ इति मण्डनमिश्रकृता मीमांसानुक्रमणिका॥

स्पष्टम्॥

इति द्वादशस्य चतुर्थः।

## इति द्वादशोऽध्यायः॥

जर्मनीदेशवास्तव्यटीबोनामकपण्डितात्।
प्राप्तम्पुस्तकमेतस्य ग्रन्थस्य परिशोधितम्॥
श्रीमद्गोविन्ददासाख्यमित्रवर्यकृपावशात्।
पुस्तकान्तरमासाद्य स्वादर्शः प्रस्तुतो मया॥
व्याख्यासापेक्षतां तस्य विभाव्य कृतवानहम्।
बालानां सुखबोधाय मीमांसामण्डनं त्विदम्॥
अनेन प्रीयतां देवो विश्वेशः काशिकापतिः।
श्रीमद्गोविन्ददासस्याप्यन्तरात्मा प्रसीदतु॥

गुणवसुखेचरपृथ्वी—१९८३—मितसंवत्सरफाल्गुने शुक्ले।
श्रीमद्दशमीतिथ्यां ग्रन्थोऽयं पूर्णतां नीतः॥

इति श्रीमैथिलश्रोत्रियमहामहोपाध्यायगङ्गानाथझाशर्मकृतम् मीमांसामण्डनम्॥

# कारिकाणामकाराद्यनुक्रमणिका।


| विषय | पृष्ठ |
|---|---|
| अ | |
| अङ्गं प्रयाजादि सकृत् प्रकुर्यात् | ४४८ |
| अग्निर्वै ब्राह्मणो जात्या | ३५ |
| अग्निष्टोमस्त्वेतदर्थः | २१७ |
| अग्निहोत्रपदं नाम | ३० |
| अग्निहोत्रार्थोद्धृते यजिः | ३५१ |
| अग्न्यर्थमेतन्न गुणः क्रतूनाम् | १२३ |
| अग्न्यादिशब्दो ध्रुवमूहितव्यः | ३१९ |
| अङ्गहीनोऽप्यधिकृतः | २२८ |
| अङ्गाभ्यासोऽध्वराभिधे | ४१२ |
| अङ्गं पुरोडाश उपैति पाशुकम् | ४७१ |
| अच्छिद्रवाचोऽप्यनुषङ्ग एव | ४८ |
| अञ्जनादि भवेत्तस्याम् | ३७६ |
| अतिदेशो विधेरिष्टः | २८३ |
| अतः शब्देऽपि विज्ञाते | ९ |
| अत्र वाऽमुत्र वा फलम् | १८० |
| अथ प्रयोजकाध्यायः | १५६ |
| अथान्येनेत्यखिलः क्रतुः | २१७ |
| अथायं धर्मजिज्ञासाम् | ३ |
| अधिकौ न पुरोडाशौ | ४४३ |
| अदाभ्यः प्रकृतौ ग्राह्यः | ६१ |
| अद्रव्योऽप्यधिकारवान् | २२८ |
| अध्यूध्निका होतृयजेर्विकारः | ४२९ |
| अध्वर्युणा प्रेषणमेव कार्यम् | १४९ |
| अध्वर्युमन्त्रः करणो विरोधे | १४७ |
| अध्वर्योश्चमसाहुतिः | १४१ |
| अनादयो व्याकरणादु गवाद्याः | २७ |
| अनिरुक्तोदयेऽपीज्या | २५५ |
| अनीक्षणं व्रतं पुंसः | १५८ |
| अनुयाजः स्विष्टकृद्गुणः | ४०० |
| अनुयाजाः स्युः सहामनैः | ३९३ |
| अनुष्ठानावसायोऽर्थात् | ३७ |
| अन्ते भवेत् वैकृतमङ्गजातम् | २०७ |
| अन्त्ये बीजे वाग्यमस्य प्रहाणम् | ४६१ |
| अन्यत्रानियमो भवेत् | १९३ |
| अन्यत्रापि चोदितपुनरुक्तेषु | ९३ |
| अन्याप्रामाण्यसिद्धौ | ६ |
| अन्वाधानमस्यां न च देवतापरम् | ४७९ |
| अपान्निनीतिः प्रतिपत्तिरेव | १६९ |
| अब्राह्मणस्याधिकृतिर्न सत्रे | २६७ |
| अभिक्रमः प्रयाजाङ्गम् | ७२ |
| अभ्यस्यधर्मः षडहस्य कार्यः | ३०७ |
| अभ्यस्या यथोक्तं खलु साभिधेनी | ४०६ |
| अभ्यास आतंडलतोऽत्रहन्तेः | ४४८ |
| अभ्यासक्रिया स्यात्प्रथमोत्तमान्ते | ३१७ |
| अभ्यासमृच्छेत् परमेकधेति | २२५ |
| ( वर्णकान्तरेण ) अभ्यासे नातिजगती | ३२८ |
| अभ्यासो निमित्ते गुरुवन्दनादेः | २३५ |
| अभ्यूहनं चापि निवर्ततेऽत्र | ३६४ |

| विषय | पृष्ठ |
|---|---|
| अमुख्योऽपि गुणो ग्राह्यो येनान्येऽपि गुणान्विताः | ४९० |
| अर्धोऽस्तेऽर्धग्रहस्तूष्णीम् | ७५६ |
| अवघाते सकृन्मन्त्रः | ४७१ |
| अवश्यमारब्धसमपनं स्यात् | २३२ |
| अवेष्टौ न क्रतौ तन्त्रम् | ४६७ |
| अव्यक्तयागेषु तु सोमधर्माः | २९८ |
| अश्वग्रहे वैदिकजेऽङ्गमिष्टिः | १०६ |
| अश्वः स्यात समस्तस्य निवर्तनाय | ३८८ |
| अष्टसंख्याऽवयुत्योक्ता | ३४ |
| असन्नयतस्त्वप्ययमेव कालः | २५३ |
| असन्निकृष्टसादृश्यम् | १० |
| असान्नाय्येऽप्ययं यजिः | २५७ |
| अस्त्येव मैत्रावरुणस्य भक्षः | ४३० |
| अस्थियज्ञे न काम्यानि | ३७४ |
| अस्थ्नां चेन्न जपादिकम् | ३७३ |
| अहर्गणे स्युर्दशरात्रधर्माः | ४०५ |
| अहीनोपसदां संख्या | ९६ |
| अह्नां सहस्रसंख्या स्यात् | २७५ |
| अहर्गणान्नोपचयो विधेयः | ३०८ |
| अहीनोपि भवेदेवम् | ४२४ |
| अंशुग्रहाङ्गं प्रकृतिस्थधर्माः | १२६ |

आ

| विषय | पृष्ठ |
|---|---|
| आकृतित्यतिरिक्तेऽर्थे | १२ |
| आग्नेयमन्त्रः प्रकृतेः प्रयोज्यः | ८० |
| आग्नेययागश्च पृथक्प्रदानम् | ४५० |
| आग्नेयविध्यन्तमुपैति सौर्यः | ३०१ |
| आग्नेयोऽन्यो रुगर्थिनः | ६३ |
| आग्नेयः पर्वणोर्भवेत् | ६४ |
| आघारसन्ततविधिर्गुणमात्रनिष्ठः | ५१ |
| आज्यस्य धर्मौ मधुनीरयोः स्यात् | ३०२ |
| आज्यान्न शेषकार्याणि | १११ |
| आधानं कर्तृभिर्भिन्नम् | ५८ |
| आधारे स्यादेवमेव व्यवस्था | ४९६ |
| आपराह्निकभेदः स्यात् | ४५५ |
| आमिक्षायां पयोगताः | ३०४ |
| आरम्भणीया सकृदादितः स्यात् | ३१८ |
| आरम्भणीयो विकृतौ | ४८६ |
| आरुण्यं क्रयणस्याङ्गम् | ७० |
| आर्तौ हविष्येकतरेऽपि यागः | २४९ |
| आर्त्विज्यं ब्राह्मणस्यैव | ५०३ |
| आर्यप्रयोगो बलवान् यवादौ | २४ |
| आवर्तताह्वानमह्नां समूहे | ४६३ |
| आसादने स्याद्विधिरुत्करस्य | ३८१ |
| आर्षेये न विकल्पः स्यात् | ४३७ |

इ

| विषय | पृष्ठ |
|---|---|
| इज्यात्रयं त्वहीने स्यात् | ४१६ |
| इदानीं नित्यसम्बन्ध | ११ |
| इषौ श्येनसमो विधिः | २८२ |
| इष्टिं कृत्वा सोमयागं न कुर्यात् | २१० |
| इष्टेर्भवेदैक्षुपशुर्विकारः | २२६ |
| इष्टेः पश्चात्सोमधर्मा विकारः | २२३ |
| इष्टयङ्गमुपवीतता | ७२ |

उ

| विषय | पृष्ठ |
|---|---|
| उत्कर्षो नाग्निहोत्रस्य | २०२ |
| उत्कृष्टव्यः स्यात्पुरोडाश एव | २२२ |
| उत्कृष्येरन् देवताः सूक्तवाके | ४६५ |
| उत्तराग्रन्थगोत्तरा | ३२७ |
| उपांश्वेकपुरोडाशे | ४४५ |

विषय पृष्ठ

उपांशुः स्याद्ध्रुवाज्यतः ४४४

उद्धृत्य चासादनमत्र नास्ति२६५

उद्भिन्नाम गुणो नैव २९

उपक्रमात् सा तुरगस्य दातुः१०७

उपगानं समुच्चेयम् ३९३

उपगाः प्रकृता मताः १३७

( द्वितीयवर्णकम् ) उपस्थानं प्रगीतया ३३२

उपहामा न बाधन्ते ३९०

उपांशुता प्राज्ययजिप्रयुक्ता ३१६

उपांशुस्तत्र हीयते २५५

उलूखलैक्यं बहुबीजयागे २०६

उस्राशब्दोऽनवल्ध्यायाम् ३९९

उपांशौ च चतुर्ग्रहः ४४३

ऊ

( वर्णकान्तरेण ) ऊहं व्रजेत् धान्यमसीति वाक्यम् ३२०

ऊहस्तथा स्याद्धरितादिशब्दे ३४०

ऊह्यौ विकृत्यां खलु पाशमन्त्रौ ३४१

ऋ

ऋक्पादबद्धो भवतीह मन्त्रः ४५

ऋक्सामभिन्नो यजुरेव मन्त्रः ४६

ऋगागमे क्रमः स्थानात् १९५

ऋगागमः स्यात्पवमान आद्ये४०६

ऋग्वेदचोदितान्युच्चैः ८८

ऋचः संस्कारकं साम ३२५

ऋत्विजस्त्विह नान्ये स्युः ४२३

ए

एकत्रिके स्यात् तृचमाद्यमेव ४०४

एका च पञ्चेति गवां निवृत्तिः ३८७

विषय पृष्ठ

एकैकशः सत्रफलं समग्रम् २३१

एकद्विवाची न खलूहितव्यः ३४६

एकधेति सहार्थकम् ३६७

एकमेव फलं ततः १७७

एकादशिन्यां विकृतिस्तु तस्य ३४६

एकैव भिन्नदैवत्ये ४७०

एकः पदार्थो जनयत्यपूर्वम् ३९

एकेषु मैत्रावरुणस्य भागः ४३१

एतौ पक्षौ क्षत्रविड्ब्राह्मणानाम् २२१

ऐ

ऐन्द्रेषु सोमेषु तु भक्षमन्त्रो ८२

क

कण्वरथन्तरे सर्वे ३३७

कपालेषु न तन्त्रता ४७१

कपालं न तुषाक्षिप्तम् १६३

कर्तव्यमातिथ्यमिडान्तमेव ४३२

कर्मण्येकस्मिन् गुणाः स्युः समस्ताः ४६२

कर्म नान्यत् प्रतिनिधौ २३८

(तृतीयवर्णकम्) कर्मस्त्रेकश्रुतिर्मन्त्रे ३३३

कर्माद्यपि फलादितः ६८

कर्मान्तरे न समवैति दधीन्द्रियार्थम् ५४

कर्मान्तरं पञ्चशरावयागः २५१

काण्डं पुरोडाशगुणे क्रमेण २०४

काम्ययागेषु न क्रमः २१६

काम्ये तन्त्रन्तु वैकृतम् ४९०

काम्यं यथेच्छं पुनरेव कुर्यात्४५७

| विषय | पृष्ठ |
|---|---|
| काम्येऽपि न स्यात्सकल-ग्रहेभ्यः | ४१२ |
| कार्यं प्रधानं सकलांगयुक्तम् | ४४७ |
| काम्येष्टिषू ।ांशु भवेत्प्रधानम् | १५३ |
| काम्ये समाख्यानबलेन याज्या | ८० |
| काम्ये सर्वाङ्गसङ्ग्रहः | २३८ |
| कार्यहानेस्तदग्राह्यम | २४६ |
| कार्यैकत्वे स्याद्गुणानां विकल्पः | ४९३ |
| कालार्थं स्वरूगुच्यते | ४१७ |
| काले सौत्रामणी स्वके | १८४ |
| कुम्भ्येका पशुसंहतौ | ४६९ |
| कुर्यात्कश्चिदहीनके | ५०२ |
| कुशानां बाधकाः शराः | ३९१ |
| कृतेष्टिः लोमकालवान् | १८२ |
| कृत्स्नोद्धृतौ श्येनवचः | ३५० |
| क्लृप्तादयः स्युर्विंदुर्षैव वाच्याः | १४६ |
| केचिद्दिहेष्टिगुणाः खलु यागाः | १९० |
| कौत्सादि पूर्वं बाधेत | ३९५ |
| क्रत्वङ्गभावोऽनृतवारणस्य | १०३ |
| क्रत्वर्थेऽस्मिन्नग्निमानेव कर्ता | २७६ |
| क्रत्वर्थं त्वस्थिकर्तृकम् | ३७३ |
| क्रत्वर्थं नैव दातव्यम् | २७२ |
| क्रत्वर्थं स्यात् पयोव्रतम् | १७७ |
| क्रत्वाश्रयस्तूभयसामके स्यात् | ४११ |
| क्रमेण विनियोगोऽस्ति | ९० |
| क्रमोऽवदानेऽधिगतः प्रदाने | २०५ |
| क्रमः पदार्थेषु गुणे पशूनाम् | २०३ |
| क्रमः परिग्राणयुतेऽङ्गनादौ | २०५ |
| क्रमः समाख्यां बाधते | ९५ |
| क्षामेऽत्र कृत्स्ने यजतेर्विधानम् | २४९ |

| विषय | पृष्ठ |
|---|---|
| **ग** | |
| गणे क्रत्वर्थमेकस्य | ५०२ |
| गणेषु चैकादशिनस्य धर्माः | २९७ |
| गतिस्तुतेर्मध्यमपर्वणोः सा | २८९ |
| गवादिशब्दोऽभिदधाति जातिम् | २८ |
| गव्यस्य सांवत्सरिका विकाराः | २९८ |
| गाने नाम्नां पृथग्भावः | ४६९ |
| (वर्णान्तरं) गानं जगत्साम यतो जगत्याम् | ४१० |
| गायत्राता नाक्षरलोपने स्यात् | ३०८ |
| गायत्र्यादावृगावापः | २१३ |
| गीतिमात्रं भवेत्साम | ३२४ |
| गीतिरेवातिदिश्येत | २८४ |
| गीत्या समेतं तद्दिरापदं स्यात् | ३२४ |
| गीत्युपाया विकल्पिताः | ३३१ |
| गुणलोपस्तु सार्वत्राः | ४०० |
| गुणलोपे च मुख्यं स्यात् | ३७७ |
| गुदानां स्यात्समुच्चयः | ४९९ |
| गोदोहनादेर्गिकृतौ विधिर्नो | १२२ |
| गोदोहनं क्रतोर्नाङ्गम् | १५७ |
| ग्रहादिभिर्नैष्टिकहोम इष्यते | ४७६ |
| ग्रावस्तुतो विधेर्भक्षः | ११४ |
| ग्राह्यस्तृतीये सवने स नूनम् | ४०८ |
| ग्राह्यो वैकल्पिको न तु | २४२ |
| ग्राह्यं तन्मुखमात्रकृत् | २४६ |
| ग्राह्यं न्यूनमपि श्रुतम् | २४५ |
| ग्राह्यं मुख्यं न प्रवृत्तिर्निरोधे | २१९ |
| **च** | |
| चतुर्थवीप्सा खलु बह्वहीने | ४०९ |
| चतुर्धाग्नेय एव हि | ७५ |

| विषय | पृष्ठ |
|---|---|
| चतुस्संख्याद्वयं ग्राह्यम् | १६६ |
| चमसाध्वर्यवः पृथक् | १३१ |
| चरावेव पिषिः पौष्णे | १०० |
| चरुशेषोङ्गमुत्तरे | ४५८ |
| चरूपधाने न यज्जिः | ६० |
| चरौ हिरण्ये विधिरौषधः स्यात् | ३०२ |
| चातुर्होत्रोऽनग्निरेवाधिकारी | २७६ |
| चित्रिण्याद्या मध्यचितौ | २१४ |
| चोदना साधिता धर्मे | १४ |
| **छ** | |
| छन्दोऽन्तरेऽप्यस्ति च भक्षमन्त्राः | ८६ |
| छन्दो विवृत्त्या न विवर्ततेऽर्थः | ४१६ |
| छागो मन्त्राद्दीक्षितोक्तः पशुः स्यात् | २८० |
| छेदप्रयोक्ता न खलूपत्रेषः | १६८ |
| **ज** | |
| जञ्जभ्यमानः प्रकृतोऽधिकारी | १०४ |
| जयादयो वैदिकहोमशेषाः | १०५ |
| जाघनी च विकल्प्यते | ५०० |
| जातिभेदे पृथक्कुम्भी | ४७० |
| जीवतामस्थियज्ञः स्यात् | ३७२ |
| जीवस्यायुरिहाशास्यम् | ३७६ |
| जुहोतेरेव नामैतत् | ३१० |
| जुह्वादिपात्रं पृथगत्र कार्यम् | २६८ |
| ज्योतिःप्रभृत्यपि भवेत् यजिमेत्तृनाम | ५२ |
| ज्योतिष्टोमे ग्रहाग्रत्वम् | ५६ |
| ज्योतिष्टोमेऽस्ति भक्षणम् | ११३ |
| ज्योतिष्टोमो यजुर्वेदे | ८९ |
| **त** | |
| ततश्चरौ संवपनञ्च न स्यात् | ३६३ |
| ततो निरूपिते भित्तिद्वये | १२ |
| ततोऽन्ये स्युरिहर्त्विजः | ३७१ |
| ततोऽभिधेयरूपं यत् | १२ |
| तत्कालं तु प्रदीयते | २७२ |
| तत्तच्छ्रुतं फलं काम्ये | १७९ |
| तत्राज्यभागाद्यधिकं च किञ्चन | ४७५ |
| तत्रोद्वाहो हविर्ग्रहे | २५६ |
| तत्सादनं च प्रतिकृष्यतेऽर्थात् | ४१३ |
| तत्संस्काराश्चापि तन्त्राभिन्नाः | ४६० |
| तथा गौग्गुलवाञ्जनम् | ३९४ |
| तथा चरौ संयवनं न कार्यम् | ३६३ |
| तथावघातादिविधिर्नियन्ता | १७२ |
| तथा समस्तं चमसेन बाध्यम् | ३८९ |
| तथोपधानञ्च विधेयमत्र | ३६४ |
| तदाद्युत्कर्ष इष्यते | १९९ |
| तदेवाङ्गेषु नो पृथक् | ४५१ |
| तद्द्वादशशतादूर्ध्वम् | २७३ |
| तद्बाधः समसंख्यया | ३६५ |
| तद्भेदे तु वसा पृथक् | ४५३ |
| तद्वदेककपालके | २८३ |
| तन्त्रं यूपः स्यात्पशूनां त्रयाणाम् | ४५९ |
| तपोऽपि दुःखं यजमानगामि | १४४ |
| तमेकैकः प्रकुर्वीत | ३७१ |
| तस्यावदेयं हृदयादि नान्यत् | ४२८ |

| विषय | पृष्ठ |
|---|---|
| तस्यैव चाशंसनमन्त्रापाठः | १४५ |
| तस्यां तु देवता तान्त्री | ४४४ |
| तथा पलाशः खदिरेण बाध्यः | ४३५ |
| तद्वयावदुक्तांगयुतं प्रकुर्यात् | ४३१ |
| ( वर्णकान्तरेण ) तस्यै श्रृतादौ न भवेत्तथांहः | ३२२ |
| ताः प्राग् लोकम्पृणान्वयात् | २१४ |
| तार्तीयेष्वपि नैव सा | ४८५ |
| तृच गेये भवेत् साम | ४१७ |
| तृतीयविषयो गतः | १६१ |
| ते तु ब्रह्मादयो नान्ये | १३८ |
| तेषान्तु मन्त्रांस्तरणे पुनः पठेत् | ४८३ |
| तेषामग्न्याधानतो धारणं स्यात् | ४६५ |
| तेषाम्पशौ संनहनं नमन्त्रावत् | ४८३ |
| तेषां समाख्यया कर्म | १३९ |
| ते स्युरभ्युदये पुनः | ३५३ |
| त्यागः परस्वीकरणं च दानम् | १७४ |
| त्रिके त्रिकेऽङ्गमभ्यस्येत् | ४५२ |
| त्रित्वन्नियम्येत कपिञ्जलेषु | ४४९ |
| त्रिवर्णो रथकृन्न हि | २३० |
| त्रेतायां श्रौतकर्मैव | ४८४ |
| त्र्यंगैर्यजेतेति न यागशेषैः | ४२८ |
| त्वष्टा न पात्नीवतदेवता स्यात् | ८५ |
| त्र्यम्बकावधृतिः स्तुतिः | ४३९ |
| **द** | |
| दक्षिणा सकृदश्रुतेः | ४२४ |
| दक्षिणा स्यात्परिक्रयः | ३६८ |
| दण्डप्रदानं पुनरर्थकर्म | १६९ |
| दध्ना जुहोति पयसेति न होमभेदः | ५४ |
| दध्नः प्रणीता धर्माः स्युः | ३३६ |
| दध्नः प्रयोजिकाऽऽमिक्षा | १६१ |
| दम्पत्योश्च यजिः सह | २२६ |
| दर्भमन्त्रार्थयोर्घोषः | ३९१ |
| दर्भैरिहावज्वलनं न कुर्यात् | ३६५ |
| दर्विहोमेऽखिले स्वाहा | ४४२ |
| दर्विहोमपदं नाम | ३०९ |
| दर्विहोमास्त्वपूर्वकाः | ३११ |
| दर्शस्य नैमित्तिकमङ्गमेषः | २५१ |
| दर्शादिकाले च पुनः पुनः स्यात् | २३४ |
| दर्शादियागे यजमान एकः | २३१ |
| दर्शादियागः सततञ्च कार्यः | २३४ |
| दर्शेष्टिधर्माः सकलेष्टिगामी | २९५ |
| दश ते लिङ्गदर्शनात् | १३६ |
| दशपेयक्रयः पृथक् | ४५७ |
| दानं द्वेष्याय नानतिः | ३७२ |
| दीक्षामानं विकल्पितः | २५८ |
| दीक्षा स दक्षिणा नांगे | १३२ |
| दीक्षासु क्रमः श्रुत्या विधीयते | १९२ |
| दीक्षाहुतीनां तु समुच्चयः स्यात् | ३८२ |
| दीक्षितो दीक्षणीयान्ते | २१६ |
| दीक्षितैः प्राश्यते मधु | ४२२ |
| दीर्घसंस्थासु तर्दनम् | ९८ |
| देयं कल्पान्तरं बहु | २७४ |
| देयं भूगोलकं न तु | २७० |
| देयं सर्वगणेऽपि तत् | २७२ |
| देवताऽभ्युदयेऽन्यास्यात् | २१४ |

| विषय | पृष्ठ |
|---|---|
| देवतैक्ये वसा तन्त्राम् | ४१३ |
| देवनमस्य गुणः पितृयक्षः | १८९ |
| देशादिवाक्ये नियमो विधेयः | १७१ |
| देशाद्येकप्रधानानाम् | ४५१ |
| देशः कर्तान्यः स चान्यप्रयोगे | ४६३ |
| दैक्षस्य चान्ये पशवो विकाराः | २९६ |
| दोहद्वये दोहगुणः समत्वात् | १२४ |
| द्रव्यादिफलवाक् स्तुत्यै | १७५ |
| द्रव्येषु काम्येषु न चोदकोक्तम् | ४३५ |
| द्रव्यैकभावात्सकृदग्निधर्माः | ३१६ |
| द्वन्द्वानि न स्युर्यजमानकर्म | १४७ |
| ( चतुर्थवर्णकम् ) द्वयोः प्रगाथे गातव्यम् | ३३१ |
| द्वयोः प्रणीतिर्न हि सौमिकी स्यात् | २८८ |
| द्वयोः फलं भद्रपदाभिधेयम् | १५० |
| द्वयोर्गुणाः स्युः परिधौ | ४८८ |
| द्वयोर्विनाशे पुनराद्धातिः | २५० |
| द्वादशाहे द्वादशैताः | २५९ |
| द्वियज्ञे प्रतिपद्विधिः | ९७ |
| द्विरैन्द्रावायवे भक्षः | ११२ |
| द्वैदिन्यं स्यान्नेष्टिधर्मौ विकारे | २२२ |
| द्वैपृष्ठमुभयश्रुतौ | ४२० |
| द्वौ चापि मन्त्रौ प्रकृतौ निविष्टौ | ३४९ |
| ध्वपच्छेदेऽपि तद्विधिः | २६३ |
| ध्रुवमौपभृतं घृतम् | १६५ |
| ध्यम्नातमन्त्रा उभयप्रयोज्याः | १४६ |
| **ध** | |
| धर्मातिदेशो स्वरसामशब्दः | २८९ |
| धर्मातिदेशे पदमग्निहोत्राम् | २८५ |
| धर्मातिदेशा न च पृष्ठशब्दः | २९१ |
| धर्माश्च सोमावभृथात् प्रघासे | २८६ |
| धर्मास्तु दैक्षस्य पशोः समीपे | १२४ |
| धर्मास्त्वपूर्वेण खलु प्रयुक्ताः | ३१२ |
| धर्मोपदेशः प्रतिनिध्युपात्ते | १२८ |
| धर्मौ व्यवस्थयाऽर्हां स्यात् | ३०४ |
| धानाः पयस्या शकलश्च शेषात् | १५२ |
| धानार्थमवहन्यते | ३८० |
| धाय्याशब्दोदिता मध्ये | २११ |
| धारायागेऽप्येवमेव क्रमः स्यात् | ४६१ |
| धार्या वत्सत्वक् पुरोकाहृतं च | ४९१ |
| धेनुका दक्षिणा नेष्टौ | ३७१ |
| धेनुः समस्तस्य निवर्तिका स्यात् | ३८६ |
| **न** | |
| न कल्पसूत्राण्यनपेक्षमानम् | २५ |
| न कृष्णलेषु व्यादेशः | ३६८ |
| ( द्वितीयवर्णकम् ) न कुशले स्यादवधानकर्म | ३५६ |
| न खादिरी खलेवाली | ३७८ |
| न ग्रहैक्यं विवक्षितम् | ७० |
| न चानतिद्वादभृतिप्रदानादङ्गेष्टिभक्षा विनिवर्तनीयाः | ४८१ |

| विषय | पृष्ठ |
|---|---|
| न चातिदेश्यो गुणकाम इष्टः | ३०० |
| न चाभिघारो वसने च वत्से | ३८५ |
| न तयोः कर्तृभिन्नता | ४९५ |
| न तूपरा व्रीहविधौ त्रिसंख्या | ४४९ |
| न ते स्युः पशुकामेष्टौ | ३५३ |
| न त्वत्यन्ताङ्गहीनकः | २२९ |
| न त्वसौ फलभागी स्यात् | २४१ |
| न त्वादधातिः क्रतुमध्यगेष्टिषु | ४७६ |
| न दीक्षणीयाऽप्यस्थनां चेत् | ३७३ |
| न देवताकर्माणि तु प्रधानम् | ३१४ |
| न सोम इति सुश्रुतिः | ४३६ |
| न चोदकेनांगविधोपसत्सु | ४३३ |
| न तु प्रदानं प्रतिकर्षणीयम | ४१४ |
| न देवतार्थः स्तुतशस्त्रपाठः | ४२ |
| न द्यावापृथिवीयस्य तन्त्राताऽऽग्रयणे भवेत् | ४९१ |
| न द्रव्यसंख्याङ्गिरपि प्रयोक्ता | ३१५ |
| न धर्मोपनतो देयः | २७१ |
| न पर्णता स्याद्विक्रतौ द्विरुक्तेः | १२१ |
| न पावमानीं प्रति पावमानी | १२३ |
| न पेषणं चोदकतश्चरौ स्यात् | ३६१ |
| न प्रोयणीयेस्यतिदेष्टनाम | २८६ |
| न प्रोक्षणादीन्युपसत्सु बर्हिषाम् | ४८२ |
| न प्रोक्षणं हन्ति पिषिप्रयुक्तम् | ३१२ |
| न बाधः स्तोमवृद्धौ तु | ३९६ |
| (वर्णकान्तरेण) न ब्रह्मभागव्यतिरिक्तदानम् | ३८९ |
| न भिन्नकल्पाः खलु सत्रिणः स्युः | २६६ |
| न मन्त्रमूहेत् प्रतिनिध्युपात्ते | ३४४ |
| न मन्त्रादौ प्रतिनिधिः | २३९ |
| न मानसमहर्भिन्नं | ४२२ |
| न मुष्टिर्वाक्यमार्थाय | ७४ |
| न राजसूयेष्टिषु साम्न कार्या | ३५८ |
| नर्त्विग्भेदो नृपक्रतौ | ४६७ |
| न लोभमूलं स्मरणं प्रमाणम् | २२ |
| न लौकिकान्नियमः समाप्तौ | २३२ |
| न वाजिने सोमधर्मः | ३०३ |
| न विहित इति यावज्जीवकालोऽग्निहोत्रे | ६५ |
| न वैष्णवोक्तथापि गुणातिदेशः | २८७ |
| नष्टेऽवदाने हविरन्तरं स्यात् | २४७ |
| न सत्रे वरणं भवेत् | ३६९ |
| न सर्वदानं हविषोऽवखण्ड्य | १०८ |
| न साप्तदश्यं प्रकृतौ विरोधात् | १२१ |
| न सोमयागो भवतीष्टिधर्मा | २९५ |
| न सोमलिप्तैरुदकेष्टिरिष्टा | १७१ |
| न स्यात्तन्त्रं देवसूनामपरार्थम् | ४९२ |
| न स्याद्व्यवाये कथितोऽनुषङ्गः | ४८ |
| न स्यान्नित्यं रात्रिशेषाशनादि | १८० |
| न स्वामिनोऽसन्तपनं फलं स्यात् | १५० |
| न स्वामिनः प्रतिनिधिः | २४० |
| न हविश्चतुरादेयं | ४४३ |
| न हि व्रजेत् यज्ञपतिस्त्विडायाम् | ३२० |
| न होतृकामो यक्षे ऽस्थनाम् | ३७५ |
| नाक्षितः शक्तता पशुः | १६३ |
| नाग्निवाचा यजिं वदेत् | ६२ |
| नाज्ञो धेन्वादिषु ग्राह्यः | ३७८ |
| नात्र लोपे पुनः क्रिया | २६० |
| नादित्ये पयसो धर्माः | ३५२ |

| विषय | पृष्ठ |
|---|---|
| नाथप्रयोगे प्राबर्ल्यम् | ९९ |
| नाद्यादृतः स्यात् स्तनादिग्रन्थे | ४७५ |
| नाधानसङ्गं खलु पावमान्याः | १२२ |
| नाग्निर्गोस्तन्त्रता कार्या | ४७४ |
| नाजावीजे पृथक् पृथक् | ४७१ |
| नानाहिकानां विहिता त्रिवृत्ता | ३०६ |
| नान्त्ये हि पत्नीयजनान्त संस्था | ३१७ |
| नान्यानुष्टुबिहोत्तरा | ३२० |
| नाम चित्रापदं तथा | ३० |
| नाम श्येनपदं पुनः | ३१ |
| नारण्यभुक्तिः क्रियतेऽत्र दार्शिकी | ४८० |
| नारम्भणीयेति च दीक्षणीये | ३५७ |
| नार्जने नियमः क्रतोः | १५७ |
| नात्र दानादि दीक्षिते | ४४० |
| नावाहनं कार्यमुपक्रमस्य | ३५७ |
| नावृत्तिरशनस्य तु | ४२१ |
| नाश्वा देयाः पर्युदासात् | २७० |
| नासावाहवनीयकः | ५०१ |
| नास्मिन्नाधानसंस्काराः | ५०१ |
| नास्य स्यान्नित्यधारणम् | ५०१ |
| नास्यां स्यात्तक्षणादिकम् | ३७९ |
| नास्विष्टकृच्छेषकृतिः सपूर्वे | ४३२ |
| निकायिनां पूर्ववदुत्तरेषु | २९९ |
| निगमाश्चाज्यपानिति | ४०३ |
| नित्यमियेष दधिग्रहहोमम् | १८७ |
| नित्ये काम्ये च दध्यादि | १७६ |
| नित्ये गोदोहनं नहि | १७६ |
| निराकृतेषु सर्वेषु | ७ |
| निर्मन्थ्यशब्दोऽप्यतिदेशको न | २८८ |
| निर्मन्थ्ये योगनियमः | ३३ |
| निर्वापकर्मार्थमनोऽन्तरभवेत् | ४७७ |
| निर्वापमन्त्रे ध्रुवमूहनं स्या | २३६ |
| निर्वापादौ पृथक् मन्त्राः | ४७२ |
| निशीष्टिर्दर्शतन्त्रा स्यात् सामिधेन्यादिकं विना | ४८५ |
| निषेधमात्रं लशुनाशनादौ | २१३ |
| निष्कासोऽवभृथाङ्गिकः | ४५७ |
| निष्कृष्याध्यायतात्पर्य्यम् | ५ |
| नीवारे व्रीहिधर्माः स्युः | ३३५ |
| न देवतासंस्करणाय यागः | ३६० |
| नेन्द्राग्निपीतो भवतीन्द्रपीतः | ८६ |
| नेष्टिर्धार्याग्निशमने | ३५१ |
| नैकादशिनमन्वहम् | ४८१ |
| नैन्द्रापौष्णेऽस्ति पेषणम् | १०० |
| नैमित्तिकविकल्पोऽत्र | १६४ |
| नैमित्तिके धर्मगुणः श्रुतौ नो | १२७ |
| नैमित्तं चेत्तत् समुच्चेयमेव | ४९३ |
| नैव त्रयस्त्रिंशदिहोपलक्ष्याः | ८५ |
| नैषा प्राक् जातकर्मणः | १८३ |
| नोत्कृष्यते पिष्टलेपि | २०१ |
| नोत्तरोत्पत्तिबृहती | ३२९ |
| नोत्थातुमग्नीन् विहरेति मन्त्रः | ७८ |
| नोत्पादयेद्ब्रह्मनक्षत्रे | २९७ |
| नोपसदङ्गमगादि हि सौम्यम् | १८६ |
| नोपस्तुत्यभिघारणे | ३६६ |
| नोपात्तदर्भौ विधृती पवित्रे | १५२ |
| नोहस्तु कार्यो हविरुत्पवादौ | ३२१ |
| नोहं विदध्यात् खलु चक्षुरादौ | १५५ |

| विषय | पृष्ठ |
|---|---|
| नोहः प्रयोज्यो विकृतौ च पत्न्याम् | ३४३ |
| नोहः सविज्ञादिपदेषु कार्यः | ३१६ |
| नोहादयो मन्त्रागतास्तु मन्त्राः | ४५ |
| नोहोऽग्निगौ तुल्यविधानपक्षे | ३४३ |

प

| विषय | पृष्ठ |
|---|---|
| पश्चाधदानं हृदयादिकेपि | ४३६ |
| पत्नीनां चाधिकारोऽत्र | २२६ |
| पत्नीपदे सन्नहनाय नोहः | ३४२ |
| पत्न्याश्च सन्नाह इहेष्यते नवै | ४८० |
| पदकर्माप्रयोजकम् | १६२ |
| पयोधर्मा स तु भवेत् | ३०३ |
| परस्य चमसेऽपि तौ | ११६ |
| पर्युदासेऽन्यता भवेत् | ४३८ |
| परिक्रयार्थो न भवेद्विभागः | ११० |
| परिक्रयो न भक्षः स्यात् | ३६९ |
| परिक्रयः स्याद् यजमानकर्ता | १४२ |
| परिधिर्यूपधर्माभाक् | ३३५ |
| परिध्युक्तिः स्वकालार्था | १८२ |
| परं पूर्वस्य बाधकम् | २६४ |
| पर्णणोस्तौ व्यवस्थितौ | ३३८ |
| पवमानेऽधिकोद्धृती | ३९६ |
| पवमानेष्टितन्त्रता | ४६७ |
| पशुत्रायार्था रशना सधर्मा | १२६ |
| पशुः सान्नाय्यधर्मकः | ३०३ |
| पशोः पुरोडाश उपस्करोति | ३६१ |
| पशोर्लिङ्गं विवक्ष्यते | १६० |
| पशौ प्रयाजेषु विधिर्गुणस्य | ३८० |
| पशौ हविः स्यात् पृथगंगमंगम् | ४२७ |
| पश्चादुखासम्भरणाच्च दीक्षा | २०९ |
| पश्वेकत्वविवक्षा स्यात् | १५९ |
| पाकाग्निहोत्रयोः सोऽर्थात् | १९३ |
| पाठः पृथक् स्यात्खलु सन्निपातिनाम् | ४७८ |
| पाठ्योऽनध्यायेऽपि मन्त्रोऽस्वरादौ | ४९४ |
| पात्नीवते तु प्रवदेन्न पूर्वाम् | ८४ |
| पात्राणां स्यात् धारणं सर्वकाले | ४६४ |
| पानं चोपहवेन हि | ११७ |
| पार्वणौ वैकृते न स्तः | ३३८ |
| पित्र्यं कर्माथापराह्णादिकाले | २७८ |
| प्रतीकास्तु नियम्यन्ते | २४३ |
| पुत्रे फलं स्याज्जातेष्टेः | १८३ |
| पुनरेकमहर्भवेत् | २६५ |
| पुरोडाशः क्रतोः पशौ | ४८४ |
| पुंसो निषेधः शतयातनोक्त्या | १०४ |
| पुंसो हिरण्यस्य धृतिः क्रतोर्न | १०५ |
| प्रतीकखण्डोऽप्युपदिष्टधर्मा | १२८ |
| पूर्णादितन्त्रं विहितं स्तवाय | १०२ |
| पूर्वेडयैवोपरमो यजिः स्यात् | ४३३ |
| पूर्वाह्णादौ देवकार्याणि कुर्यात् | २७८ |
| पृष्ठमेकं विश्वजिति | ४१२ |
| पौरोडाशो वाग्विसर्ग पशौ चेत् | ४६१ |
| पौर्णमासस्य वैमृधः | १८१ |
| पौर्णमास्या तु सा भवेत् | ४३५ |
| प्रकृते स्याद्द भिदाहुतिः | २६२ |
| प्रक्रिया बाधते क्रमम् | ९४ |
| प्रक्षेपयुक्तो यजिरेव होमः | १७५ |
| प्रग्रन्थेनोत्तरा ककुप् | ३२८ |
| प्रतिनामर्त्विजो भिन्नाः | १३४ |
| प्रतिमासं तदावृत्तिः | ४२२ |

| विषय | पृष्ठ |
|---|---|
| प्रतिषिद्धन्न गृह्यते | २४० |
| प्रतिहोमो न चोत्कर्षे | २६१ |
| प्रत्यक्षादिविरोधेन | ८ |
| प्रत्यक्षाव्यभिचारित्वे | ६ |
| प्रत्यहं न द्विसामत्वम् | ४१८ |
| प्रत्युक्तिः पूर्वमन्त्राभाक् | ११७ |
| प्रत्यृचं साम पूरयेत् | ३२६ |
| प्रमाणपञ्चकाभावो | १० |
| प्रमाणानां प्रमाणत्वे | १० |
| प्रमाणेन प्रमाणस्य विरोधे | १० |
| प्रमाणं चोदना तत्र | ७ |
| प्रमा प्रकरणं भवेत् | ८९ |
| प्रयाजार्थेऽभिघारणम् | १६४ |
| प्रयाणे च सकृन्मन्त्राः | ४७३ |
| पृथग्वस्त्रमहर्गणे | ४२६ |
| प्रयोक्ता स्विष्टकृन्नेष्टः | १६४ |
| प्रयोज्यता नित्यमिरापदस्य | ३२३ |
| प्रवृत्ते न पुनर्मुख्यम् | २४५ |
| प्रवृत्त्या पशुषु क्रमः | १९४ |
| प्रशंसा बाहुसंस्तुतिः | ३४६ |
| प्रशंसाऽश्वे पशूक्तिः स्यात् | ३६ |
| प्रस्थातृभक्षं न पशौ वदन्ति | ४३० |
| प्रस्तरे यष्टृवाग् गुणात् | ३५ |
| प्राकाशबोधे न तु सर्वबाधो | ३८८ |
| प्राग्दक्षिणा नो पुनरादधातौ | ३८२ |
| प्राघासिकातिदेशः स्यात् | २८४ |
| प्राचीतिशब्दो वदतीह शाखाम् | १६७ |
| प्राचीनवंशस्तुतये प्रतीची | १०२ |
| प्राजापत्या न बाधन्ते | ३९२ |
| प्राजापत्याः सर्वसोमोपरिष्टात् | ४६५ |
| प्रातरादियजिः सद्यः | १९८ |
| प्रातराद्या षोडशिनी | २६२ |
| प्राप्तस्य तस्य श्रवणं द्विरात्रे | ४०९ |
| प्रायश्चित्तं स्याद्विकल्पेन नाशे | ४९३ |
| प्रासो विषाणाप्रतिपत्तिकर्म | १७० |
| प्रास्येदन्त्याहे विषाणां गणस्य | ४६१ |
| प्रैषे तदर्थे च न कर्तुरैक्यम् | १४८ |

फ

| विषय | पृष्ठ |
|---|---|
| फलस्य भक्षणादि स्यात् | ११९ |
| फलादयोऽप्यत्र न चातिदेश्याः | २९९ |

ब

| विषय | पृष्ठ |
|---|---|
| बर्हिःशब्दस्तृणं वक्ति | ३२ |
| बर्हिः सर्वहविःशेषः | १३० |
| बलवांश्चोदकक्रमः | १९७ |
| बलीयसी श्रुतिर्लिङ्गात् | ६१ |
| बहवस्ते बहुश्रुत्या | १३५ |
| बह्वर्थं वक्तुकामेन | ८ |
| बह्वेकदेशग्रहणेऽन्त्यलोपः | ४०३ |
| बाधः प्राप्ते क्वचिद्भवेत् | ९३ |
| बाध्येत वत्सेन पुरोक्तसर्गम् | ३८७ |
| बार्हस्पत्यो न बाधकः | ३९२ |
| बुधन्वान् नाग्निरिष्यत | ३१८ |
| ब्रह्मणे सर्वभक्षाः स्युः | ३६७ |

भ

| विषय | पृष्ठ |
|---|---|
| भवेदपूर्वोऽवभृथाख्ययागः | ४६४ |
| भवेज्जगत्साम मखे विकारे | ४१० |
| भक्षोऽस्ति कृष्णलचरोः | ३६६ |
| भक्षक्रमो यथाप्राप्ति | ११६ |
| भक्षप्रैषाच्छावाकस्य नित्यम् | २७९ |

| विषय | पृष्ठ |
|---|---|
| भवेद्गोका धुरि सामगीतौ | ४०४ |
| भवेद्वलीयो हविषः सद्भक्त्वम् | ३०१ |
| भवेदपूर्वं गृहरोधकर्म | ४३१ |
| भवेद्विशामेव न सापवश्यम् | २६९ |
| भागे समाख्यानगुणं प्रकुर्यात् | २८६ |
| भिक्षादिहोमोऽपि पुनर्निमित्ते | २३५ |
| भिन्ना विरुद्धगुणभागिति वाजिनेज्या | ५३ |
| भिन्ने यजौ फलविधिः सह रेवतीभिः | ५४ |
| भिन्नैकदेशेऽपि भवेज्जुहोतिः | २४८ |
| भिन्नं पशौ स्यात् पृथगाज्यपात्रम् | २०७ |
| भिन्नं यजुः स्याद्विनियोगभेदात् | ४७ |
| भूम्ना स्युः सृष्टयो मताः | ३६ |
| भूयः श्रुतिश्च समिदादियजीन् भिनत्ति | ५० |
| भूतिभेदे तन्त्रभेदः | ४६६ |
| मैत्री यजेर्भवति सप्तदशाख्या | ५२ |
| भेदो नाग्रायणे नहि | ५९ |

म

| विषय | पृष्ठ |
|---|---|
| मन्त्रोऽनधिकारभाक् | २२६ |
| मनोता न विकारभाक् | ४०१ |
| मन्त्रक्रमो बली तत्र | १९७ |
| मन्त्रास्तु वेदः क्रियमाणवाची | ४४ |
| मन्त्रस्तूपरवे पृथक् | ४७४ |
| मन्त्रस्य गीतिं प्रवदन्ति साम | ४६ |
| मन्त्रस्यार्थो विवक्षितः | १८ |
| मन्त्रान्ते स्यात्कर्मणः सन्निपातः | ४९५ |
| मन्त्रेणोपहवः कार्यः | ११७ |
| मन्त्रेतरो ब्राह्मणशब्दवाच्यः | ४४ |
| मन्त्रे स्थितं भावपदं विधिर्नो | ४३ |
| मन्त्रोच्चारे भाषिको न स्वरः स्यात् | ४६४ |
| मन्त्रो दर्शोद्धृते न च | ३५२ |
| मन्त्रो न गौणे विनियोजनीयः | ७६ |
| मन्त्रोऽनेको ब्राह्मणोक्तो विकल्प्यः | ४९७ |
| मन्त्रो वेद्युक्षणे सकृत् | ४७२ |
| मन्त्रः स्वप्नादिके सकृत् | ४७३ |
| मन्थ्याग्रतादिः सकलग्रहाणाम् | ४१२ |
| मन्द्रादिरेकः खलु भक्षमन्त्रः | ८२ |
| मन्वादिवाग् विस्तृतवेदमूला | २० |
| माघी दीक्षासु पूर्णिमा | २५९ |
| मानोपाहरणे बर्हे | ४२६ |
| माषपाकवचः स्तुतिः | २७४ |
| मांसं विधेयं सवनीयकार्ये | १५४ |
| मुख्यक्रमात्क्रमोऽङ्गेषु | १९६ |
| मुख्यदृक् सदृशग्रहः | २४३ |
| मुख्यप्राप्ते तदानयेत् | २४४ |
| मुख्यात्पाठक्रमो बली | १९६ |
| मुख्याभावे तमानयेत् | २३९ |
| मुख्यार्थाः स्वामिसंस्क्रियाः | १३० |
| मुनिरपि बहुशाखं कर्म चैकं जगाद | ६५ |
| मुष्ट्यादयः स्युर्गणशः क्रमेण | २०४ |
| म्लेच्छप्रयोगात् पिकनेमशाकिः | २५ |

य

| विषय | पृष्ठ |
|---|---|
| यजुर्विशेषो निगदो न भिन्नः | ४६ |
| यजूरथोऽध्वर्युमुपैति ना- | |

| विषय | पृष्ठ |
|---|---|
| ०यम् | ६९० |
| यजेत राजा सपुरोहितस्तु- | २६६ |
| यज्ञः प्रजा चाध्ययनं च नित्यम् | २३६ |
| यद्येकतः सा हविषस्तु मुख्यात् | १०९ |
| यद्य सोमः पूर्णमिष्टेरपि स्यात् | २२० |
| यागाग्न्यर्था ग्रहेष्टकाः | २१२ |
| यागे पूर्णेऽग्निचिद्व्रतम् | २१५ |
| यागं कुर्याल्लौकिकेऽग्नौ निषादः | २७७ |
| याज्याक्रीती द्रव्यभावेऽपि कार्ये | २७८ |
| याज्यानुवाक्ये संस्कारौ | ४०० |
| याज्यानेका विकल्प्यते | ४९९ |
| याज्यापाठी वषट् पठेत् | ११८ |
| यावच्छक्तिक्रिया नित्ये | २३७ |
| यावदुक्ताः स्त्रियः क्रियाः | २२७ |
| यावद्धोमं निषिद्धानि | २६० |
| यूप एवापकृष्यते | २०० |
| यूपगुणो रशना त्रिवृदिष्टा | १८९ |
| यूपगुणं स्वरुमाह न षष्ठी | १९० |
| यूपस्य नैवोपशयेऽङ्गजातम् | २९१ |
| यूपाञ्जनाज्ये न भवन्ति धर्माः | १५१ |
| यावदर्थं मनोश्च चः | ४२५ |
| यूपान्तिकाहुतिस्तन्त्राम् | ४५४ |
| यूपाहुतिर्नास्ति खलस्य मेढौ | २५९ |
| यूपेऽरत्निर्गुणः पशोः | ७१ |
| यूपे सूर्य इति स्तुतिः | ३५ |
| यूपैकदेशः स्वरुरप्रयोक्ता | १६७ |
| योनिवर्णक्रमो नहि | ३३३ |
| यो यदर्थः स तच्छेषः | ६७ |
| यौगिकं प्रोक्षणीपदम् | ३३ |
| यौगिकं स्विष्टकृत्पदम् | ३०९ |
| **र** | |
| रजाशयादिष्वनुषज्य पूर्तिः | ४७ |
| राजमखस्य यजीतरदङ्गम् | १८५ |
| राजा क्षत्रिय उच्यते | ५७ |
| रात्रिसत्रे फलं स्तुतौ | १७८ |
| रुक्मं परं दीक्षितसंस्कृतेः स्यात् | २०५ |
| **ल** | |
| लिङ्गं वाक्यस्य बाधकम् | ९२ |
| लुप्तार्थकं यत् विकृतौ न तत्स्यात् | ३१० |
| लोके च वेदे च न शब्दभेदः | २७ |
| लौकिके वैदिके च तत् | ३१० |
| **व** | |
| वचनाच्च क्वचिद्भवेत् | १४० |
| वचनात्कृष्णले पाकः | ३६५ |
| वत्सरमुख्यमबिभ्रत इष्टिः | १८८ |
| वत्सालम्भो यजिर्नहि | ६० |
| वत्से न पाकः क्रियते विरोधात् | ३८४ |
| वनिष्ठुरग्नीदशनं विकुर्यात् | ६२९ |
| वनिष्ठुभावो नोलूके | ३४६ |
| वर्चःपदे स्वामिफलप्रकाशः | १४९ |
| वर्णत्रये नित्यमिदं त्रयं स्यात् | २३६ |
| वषट्कर्ता च भक्षयेत् | ११५ |
| वसानौ दम्पती प्रोक्तौ | २२७ |
| वसार्थमपि नो पृथक् | ४७० |

| विषय | पृष्ठ |
|---|---|
| वाक्यन्न कर्म विदधाति य एवमादि | ५० |
| वाक्यादङ्गे देशकालादिभेदः | ४५८ |
| वाक्याद्धर्मातिदेशः स्यात् | ३११ |
| वाक्येन प्रक्रिया बाध्या | ९३ |
| वाक्येन स स्यात् क्वचिदन्यकर्म | १४३ |
| वाचां स्वरस्त्वङ्गविधिप्रयुक्तः | ३१२ |
| वाच्यवाचकसम्बन्ध | १४ |
| वाजपेयपदं नाम | ३१ |
| वायव्यं यजिमत्कर्म | ५९ |
| वारणं यज्ञमात्राङ्गम् | ७३ |
| वार्क्षाग्निर्लाघते तूख्यम् | ५०० |
| वार्त्रघ्न्यावाज्यभागयोः | ७३ |
| वासादिपूर्णस्य निवर्तकं स्यात् | ३८३ |
| वासादिरन्वाहरणादिधर्मा | ३८३ |
| वासिष्ठशब्दो भवतीह गौणः | २६७ |
| वासो न पच्येत नहीदमन्नम् | ३८४ |
| विकृतावप्यतिग्रहाः | ४४२ |
| विकृतौ पौष्णपेषणम् | ९९ |
| विक्रयी प्रकृतेभ्योऽन्यः | १३८ |
| विदेवनादेर्विहितोऽपकर्षः | २०८ |
| विधिरष्टाकपालवाक् | ३२ |
| विधिशब्दस्तु मन्त्रे स्यात् | २९७ |
| विधिस्त्वार्षेयवरणे | २२९ |
| विधेया जाघनी यागे | ९७ |
| विधेर्बलात्तावदपूर्वसिद्धिः | ४० |
| विभज्य दानं खलु दक्षिणायाः | ३८५ |
| विरोधे परिधेर्गुणाः | ४८८ |
| विभज्य नयनं तस्याः | ४२५ |
| विरोधे बहुधर्मता | ४८७ |
| विवर्णश्चाधिकश्च सः | ३३५ |
| विश्वजित् सफलो यागः | १७७ |
| विहारयोस्तन्त्रभेदः | ४५४ |
| वेदप्रामाण्यमिष्टं चैवम् | १५ |
| वेदिरेवापकृष्यते | २०१ |
| वेदिर्यूपगुणो न हि | १३२ |
| वेदोक्तपाने वमने चरुः स्यात् | १०७ |
| वैरूपं पृष्ठसाधनम् | ४१९ |
| वैदिकान्येव तानि तु | २९२ |
| वैश्वदेवे तु नामता | ३४ |
| वंशेन कालं कलयेद्व्रतस्य | २५२ |
| व्यभिचारविशेषोऽन्यो | १३ |
| व्यभिचारो भवेज्ज्ञाने | ११ |
| व्यवस्था स्यात्प्रयाजादौ | २८१ |
| व्रीहिविकारे यवबाधकः स्यात् | ४३५ |
| व्यूढः समूढस्य भवेद्विकारः | ४१५ |

**श**

| विषय | पृष्ठ |
|---|---|
| शतं गवामेव तु दक्षिणासु | ३८५ |
| शब्दान्तरे विधियुते खलु कर्मभेदः | ४९ |
| शमिताऽध्वर्युरेव स्यात् | १३६ |
| शाखां क्षिपेत् प्रस्तरहोमकाले | १६८ |
| शाखाप्रहारः प्रतिपत्तिकर्म | १६८ |
| शिष्टकमस्याचमनाश्च कोपः | २३ |
| शिष्टे नञ् प्रतिषेधार्थः | ४३८ |
| शुद्धे कर्मणि सा कार्या | १८४ |
| शूद्राधिकारो नेज्यादौ | २२८ |
| शेषक्रिया नास्ति तु शेषनाशे | २५७ |

| विषय | पृष्ठ |
|---|---|
| शेषक्रिया सर्वाहविर्भ्यो एव | १०९ |
| शेषस्य भक्षः प्रकृतर्त्विजां-स्यात् | २४८ |
| शेषो निषिद्ध उत्सर्गे | ३५५ |
| श्येनेऽङ्गधर्मो नवनीतमा-ज्यम् | १५३ |
| श्येने सर्वर्त्विजां कर्म | १४२ |
| श्रयणं स्याद्धर्मकम् | ३५३ |
| श्रुते प्रतिनिधौ चैवम् | २४४ |
| श्रुत्यर्थाभ्यां पाठबाधः क्रमेषु | २१९ |
| श्रुत्या क्रमः स्यात् | २९२ |
| श्रुत्या विरुद्धा स्मृतिरप्रमाणम् | २१ |
| श्रुत्यैन्द्रमन्त्रोऽग्निगुणो यथार्थः | ७६ |
| श्रौते वह्नौ नावकीर्णेष्टिरिष्टा | २७७ |
| श्लक्ष्णं पृथुं चापि चरुन्न कुर्यात् | ३६४ |
| श्लोकस्तोत्राद्य बाधकम् | ३९४ |
| श्वेतोऽजो वायुदैवतः | ३७८ |

ष

| विषय | पृष्ठ |
|---|---|
| षट्चितिकोऽग्निरयं न हि नित्यः | १८८ |
| षण्णां यज्ञीनां फलमेकमेव | ४८६ |
| षडहान्ते चाशनं स्यात् | ४२१ |
| षडेकादौ विकल्पः स्यात् | ५०० |
| षोडश्युत्कर्ष इष्यते | २०२ |

स

| विषय | पृष्ठ |
|---|---|
| स गृह्यते चाग्रयणान्न तूक्थ्यात् | ४०७ |
| सगुणा देवता वाच्या | ३९८ |
| सकृत्कण्डूयने मन्त्रः | ४७३ |
| सध्यासमन्त्रो ग्रहणस्य मन्त्रः | ८१ |
| स चैकानेकशस्तोत्रः | २१८ |
| सत्यमिथ्या विभागो यो | ८ |
| सत्रं स्याद्बहुकर्तृकम् | ४२३ |
| सत्राङ्गं नोत्तरो यजिः | ३७० |
| सत्रं स्याद्द्वादशाहकम् | ४२४ |
| सत्री गृहपतिः कुर्यात् | ५०२ |
| सत्रेऽग्निहोत्रमन्यत् स्यात् | ६२ |
| सत्रे दानमदृष्टकृत् | २७६ |
| सत्रेऽधिकारी न भवेन्निररिनः | २६८ |
| सत्रे पचिः प्राजहितेऽग्नि-होत्राके | ४७७ |
| सत्रेऽसौ स्वामिनो भवेत् | २४० |
| सत्रेषु दक्षिणा न स्यात् | ३७० |
| सत्रैकाहाङ्गमेवात्र | २९३ |
| सत्रोद्यमे विश्वजिदप्रवृत्तौ | २५२ |
| सत्रं पञ्चदशाहकः | ३०५ |
| सदृक् प्रतिनिधिर्ग्राह्यः | २४२ |
| स नूनमाख्यातपदाभिधेयः | ३९ |
| सन्देहे निर्णयः स्तुतेः | ३७ |
| सन्तापनन्नेह तथार्थलोपात् | ३६३ |
| स पावमानेऽग्नौ कर्म | २१५ |
| समपात्रास्त्वनुज्ञाप्यः | ११८ |
| समस्य वङ्क्रयो वाच्याः | ३५७ |
| समाख्या विनियोजिका | ९१ |
| समानमिष्टित्रितयेऽपि बर्हिः | १७४ |
| समानयः प्रयोक्ता स्यात् | १६५ |
| समाख्या कल्पयेद् भक्षम् | ११३ |
| समासु गानं कर्तव्यम् | ३२६ |
| समासोऽश्वे विकल्पितः | ३४८ |
| समिदादौ क्रमः पाठात् | १९४ |
| समिदादौ यजिविधिः | ३३९ |
| समुच्चयो वाससां स्यात् | ३९४ |
| समुच्चयः क्रयद्रव्ये | ४२९ |
| समेषु मुख्यधर्माः स्यात् | ४८७ |

| विषय | पृष्ठ |
| --- | --- |
| समं विधत्ते पुनरप्रतोक्तिः | ४१४ |
| सम्मार्जनं संस्करणं स्रुवादेः | ४२ |
| सर्वकामविधिर्भवेत् | १७९ |
| सर्वग्रहार्थाः सवनस्य धर्माः | १२५ |
| सर्वत्रा चाङ्गे नवनीतमिष्टम् | १५४ |
| सर्वपृष्ठेष्टितः सकृत् | ११२ |
| सर्वस्वारः समाप्यते | ३७५ |
| सर्वस्वे ज्ञातयो न स्युः | २७० |
| सर्वादितो न प्रतिकर्षणं स्यात् | ४११ |
| सर्वार्थताऽसंवदतेर्मलिन्या | १०५ |
| सर्वे कामाः सकृन्न स्युः | २७० |
| सर्वेषां स्यात्तन्त्रमाधानमेकम् | ४५९ |
| सर्वं दद्यात् पुनर्यज्ञे | २६५ |
| सवनीये पशोस्तन्त्राम् | ४८९ |
| सवनीये हविष्कृन्न | ४८९ |
| सस्तोत्राशस्त्रः खलु षोडशी स्यात् | ४०८ |
| स स्वर्गस्त्वविशिष्टत्वात् | १७८ |
| सहस्रादधिकं तच्च | २५४ |
| साकंप्रस्थाय्यके च न | १११ |
| साकांक्षमेकार्थमिहैकवाक्यम् | ४६ |
| साक्षाच्छ्रुतं द्रव्यमिह प्रदेयम् | २८७ |
| साङ्गस्यादावन्ततो योगमोक्षौ | ४६२ |
| साङ्गोऽस्त्ववभृथो भवेत् | ४५४ |
| सात्वैन्द्रवायव्यत एव पूर्वा | ४१३ |
| साद्यस्के तु पशुक्रमः | १९५ |
| सा नोपलक्ष्या तु वषट्कृतेज्या | ८६ |
| साभ्युत्थानोऽक्रथेऽपि स्यात् | २५७ |
| सामागमेनाधिकसंख्यपूर्तिः | ४०५ |
| सामानविध्येऽभिगुयुङ् न मेषी | ३२२ |
| सामोहः क्रियते नृभिः | ३२१ |
| साप्तदश्यं नियम्यते | ४४१ |
| साम्नैव क्रियते स्तोत्रम् | ३३२ |
| साम्नो धर्मा व्यवस्थिताः | ३३६ |
| सांगप्रयोगाय घृतादिधर्माः | १५१ |
| सांगार्थमभिमर्शनम् | १३१ |
| सांगार्था सौमिकी वेदिः | १३१ |
| सांग्रहणी गुण आमनहोमः | १८६ |
| साम्नां विकल्प आधाने | ४३९ |
| सुत्याहाङ्गपृथग् भवेत् | ४६८ |
| सुब्रह्मण्याऽहर्गणे तन्त्रमादौ | ४६३ |
| सुब्रह्मण्यो न भक्षयेत् | ११४ |
| सूक्तवागाशिषोऽत्र न | ३७४ |
| सूक्ताभिधानाद्बहवोऽत्र मन्त्राः | ७९ |
| सूक्तोक्त ऊह्यो यजमानःशब्दः | ३२१ |
| सैवान्नकामस्यावेष्टिः | ६२ |
| सोमपा ब्राह्मणाः शतम् | १२० |
| सोमयजेरितरे गुणयागाः | १९१ |
| सोमस्य चातिदेशोऽस्ति | ३३४ |
| सोमाङ्ग इष्टौ न पुनर्व्रतग्रहो | ४७९ |
| सोमाधाने सोमकालस्य बाधः | ३२१ |
| सोमेन यागविधिरस्य गुणोग्रहोक्तिः | ५१ |
| सोमेन वेदिः पृथगिष्टिकर्मणाम् | ४७६ |
| सोमे सप्तदशर्त्विजः | १३८ |
| सोमोर्ध्वं सान्नाय्यधर्माविकारः | २२३ |
| सौत्यस्य चैकादशिनेषु धर्माः | २९७ |
| सौत्रामणीग्रहे न स्युः | १११ |

